[आनन्दा]श्रमः संस्कृतग्रन्थावलिः ।

[ग्र]न्थाङ्कः ५४

# [श्रीमद्वेदव्यासकृष्ण]द्वैपायनमुनिप्रणीतं मत्स्यपुराणम् ।

एतत्पुस्तकम्

आनन्दाश्रमस्थपण्डितैः संशोधितम् ।

तच्च

आनन्दाश्रमविश्वस्तैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १९०३

ख्रिस्ताब्दाः १९८१



मूल्यम्—चत्वारिंशद्रूपकाः [ ४० रु. ]

आनन्दाश्रमः संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५४

# श्रीमद्द्वैपायनमुनिप्रणीतं मत्स्यपुराणम् ।

एतत्पुस्तकम्

आनन्दाश्रमस्थपण्डितैः संशोधितम्





तच्च

आनन्दाश्रमविश्वस्तैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १९०३

ख्रिस्ताब्दाः १९८१



मूल्यम्–चत्वारिंशद्रूपकाः [ ४० रु. ]



# अथ श्रीमन्मत्स्यमहापुराणान्तर्गतविषयाणा- मध्यायानुक्रमेणानुक्रमः ।

# अथ श्रीमन्मत्स्यमहापुराणान्तर्गतविषयाणामध्यायानुक्रमेणानुक्रमः ।

अध्यायाङ्काः । विषयाः ।

सिद्ध्यर्थं महर्षिभिरनुनीतोऽपि यदा धर्माचरणेऽनुज्ञां न दत्तवांस्तदा शापेन तं मारयित्वाऽराजकभयार्दिता ब्राह्मणा बलात्तद्देहं ममन्थुः । मथ्यमानात्तत्कायान्मातुरंशेन म्लेच्छजातयः कृष्णाञ्जनचयप्रभा निपेतुः । पितुरंशेन च दक्षिणहस्तात्सधनुः सशरो गदी दिव्यतेजोमयवपुः पृथोरेव यत्नात्पृथुनामकः पुरुषोऽजायत । स विप्रैरभिषिक्तोऽपि सुदारुणं तपः कृत्वा विष्णोर्वरेण सर्वस्य प्रभुत्वमगमत् । निःस्वाध्यायवषट्कारं निर्धर्मं भूतलं वीक्ष्य कोपाद्दग्धुमेवोद्यतः पृथुर्भीतां गोरूपमास्थाय पलायितुमुद्यतां भुवमवलोक्य दीप्तशरासनः पृष्ठतोऽनुगत्यैकदेशे स्थित्वा किं करोमीति ब्रुवतीं स्वायंभुवं मनुं वत्सं कृत्वा सर्वस्य चराचरस्य जगत ईप्सितमन्नं स्वके पाणौ दुदोह । ततः सोमादिवत्सं परिकल्प्य ऋष्यादिभिर्मही दुग्धेत्यादिकथनम् ।

११–सोमसूर्यवंशवर्णने बुधसंगमवृत्तान्तः । तत्र विवस्वतो रैवतसुतायां राज्ञ्यां रेवतः प्रभायां प्रभातस्त्वाष्ट्र्यां संज्ञायां मनुर्यमो यमुना च यमलौ बभूवुः । ततः संज्ञा विवस्वतस्तेजोमयं रूपमसहन्ती स्वशरीरात्स्वसमानां छायानाम्नीं नारीमुत्पाद्य तत्सविधे स्थापयित्वाऽन्यत्र गता । सूर्योऽपि संज्ञेयमिति मत्वाऽऽदरात्तां कामयामास । सतस्यां च सवर्णत्वात्सावर्णिं मनुं शनिं तपतीं विष्टिं च जनयामास ततो यमः स्वपुत्रेऽभ्यधिकं स्नेहं कुर्वाणां छायामालक्ष्य क्रोधमूर्छितः सन्स्वपादमुद्यम्य मातरं संतर्जयामास ततश्छायातो यमस्य शापदानं तच्छमनं च । पश्चाच्छायेयमिति ज्ञात्वा त्वष्टृमुखात्संज्ञा वडवारूपेण मत्समीप आगता मया निवारिता मरुदेशे वडवारूपेणैवाऽऽस्थितेति श्रुत्वा कामार्तः स्वयमप्यश्वरूपेण तत्र गत्वा तन्मुख एव कामयामास । संज्ञा त्वयं पर इति शङ्कया नासापुटाभ्यां तद्वीर्यं बहिरुत्सृष्टवती । ततस्तद्रेतसोऽश्विनौ जातौ । वैवस्वतमनोरिक्ष्वाक्वादयो दश पुत्रा आसंस्तत्रेलो दिग्जयसिद्ध्यर्थं सर्वां महीं भ्रमञ्शरवणं नाम शंभोरुपवनं गतः पुरादत्तशिवशापेन सपरिवारः स्त्रीत्वमासवान् । सेला नारी वने भ्रमन्ती सोमपुत्रेण बुधेन दृष्टा कामिता च । साऽपि रूपमोहिता तेन सममतिकालं रेम इति कथनम् ।

१२–राजानमन्विष्यन्तो भ्रातरो बुधाश्रमागताश्चन्द्रप्रभं वाजिनं स्त्रीत्वं प्राप्तं दृष्ट्वा वसिष्ठमुखात्तत्कारणं श्रुत्वा शिवमाराधयामासुः । भगवाञ्छिवोऽपि तानिक्ष्वाकोरश्वमेधपुण्यमावाभ्यां दत्तं चेत्स पुनः किंपुरुषो भविष्यतीति कथितवान् । तैरपि तथा कृतं तेनेलः किंपुरुषोऽभवत् । मासमेकं पुमान्मासमेकं च स्त्री भूत्वा बुधस्य भवने तिष्ठन्निलो गर्भधरोऽभवत् । तत्र पुरूरवाश्चन्द्रवंशवर्धनोऽभवत् । इलः किंपुरुषत्वे सुद्युम्न इत्युच्यते । तस्मादुत्कलादयस्त्रयः पुत्रा अभवन् । स पुरूरवसं प्रतिष्ठानेऽभिषिच्येळावृतं भोक्तुं जगाम । इत ऊर्ध्वमिक्ष्वाक्वाद्यर्कवंशवर्धनानामनुकीर्तनम् । सगरवंशवर्णनम् ।

१३–वैराजपितृवंशवर्णनम् । तत्र स्वर्गे त्रयोऽमूर्तयः पितृगणाश्चत्वारश्च मूर्तयः । योगविभ्रष्टा वैराजाः सनातनाल्लोकान्प्राप्य ब्रह्मदिनान्ते पुनर्ब्रह्मवादिनो जायन्ते । ततश्च ते सांख्ययोगं संप्राप्य योगेन पुनरावृत्तिदुर्लभां सिद्धिं प्रयान्ति । अतो दातृभिः श्राद्धानि योगिनामेव देयानीतिकथनम् । एतेषां मानसीनाम्न्यां कन्यायां हिमवतो मैनाकः क्रौञ्चश्च द्वौ पुत्रौ मेनायां चोमैकपर्णाऽपर्णा चेति तिस्रः कन्या योगवत्यः क्रमेण रुद्रसितजैगीषव्याणां पत्न्योऽभवन्नितिकथनम् । ततो दक्षयज्ञे दक्षकन्या सती समाहूतेषु देवेषु स्वभर्तारं शंकरमनाहूतं दृष्ट्वा किमर्थं मे भर्ता नाभिमन्त्रित इति तया देव्या पृष्टो दक्ष उपसंहारकृत्त्वादमङ्गलभागयं रुद्रो यज्ञेष्वयोग्य इत्युत्तरितवान् । तच्छ्रुत्वा कोपात्तदुद्भवं देहं दिधक्षन्ती दशानां पितॄणां भवानेकः पुत्रो भविता, क्षत्रियत्वेऽश्वमेधे रुद्रात्त्वं नाशमेष्यसीति पितरं शप्त्वा योगमास्थाय स्वतेजसाऽऽत्मानं दहन्तीं दक्ष उपगम्य दुःखितः किमेतदित्यब्रवीत् । प्रसादं कुरु सर्वज्ञे न मां त्यक्तुमिहार्हसीति दक्षेण प्रार्थिता सती मे यदारब्धं तत्कार्यमेव मया किंतु त्वं मर्त्ये शूलिना हतयज्ञः प्रसादे ममान्तिके तपश्चर । भवान्दशानामङ्गजः प्रजापतिर्भविता, मदंशेनाङ्गनाषष्टिस्त्वदङ्गजा भविष्यन्ति । मत्संनिधौ तपः कुर्वता त्वया वाराणस्याद्यष्टोत्तरशतस्थानेषु विशालाक्ष्याद्यष्टोत्तरशतनाम्न्यो मद्विभूतयो द्रष्टव्यास्तेन त्वमुत्तमं योगमवाप्स्यसीति दक्षं प्रति कथितवती । तत्राष्टोत्तरशतगौरीनामकीर्तनम् ।

१४ अग्निष्वात्तपितृवंशवर्णनम् । तत्रामावास्योत्पत्तिः । पितॄणामच्छोदा नाम कन्या दिव्यवर्षसहस्रकं तपश्चरन्ती तपसा तुष्टाः पितरो वरदानार्थमागता इति ज्ञात्वा कुसुमायुधपीडिता तन्मध्येऽमावसुं मितरं सङ्गार्थे कामितवती । व्यभिचारेण योगभ्रष्टा लज्जिताऽधोमुखी पितॄन्प्रार्थयामास । प्रार्थिताः पितरः पितॄणां व्यतिक्रमान्मर्त्ये त्वं राज्ञो वसोः कन्या भूत्वा पराशरवीर्येण बादरायणनामकमेकं पुत्रमवाप्स्यसि । स एकं वेदं बहुधा विभजिष्यति । पौरवस्य च समुद्रांशस्य शंतनोर्विचित्रवीर्यश्चित्राङ्गदश्च द्वौ पुत्रौ क्षेत्रजा उत्पाद्य प्रौष्ठपद्यष्टकारूपा पितृलोके सत्यवती नाम्ना च

# अथ श्रीमन्मत्स्यमहापुराणान्तर्गतविषयाणामध्यायानुक्रमेणानुक्रमः ।

अध्यायाङ्काः । विषयाः ।

४२–ययातेरुद्धारः । तत्र वसुमदादिभिः सह ययातिसंवादः ।

४३–यदुवंशकीर्तनम् । तत्र कार्तवीर्यो दत्तस्याऽऽराधनेन चतुरो वरान्वव्रे । तत्र बाहुसहस्रेण सागरक्षोभणम् । रावणस्य माहिष्मत्यां बन्धनम् । अर्जुनं प्रति शापदानम् । कार्तवीर्यस्य पुत्रशतं त्वासीत्तत्र पञ्च महारथा आसन्निति वर्णनम् । कार्तवीर्यजन्मकथनफलम् ।

४४–कार्तवीर्यादिकथा । तत्राऽऽदित्यस्य ब्राह्मणरूपेण कार्तवीर्यं प्रत्यागमनम् । कार्तवीर्येण तस्या आहारदानम् । आपवस्य जले प्रवेशः क्रोष्टोर्वंशवर्णनं विदर्भवंशवर्णनम् । ज्यामघस्य चैत्रानाम्नी भार्याऽभूत् । अपुत्रवतो ज्यामघस्य मृधे विजय आसीत् । तत्र कन्यामवाप्य हे शुचिस्मिते ते स्नुषेयमिति संत्रासाद्भार्यामुक्तवांस्ततः कालेन सा विदर्भे पुत्रमवापेति वर्णनम् । अन्धकवंशवर्णनफलम् ।

४५–वृष्णिवंशकथनारम्भः । तत्र स्यमन्तकमणिकथावर्णनम् । कृष्णकृतं सत्यभामावरणम् । अनमित्रवंशवर्णनम् ।

४६–वृष्णिवंशवर्णनम् । प्रसङ्गात्पाण्डवानां जन्मकथनम् ।

४७–असुरान्प्रति शुक्रशापः । तत्र श्रीकृष्णभवनम् । षोडशसहस्रप्रधानस्त्रीनामानि पुत्रनामानि च । नारसिंहाद्यवतारवर्णनम् । भार्गवतपसा संतुष्टेन शंकरेण वरदानम् । शुक्रेण शंकरस्य स्तोत्रकरणम् । जयन्तीशुक्रयोर्मेलनम् । असुरान्प्रति बृहस्पतेः काव्यरूपेण वञ्चनम् । प्रह्लादेन शुक्रसमीपे भगवद्दत्तवरकथनम् । देवासुरविचेष्टितकथनम् ।

४८–तुर्वसुप्रभृतिवंशवर्णनम् । तत्रानुवंशवर्णनम् । अङ्गस्योत्पत्तिवर्णनम् । दीर्घतमसो बलेश्च समागमः । अङ्गवंशवर्णनम् । तत्र कर्णोत्पत्तिवर्णनम्

४९–पुरुवंशवर्णनम् । तत्र बृहस्पतेर्भरद्वाजजन्मवर्णनम् । बृहत्क्षत्रवंशवर्णनम् । उग्रायुधोत्पत्तिवर्णनम् । तत्राजमीढवंशवर्णनम् ।

५०–पुरुवंशानुकीर्तनम् । तत्राजमीढवंशवर्णनम् । जरासन्धजन्म, अपध्यातदेवापेर्वर्णनम् । शंतनुस्ववर्णनम् शंतनोर्जाह्नव्यां देवव्रतोत्पत्तिः । चित्रवीर्यक्षेत्रे कृष्णद्वैपायनामुत्पत्तिवर्णनम् । परीक्षितं प्रति वैशंपायनस्य शापदानमधिसोमकृष्णभाविवंशवर्णनम् ।

५१–अग्निवंशवर्णनम् । तत्राग्न्युत्पत्तिरग्निनामानि च । धिष्ण्योत्पत्तिकथनम् ।

५२–योगमाहात्म्यम् । तत्र ज्ञानयोगात्कर्मयोगप्रशंसाकथनम् । पञ्चयज्ञविधानम् । द्वाविंशतिसंस्कारयुक्तस्याप्यात्मगुणवर्जितस्य मोक्षेऽनधिकार इति कथनम् आत्मगुणकथनम् ।

अध्यायाङ्काः । विषयाः ।

५३–पुराणानुक्रमकथनम् । तत्र पुराणसंख्याकथनम् । पुराणपुस्तकदानफलकथनम् । पुराणलक्षणम् । सात्त्विकादिपुराणानां लक्षणाभिधानम् । पुराणानुक्रमश्रवणपठनफलम् ।

५४–दानधर्मे नक्षत्रपुरुषव्रतम् । तत्र तद्व्रतफलकथनम् ।

५५–आदित्यशयनव्रतम् । तत्र तद्व्रतफलम् । वसिष्ठादिभिरपि एतदव्रतमनुष्ठितमिति कथनम् ।

५६ कृष्णाष्टमीव्रतम् । तत्र कस्मिन्मासि केन नाम्ना शंभुपूजनं कर्तव्यमिति कथनम् । कृष्णाष्टमीमुपोष्य सप्तकल्पशतत्रयं देवैः संपूजितः शिवलोके महीयत इति कथनम् ।

५७–रोहिणीचन्द्रशयनव्रतम् । तत्र नारदभगवत्संवादः । व्रताङ्गपूजाविधिनिरूपणम् । व्रतफलम् ।

५८–तडागविधिः । तत्र यूपप्रमाणम् । प्रावृडादिकाल उदकस्थितफलम् ।

५९–वृक्षोत्सवविधिः । वृक्षसंस्थापनात्पुरुषस्य स्वर्गावाप्तिकीर्तनम् ।

६०–सौभाग्यशयनव्रतम् । तत्र सौभाग्याष्टककथनम् । सौभाग्यमर्थी देव्याराधानप्रकारः ।

६१–अगस्त्योत्पत्तिः । तत्पूजाविधिकथनं च । तत्र नारदमहेश्वरसंवादः । वह्निमारुतौ प्रतीन्द्रशापेनागस्त्यजन्म ।

६२–अनन्ततृतीयाव्रतम् । तत्र व्रतप्रकारः । व्रतफलकथनम् ।

६३–रसकल्याणिनीतृतीयाव्रतम् । माघादिमासेषु लवणादिद्रव्याणां वर्जनत्वेनाभिधानम् । मासि मासि सुवर्णकमलं ददतोऽग्निष्टोमसहस्रस्य फलकथनम् ।

६४–आर्द्रानन्दकरीतृतीयाव्रतम् । तत्र महादेवेन सहिताया भवान्याः पूजाप्रकारवर्णनम् ।

६५–अक्षय्यतृतीयाव्रतम् । तत्फलकथनम् ।

६६–सारस्वतव्रतम् । तत्राष्टतनुनामकथनम् । व्रतविधितत्फलकथनं च ।

६७–चन्द्रसूर्यग्रहणस्नानविधिः ।

६८–सप्तमीस्नपनव्रतम् । क्षीरपाणां बालानां तथा यौवने वर्तमानानां पुरुषाणां मरणनिवृत्तये मृतवत्साभिषेचनविधिः । तत्र व्रतविधिस्तत्फलं च ।

६९–भीमद्वादशीव्रतम् । तत्र तद्व्रतविधिस्तत्फलकथनम् ।

७०–अनङ्गदानव्रतम् । तत्र दाल्भ्यं प्रति स्त्रीणां वेश्याधर्मप्रश्नः । तत्र कामपूजाप्रकारः ।

७१–अशून्यशयनद्वितीयाव्रतम् मोहाद्वा मदाद्वा यः परस्त्रीं समाश्रयेत्तद्दोषापनुत्तये व्रताचरणम् । तत्र तत्प्रकारश्च ।

७२–अङ्गारकव्रतम् । तत्र पिप्पलादयुधिष्ठिरसंवादः । तत्र विरोचनभार्गवसंवादः । दक्षयज्ञविनाशाय कुपितस्य शूलिनः स्वेदबिन्दोर्वीरभद्रस्य जन्म, ततो यज्ञमथनं

अध्यायाङ्काः । विषयाः ।

दिविधानम् । यज्ञान्ते सुवर्णादितुलादानविधिकथनम् ।

२४०–यात्राप्रकरणम् । मत्स्यमनुसंवादे यात्रानिमित्तकाल्योज्यचिन्तनम् ।

२४१–यात्रानिमित्तकदेहाङ्गस्पन्दनकथनम् ।

२४२–यात्रानिमित्ते स्वप्नाध्यायकथनम् ।

२४३–यात्राप्रकरणे मङ्गलामङ्गलदर्शनाध्यायकथनम् ।

२४४–विष्णुमाहात्म्यवर्णनम् । तत्र वामनप्रादुर्भावकथनम् । तत्र च शक्रादिषु विजितेषु स्वकीयानां पुनरुद्भवार्थं परमदुश्चरं तपश्चरन्त्याऽदितिः सर्वगतं देवदेवं नत्वा हरिमिष्टाभिर्वाग्भिस्तुष्टाव स्तुत्या संतुष्टं विष्णुं प्रति वरो यो हृदि स्थितस्तमाशु कामं व्रियतामित्युक्तायाऽदित्या मत्पुत्रो वासवस्त्रैलोक्याधिपतिर्भवत्विति प्रार्थनम् । तदनु कृतः प्रसादो हि मया कश्यपात्ते गर्भे स्वांशेन संभूय सुरारीन्हत्वा तवेप्सितं करिष्यामीत्यदित्यै भगवतो वरप्रदानम् ।

२४५–भगवतो वामनरूपेण प्रादुर्भावः । तत्र भगवतस्तेजसाऽऽसुरादयो निस्तेजस्का बभूवुरिति ज्ञात्वा बलिनां सर्वेषामसुरादीनां तेजोहानिभवनकारणं पृष्टः पितामहः प्रह्लादः पश्यन्विस्मयाविष्टो बलिं प्रति वत्स यस्य स्वरूपं ब्रह्मादयो न जानन्ति यस्मात्सर्वमिदं जायत एतादृशो वासुदेवः स्वकल्याऽदित्यां कश्यपादवतीर्णः सन्पृथ्वीभारभूतदैत्यादीन्हत्वेन्द्रादीन्सुखिनः करिष्यतीत्यादि कथितवान् । तच्छ्रुत्वा तात कोऽयं हरिर्नाम यतो नो भयमागतं मे शतशो वासुदेवबलाधिका विप्रचित्त्यादयो भूभारहरणक्षमाः सन्ति तेषामेकैकशो वीर्यार्धेनापि कृष्णो न संमित इति ब्रुवन्तं बलिं प्रह्लादो धिक्कृत्य यो गुरुगुरोर्गुरौ कृष्णे निन्दां करोषि स त्वमचिरादेवेहैश्वर्याद्भ्रंशमेष्यसीति शप्तवान् । पुनश्च बलिना प्रार्थितः प्रह्लादोऽद्यप्रभृति त्वं हरौ भक्तिमान्भवेथाः स एव ते त्राता भविष्यतीत्याद्युक्त्वा विरराम । वामनाकृत्या भगवतो जन्मकथनम् । अवतीर्णे जगन्नाथे देवा दुःखं मुमुचुर्वाताः सुखस्पर्शा ववुरित्यादिकथनम् । ततो ब्रह्मदेवकृतभगवत्स्तुतिनिरूपणम् । तदनु वामनरूपेणावतीर्णस्य भगवतो व्रतबन्धकथनं बलेरध्वरं प्रति गमनं चेत्यादिवर्णनम् ।

२४६–तत्र भगवतो वामनस्य गमनेन सपर्वतवनामुर्वीं संक्षोभितां दृष्ट्वा बलिनोशनसं प्रणिपत्याऽऽचार्य कस्मान्मही क्षोभमायाता कस्माच्चासुरान्भागान्वह्नयो न प्रतिगृह्णन्तीति पृष्टः काव्यश्चिरं ध्यात्वा दैत्यपतिमित्थमुवाच । कश्यपस्य गृहे जगद्योनिर्हरिर्वामनरूपेणावतीर्णः स एष तव यज्ञमायाति तत्पादन्यासविक्षोभादियं मही प्रचलति, नैनं भूतपतिं भूमिर्वोढुं समर्था । तत्संनिधानादेवामी अमय आसुरान्भागान्न भुञ्जते इति । इति काव्यमुखाच्छ्रुत्वा हर्षेण बलिना गुरो काव्य सर्वेश्वरेश्वरे कृष्णे मदध्वरमुपागते यन्मया कर्तव्यं तन्ममाऽऽदिशेत्युक्तः काव्यः पुनश्च दानवपते अयं देवः सत्त्वस्थः सृष्टिपालनार्थं तव निग्रहार्थं चाऽऽयाति तदा त्वया स्वल्पकेऽपि वस्तुनि प्रतिज्ञा नहि वोढव्या, ‘ नालं दातुमहं देव दैत्य वाच्यं त्वया वचः ’ इत्युवाचेति श्रुत्वा हे ब्रह्मन्विविधैर्व्रतोपवासैः प्रतिसंग्राह्यो हरिः साक्षाद्देहीति वक्ष्यति चेत्कथमहं नास्तीति ब्रूयां तस्मिन्मे दृढा भक्तिः स मां हन्तुं कथं यत्नं करिष्यतीत्येतद्विदित्वा गुरो दानविघ्नकरणे त्वया न भाव्यम्,’ इति गुरुं प्रति बलौ वदति माया वामनरूपधृक्संप्राप्तः । तं दृष्ट्वा तत्तेजसा सुरा यज्ञवाटान्तःप्रविष्टाः सभासदः क्षोभं जग्मुर्मुनयो जेपुः । बलिश्चाऽऽत्मनो जन्म सफलं मेने । ततो न कश्चित्किंचिदुक्तवान् । तदनु दैत्यपतिं प्रह्वं दृष्ट्वा वामनरूपधृग्विष्णुः सर्वांस्तुष्टाव । ततो बलिना यज्ञवाटस्थितं वामनं साधु साध्वित्युदीरयित्वाऽर्घमादाय गोविन्दं संपूज्य ‘ सर्वस्वं सकलामुर्वीं भवतो वा यदीप्सितम् । तदहं दास्यामि वृणीष्व ’ इत्युक्तो भगवान् । ‘ राजन्ममाग्निशरणार्थाय पदत्रयमितां भूमिं देहि, इत्युवाच । एतच्छ्रुत्वा बलिस्तस्मै वामनाय पदत्रयं ददौ । पाणौ तोये पतिते वामनोऽवामनो भूत्वा सर्वदेवमयं रूपं दर्शयामास । ततः पुरंदराय त्रैलोक्यं दत्त्वा बलये चानेकवरान्दत्त्वा सुतले तं सादरं स्थापयामासेत्यादिशौनकार्जुनसंवादद्वारा कथनम् ।

२४७–शौनकार्जुनसंवादे वराहचरितम् । तत्र क्रमेण प्रलयकालं वर्णयित्वा पुनश्च जगदुत्पत्तिवर्णनम् ।

२४८–पृथिवीकृतविष्णुस्तवः । विष्णोर्वराहमूर्तिपरिग्रहः । लोकहितार्थाय प्रभुकृतं पृथिव्युद्धरणवर्णनम् ।

२४९–देवानाममरत्वकथनप्रस्तावेऽमृतकथनकथारम्भः । तत्र शुक्राय शंकरस्य संजीवनीविद्यादानम् । मन्दराचलप्राथनम् । देवदानवकृतविष्णुस्तवनम् । क्षीरसागरमन्थनवर्णनम् । तत्र ब्रह्मदेवकृता विष्णुप्रार्थना देवेभ्यो बलदानवर्णनम् ।

२५०–कालकूटोत्पत्तिः । तत्र सोमश्रीसुरादेवीतुरगकौस्तुभपारिजातोत्पत्तिकथनम् । वह्न्युत्पत्तिकथनम् । डुण्डुभादिसर्पोत्पत्तिकथनम् । विष्णुकालकूटसंवादः । देवदानवकृतशिवस्तवकथनम् । सुरासुरशिवसंवादकथनम् । ततो महादेवो विषमं विषं विलोक्य वामपाणिनाऽपिबत् । पीयमाने विषे देवा महासुरा जगुर्ननृतुरित्यादिवर्णनम् ।

२५१–अमृतमन्थनम् । तत्र धन्वन्तर्युत्पत्तिः । रत्नग्रहण

इति श्रीमन्मत्स्यपुराणान्तर्गतविषयाणामध्यायानुक्रमेणानुक्रमः ।

# आदर्शपुस्तकोल्लेखपत्रिका.

अथास्य मत्स्यपुराणस्य पुस्तकानि यैः परहितासक्तैः संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते—

( क. ) इति संज्ञितम्—कल्याणग्रामस्थव्यङ्कटेश्वरमुद्रणालये मुद्रापितम् ।

( ख. ) इति संज्ञितम्— रा॰ रा॰ पुण्यपत्तनस्थानां गोन्धळेकराणां मुद्रणालये मुद्रापितम् ।

( ग. ) इति संज्ञितम्—रा॰ रा॰ वटोदरग्रामनिवासिनां बाप्पासाहेब भैराळ इत्येतेषाम् ।

अस्य लेखनकालः शके १७७५

( घ. ) इति संज्ञितम्—रा॰ रा॰ पुण्यपत्तनस्थरामनाथ दवे इत्येतेषाम् ।

( ङ. ) इति संज्ञितम्—रा॰ रा॰ पुण्यपत्तनस्थभीमराव माधवराव पोतनीस इत्येतेषाम् ।

( च. ) इति संज्ञितम्—वे॰ शा॰ सं॰ रा॰ बाळशास्त्री नन्दुरबारकर इत्येतेषाम् ।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीमद्द्वैपायनमुनिप्रणीतं

# मत्स्यपुराणम् ।

अथ प्रथमोऽध्यायः ।

*प्रचण्डताण्डवाटोपे प्रक्षिप्ता येन दिग्गजाः । भवन्तु विघ्नभङ्गाय भवस्य चरणाम्बुजाः ॥१॥

पातालादुत्पतिष्णोर्मकरवसतयो यस्य पुच्छाभिघाता-
दूर्ध्वं ब्रह्माण्डखण्डव्यतिकरविहितव्यत्ययेनाऽऽपतन्ति ।
विष्णोर्मत्स्यावतारे सकलवसुमतीमण्डलं व्यश्नुवाना-
स्तस्यास्योदीरितानां ध्वनिरपहरतादश्रियं वः श्रुतीनाम् ॥

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥२॥

अजोऽपि यः क्रियायोगान्नारायण इति स्मृतः । त्रिगुणाय त्रिवेदाय नमस्तस्मै स्वयंभुवे ॥ ३

सूतमेकाग्रमासीनं नैमिषारण्यवासिनः । मुनयो दीर्घसत्रान्ते पप्रच्छुर्दीर्घसंहिताम् ॥ ४

प्रवृत्तासु पुराणीषु धर्म्यासु ललितासु च । कथासु शौनकाद्यास्तु अभिनन्द्य मुहुर्मुहुः ॥ ५

कथितानि पुराणानि यान्यस्माकं त्वयाऽनघ । तान्येवामृतकल्पानि श्रोतुमिच्छामहे पुनः ६

कथं ससर्ज भगवाँल्लोकनाथश्चराचरम् । कस्माच्च भगवान्विष्णुर्मत्स्यरूपत्वमाश्रितः ॥ ७

भैरवत्वं भवस्यापि पुरारित्वं च केन हि । कस्य हेतोः कपालित्वं जगाम वृषभध्वजः ॥ ८

सर्वमेतत्समाचक्ष्व सूत विस्तरशः क्रमात् । त्वद्वाक्येनामृतस्येव न तृप्तिरिह जायते ॥ ९

सूत उवाच—

पुण्यं पवित्रमायुष्यमिदानीं शृणुत द्विजाः । मात्स्यं पुराणमखिलं यज्जगाद गदाधरः ॥ १०

पुरा राजा मनुर्नाम चीर्णवान्विपुलं तपः । पुत्रे राज्यं समारोप्य क्षमावान्रविनन्दनः ॥ ११

मलयस्यैकदेशे तु सर्वात्मगुणसंयुतः । समदुःखसुखो वीरः प्राप्तवान्योगमुत्तमम् ॥ १२

बभूव वरदश्चास्य वर्षायुतशते गते । वरं वृणीष्व प्रोवाच प्रीतः स कमलासनः ॥ १३

एवमुक्तोऽब्रवीद्राजा प्रणम्य स पितामहम् । एकमेवाहमिच्छामि त्वत्तो वरमनुत्तमम् ॥१४

भूतग्रामस्य सर्वस्य स्थावरस्य चरस्य च । भवेयं रक्षणायालं प्रलये समुपस्थिते ॥ १५

एवमस्त्विति विश्वात्मा तत्रैवान्तरधीयत । पुष्पवृष्टिः सुमहती खात्पपात सुरार्पिता ॥१६

कदाचिदाश्रमे तस्य कुर्वतः पितृतर्पणम् । पपात पाण्योरुपरि शफरी जलसंयुता ॥ १७

* आद्यश्लोकद्वयं न विद्यते घ ङ च. पुस्तकेषु ।

१ ग. °टोपप्रक्षिप्ताक्षिप्तदि° । २ ख. लं व्यंशुमानं तस्या° । ३ ख घ. ङ. व्यास । ४ घ. ङ. च. पुराणासु । ५ ग. °पिस्मरा° । ६ घ. ङ. न. °त्वं निगद्यते । क° । ७ ख च. गद्यते । क° । ग. च कथ्यते । क° । ८ ग. ङ. च. °रतः क्र° । ९ ग. व. ङ. च. °द्वाक्यस्यामृ° । १० ग. धीरः । ११ ग. °संप्लुता ।

दृष्ट्वा तच्छफरीरूपं स दयालुर्महीपतिः । रक्षणायाकरोद्यत्नं स तस्मिन्करकोदरे ॥ १८
अहोरात्रेण चैकेन षोडशाङ्गुलविस्तृतः । सोऽभवन्मत्स्यरूपेण पाहि पाहीति चाब्रवीत् ॥ १९
स तमादाय मणिके प्राक्षिपज्जलचारिणम् । तत्रापि चैकरात्रेण हस्तत्रयमवर्धत ॥ २०
पुनः प्राहाऽऽर्तनादेन सहस्रकिरणात्मजम् । स मत्स्यः पाहि पाहीति त्वामहं शरणं गतः ॥ २१
ततः स कूपे तं मत्स्यं प्राहिणोद्रविनन्दनः । यदा न माति तत्रापि कूपे मत्स्यः सरोवरे ॥ २२
क्षिप्तोऽसौ पृथुतामागात्पुनर्योजनसंमिताम् । तत्राप्याह पुनर्दीनः पाहि पाहि नृपोत्तम ॥ २३
ततः स मनुना क्षिप्तो गङ्गायामप्यवर्धत । यदा तदा समुद्रे तं प्राक्षिपन्मेदिनीपतिः ॥ २४
यदा समुद्रमखिलं व्याप्यासौ समुपस्थितः । तदा प्राह मनुर्भीतः कोऽपि त्वमसुरेश्वरः ॥ २५
अथवा वासुदेवस्त्वमन्य ईदृक्कथं भवेत् । योजनायुतविंशत्या कस्य तुल्यं भवेद्वपुः ॥ २६
ज्ञातस्त्वं मत्स्यरूपेण मां खेदयसि केशव । हृषीकेश जगन्नाथ जगद्धाम नमोऽस्तु ते ॥ २७
एवमुक्तः स भगवान्मत्स्यरूपी जनार्दनः । साधु साध्विति चोवाच सम्यग्ज्ञातस्त्वयाऽनघ ॥
अचिरेणैव कालेन मेदिनी मेदिनीपते । भविष्यति जले मग्ना सशैलवनकानना ॥ २९
नौरियं सर्वदेवानां निकायेन विनिर्मिता । महाजीवनिकायस्य रक्षणार्थं महीपते ॥ ३०
स्वेदाण्डजोद्भिदो ये वै ये च जीवा जरायुजाः । अस्यां निधाय सर्वांस्ताननाथान्पाहि सुव्रत
युगान्तवाताभिहता यदा भवति नौर्नृप । शृङ्गेऽस्मिन्मम राजेन्द्र तदेमां संयमिष्यसि ॥ ३२
ततो लयान्ते सर्वस्य स्थावरस्य चरस्य च । प्रजापतिस्त्वं भविता जगतः पृथिवीपते ॥ ३३
एवं कृतयुगस्याऽऽदौ सर्वज्ञो धृतिमान्नृपः । मन्वन्तराधिपश्चापि देवपूज्यो भविष्यसि ॥ ३४

इति श्रीमात्स्ये महापुराण आदिसर्गे मनुविष्णुसंवादे प्रथमोऽध्यायः ॥ १ ॥

---

अथ द्वितीयोऽध्यायः ।

---

सूत उवाच—

एवमुक्तो मनुस्तेन पप्रच्छ मधुसूदनम् । भगवन्कियद्भिर्वर्षैर्भविष्यत्यन्तरक्षयः ॥ १
सत्त्वानि च कथं नाथ रक्षिष्ये मधुसूदन । त्वया सह पुनर्योगः कथं वा भविता मम ॥ २

मत्स्य उवाच—

अद्यप्रभृत्यनावृष्टिर्भविष्यति महीतले । यावद्वर्षशतं साग्रं दुर्भिक्षमशुभावहम् ॥ ३
ततोऽल्पसत्त्वक्षयदा रश्मयः सप्त दारुणाः । सप्तसप्तेर्भविष्यन्ति प्रतप्ताङ्गारवर्षिणः ॥ ४
और्वानलोऽपि विकृतिं गमिष्यति युगक्षये । विषाग्निश्चापि पातालात्संकर्षणमुखच्युतः ॥
भवस्यापि ललाटोत्थस्तृतीयनयनानलः ॥ ५
त्रिजगन्निर्दहन्क्षोभं समेष्यति महामुने । एवं दग्धा मही सर्वा यदा स्याद्भस्मसंनिभा ॥ ६
आकाशमूष्मणा तप्तं भविष्यति परंतप । ततः सदेवनक्षत्रं जगद्यास्यति संक्षयम् ॥ ७

---

१ ग. °दके । अ° । २ घ. ङ. च. °स्तमात्रम° । ३ घ. ङ. च. तदा । ४ ग. घ. ङ. च. °रेतरः । ५ ग. घ. °ज्ञो भगवानृषिः । म° । ६ ङ. च. °मृषिः । म° । ७ ग. घ. ङ. च. °प्रच्छासुरस्° । ८ °म् । वर्षैः कियद्भिर्भगवन्भवि° । औं° । ९ क. °टोत्थम्तृती° । १० घ. ङ. च. °लः । जगद्दग्धुं तथा क्षोभं ।

संवर्तो भीमनादश्च द्रोणश्चण्डो बलाहकः । विद्युत्पताकः शोणस्तु सप्तैते लयवारिदाः ॥ ८
अग्निप्रस्वेदसंभूताः प्लावयिष्यन्ति मेदिनीम् । समुद्राः क्षोभमागत्य चैकत्वेन व्यवस्थिताः ॥९
एतदेकार्णवं सर्वं करिष्यन्ति जगत्त्रयम् । वेदनावमिमां *गृह्य सत्त्वबीजानि सर्वशः ॥ १०
आरोप्य रज्जुयोगेन मत्प्रदत्तेन सुव्रत । संयम्य नावं मच्छृङ्गे मत्प्रभावाभिरक्षितः ॥ ११
एकः स्थास्यसि देवेषु दग्धेष्वपि परंतप । सोमसूर्यावहं ब्रह्मा चतुर्लोकसमन्वितः ॥ १२
नर्मदा च नदी पुण्या मार्कण्डेयो महानृषिः । भवो वेदाः पुराणानि विद्याभिः सर्वतोवृतम् ॥
त्वया सार्धमिदं विश्वं स्थास्यत्यन्तरसंक्षये । एवमेकार्णवे जाते चाक्षुषान्तरसंक्षये ॥ १४
वेदान्प्रवर्तयिष्यामि त्वत्सर्गादौ महीपते । एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ॥ १५
मनुरप्यास्थितो योगं वासुदेवप्रसादजम् । +अभ्यसन्यावदाभूतसंप्लवं पूर्वसूचितम् ॥ १६
काले यथोक्ते संजाते वासुदेवमुखोद्गते । शृङ्गी प्रादुर्बभूवाथ मत्स्यरूपी जनार्दनः ॥ १७
भुजंगो रज्जुरूपेण मनोः पार्श्वमुपागमत् । भूतान्सर्वान्समाकृष्य योगेनाऽऽरोप्य धर्मवित् १८
भुजंगरज्ज्वा मत्स्यस्य शृङ्गे नावमयोजयत् । उपर्युपस्थितस्तस्याः प्रणिपत्य जनार्दनम् ॥१९
आभूतसंप्लवे तस्मिन्नतीते योगशायिना । पृष्टेन मनुना प्रोक्तं पुराणं मत्स्यरूपिणा ॥
तदिदानीं प्रवक्ष्यामि शृणुध्वमृषिसत्तमाः ॥ २०
यद्भवद्भिः पुरा पृष्टः सृष्ट्यादिकमहं द्विजाः । तदेवैकार्णवे तस्मिन्मनुः पप्रच्छ केशवम् ॥२१

मनुरुवाच—

उत्पत्तिं प्रलयं चैव वंशान्मन्वन्तराणि च । वंश्यानुचरितं चैव भुवनस्य च विस्तरम् ॥ २२
दानधर्मविधिं चैव श्राद्धकल्पं च शाश्वतम् । वर्णाश्रमविभागं च तथेष्टापूर्तसंज्ञितम् ॥ २३
देवतानां प्रतिष्ठादि यच्चान्यद्विद्यते भुवि । तत्सर्वं विस्तरेण त्वं धर्मं व्याख्यातुमर्हसि ॥ २४

मत्स्य उवाच—

महाप्रलयकालान्त एतदासीत्तमोमयम् । प्रसुप्तमिव चातर्क्यमप्रज्ञातमलक्षणम् ॥ २५
अविज्ञेयमविज्ञातं जगत्स्थास्नु चरिष्णु च । ततः स्वयंभूरव्यक्तः प्रभवः पुण्यकर्मणाम् ॥२६
व्यञ्जयन्नेतदखिलं प्रादुरासीत्तमोनुदः । योऽतीन्द्रियः परो व्यक्तादणुर्ज्यायान्सनातनः ॥
नारायण इति ख्यातः स एकः स्वयमुद्बभौ ॥ २७
यः शरीरादभिध्याय सिसृक्षुर्विविधं जगत् । अप एव ससर्जाऽऽदौ तासु वीर्यमवासृजत् ॥२८
तदेवाण्डं समभवद्धेमरूप्यमयं महत् । संवत्सरसहस्रेण सूर्यायुतसमप्रभम् ॥ २९
प्रविश्यान्तर्महातेजाः स्वयमेवाऽऽत्मसंभवः । प्रभावादपि तद्व्याप्त्या विष्णुत्वमगमत्पुनः ३०
तदन्तर्भगवानेष सूर्यः समभवत्पुरा । आदित्यश्चाऽऽदिभूतत्वाद्ब्रह्मा ब्रह्म पठन्नभूत् ॥ ३१
दिवं भूमिं समकरोत्तदण्डशकलद्वयम् । स चाकरोद्दिशः सर्वा मध्ये व्योम च शाश्वतम् ॥३२

---

* आर्षोऽयं प्रयोगः । + एतदर्धस्थानेऽर्धं पाठो घ. ङ. च. पुस्तकेषु स यथा—अयाभूच्च तदाभूतसंप्लवः पूर्वसूचित इति ।

---

१ क. ख. °भूतां प्ला° । २ ङ. च. सर्वेषां° । ३ ख. °णाश्च वि° । ४ ग. घ. ङ. च. सर्वे । ५ ग. घ. ङ. च. वंशानु° । ६ घ. ङ. च. धर्मं च विविधं श्रा° । ७ क. घ. °सुबीजम° ।

जरायुर्मेरुमुख्याश्च शैलास्तस्याभवंस्तदा। यदुल्वं तदभून्मेघस्तडित्संघातमण्डलम् ॥ ३३
नद्योऽण्डनाम्नः संभूताः पितरो मनवस्तथा। सप्त येऽमी समुद्राश्च तेऽपि चान्तर्जलोद्भवाः॥
लवणेक्षुसुराद्याश्च नानारत्नसमन्विताः ॥ ३४
स सिसृक्षुरभूद्देवः प्रजापतिररिंदम। तत्तेजसश्च तत्रैव मार्तण्डः समजायत ॥ ३५
मृतेऽण्डे जायते यस्मान्मार्तण्डस्तेन संस्मृतः। रजोगुणमयं यत्तद्रूपं तस्य महात्मनः ॥
चतुर्मुखः स भगवानभूल्लोकपितामहः ॥ ३६
येन सृष्टं जगत्सर्वं सदेवासुरमानुषम्। तमवेहि रजोरूपं महत्सत्त्वमुदाहृतम् ॥ ३७

इति श्रीमात्स्ये महापुराण आदिसर्गे ब्रह्माण्डवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥

आदितः श्लोकानां समष्ट्यङ्काः—॥ ७१ ॥

---

अथ तृतीयोऽध्यायः।

---

मनुरुवाच—

चतुर्मुखत्वमगमत्कस्माल्लोकपितामहः। कथं तु लोकानसृजद्ब्रह्मा ब्रह्मविदां वरः॥ १

मत्स्य उवाच—

तपश्चचार प्रथमममराणां पितामहः। आविर्भूतास्ततो वेदाः साङ्गोपाङ्गपदक्रमाः॥ २
पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्। नित्यं शब्दमयं पुण्यं शतकोटिप्रविस्तरम्॥ ३
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः। मीमांसा न्यायविद्याश्च प्रमाणाष्टकसंयुताः ॥
वेदाभ्यासरतस्यास्य प्रजाकामस्य मानसाः। मनसः पूर्वसृष्टा वै जाता यत्तेन मानसाः॥ ५
मरीचिरभवत्पूर्वं ततोऽत्रिर्भगवानृषिः। अङ्गिराश्चाभवत्पश्चात्पुलस्त्यस्तदनन्तरम्॥ ६
ततः पुलहनामा वै ततः क्रतुरजायत। प्रचेताश्च ततः पुत्रो वसिष्ठश्चाभवत्पुनः ॥ ७
पुत्रो भृगुरभूत्तद्वन्नारदोऽप्यचिरादभूत्। दशेमान्मानसान्ब्रह्मा मुनीन्पुत्रानजीजनत्॥ ८
शारीरानथ वक्ष्यामि मातृहीनान्प्रजापतेः। अङ्गुष्ठाद्दक्षिणाद्दक्षः प्रजापतिरजायत ॥ ९
धर्मः स्तनान्तादभवद्धृदयात्कुसुमायुधः। भ्रूमध्यादभवत्क्रोधो लोभश्चाधरसंभवः॥ १०
बुद्धेर्मोहः समभवदहंकारादभून्मदः। प्रमोदश्चाभवत्कण्ठान्मृत्युर्लोचनतो नृप॥
भरतः करमध्यात्तु ब्रह्मसूनुरभूत्ततः॥ ११
एते नव सुता राजन्कन्या च दशमी पुनः। अङ्गजा इति विख्याता दशमी ब्रह्मणः सुता॥ १२

मनुरुवाच—

बुद्धेर्मोहः समभवदिति यत्परिकीर्तितम्। अहंकारः स्मृतः क्रोधो बुद्धिर्नाम किमुच्यते १३

मत्स्य उवाच—

सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम्। साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्तिता॥ १४
केचित्प्रधानमित्याहुरव्यक्तमपरे जगुः। एतदेव प्रजासृष्टिं करोति विकरोति च॥ १५

---

१ ग. घ. च. 'नाड्यः सं°। २ ङ. °यशास्त्राणि प्र'। च. °यसहिताप्र°। ३ ङ. 'तास्ततेन। ४ ग. घ. यत्नेन। ५ ग. ङ. च. 'ह्मा जपन्पु'। ६ ङ. च. °व्याहृतिः।

गुणेभ्यः क्षोभमाणेभ्यस्त्रयो देवा विजज्ञिरे । एका मूर्तिस्त्रयो भागा ब्रह्मविष्णुमहेश्वराः॥ १६
सविकारात्प्रधानात्तु महत्तत्त्वं प्रजायते । महानिति यतः ख्यातिर्लोकानां जायते सदा ॥ १७
अहंकारश्च महतो जायते मानवर्धनः । इन्द्रियाणि ततः पञ्च वक्ष्ये बुद्धिवशानि तु ॥
प्रादुर्भवन्ति चान्यानि तथा कर्मवशानि तु ॥ १८
श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका च यथाक्रमम् । पायूपस्थं हस्तपादं वाक्चेतीन्द्रियसंग्रहः॥
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः । उत्सर्गानन्दनादानगत्यालापाश्च तत्क्रियाः॥२०
मन एकादशं तेषां कर्मबुद्धिगुणान्वितम् । इन्द्रियावयवाः सूक्ष्मास्तस्य मूर्तिं मनीषिणः २१
श्रयन्ति यस्मात्तन्मात्राः शरीरं तेन संस्मृतम् । शरीरयोगाज्जीवोऽपि शरीरी गद्यते बुधैः॥२२
मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया । आकाशं शब्दतन्मात्रादभूच्छब्दगुणात्मकम्॥ २३
आकाशविकृतेर्वायुः शब्दस्पर्शगुणोऽभवत् । वायोश्च स्पर्शतन्मात्रात्तेजश्चाऽऽविरभूत्ततः ॥
त्रिगुणं तद्विकारेण तच्छब्दस्पर्शरूपवत् । तेजोविकारादभवद्वारि राजंश्चतुर्गुणम् ॥ २५
रसतन्मात्रसंभूतं प्रायो रसगुणात्मकम् । भूमिस्तु गन्धतन्मात्रादभूत्पञ्चगुणान्विता ॥ २६
प्रायो गन्धगुणा सा तु बुद्धिरेषा गरीयसी । एभिः संपादितं भुङ्क्ते पुरुषः पञ्चविंशकः ॥ २७
ईश्वरेच्छावशः सोऽपि जीवात्मा कथ्यते बुधैः । एवं षड्विंशकं प्रोक्तं शरीरमिह मानवैः ॥ २८
सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते । एतत्तत्त्वात्मकं कृत्वा जगद्वेधा अजीजनत्२९
सावित्री लोकसृष्ट्यर्थं हृदि कृत्वा समास्थितः । ततः संजपतस्तस्य भित्त्वा देहमकल्मषम् ॥
स्त्रीरूपमर्धमकरोदर्धं पुरुषरूपवत् । शतरूपा च सा ख्याता सावित्री च निगद्यते ॥ ३१
सरस्वत्यथ गायत्री ब्रह्माणी च परंतप । ततः स्वदेहसंभूतामात्मजामित्यकल्पयत् ॥ ३२
दृष्ट्वा तां व्यथितस्तावत्कामबाणार्दितो विभुः । *अहो रूपमहो रूपमिति चाऽऽह प्रजापतिः
ततो वसिष्ठप्रमुखा भगिनीमिति चुक्रुशुः । ब्रह्मा न किंचिद्ददृशे तन्मुखालोकनादृते ॥ ३४
अहो रूपमहो रूपमिति प्राह पुनः पुनः । ततः प्रणामनम्रां तां पुनरेवाभ्यलोकयत् ॥ ३५
अथ प्रदक्षिणं चक्रे सा पितुर्वरवर्णिनी । पुत्रेभ्यो लज्जितस्यास्य तद्रूपालोकनेच्छया ॥ ३६
आविर्भूतं ततो वक्त्रं दक्षिणं पाण्डुगण्डवत् । विस्मयस्फुरदोष्ठं च पाश्चात्यमुदगात्ततः॥ ३७
चतुर्थमभवत्पश्चाद्वामं कामशरातुरम् । ततोऽन्यदभवत्तस्य कामातुरतया तथा ॥ ३८
उत्पतन्त्यास्तदाकाश आलोकनकुतूहलात् । सृष्ट्यर्थं यत्कृतं तेन तपः परमदारुणम् ॥ ३९
तत्सर्वं नाशमगमत्स्वसुतोपगमेच्छया । तेनोर्ध्वं वक्त्रमभवत्पञ्चमं तस्य धीमतः ॥
आविर्भवज्जटाभिश्च तद्वक्त्रं चाऽऽवृणोत्प्रभुः ॥ ४०
ततस्तानब्रवीद्ब्रह्मा पुत्रानात्मसमुद्भवान् । प्रजाः सृजध्वमभितः सदेवासुरमानुषीः ॥ ४१
एवमुक्तास्ततः सर्वे ससृजुर्विविधाः प्रजाः । गतेषु तेषु सृष्ट्यर्थं प्रणामावनतामिमाम् ॥ ४२
उपयेमे स विश्वात्मा शतरूपामनिन्दिताम् । स बभूव तया सार्धमतिकामातुरो विभुः ॥
स लज्जां चकमे देवः कमलोदरमन्दिरे ॥ ४३
यावदब्दशतं दिव्यं यथाऽन्यः प्राकृतो जनः ततः कालेन महता तस्याः पुत्रोऽभवन्मनुः ४४

* इत आरभ्य लोकनादृत इत्यन्तग्रन्थो ङ. पुस्तके नास्ति ।

१ ग. देवाः । २ ख. घ. °र इह मानवे । सां° । ३ घ. ङ. च. °गद्वैवमजी° । ४ ग. तेनाऽऽवृ° । ५ क. ख. °मू । संब° ।

स्वायंभुव इति ख्यातः स विराडिति नः श्रुतम्। तद्रूपगुणसामान्याद्धिपूरुष उच्यते ॥ ४५
वैराजा यत्र ते जाता बहवः संशितव्रताः। स्वायंभुवा महाभागाः सप्त सप्त तथा परे॥ ४६
स्वारोचिषाद्याः सर्वे ते ब्रह्मतुल्यस्वरूपिणः। औत्तमिप्रमुखास्तद्वद्येषां त्वं सप्तमोऽधुना ४७

इति श्रीमात्स्ये महापुराण आदिसर्गे मुखोत्पत्तिर्नाम तृतीयोऽध्यायः ॥ ३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—॥ ११८ ॥

---

अथ चतुर्थोऽध्यायः।

---

मनुरुवाच—

अहो कष्टतरं चैतदङ्गजागमनं विभो। कथं न दोषमगमत्कर्मणाऽनेन पद्मभूः॥ १
परस्परं च संबन्धः सगोत्राणामभूत्कथम्। वैवाहिकस्तत्सुतानां छिन्धि मे संशयं विभो ॥ २

मत्स्य उवाच—

दिव्येयमादिसृष्टिस्तु रजोगुणसमुद्भवा। अतीन्द्रियेन्द्रिया तद्वदतीन्द्रियशरीरिका॥ ३
दिव्यतेजोमयी भूप दिव्यज्ञानसमुद्भवा। न मर्त्यैरभितः शक्या वक्तुं वै मांसचक्षुभिः॥ ४
यथा भुजङ्गाः सर्पाणामाकाशं विश्वपक्षिणाम्। विदन्ति मार्गं दिव्यानां दिव्या एव न मानवाः
कार्याकार्ये न देवानां शुभाशुभफलप्रदे। यस्मात्तस्मान्न राजेन्द्र तद्विचारो नृणां शुभः॥ ६
अन्यच्च सर्ववेदानामधिष्ठाता चतुर्मुखः। गायत्री ब्रह्मणस्तद्वदङ्गभूता निगद्यते॥ ७
अमूर्तं मूर्तिमद्वाऽपि मिथुनं तत्प्रचक्षते। विरिञ्चिर्यत्र भगवांस्तत्र देवी सरस्वती ॥
भारती यत्र यत्रैव तत्र तत्र प्रजापतिः॥ ८
यथाऽऽतपो न रहितश्छायया दृश्यते क्वचित्। गायत्री ब्रह्मणः पार्श्वं तथैव न विमुञ्चति॥ ९
वेदराशिः स्मृतो ब्रह्मा सावित्री तदधिष्ठिता। तस्मान्न कश्चिद्दोषः स्यात्सावित्रीगमने विभोः
तथाऽपि लज्जावनतः प्रजापतिरभूत्पुरा। स्वसुतोपगमाद्ब्रह्मा शशाप कुसुमायुधम्॥ ११
यस्मान्ममाभिभवता मनः संक्षोभितं शरैः। तस्मात्त्वद्देहमचिराद्रुद्रो भस्मी करिष्यति॥ १२
ततः प्रसादयामास कामदेवश्चतुर्मुखम्। न मामकारणे शप्तुं त्वमिहार्हसि मानद॥ १३
अहमेवंविधः सृष्टस्त्वयैव चतुरानन। इन्द्रियक्षोभजनकः सर्वेषामेव देहिनाम्॥ १४
स्त्रीपुंसोरविचारेण मया सर्वत्र सर्वदा। क्षोभ्यं मनः प्रयत्नेन त्वयैवोक्तं पुरा विभो॥ १५
तस्मादनपराधोऽहं त्वया शप्तस्तथा विभो। कुरु प्रसादं भगवन्स्वशरीराप्तये पुनः॥ १६

ब्रह्मोवाच—

वैवस्वतेऽन्तरे प्राप्ते यादवान्वयसंभवः। रामो नाम यदा मर्त्यो मत्सत्त्वबलमाश्रितः॥ १७
अवतीर्यासुरध्वंसी द्वारकामधिवत्स्यति। तद्भ्रातुस्तत्समस्य त्वं तदा पुत्रत्वमेष्यसि॥ १८
एवं शरीरमासाद्य भुक्त्वा भोगानशेषतः। ततो भरतवंशान्ते भूत्वा वत्सनृपात्मजः॥ १९
विद्याधराधिपत्यं च यावदाभूतसंप्लवम्। सुखानि धर्मतः प्राप्य मत्समीपं गमिष्यसि॥ २०

---

१ ग. °णः। उत्तमप्र°। २ ग. घ. ङ. 'भ्रजः। प'। ३ घ. ङ. च. मानुषाः। ४ घ. ङ. च. °न्यत्र सर्वदेवानां°। ५ ग. °र्वदेवानां°।

एवं शापप्रसादाभ्यामुपेतः कुसुमायुधः । शोकप्रमोदाभियुतो जगाम स यथागतम् ॥ २१

मनुरुवाच—

कोऽसौ यदुरिति प्रोक्तो यद्वंशे कामसंभवः । कथं च दग्धो रुद्रेण किमर्थं कुसुमायुधः ॥ २२

भरतस्यान्वये कस्य का च सृष्टिः पुराऽभवत् । एतत्सर्वं समाचक्ष्व मूलतः संशयो हि मे ॥ २३

मत्स्य उवाच—

या सा देहार्धसंभूता गायत्री ब्रह्मवादिनी । जननी या मनोर्देवी शतरूपा शतेन्द्रिया ॥ २४

रतिर्मनस्तपो बुद्धिर्महान्दिक्संभ्रमस्तथा । ततः स शतरूपायां सप्तापत्यान्यजीजनत् ॥ २५

ये मरीच्यादयः पुत्रा मानसास्तस्य धीमतः । तेषामयमभूल्लोकः सर्वज्ञानात्मकः पुरा ॥ २६

ततोऽसृजद्वामदेवं त्रिशूलवरधारिणम् । सनत्कुमारं च विभुं पूर्वेषामपि पूर्वजम् ॥ २७

वामदेवस्तु भगवानसृजन्मुखतो द्विजान् । राजन्यानसृजद्बाह्वोर्विट्शूद्रानूरुपादयोः ॥ २८

विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च । छन्दांसि च ससर्जाऽऽदौ पर्जन्यं च ततः परम् २९

ततः साध्यगणानीशस्त्रिनेत्रानसृजत्पुनः । कोटीश्च चतुरशीतिं जरामरणवर्जिताः[1] ॥ ३०

वामोऽसृजन्नमर्त्यांस्तान्ब्रह्मणा विनिवारितः । नैवंविधा भवेत्सृष्टिर्जरामरणवर्जिता ॥ ३१

शुभाशुभात्मिका या तु सैव सृष्टिः प्रशस्यते । एवं स्थितः स तेनाऽऽदौ सृष्टेः स्थाणुरतोऽभवत्

स्वायंभुवो मनुर्धीमांस्तपस्तप्त्वा सुदुश्चरम् । पत्नीमेवाऽऽप रूपाढ्यामनन्ता नाम नामतः[2] ॥

प्रियव्रतोत्तानपादौ मनुस्तस्यामजीजनत् । धर्मस्य कन्या चतुरा सूनृता नाम भामिनी ॥ ३४

उत्तानपादात्तनयान्प्राप मन्थरगामिनी । अपस्यतिमपस्यन्तं कीर्तिमन्तं ध्रुवं तथा ॥ ३५

उत्तानपादोऽजनयत्सूनृतायां प्रजापतिः । ध्रुवो वर्षसहस्राणि त्रीणि कृत्वा तपः पुरा ॥ ३६

दिव्यमाप ततः स्थानमचलं ब्रह्मणो वरात् । तमेव पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः ॥ ३७

धन्या नाम मनोः कन्या ध्रुवाच्छ्रिष्टमजीजनत्[3] । अग्निकन्या तु सुच्छाया शिष्टात्सा सुषुवे सुतान्[4] ॥ ३८

कृपं रिपुं जयं वृत्तं वृकं च वृकतेजसम् । चक्षुषं ब्रह्मदौहित्र्यां वीरिण्यां स रिपुंजयः ॥ ३९

वीरणस्याऽऽत्मजायां तु चक्षुर्मनुमजीजनत् । मनुर्वै राजकन्यायां नड्वलायां स चाक्षुषः ४०

जनयामास तनयान्दश शूरानकल्मषान् । ऊरुः पूरुः शतद्युम्नस्तपस्वी सत्यवाग्घविः[5] ॥ ४१

अग्निष्टुदतिरात्रश्च सुद्युम्नश्चापराजितः । अभिमन्युस्तु दशमो नड्वलायामजायत ॥ ४२

ऊरोरजनयत्पुत्रान्षडाग्नेयी तु सुप्रभान् । अग्निं सुमनसं ख्यातिं क्रतुमङ्गिरसं गयम् ॥ ४३

पितृकन्या सुनीथा तु वेनमङ्गादजीजनत् । वेनमन्यायिनं विप्रा ममन्थुस्तत्करादभूत् ॥

पृथुर्नाम महातेजाः स पुत्रौ द्वावजीजनत् ॥ ४४

अन्तर्धानस्तु मारीचं शिखण्डिन्यामजीजनत् । हविर्धानात्षडाग्नेयी धिषणाऽजनयत्सुतान् ॥

प्राचीनबर्हिषं साङ्गं यमं शुक्रं बलं शुभम् ॥ ४५

प्राचीनबर्हिर्भगवान्महानासीत्प्रजापतिः । हविर्धानाः प्रजास्तेन बहवः संप्रवर्तिताः ॥ ४६

सवर्णायां तु सामुद्र्यां दशाऽऽधत्त सुतान्प्रभुः[6] । सर्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः ॥ ४७

---

१ घ. ङ. च. °ताः । ससंर्ज° । २ क. ख. °नन्तीं नाम नामतः । ३ ङ. च. °वात्स्यष्टिम° । ४ ग. °च्छिष्टिम° ।
५ घ. °ष्टादाधत्त वै सु° । ६ ग. ङ. च. वाक्कविः ।

तत्तपोरक्षिता वृक्षा बभुर्लोके समन्ततः। देवादेशाच्च तानग्निरदहद्रविनन्दन ॥ ४८
सोमकन्याऽभवत्पत्नी मारीषा नाम विश्रुता। तेभ्यस्तु दक्षमेकं सा पुत्रमग्र्यमजीजनत् ॥ ४९
दक्षादनन्तरं वृक्षानौषधानि च सर्वशः। अजीजनत्सोमकन्या नदीं चन्द्रवतीं तथा ॥ ५०
सोमांशस्य च तस्यापि दक्षस्याशीतिकोटयः। वक्ष्ये तासां तु विस्तारं लोके यः सुप्रतिष्ठितः ॥
द्विपदश्चाभवन्केचित्केचिद्बहुपदा नराः। वलीमुखाः शङ्कुकर्णाः कर्णप्रावरणास्तथा ॥ ५२
अश्वऋक्ष मुखाः केचित्केचित्सिंहाननास्तथा। श्वसूकरमुखाः केचित्केचिदुष्ट्रमुखास्तथा ५३
जनयामास धर्मात्मा म्लेच्छान्सर्वाननेकशः। स सृष्ट्वा मनसा दक्षः स्त्रियः पश्चादजीजनत् ५४
ददौ स दश धर्माय कश्यपाय त्रयोदश। सप्तविंशतिं सोमाय ददौ नक्षत्रसंज्ञिताः ॥
देवासुरमनुष्यादि ताभ्यः सर्वमभूज्जगत् ॥ ५५

इति श्रीमात्स्ये महापुराणे आदिसर्गे चतुर्थोऽध्यायः ॥ ४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—॥ १७३ ॥

---

अथ पञ्चमोऽध्यायः।

---

ऋषय ऊचुः—

देवानां दानवानां च गन्धर्वोरगरक्षसाम्। उत्पत्तिं विस्तरेणैव सूत ब्रूहि यथातथम् ॥ १

सूतउवाच—

संकल्पाद्दर्शनात्स्पर्शात्पूर्वेषां सृष्टिरुच्यते। दक्षात्प्राचेतसादूर्ध्वं सृष्टिर्मैथुनसंभवा ॥ २
प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयंभुवा। यथा ससर्ज चैवाऽऽदौ तथैव शृणुत द्विजाः॥ ३
यदा तु सृजतस्तस्य देवर्षिगणपन्नगान्। न वृद्धिमगमल्लोकस्तदा मैथुनयोगतः ॥
दक्षः पुत्रसहस्राणि पाञ्चजन्यामजीजनत्॥ ४
तांस्तु दृष्ट्वा महाभागः सिसृक्षुर्विविधाः प्रजाः। नारदः प्राह हर्यश्वान्दक्षपुत्रान्समागतान् ५
भुवः प्रमाणं सर्वत्र ज्ञात्वोर्ध्वमध एव च। ततः सृष्टिं विशेषेण कुरुध्वमृषिसत्तमाः॥ ६
ते तु तद्वचनं श्रुत्वा प्रयाताः सर्वतो दिशम्। अद्यापि न निवर्तन्ते समुद्रादिव सिन्धवः ॥ ७
हर्यश्वेषु प्रनष्टेषु पुनर्दक्षः प्रजापतिः। वैरिण्यामेव पुत्राणां सहस्रमसृजत्प्रभुः ॥ ८
शबला नाम ते विप्राः समेताः सृष्टिहेतवः। नारदोऽनुगतान्प्राह पुनरतान्पूर्ववत्स तान् ॥ ९
भुवः प्रमाणं सर्वत्र ज्ञात्वा भ्रातॄनथो पुनः। आगत्य चाथ सृष्टिं च करिष्यथ विशेषतः ॥ १०
तेऽपि तेनैव मार्गेण जग्मुर्भ्रातृपथा तदा। ततः प्रभृति न भ्रातुः कनीयान्मार्गमिच्छति॥
अन्विष्यन्दुःखमाप्नोति तेन तत्परिवर्जयेत्॥ ११
ततस्तेषु विनष्टेषु षष्टिं कन्याः प्रजापतिः। वैरिण्यां जनयामास दक्षः प्राचेतसस्तथा॥ १२
प्रादात्स दश धर्माय कश्यपाय त्रयोदश। सप्तविंशतिं सोमाय चतस्रोऽरिष्टनेमये ॥ १३
द्वे चैव भृगुपुत्राय द्वे कृशाश्वाय धीमते। द्वे चैवाङ्गिरसे तद्वत्तासां नामानि विस्तरात्॥ १४
शृणुध्वं देवमातॄणां प्रजाविस्तारमादितः। मरुत्वती वसुर्यामी लम्बा भानुररुन्धती ॥ १५

---

१ ष. ङ. च. 'णि पञ्चसोऽन्यानजी'। २ ङ. च. 'वसुता'।

संकल्पा च मुहूर्ता च साध्या विश्वा च भामिनी । धर्मपत्न्यः समाख्यातास्तासां पुत्रान्निबोधत ॥ १६

विश्वे देवास्तु विश्वायाःसाध्या साध्यानजीजनत् । मरुत्वत्यां मरुत्वन्तो वसोस्तु वसवस्तथा
भानोस्तु भानवस्तद्वन्मुहूर्तायां मुहूर्तकाः । लम्बायां घोषनामानो नागवीथी तु यामिजा १८
पृथिवीतलसंभूतमरुन्धत्यामजायत । संकल्पायास्तु संकल्पो वसुसृष्टिं निबोधत ॥ १९
ज्योतिष्मन्तस्तु ये देवा व्यापकाः सर्वतो दिशम् । वसवस्ते समाख्यातास्तेषां सर्गं निबोधत ॥
आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ २१
आपस्य पुत्राश्चत्वारः शान्तो वै दण्ड एव च । शाम्बोऽथ मणिवक्त्रश्च यज्ञरक्षाधिकारिणः॥
ध्रुवस्य कालः पुत्रस्तु वर्चाः सोमादजायत । द्रविणो हव्यवाहश्च धरपुत्रावुभौ स्मृतौ ॥ २३
कल्याणिन्यां ततः प्राणो रमणः शिशिरोऽपि च । मनोहरा धरात्पुत्रानवापाथ हरेः सुता २४
शिवा मनोजवं पुत्रमविज्ञातगतिं तथा । अवाप चानलात्पुत्रावग्निप्रायगुणौ पुनः ॥ २५
अग्निपुत्रः कुमारस्तु शरस्तम्बे व्यजायत । तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजाः ॥ २६
अपत्यं कृत्तिकानां तु कार्तिकेयस्ततः स्मृतः । प्रत्यूषस ऋषिः पुत्रो विभुर्नाम्नाऽथ देवलः
विश्वकर्मा प्रभासस्य पुत्रः शिल्पी प्रजापतिः ॥ २७
प्रासादभवनोद्यानप्रतिमाभूषणादिषु । तडागारामकूपेषु स्मृतः सोऽमरवर्धकिः ॥ २८
अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः । हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥ २९
सावित्रश्च जयन्तश्च पिनाकी चापराजितः । एते रुद्राः समाख्याता एकादश गणेश्वराः ॥३०
एतेषां मानसानां तु त्रिशूलवरधारिणाम् । कोटयश्चतुरशीतिस्तत्पुत्राश्चाक्षया मताः ॥ ३१
दिक्षु सर्वासु ये रक्षां प्रकुर्वन्ति गणेश्वराः । पुत्रपौत्रसुताश्चैते सुरभीगर्भसंभवाः ॥ ३२

इति श्रीमात्स्ये महापुराण आदिसर्गे वसुरुद्रान्वयो नाम पञ्चमोऽध्यायः ॥ ५ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ २०५ ॥

---

अथ षष्ठोऽध्यायः ।

---

सूत उवाच—

कश्यपस्य प्रवक्ष्यामि पत्नीभ्यः पुत्रपौत्रकान् । अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा तथा ॥१
सुरभिर्विनता तद्वत्ताम्रा क्रोधवशा इरा । कद्रूर्विश्वा मुनिस्तद्वत्तासां पुत्रान्निबोधत ॥ २
तुषिता नाम ये देवाश्चाक्षुषस्यान्तरे मनोः । वैवस्वतेऽन्तरे चैते ह्यादित्या द्वादश स्मृताः ॥३
इन्द्रो धाता भगस्त्वष्टा मित्रोऽथ वरुणो यमः । विवस्वान्सविता पूषा अंशुमान्विष्णुरेव च४
एते सहस्रकिरणा आदित्या द्वादश स्मृताः । *मारीचात्कश्यपादाप पुत्रानदितिरुत्तमान् ॥ ५

---

* एतदर्धस्थानेऽयंपाठो ङ. च. पुस्तकयोः—पुत्रानजीजनादिमान्देवानदितिरुत्तमानिति ।

---

१ घ. ङ. च. सुतान् । २ ग. °तमार्ते । ३ घ. ङ. च. स्वयंभुवः । ४ घ ङ. च. पुत्र ऋषिर्नाम्ना । ५ ग. °श्रो मुनिर्नामाथ । ६ घ. ङ. च. °त्रकम् । अ° । ७ घ. ङ च. दनु ।

कृशाश्वस्य ऋषेः पुत्रा देवप्रहरणाः स्मृताः। एते देवगणा विप्राः प्रतिमन्वन्तरेषु च॥ ६
उत्पद्यन्ते प्रलीयन्ते कल्पे कल्पे तथैव च। दितिः पुत्रद्वयं लेभे कश्यपादिति नः श्रुतम्॥ ७
हिरण्यकशिपुश्चैव हिरण्याक्षस्तथैव च। हिरण्यकशिपोस्तद्वज्जातं पुत्रचतुष्टयम्॥ ८
प्रह्लादश्चानुह्लादश्च संह्लादो ह्लाद एव च। प्रह्लादपुत्र आयुष्मान्छिबिर्बाष्कल एव च॥ ९
विरोचनश्चतुर्थश्च स बलिं पुत्रमाप्तवान्। बलेः पुत्रशतं त्वासीद्बाणज्येष्ठं ततो द्विजाः॥ १०
धृतराष्ट्रस्तथा सूर्यश्चन्द्रश्चन्द्रांशुतापनः। निकुम्भनाभो गुर्वक्षः कुक्षिभीमो विभीषणः॥ ११
एवमाद्यास्तु बहवो बाणज्येष्ठा गुणाधिकाः। बाणः सहस्रबाहुश्च सर्वास्त्रगणसंयुतः॥ १२
तपसा तोषितो यस्य पुरे वसति शूलभृत्। महाकालत्वमगमत्साम्यं यश्च पिनाकिनः॥ १३
हिरण्याक्षस्य पुत्रोऽभूदुलूकः शकुनिस्तथा। भूतसंतापनश्चैव महानाभस्तथैव च॥ १४
एतेभ्यः पुत्रपौत्राणां कोटयः सप्तसप्ततिः। महाबला महाकाया नानारूपा महौजसः॥ १५
दनुः पुत्रशतं लेभे कश्यपाद्बलदर्पितम्। विप्रचित्तिः प्रधानोऽभूद्येषां मध्ये महाबलः॥ १६
द्विमूर्धा शकुनिश्चैव तथा शङ्कुशिरोधरः। अयोमुखः शम्बरश्च कपिशो वामनस्तथा॥ १७
मारीचिर्मेघवांश्चैव इरागर्भशिरास्तथा। विद्रावणश्च केतुश्च केतुवीर्यः शतह्रदः॥ १८
इन्द्रजित्सप्तजिच्चैव वज्रनाभस्तथैव च। एकचक्रो महाबाहुर्वज्राक्षस्तारकस्तथा॥ १९
असिलोमा पुलोमा च बिन्दुर्बाणो महासुरः। स्वर्भानुर्वृषपर्वा च एवमाद्या दनोः सुताः॥ २०
स्वर्भानोस्तु प्रभा कन्या शची चैव पुलोमजा। उपदानवी मयस्याऽऽसीत्तथा मन्दोदरी कुहूः॥ २१
शर्मिष्ठा सुंदरी चैव चन्द्रा च वृषपर्वणः। पुलोमा कालका चैव वैश्वानरसुते हि ते॥ २२
बह्वपत्ये महासत्त्वे मारीचस्य परिग्रहे। तयोः षष्टिसहस्राणि दानवानामभूत्पुरा॥ २३
पौलोमान्कालकेयांश्च मारीचोऽजनयत्पुरा। अवध्या येऽमराणां वै हिरण्यपुरवासिनः॥ २४
चतुर्मुखाल्लब्धवरास्ते हता विजयेन तु। विप्रचित्तिः सैंहिकेयान्सिंहिकायामजीजनत्॥ २५
हिरण्यकशिपोर्ये वै भागिनेयास्त्रयोदश। व्यंसः कल्पश्च राजेन्द्र नलो वातापिरेव च॥ २६
इल्वलो नमुचिश्चैव श्वसृपश्चाजनस्तथा। नरकः कालनाभश्च सरमाणस्तथैव च॥ २७
कालवीर्यश्च विख्यातो दनुवंशविवर्धनाः। संह्लादस्य तु दैत्यस्य निवातकवचाः स्मृताः॥ २८
अवध्याः सर्वदेवानां गन्धर्वोरगरक्षसाम्। ये हता भर्गमाश्रित्य त्वर्जुनेन रणाजिरे॥ २९
षट्कन्या जनयामास ताम्रा मारीचबीजतः। शुकी श्येनी च भासी च सुग्रीवी गृध्रिका शुचिः॥ ३०
शुकी शुकानुलूकांश्च जनयामास धर्मतः। श्येनी श्येनांस्तथा भासी कुररानप्यजीजनत्॥ ३१
गृध्री गृध्रान्कपोतांश्च पारावतविहंगमान्। हंससारसक्रौञ्चांश्च प्लवाञ्छुचिरजीजनत्॥ ३२
अजाश्वमेषोष्ट्रखरान्सुग्रीवी चाप्यजीजनत्। एष ताम्रान्वयः प्रोक्तो विनतायां निबोधत॥ ३३
गरुडः पततां नाथो अरुणश्च पतत्रिणाम्। सौदामनी तथा कन्या येयं नभसि विश्रुता॥ ३४
संपातिश्च जटायुश्च अरुणस्य सुतावुभौ। संपातिपुत्रो बभ्रुश्च शीघ्रगश्चापि विश्रुतः॥ ३५
जटायुषः कर्णिकारः शतगामी च विश्रुतौ। सारसो रज्जुवालश्च भेरुण्डश्चापि तत्सुताः॥ ३६
तेषामनन्तमभवत्पक्षिणां पुत्रपौत्रकम्। सुरसायाः सहस्रं तु सर्पाणामभवत्पुरा॥ ३७

---

१ क. ख. 'शिपुं चैव हिरण्याक्षं तथै°। २ ग. घ. प्रन्हादश्चानुन्हादश्च संन्हादो न्हाद ए°। ३ ग. घ. ङ. च. परिग्रहः। ४ घ. ङ. च. व्यंशः शल्यश्च। ५ ग. ङ. च. सुताः। ६ ग. ङ. च. °तां बलमा°। ७ क. च. वरुणश्च।

सहस्रशिरसां कद्रूः सहस्रं चापि सुव्रत । प्रधानास्तेषु विख्याताः षड्विंशतिररिंदम ॥ ३८
शेषवासुकिकर्कोटशङ्खैरावतकम्बलाः । धनञ्जयमहानीलपद्माश्वतरतक्षकाः ॥ ३९
एलापत्रमहापद्मधृतराष्ट्रबलाहकाः । शङ्खपालमहाशङ्खपुष्पदंष्ट्रशुभाननाः ॥ ४०
शङ्कुरोमा च बहुलो वामनः पाणिनस्तथा । कपिलो दुर्मुखश्चापि पतञ्जलिरिति स्मृताः ॥ ४१
एषामनन्तमभवत्सर्वेषां पुत्रपौत्रकम् । प्रायशो यत्पुरा दग्धं जनमेजयमन्दिरे ॥ ४२
रक्षोगणं क्रोधवशा स्वनामानमजीजनत् । दंष्ट्रिणां नियुतं तेषां भीमसेनादगात्क्षयम् ॥ ४३
रुद्राणां च गणं तद्वद्गोमहिष्यो वराङ्गनाः । सुरभिर्जनयामास कश्यपात्संयतव्रता ॥ ४४
मुनिर्मुनीनां च गणं गणमप्सरसां तथा । तथा किन्नरगन्धर्वानरिष्टाऽजनयद्बहून् ॥ ४५
तृणवृक्षलतागुल्ममिरा सर्वमजीजनत् । विश्वा तु यक्षरक्षांसि जनयामास कोटिशः* ॥ ४६
तत एकोनपञ्चाशन्मरुतः कश्यपाद्दितिः । जनयामास धर्मज्ञान्सर्वानमरवल्लभान् ॥ ४७

इति श्रीमात्स्ये महापुराण आदिसर्गे कश्यपान्वयो नाम षष्ठोऽध्यायः ॥ ६ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ २५२ ॥

---

अथ सप्तमोऽध्यायः ।

---

ऋषय ऊचुः—

दितेः पुत्राः कथं जाता मरुतो देववल्लभाः । देवैर्जग्मुश्च सापत्नैः कस्मात्ते सख्यमुत्तमम् ॥ १

सूत उवाच—

पुरा देवासुरे युद्धे हतेषु हरिणा सुरैः । पुत्रपौत्रेषु शोकार्ता गत्वा भूलोकमुत्तमम् ॥ २
स्यमन्तपञ्चके क्षेत्रे सरस्वत्यास्तटे शुभे । भर्तुराराधनपरा तप उग्रं चचार ह ॥ ३
तदा दितिर्दैत्यमाता ऋषिरूपेण सुव्रता । फलाहारा तपस्तेपे कृच्छ्रं चान्द्रायणादिकम् ॥ ४
यावद्वर्षशतं साग्रं जराशोकसमाकुला । ततः सा तपसा तप्ता वसिष्ठादीनपृच्छत ॥ ५
कथयन्तु भवन्तो मे पुत्रशोकविनाशनम् । व्रतं सौभाग्यफलदमिह लोके परत्र च ॥ ६
ऊचुर्वसिष्ठप्रमुखा मदनद्वादशीव्रतम् । यस्याः प्रभावादभवत्सुतशोकविवर्जिता ॥ ७

ऋषय ऊचुः—

श्रोतुमिच्छामहे सूत मदनद्वादशीव्रतम् । सुतानेकोनपञ्चाशद्येन लेभे दितिः पुनः ॥ ८

सूत उवाच—

यद्वसिष्ठादिभिः पूर्वं दितेः कथितमुत्तमम् । विस्तरेण तदेवेदं मत्सकाशान्निबोधत ॥ ९
चैत्रे मासि सिते पक्षे द्वादश्यां नियतव्रतः । स्थापयेदव्रणं कुम्भं सिततण्डुलपूरितम् ॥ १०

---

* इतउत्तरमयं श्लोको म. घ. ङ. च पुस्तकेषु—एते कश्यपदायादाः कीर्तिताश्च सहस्रशः । एष मन्वन्तरे राजन्सर्गः स्वारोचिषे स्मृतः । इति ।

---

१ ग. ङ. सुव्रता । २ ङ. °रनुत्तमाः । शे° । ३ ग. घ. च. °न्दमाः । शे° । ४ ङ. प्रायेण । ५ घ. ङ. च. °पाच्छिवतत्परात् । मुनि° । ६ क. भूलोक° । ङ. च. भूभागमु° । ७ ग. घ. ङ. च. तीर्थे । ८ क. ख. सुव्रत । ङ. च. सुप्रभा । ९ ख. ग. °प्रं जाता शो° । १० ग. प्रसादा° ।

नानाफलयुतं तद्वद्दिक्षुदण्डसमान्वितम् । सितवस्त्रयुगच्छन्नं सितचन्दनचर्चितम् ॥ ११
नानाभक्ष्यसमोपेतं सहिरण्यं तु शक्तितः । ताम्रपात्रं गुडोपेतं तस्योपरि निवेशयेत् ॥ १२
तस्मादुपरि कामं तु कदलीदलसंस्थितम् । कुर्याच्छर्करयोपेतां रतिं तस्य च वामतः ॥ १३
गन्धं धूपं ततो दद्याद्गीतं वाद्यं च कारयेत् । तदभावे कथां कुर्यात्कामकेशवयोर्नरः ॥ १४
कामनाम्ना हरेरर्चां स्नापयेद्गन्धवारिणा । शुक्लपुष्पाक्षततिलैरर्चयेन्मधुसूदनम् ॥ १५
कामाय पादौ संपूज्य जङ्घे सौभाग्यदाय च । ऊरू स्मरायेति पुनर्मन्मथायेति वै कटिम् ॥ १६
स्वच्छोदरायेत्युदरमनङ्गायेत्युरो हरेः । मुखं पद्ममुखायेति बाहू पञ्चशराय वै । १७
नमः सर्वात्मने मौलिमर्चयेदिति केशवम् । ततः प्रभाते तं कुम्भं ब्राह्मणाय निवेदयेत् ॥ १८
ब्राह्मणान्भोजयेद्भक्त्या स्वयं च लवणादृते । भुक्त्वा तु दक्षिणां दद्यादिमं मन्त्रमुदीरयेत् ॥
प्रीयतामत्र भगवान्कामरूपी जनार्दनः । हृदयं सर्वभूतानां य आनन्दोऽभिधीयते ॥ २०
अनेन विधिना सर्वं मासि मासि व्रतं चरेत् । उपवासी त्रयोदश्यामर्चयेद्विष्णुमव्ययम् ॥ २१
फलमेकं च संप्राश्य द्वादश्यां भूतले स्वपेत् । ततस्त्रयोदशे मासि घृतधेनुसमन्विताम् ॥ २२
शय्यां दद्यादनङ्गाय सर्वोपस्करसंयुताम् । काञ्चनं कामदेवं च शुक्लां गां च पयस्विनीम् ॥ २३
वासोभिर्द्विजदांपत्यं पूज्यं शक्त्या विभूषणैः । शय्यागन्धादिकं दद्यात्प्रीयतामित्युदीरयेत् ॥
होमः शुक्लतिलैः कार्यः कामनामानि कीर्तयेत् । गव्येन हविषा तद्वत्पायसेन च धर्मवित् ॥ २५
विप्रेभ्यो भोजनं दद्याद्वित्तशाठ्यं विवर्जयेत् । इक्षुदण्डानथो दद्यात्पुष्पमालाश्च शक्तितः ॥ २६
यः कुर्याद्विधिनाऽनेन मदनद्वादशीमिमाम् । स सर्वपापनिर्मुक्तः प्राप्नोति हरिसाम्यताम् ॥ २७
इह लोके वरान्पुत्रान्सौभाग्यफलमश्नुते । यः स्मरः संस्मृतो विष्णुरानन्दात्मा महेश्वरः ॥ २८
सुखार्थी कामरूपेण स्मरेदङ्गजमीश्वरम् । एतच्छ्रुत्वा चकारासौ दितिः सर्वमशेषतः ॥ २९
कश्यपो व्रतमाहात्म्यादागत्य परया मुदा । चकार कर्कशां भूयो रूपयौवनशालिनीम् ॥ ३०
वरैराच्छन्दयामास सा तु वव्रे ततो वरम् । पुत्रं शक्रवधार्थाय समर्थममितौजसम् ॥ ३१
वरयामि महात्मानं सर्वामरनिषूदनम् । उवाच कश्यपो वाक्यमिन्द्रहन्तारमूर्जितम् ॥ ३२
प्रदास्याम्यहमेवेह किं त्वेतत्क्रियतां शुभे । आपस्तम्बः करोत्विष्टिं पुत्रीयामद्य सुव्रते ॥ ३३
विधास्यामि ततो गर्भमिन्द्रशत्रुनिषूदनम् । आपस्तम्बस्ततश्चक्रे पुत्रेष्टिं द्रविणाधिकाम् ॥ ३४
इन्द्रशत्रुर्भवस्वेति जुहाव च सविस्तरम् । देवा मुमुदिरे दैत्या विमुखाः स्युश्च दानवाः ॥ ३५
दित्यां गर्भमथाधत्त कश्यपः प्राह तां पुनः । त्वया यत्नो विधातव्यो ह्यस्मिन्गर्भे वरानने ॥ ३६
संवत्सरशतं त्वेकमस्मिन्नेव तपोवने । संध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि ॥ ३७
न स्थातव्यं न गन्तव्यं वृक्षमूलेषु सर्वदा । नोपस्करेषूपविशेन्मुसलोलूखलादिषु ॥ ३८
जले च नावगाहेत शून्यागारं च वर्जयेत् । वल्मीकायां न तिष्ठेत न चोद्विग्नमना भवेत् ॥ ३९
विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना । न शयालुः सदा तिष्ठेद्व्यायामं च विवर्जयेत् ॥ ४०
न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् । वर्जयेत्कलहं लोकैर्गात्रभङ्गं तथैव च ॥ ४१

---

१ ङ. °नाफलयुतं तद्वद्दिक्षु दण्डसमान्वितम् । गन्धधूपादिकं दद्या° । २ क ख. नाम्नो हृ° । ३ ङ. च. °म् । पृथूद्° । ४ ग. °येच्छक्त्या । ५ ग. ङ. च. °शाठ्यविवर्जितः । इ° । ६ ङ. च °शीघ्रतम् । स° । ७ ग. °ङ्गं च. वर्जयेत् । न ।

न मुक्तकेशा तिष्ठेत नाशुचिः स्यात्कदाचन । न शयीतोत्तरशिरा न चापरशिराः क्वचित् ॥ ४२
न वस्त्रहीना नोद्विग्ना न चाऽऽर्द्रचरणा सती । नामङ्गल्यां वदेद्वाचं न च हास्याधिका भवेत् ॥
कुर्यात्तु गुरुशुश्रूषां नित्यं माङ्गल्यतत्परा । सर्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत् ॥ ४४
कृतरक्षा सुभूषा च वास्तुपूजनतत्परा । तिष्ठेत्प्रसन्नवदना भर्तुः प्रियहिते रता ॥ ४५
दानशीला तृतीयायां पार्वण्यं नक्तमाचरेत् । इतिवृत्ता भवेन्नारी विशेषेण तु गर्भिणी ॥ ४६
यस्तु तस्या भवेत्पुत्रः शीलायुर्वृद्धिसंयुतः । अन्यथा गर्भपतनमवाप्नोति न संशयः ॥ ४७
तस्मात्त्वमनया वृत्त्या गर्भेऽस्मिन्यत्नमाचर । स्वस्त्यस्तु ते गमिष्यामि तथेत्युक्तस्तया पुनः ॥
पश्यतां सर्वभूतानां तत्रैवान्तरधीयत । ततः सा कश्यपोक्तेन विधिना समतिष्ठत ॥ ४९
अथ भीतस्तथेन्द्रोऽपि दितेः पार्श्वमुपागमत् । विहाय देवसदनं तच्छुश्रूषुरवस्थितः ॥ ५०
दितेश्छिद्रान्तरप्रेप्सुरभवत्पाकशासनः । विनीतोऽभवदव्यग्रः प्रशान्तवदनो बहिः ॥ ५१
अजानन्किल तत्कार्यमात्मनः शुभमाचरन् । ततो वर्षशतान्ते सा न्यूने तु दिवसैस्त्रिभिः ॥ ५२
मेने कृतार्थमात्मानं प्रीत्या विस्मितमानसा । अकृत्वा पादयोः शौचं प्रसुप्ता मुक्तमूर्धजा ॥ ५३
निद्राभरसमाक्रान्ता दिवापरशिराः क्वचित् । ततस्तदन्तरं लब्ध्वा प्रविष्टस्तु शचीपतिः ॥ ५४
वज्रेण सप्तधा चक्रे तं गर्भं त्रिदशाधिपः । ततः सप्तैव ते जाताः कुमाराः सूर्यवर्चसः ॥ ५५
रुदन्तः सप्त ते बाला निषिद्धा गिरिदारिणा । भूयोऽपि रुदतश्चैतानेकैकं सप्तधा हरिः ॥ ५६
चिच्छेद वृत्रहन्ता वै पुनस्तदुदरे स्थितः । एवमेकोनपञ्चाशद्भूत्वा ते रुरुदुर्भृशम् ॥ ५७
इन्द्रो निवारयामास मा रोदिष्ट पुनः पुनः । ततः स चिन्तयामास किमेतदिति वृत्रहा ॥ ५८
धर्मस्य कस्य माहात्म्यात्पुनः संजीवितास्त्वमी । विदित्वा ध्यानयोगेन मदनद्वादशीफलम् ॥
नूनमेतत्परिणतमधुना कृष्णपूजनात् । वज्रेणापि हताः सन्तो न विनाशमवाप्नुयुः ॥ ६०
एकोऽप्यनेकतामाप यस्मादुदरगोऽप्यलम् । अवध्या नूनमेते वै तस्माद्देवा भवन्त्विति ॥ ६१
यस्मान्मा रुदतेत्युक्ता रुदन्तो गर्भसंस्थिताः । मरुतो नाम ते नाम्ना भवन्तु मखभागिनः ॥ ६२
ततः प्रसाद्य देवेशः क्षमस्वेति दितिं पुनः । अर्थशास्त्रं समास्थाय मयैतद्दुष्कृतं कृतम् ॥ ६३
कृत्वा मरुद्गणं देवैः समानममराधिपः । दितिं विमानमारोप्य ससुतामनयद्दिवम् ॥ ६४
यज्ञभागभुजो जाता मरुतस्ते ततो द्विजाः । न जग्मुरैक्यमसुरैरतस्ते सुरवल्लभाः ॥ ६५

इति श्रीमात्स्ये महापुराण आदिसर्गे मरुदुत्पत्तौ मदनद्वादशीव्रतं नाम सप्तमोऽध्यायः ॥ ७ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ३१७ ॥

---

अथाष्टमोऽध्यायः ।

---

ऋषय ऊचुः—
आदिसर्गश्च यः सूत कथितो विस्तरेण तु । प्रतिसर्गश्च ये येषामधिपास्तान्वदस्व नः ॥ १

---

१ ग. °द्विमाविशेत् । अ° । २ ग. ङ. °गतः । वि° । ३ ग. °द्धा दानवारिणा । भू° । ङ. °द्धा हरिणा गिरा भू° । ४ ग. मा रुदध्वं । ५ ग. °स्त्वया सू° । ६ ग. घ. ङ. च सर्गे च ।

सूत उवाच—

यदाऽभिषिक्तः सकलाधिराज्ये पृथुर्धरित्र्यामधिपो बभूव ।
तदौषधीनामधिपं चकार यज्ञव्रतानां तपसां च चन्द्रम् ॥ २ ॥
नक्षत्रताराद्विजवृक्षगुल्मलतावितानस्य च रुक्मगर्भः ।
अपामधीशं वरुणं धनानां राज्ञां प्रभुं वैश्रवणं च तद्वत् ॥ ३ ॥
विष्णुं रवीणामधिपं वसूनामग्निं च लोकाधिपतिश्चकार ।
प्रजापतीनामधिपं च दक्षं चकार शक्रं मरुतामधीशम् ॥ ४ ॥
दैत्याधिपानामथ दानवानां प्रह्लादमीशं च यमं पितॄणाम् ।
पिशाचरक्षःपशुभूतयक्षवेतालराजं त्वथ शूलपाणिम् ॥ ५ ॥
प्रालेयशैलं च पतिं गिरीणामीशं समुद्रं ससरिन्नदानाम् ।
गन्धर्वविद्याधरकिन्नराणामीशं पुनश्चित्ररथं चकार ॥ ६ ॥
नागाधिपं वासुकिमुग्रवीर्यं सर्पाधिपं तक्षकमादिदेश ।
दिशां गजानामधिपं चकार गजेन्द्रमैरावतनामधेयम् ॥ ७ ॥
सुपर्णमीशं पततामथाश्वराजानमुच्चैःश्रवसं चकार ।
सिंहं मृगाणां वृषभं गवां च प्लक्षं पुनः सर्ववनस्पतीनाम् ॥ ८ ॥
पितामहः पूर्वमथाभ्यषिञ्चच्चैतान्पुनः सर्वदिशाधिनाथान् ।
पूर्वेण दिक्पालमथाभ्यषिञ्चन्नाम्ना सुधर्माणमरातिकेतुम् ॥ ९ ॥
ततोऽधिपं दक्षिणतश्चकार सर्वेश्वरं शङ्खपदाभिधानम् ।
स केतुमन्तं च दिगीशमीशश्चकार पश्चाद्भुवनाण्डगर्भः ॥ १० ॥
हिरण्यरोमाणमुदग्दिगीशं प्रजापतिर्देवसुतं चकार ।
अद्यापि कुर्वन्ति दिशामधीशाः शत्रून्दहन्तस्तु भुवोऽभिरक्षाम् ॥ ११ ॥
चतुर्भिरेभिः पृथुनामधेयो नृपोऽभिषिक्तः प्रथमं पृथिव्याम् + ।
गतेऽन्तरे चाक्षुषनामधेये वैवस्वताख्ये च पुनः प्रवृत्ते ।
प्रजापतिः सोऽस्य चराचरस्य बभूव सूर्यान्वयवंशचिह्नः ॥ १२ ॥

इति श्रीमात्स्ये महापुराणे आधिपत्याभिषेचनं नामाष्टमोऽध्यायः ॥ ८ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ३२९ ॥

---

अथ नवमोऽध्यायः ।

---

सूत उवाच—

एवं श्रुत्वा मनुः प्राह पुनरेव जनार्दनम् । पूर्वेषां चरितं ब्रूहि मनूनां मधुसूदन ॥ १

---

+ इत उत्तरमेतदर्धं विद्यते ग.घ. पुस्तकयोः—मन्वन्तरे चापि गते त एव वैवस्वतं चक्रुरिमं पृथिव्याम् । इति ।

---

१ ग. घ. ङ. च. पतिं चका° । २ क. ख. घ. वृक्षं । ३ ग. °तिर्मैघमु° । ४ ग. शब्दं वदन्त° ।

इदं पवित्रं यशसो निधानमिदं पितॄणामतिवल्लभं च ।
इदं च देवेष्वमृतायितं च नित्यं त्विदं पापहरं च पुंसाम् ॥ ७४

इति श्रीमात्स्ये महापुराणे पुराणानुक्रमणिकाभिधानं नाम त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ३३९३ ॥

---

अथ चतुष्पञ्चाशोऽध्यायः ।

---

सूत उवाच—

अतः परं प्रवक्ष्यामि दानधर्मानशेषतः । व्रतोपवाससंयुक्तान्यथामत्स्योदितानिह ॥ १
महादेवस्य संवादे नारदस्य च धीमतः । यथावृत्तं प्रवक्ष्यामि धर्मकामार्थसाधकम् ॥ २
कैलासशिखरासीनमपृच्छन्नारदः पुरा । त्रिनयनमनङ्गारिमनङ्गाङ्गहरं हरम् ॥ ३

नारद उवाच—

भगवन्देवदेवेश ब्रह्मविष्ण्विन्द्रनायक । श्रीमदारोग्यरूपायुर्भाग्यसौभाग्यसंपदा ॥
संयुक्तस्तव विष्णोर्वा पुमान्भक्तः कथं भवेत् ॥ ४
नारी वा विधवा सर्वगुणसौभाग्यसंयुता । क्रमान्मुक्तिप्रदं देव किंचिद्व्रतमिहोच्यताम् ॥

ईश्वर उवाच—

सम्यक्पृष्टं त्वया ब्रह्मन्सर्वलोकहितावहम् । श्रुतमप्यत्र यच्छान्त्यै तद्व्रतं शृणु नारद ॥ ६
नक्षत्रपुरुषं नाम व्रतं नारायणात्मकम् । पादादि कुर्याद्विधिवद्विष्णुनामानुकीर्तनम् ॥ ७
प्रतिमां वासुदेवस्य मूलर्क्षादिषु चार्चयेत् । चैत्रमासं समासाद्य कृत्वा ब्राह्मणवाचनम् ॥ ८

मूले नमो विश्वधराय पादौ गुल्फावनन्ताय च रोहिणीषु ।
जङ्घेऽभिपूज्ये वरदाय चैव द्वे जानुनी वाऽश्विकुमारऋक्षे ॥ ९
पूर्वोत्तराषाढयुगे तथोरू नमः शिवायेत्यभिपूजनीयौ ।
पूर्वोत्तराफल्गुनियुग्मके च मेढ्रं नमः पञ्चशराय पूज्यम् ॥ १०
कटिं नमः शार्ङ्गधराय विष्णोः संपूजयेन्नारद कृत्तिकासु ।
तथाऽर्चयेद्भाद्रपदाद्वये च पार्श्वे नमः केशिनिषूदनाय ॥ ११
कुक्षिद्वयं नारद रेवतीषु दामोदरायेत्यभिपूजनीयम् ।
ऋक्षेऽनुराधासु च माधवाय नमस्तथोरःस्थलमेव पूज्यम् ॥ १२
पृष्ठं धनिष्ठासु च पूजनीयमघौघविध्वंसकराय तच्च ।
श्रीशङ्खचक्रासिगदाधराय नमो विशाखासु भुजाश्च पूज्याः ॥ १३
हस्ते तु हस्ता मधुसूदनाय नमोऽभिपूज्या इति कैटभारेः ।
पुनर्वसावङ्गुलिपूर्वभागाः साम्नामधीशाय नमोऽभिपूज्याः ॥ १४

---

१ ग. °दं पवित्रीकरणं मङ्गलम् । इ° । २ ग. घ. ङ. च. °ताय नित्यमिदं महापा° । ३ ग. घ. ङ. च. त्रिशूलिनमनङ्गारिमङ्गनार्धहरं । ४ ग. घ. ङ. °यगोगर्भी° । ५ ङ °पदः । सं° । च. पदाम् । सं । ६ ग. °हितैषिणा । श्रु° । ७ घ. ङ. °मानि कीर्तयन् । प्र° । ८ ग. °तयन् । प्र° । ९ ग. ङ. च. °राफाल्गुनि भद्रये य° । घ. °राफाल्गु° । १० ग. पूज्यम् । ११ ग. घ. ङ. नमः । १२ ग. °र्ते अह° । ङ. °स्ते प्रशस्तौ म° । १३ ग °दनस्य न° । १४ ग. ङ. च. °लिगर्ने° ।

भुजंगनक्षत्रदिने नखानि संपूजयेन्मत्स्यशरीरभाजः ।
कूर्मस्य पादौ शरणं व्रजामि ज्येष्ठासु कण्ठे हरिरर्चनीयः ॥ १५

श्रोत्रे वराहाय नमोऽभिपूज्या जनार्दनस्य श्रवणेन सम्यक् ।
पुष्ये मुखं दानवसूदनाय नमो नृसिंहाय च पूजनीयम् ॥ १६

नमो नमः कारणवामनाय स्वातीषु दन्ताग्रमथार्चनीयम् ।
आस्यं हरेर्भार्गवनन्दनाय संपूजनीयं द्विज वारुणे तु ॥ १७

नमोऽस्तु रामाय मघासु नासा संपूजनीया रघुनन्दनस्य ।
मृगोत्तमाङ्गे नयनेऽभिपूज्ये नमोऽस्तु ते राम विघूर्णिताक्ष ॥ १८

बुद्धाय शान्ताय नमो ललाटं चित्रासु संपूज्यतमं मुरारेः ।
शिरोऽभिपूज्य भरणीषु विष्णोर्नमोऽस्तु विश्वेश्वर कल्किरूपिणे ॥ १९

आर्द्रासु केशाः पुरुषोत्तमस्य संपूजनीया हरये नमस्ते ।
उपोषितेनर्क्षदिनेषु भक्त्या संपूजनीया द्विजपुंगवाः स्युः ॥ २०

पूर्णे व्रते सर्वगुणान्विताय वाग्रूपशीलाय च सामगाय ।
हैमीं विशालायतबाहुदण्डां मुक्ताफलेन्दूपलवज्रयुक्ताम् ॥ २१

जलस्य पूर्णे कलशे निविष्टामर्चां हरेर्वस्त्रगवा सहैव ।
शय्यां तथोपस्करभाजनादियुक्तां प्रदद्याद्द्विजपुंगवाय ॥ २२

यद्यस्ति यत्किंचिदिहास्ति देयं दद्याद्द्विजायाऽऽत्महिताय सर्वम् ।
मनोरथान्नः सफलीकुरुष्व हिरण्यगर्भाच्युतरुद्ररूपिन् ॥ २३

सलक्ष्मीकं सभार्याय काञ्चनं पुरुषोत्तमम् । शय्यां च दद्यान्मन्त्रेण ग्रन्थिभेदविवर्जिताम् ॥
यथा न विष्णुभक्तानां वृजिनं जायते क्वचित् । तथा सुरूपताऽऽरोग्यं केशवे भक्तिमुत्तमाम् ॥
यथा न लक्ष्म्या शयनं तव शून्यं जनार्दन । शय्या ममाप्यशून्याऽस्तु कृष्ण जन्मनि जन्मनि ॥
एवं निवेद्य तत्सर्वं वस्त्रमाल्यानुलेपनम् । नक्षत्रपुरुषज्ञाय विप्रायाथ विसर्जयेत् ॥ २७
भुञ्जीतातैललवणं सर्वर्क्षेष्वप्युपोषितः । भोजनं च यथाशक्ति वित्तशाठ्यविवर्जितः ॥ २८
इति नक्षत्रपुरुषमुपास्य विधिवत्स्वयम् । सर्वान्कामानवाप्नोति विष्णुलोके महीयते ॥ २९
ब्रह्महत्यादिकं किंचिदिह वाऽमुत्र वा कृतम् । आत्मना वाऽथ पितृभिस्तत्सर्वं क्षयमाप्नुयात् ॥

इति पठति शृणोति वाऽतिभक्त्या पुरुषवरो व्रतमङ्गनाऽथ कुर्यात् ।
कलिकलुषविदारणं मुरारेः सकलविभूतिफलप्रदं च पुंसाम् ॥ ३१

इति श्रीमात्स्ये महापुराणे नक्षत्रपुरुषव्रतं नाम चतुष्पञ्चाशोऽध्यायः ॥ ५४ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ३४२४ ॥

---

१ घ. ङ. °रीरिणश्च । कू° । २ ग. च °रधातुः । कू° । ३ घ. ङ बुद्धाय । ४ ग. घ. ङ. °रूप । अा° । ५ ग. ङ. च. गुह्यस्य । ६ ग. घ. च. यदिष्टं किं । ७ ग घ. ङ. यं तत्तद्द्वि° । ८ क. ख. मनोरथं । ९ ङ. था स्वरूपमारोग्यं वसुदश्चाच केशवः । य° । १० घ रोग्यमर्थं दद्याच्च केशवः । य° । ११ ग. घ. °पनैः । न° । १२ ग. च. °जयेद्य सप भक्त्या वि° ।

पञ्चपञ्चाशोऽध्यायः ।

---

नारद उवाच—

उपवासेऽप्यशक्तस्य तदेव फलमिच्छतः । अनभ्यासेन रोगाद्वा किमिष्टं व्रतमुत्तमम् ॥ १

ईश्वर उवाच—

उपवासेऽप्यशक्तानां नक्तं भोजनमिष्यते । यस्मिन्व्रते तदप्यत्र श्रूयतामक्षयं महत् ॥ २

आदित्यशयनं नाम यथावच्छंकरार्चनम् । येषु नक्षत्रयोगेषु पुराणज्ञाः प्रचक्षते ॥ ३

यदा हस्तेन सप्तम्यामादित्यस्य दिनं भवेत् । सूर्यस्य चाथ संक्रान्तिस्तिथिः सा सार्वकामिकी

उमामहेश्वरस्यार्चामर्चयेत्सूर्यनामभिः । सूर्यार्चां शिवलिङ्गं च प्रकुर्वन्पूजयेद्यतः ॥ ५

उमापते रवेर्वाऽपि न भेदो दृश्यते क्वचित् । यस्मात्तस्मान्मुनिश्रेष्ठ गृहे शंभुं समर्चयेत् ॥ ६

हस्ते च सूर्याय नमोऽस्तु पादावर्काय चित्रासु च गुल्फदेशम् ।
स्वातीषु जङ्घे पुरुषोत्तमाय धात्रे विशाखासु च जानुदेशम् ॥ ७
तथाऽनुराधासु नमोऽभिपूज्यमूरुद्वयं चैव सहस्रभानोः ।
ज्येष्ठास्वनङ्गाय नमोऽस्तु गुह्यमिन्द्राय सोमाय कटी च मूले ।
पूर्वोत्तराषाढयुगे च नाभिं त्वष्ट्रे नमः सप्ततुरंगमाय ।
तीक्ष्णांशवे च श्रवणे च कुक्षौ पृष्ठं धनिष्ठासु विकर्तनाय ॥ ९
चक्षुःस्थलं ध्वान्तविनाशनाय जलाधिपर्क्षे परिपूजनीयम् ।
पूर्वोत्तराभाद्रपदाद्वये च बाहू नमश्चण्डकराय पूज्यौ ॥ १०
साम्नामधीशाय करद्वयं च संपूजनीयं द्विज रेवतीषु ।
नखानि पूज्यानि तथाऽश्विनीषु नमोऽस्तु सप्ताश्वधुरंधराय ॥ ११
कठोरधाम्ने भरणीषु कण्ठं दिवाकरायेत्यभिपूजनीया ।
ग्रीवाऽग्निऋक्षेऽधरमम्बुजेशे संपूजयेन्नारद रोहिणीषु ॥ १२
मृगोत्तमाङ्गे दशना मुरारेः संपूजनीया हरये नमस्ते ।
नमः सवित्रे रसनां शंकरे च नासाऽभिपूज्या च पुनर्वसौ च ॥ १३
ललाटमम्भोरुहवल्लभाय पुष्येऽलका वेदशरीरधारिणे ।
सार्पेऽथ मौलिं विबुधप्रियाय मघासु कर्णाविति गोगणेशे ॥ १४
पूर्वासु गोब्राह्मणवन्दनाय नेत्राणि संपूज्यतमानि शंभोः ।
अथोत्तराफल्गुनिभे भ्रुवौ च विश्वेश्वरायेति च पूजनीये ॥ १५
नमोऽस्तु पाशाङ्कुशशूलपद्मकपालसर्पेन्दुधनुर्धराय ।
गजासुरानङ्गपुरान्धकादिविनाशमूलाय नमः शिवाय ॥ १६

---

१ च. अनायासेन । २ ङ. °मुच्यते । ई° ङ. मुच्यताम् । ई° । ३ ङ. र्यवारेऽथ । ४ ग. लिङ्गं च उभयं पूज° । घ. °लिङ्गं तु स्वगृहे पूजयेदतः । ५ ङ. च. तद्गृही पूजयेदतः । ६ घ. ङ. °स्तेन सू° । ७ ग. घ. ङ. च. °य वक्षः स्थ° । ८ ग. °त्रेतिचशांकरेति ना° । घ. °त्रे इति शांक° । ङ. °त्रे इति शां.रेषु ना° । घ. °श्रमेस्वाऽतीर्णा वरणाश्रयाम् । भा° । ९ ग. घ ङ. °णनन्द° ।

इत्यादि चास्त्राणि च पूज्य नित्यं विश्वेश्वरायेति शिवोऽभिपूज्यः ।
भोक्तव्यमत्रैवमतैलशाकममांसमक्षारमभुक्तशेषम् ॥ १७

इत्येवं द्विज नक्तानि कृत्वा दद्यात्पुनर्वसौ । शालेयतण्डुलप्रस्थमौदुम्बरमये घृतम् ॥ १८
संस्थाप्य पात्रे विप्राय सहिरण्यं निवेदयेत् । सप्तमे वस्त्रयुग्मं च पारणे त्वधिकं भवेत् ॥ १९
चतुर्दशे तु संप्राप्ते पारणे नारदाऽऽब्दिके । ब्राह्मणान्भोजयेद्भक्त्या गुडक्षीरघृतादिभिः ॥ २०
कृत्वा तु काञ्चनं पद्ममष्टपत्रं सकर्णिकम् । शुद्धमष्टाङ्गुलं तच्च पद्मरागदलान्वितम् ॥ २१
शय्यां विलक्षणां कृत्वा विरुद्धग्रन्थिवर्जिताम् । सोपधानकवि*श्रामस्वास्तरव्यजनानि च
भाजनोपानहच्छत्रचामरासनदर्पणैः । भूषणैरपि संयुक्तां फलवस्त्रानुलेपनैः ॥ २२
तस्यां विधाय तत्पद्ममलंकृत्य गुणान्वितम् । कपिलां वस्त्रसंयुक्तां सुशीलां च पयस्विनीम् ॥
रौप्यखुरीं हेमशृङ्गीं सवत्सां कांस्यदोहनाम् । दद्यान्मन्त्रेण पूर्वाह्णे न चैनामभिलङ्घयेत् ॥
यथैवाऽऽदित्यशयनमशून्यं तव सर्वदा । कान्त्या धृत्या श्रिया रत्या तथा मे सन्तु सिद्धयः ॥
यथा न देवाः श्रेयांसं त्वदन्यमनघं विदुः । तथा मामुद्धराशेषदुःखसंसारसागरात् ॥ २७
ततः प्रदक्षिणीकृत्य प्रणिपत्य विसर्जयेत् । शय्यागवादि तत्सर्वं द्विजस्य भवनं नयेत् ॥ २८

नैतद्विशीलाय न दाम्भिकाय कुतर्कदुष्टाय विनिन्दकाय ।
प्रकाशनीयं व्रतमिन्दुमौलेर्यश्चापि निन्दामधिकां विधत्ते ॥ २९
भक्ताय दान्ताय च गुह्यमेतदाख्येयमानन्दकरं शिवस्य ।
इदं महापातकिभिर्नराणामप्यक्षरं वेदविदो वदन्ति ॥ ३०
न बन्धुपुत्रेण धनैर्वियुक्तः पत्नीभिरानन्दकरः सुराणाम् ।
नाभ्येति रोगं न च शोकदुःखं या वाऽथ नारी कुरुतेऽतिभक्त्या ॥ ३१
इदं वसिष्ठेन पुराऽर्जुनेन कृतं कुबेरेण पुरंदरेण ।
यत्कीर्तनेनाप्यखिलानि नाशमायान्ति पापानि न संशयोऽस्ति ॥ ३२
इति पठति शृणोति वा य इत्थं रविशयनं पुरुहूतवल्लभः स्यात् ।
अपि नरकगतान्पितॄनशेषानपि दिवमानयतीह यः करोति ॥ ३३

इति श्रीमात्स्ये महापुराण आदित्यशयनव्रतं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ २४५७ ॥

---

* विश्राम इति तु सारस्वतव्याकरणस्थविश्रामो वेतिसूत्रेण साधनीयम् ।

---

१ ख. घ. °वेशी । शा° । २ ग. येच्छक्त्या । ३ घ. °श्रागे स्वास्तीर्णावरणाश्रयाम् । भा° । ङ. °श्रामा स्वास्तीर्णावरणाश्रयाम् । भा° । ४ ग. °नाश्रिताम् । भा° । ५ घ. ततो वि° । ६ घ. ङ. °दोहिनीम् । द° । ७ घ. ङ. वाह्य इतिवाचमुदाहरेत् । य° । ८ ग. न वेलां लङ्घयेत्कचित् । य° । ९ घ. वृत्तयः । १० ग घ. ङ. °धिकं वि° । ११ क. ख घ. °ण बलौर्ध° । १२ णसंकीर्त° ।

अथ षट्पञ्चाशत्तमोऽध्यायः ।

श्रीभगवानुवाच—

कृष्णाष्टमीमथो वक्ष्ये सर्वपापप्रणाशिनीम् । शान्तिर्मुक्तिश्च भवति जयः पुंसां विशेषतः ॥
शंकरं मार्गशिरसि शंभुं पौषेऽभिपूजयेत् । माघे महेश्वरं देवं महादेवं च फाल्गुने ॥ २
स्थाणुं चैत्रे शिवं तद्वद्वैशाखे त्वर्चयेन्नरः । ज्येष्ठे पशुपतिं चार्चेदाषाढे उग्रमर्चयेत् ॥ ३
पूजयेच्छ्रावणे शर्वं नभस्ये त्र्यम्बकं तथा । हरमाश्वयुजे मासि तथेशानं च कार्तिके ॥ ४
कृष्णाष्टमीषु सर्वासु शक्तः संपूजयेद्द्विजान् । गोभूहिरण्यवासोभिः शिवभक्तानुपोषितः ॥ ५
गोमूत्रघृतगोक्षीरतिलान्यवकुशोदकम् । गोशृङ्गोदंशिरीषार्कबिल्वपत्रदधीनि च ॥
पञ्चगव्यं च संप्राश्य शंकरं पूजयेन्निशि ॥ ६
अश्वत्थं च वटं चैवोदुम्बरं प्लक्षमेव च । पलाशं जम्बुवृक्षं च विदुः षष्ठं महर्षयः ॥ ७
मार्गशीर्षादिमासाभ्यां द्वाभ्यां द्वाभ्यामितिक्रमात् । *एकैकं दन्तपवनं वृक्षेष्वेतेषु भक्षयेत् ॥ ८
+ देवाय दद्यादर्घ्यं च कृष्णां गां कृष्णवाससम् । दद्यात्समाप्ते दध्यन्नं वितानध्वजचामरम् ॥
द्विजानामुदकुम्भांश्च पञ्चरत्नसमन्वितान् । गावः कृष्णाः सुवर्णं च वासांसि विविधानि च ॥
अशक्तस्तु पुनर्दद्याद्गामेकामपि शक्तितः ॥ १०
न वित्तशाठ्यं कुर्वीत कुर्वन्दोषमवाप्नुयात् । कृष्णाष्टमीमुपोष्यैव सप्तकल्पशतत्रयम् ॥
पुमान्संपूजितो देवैः शिवलोके महीयते ॥ ११

इति श्रीमात्स्ये महापुराणे कृष्णाष्टमीव्रतं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ३४६८ ॥

अथ सप्तपञ्चाशत्तमोऽध्यायः ।

नारद उवाच—

दीर्घायुरारोग्यकुलाभिवृद्धियुक्तः पुमान्भूपकुलायुतः स्यात् ।
मुहुर्मुहुर्जन्मनि येन सम्यग्व्रतं समाचक्ष्व तदिन्दुमौले ॥ १

श्रीभगवानुवाच—

त्वया पृष्टमिदं सम्यगुक्तं चाक्षय्यकारकम् । रहस्यं तव वक्ष्यामि यत्पुराणविदो विदुः ॥ २
रोहिणीचन्द्रशयनं नाम व्रतमिहोत्तमम् । तस्मिन्नारायणस्यार्चामर्चयेदिन्दुनामभिः ॥ ३

* एतदर्धस्थानेऽयं पाठो ङ. पुस्तके–दन्तधावमेकैक वृक्षाणां च प्रभक्षयेत् इति । + एतदर्धस्थानेऽयं पाठो घ. पुस्तके–घण्टां दद्याच्च देवाय कृष्णतन्तुकृताऽसी इति ।

१ ङ. यया । २ घ. °पांतःपूज्यश्चाऽऽषा° । ३ ग. घ. च शक्त्या । ङ. भक्त्या । ४ ङ. °भक्तांश्च शक्तितः । ५ घ. ङ. च. °दकर्री° । ६ घ च. जगुः षष्ठं म° । ७ ग. ङ. °याद्घण्टां च । ८ ग. गां च पयस्विनीम् । द° । ङ. गां च सवाससीम् । द° । ९ घ °मान्सर्वगुणान्वितः । °मान्रूपगुणान्वितः । ग. ङ. °मान्रूपकुलान्वितः । १० गं. श्रीमहेश उवाच । ११ ग. घ. ङ. 'म्यगमुत्राक्षयका' ।

यदा सोमदिने शुक्ला भवेत्पञ्चदशी क्वचित् । अथवा ब्रह्मनक्षत्रं पौर्णमास्यां प्रजायते ॥ ४
तदा स्नानं नरः कुर्यात्पञ्चगव्येन सर्षपैः । आप्यायस्वेति तु जपेद्विद्वानष्टशतं पुनः ॥ ५
शूद्रोऽपि परया भक्त्या पाषण्डालापवर्जितः । सोमाय वरदायाथ विष्णवे च नमो नमः ॥ ६
कृतजप्यः स्वभवनमागत्य मधुसूदनम् । पूजयेत्फलपुष्पैश्च सोमनामानि कीर्तयन् ॥ ७

सोमाय शान्ताय नमोऽस्तु पादावनन्तधाम्नेति च जानुजङ्घे ।
ऊरुद्वयं चापि जलोदराय संपूजयेन्मेढ्रमनन्तबाहवे ॥ ८
नमो नमः कामसुखप्रदाय कटिः शशाङ्कस्य सदाऽर्चनीया ।
तथोदरं चाप्यमृतोदराय नाभिः शशाङ्काय नमोऽभिपूज्या ॥ ९
नमोऽस्तु चन्द्राय मुखं च पूज्यं दन्ता द्विजानामधिपाय पूज्याः ।
हास्यं नमश्चन्द्रमसेऽभिपूज्यमोष्ठौ कुमुद्वन्तवनप्रियाय ॥ १०
नासा च नाथाय वनौषधीनामानन्दभूताय पुनर्भ्रुवौ च ।
नेत्रद्वयं पद्मनिभं तथेन्दोरिन्दीवरश्यामकराय शौरेः ॥ ११
नमः समस्ताध्वरवन्दिताय कर्णद्वयं दैत्यनिषूदनाय ।
ललाटमिन्दोरुदधिप्रियाय केशाः सुषुम्नाधिपतेः प्रपूज्याः ॥ १२
शिरः शशाङ्काय नमो मुरारेर्विश्वेश्वरायेति नमः किरीटिने ।
पद्मप्रिये रोहिणि नाम लक्ष्मीः सौभाग्यसौख्यामृतचारुकाये ॥ १३
देवीं च संपूज्य सुगन्धपुष्पैर्नैवेद्यधूपादिभिरिन्दुपत्नीम् ।
सुप्त्वाऽथ भूमौ पुनरुत्थितेन स्नात्वा च विप्राय हविष्ययुक्तः ॥ १४
देयः प्रभाते सहिरण्यवारिकुम्भो नमः पापविनाशनाय ।
संप्राश्य गोमूत्रममांसमन्नमक्षारमष्टावथ विंशतिं च ।
ग्रासान्पयःसर्पियुतानुपोष्य भुक्त्वेतिहासं शृणुयान्मुहूर्तम् ॥ १५
कदम्बनीलोत्पलकेतकानि जाती सरोजं शतपत्रिका च ।
अम्लानकुब्जान्यथ सिन्दुवारं पुष्पं पुनर्नारद मल्लिकायाः ॥
शुभ्रं च विष्णोः करवीरपुष्पं श्रीचम्पकं चन्द्रमसः प्रदेयम् ॥ १६

श्रावणादिषु मासेषु क्रमादेतानि सर्वदा । यस्मिन्मासे व्रतादिः स्यात्तत्पुष्पैरर्चयेद्धरिम् ॥ १७
एवं संवत्सरं यावदुपास्य विधिवन्नरः । व्रतान्ते शयनं दद्याद्दर्पणोपस्करान्वितम् ॥ १८
रोहिणीचन्द्रमिथुनं कारयित्वाऽथ काञ्चनम् । चन्द्रः षडङ्गुलः कार्यो रोहिणी चतुरङ्गुला ॥
मुक्ताफलाष्टकयुतं सितनेत्रपटावृतम् । क्षीरकुम्भोपरि पुनः कांस्यपात्राक्षतान्वितम् ॥ २०
दद्यान्मन्त्रेण पूर्वाह्णे शालीक्षुफलसंयुतम् ॥
श्वेतामथ सुवर्णास्यां खुरै रौप्यैः समन्वितम् । सवस्त्रभाजनां धेनुं तथा शङ्खं च शोभनम् ॥
भूषणैर्द्विजदांपत्यमलंकृत्य गुणान्वितम् । चन्द्रोऽयं द्विजरूपेण सभार्य इति कल्पयेत् ॥
यथा न रोहिणी कृष्ण शय्यां संत्यज्य गच्छति । सोमरूपस्य ते तद्वन्ममाभेदोऽस्तु भूतिभिः ॥

---

१ घ. ङ. सर्पिषा । २ ग. घ. °नङ्घा° । ३ घ. नासा तुरूज्या विधिलोचनाय । न° । ४ ग. कनाय । ५ ग. घ. ङ. च. किरीटम् । ६ ग. ङ. शुक्लं । घ. च. शुभ्रं । ७ ङ. °हे रथार्ला ।

यथा त्वमेव सर्वेषां परमानन्दमुक्तिदः। मुक्तिर्मुक्तिस्तथा भक्तिस्त्वयि चन्द्रास्तु मे सदा॥ २४
इति संसारभीतस्य मुक्तिकामस्य चानघ। रूपारोग्यायुषामेतद्विधायकमनुत्तमम् ॥ २५
इदमेव पितृणां च सर्वदा वल्लभं मुने । त्रैलोक्याधिपतिर्भूत्वा सप्तकल्पशतत्रयम् ॥
चन्द्रलोकमवाप्नोति विद्युद्भूत्वा तु मुच्यते ॥ २६
नारी वा रोहिणी चन्द्रशयनं या समाचरेत्। साऽपि तत्फलमाप्नोति पुनरावृत्तिदुर्लभम्॥ २७
इति पठति शृणोति वा य इत्थं मधुमथनार्चनमिन्दुकीर्तनेन* ॥
मतिमपि च ददाति सोऽपि शौरेर्भवनगतः परिपूज्यतेऽमरौघैः ॥ २८

इति श्रीमात्स्ये महापुराणे रोहिणीचन्द्रशयनव्रतं नाम सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ३४९६ ॥

---

अथाष्टपञ्चाशोऽध्यायः ।

---

सूत उवाच—

जलाशयगतं विष्णुमुवाच रविनन्दनः। तडागारामकूपानां वापीषु नलिनीषु च ॥ १
विधिं पृच्छामि देवेश देवतायतनेषु च। के तत्र चर्त्विजो नाथ वेदी वा कीदृशी भवेत् ॥ २
दक्षिणावलयः कालः स्थानमाचार्य एव च। द्रव्याणि कानि शस्तानि सर्वमाचक्ष्व तत्त्वतः ॥

मत्स्य उवाच—

शृणु राजन्महाबाहो तडागादिषु यो विधिः। पुराणेष्वितिहासोऽयं पठ्यते वेदवादिभिः ॥ ४
प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे। पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम् ॥ ५
प्रागुदक्प्रवणे देशे तडागस्य समीपतः। चतुर्हस्तां शुभां वेदीं चतुरस्रां चतुर्मुखाम् ॥ ६
तथा षोडशहस्तः स्यान्मण्डपश्च चतुर्मुखः। वेद्याश्च परितो गर्ता रत्निमात्रास्त्रिमेखलाः ॥ ७
नव सप्ताथ वा पञ्च नातिरिक्ता नृपात्मज। वितस्तिमात्रा योनिः स्यात्षट्सप्ताङ्गुलिविस्तृता
गर्ताश्च तत्र सप्त स्युस्त्रिपर्वोच्छ्रितमेखलाः। सर्वतस्तु सवर्णाः स्युः पताकाध्वजसंयुताः ॥ ९
अश्वत्थोदुम्बरप्लक्षवटशाखाकृतानि तु । मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत् ॥ १०
शुभास्तत्राष्ट होतारो द्वारपालास्तथाऽष्ट वै। अष्टौ तु जापकाः कार्या ब्राह्मणा वेदपारगाः ॥
+सर्वलक्षणसंपूर्णो मन्त्रविद्विजितेन्द्रियः। कुलशीलसमायुक्तः पुरोधाः स्याद्द्विजोत्तमः ॥
प्रतिगर्तेषु कलशा यज्ञोपकरणानि च। व्यंजनं चामरे शुभ्रे ताम्रपात्रे सुविस्तृते ॥ १३
ततस्त्वनेकवर्णाः स्युश्चरवः प्रतिदैवतम् । आचार्यः प्रक्षिपेद्भूमावनुमन्त्र्य विचक्षणः ॥ १४

---

* इतःपरं क ख पुस्तकयोर्नित्यभिन्ने वर्तते तदधिकमिति भाति। + एतच्छ्लोकस्थानेऽयं पाठश्च पुस्तके— सर्वलक्षणसंयुक्ता विधिज्ञा विजितेन्द्रियाः। कुलशीलसमायुक्ताः स्थापकास्युर्द्विजोत्तमा इति।

---

१ ग. घ. ङ. दृढा। २ ग. घ. ङ. 'ति पुनरावृत्तिदुर्लभम्। ना°। ३ घ कूपेषु वा°। ङ. च. °कूपेषु वापी पुष्करिणीषु न। ४ घ. °ते च यथा नृभिः। ङ. 'ते च यथा नृप। ञ'। च. ते च सदा नृभिः। ५ ग. ङ. च. °मात्राः समे°। ६ घ. 'तस्तः शस्थाः। ङ. 'तस्रो हस्ताः। ७ ङ. 'स्त्रिन्विता'। ८ ग. च. 'र्णो विधिज्ञो विजि°। ९ ग. घ. ङ. स्थापकः। १० ग. व्यजने। ११ ङ. चाऽऽसनं शुभ्रं। १२ ग. 'ण'। अरत्नि°।

ञ्यरत्निमात्रो यूपः स्यात्क्षीरवृक्षविनिर्मितः। यजमानप्रमाणो वा संस्थाप्यो भूतिमिच्छता*
हेमालंकारिणः कार्याः पञ्चविंशतिऋत्विजः । कुण्डलानि च हैमानि केयूरकटकानि च ॥
तथाङ्गुल्यः पवित्राणि वासांसि विविधानि च। +पूजयेत्तु समं सर्वानाचार्यो द्विगुणं पुनः ॥
दद्याच्छयनसंयुक्तमात्मनश्चापि यत्प्रियम् ॥ १८
सौवर्णकूर्ममकरौ राजतौ मत्स्यदुन्दुभौ । ताम्रौ कुलीरमण्डूकावायसः शिशुमारकः ॥
एवमासाद्य तत्सर्वमादावेव विशां पते ॥ १९
शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः। सर्वौषध्युदकैस्तत्र स्नापितो वेदपारगैः ॥ २०
यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः। पश्चिमं द्वारमासाद्य प्रविशेद्यागमण्डपम् ॥ २१
ततो मङ्गलशब्देन भेरीणां निःस्वनेन च। अञ्जसा मण्डलं कुर्यात्पञ्चवर्णेन तत्त्ववित् ॥ २२
षोडशारं ततश्चक्रं पद्मगर्भं चतुर्मुखम् । चतुरस्रं च परितो वृत्तं मध्ये सुशोभनम् ॥ २३
वेद्याश्चोपरि तत्कृत्वा ग्रहाँल्लोकपतींस्ततः । विन्यसेन्मन्त्रतः सर्वान्प्रतिदिक्षु विचक्षणः २४
कूर्मादि स्थापयेन्मध्ये वारुणं मन्त्रमाश्रितः। ब्रह्माणं च शिवं विष्णुं तत्रैव स्थापयेद्बुधः ॥
विनायकं च विन्यस्य कमलामम्बिकां तथा । शान्त्यर्थं सर्वलोकानां भूतग्रामं न्यसेत्ततः२६
पुष्पभक्ष्यफलैर्युक्तमेवं कृत्वाऽधिवासनम्। कुम्भान्सजलगर्भांस्तान्वासोभिः परिवेष्टयेत्२७
पुष्पगन्धैरलंकृत्य द्वारपालान्समन्ततः । पठध्वमिति तान्ब्रूयादाचार्यस्त्वभिपूजयेत् ॥ २८
बह्वृचौ पूर्वतः स्थाप्यौ दक्षिणेन यजुर्विदौ। सामगौ पश्चिमे तद्वदुत्तरेण त्वथर्वणौ ॥२९
उदङ्मुखो दक्षिणतो यजमान उपाविशेत्। यजध्वमिति तान्ब्रूयाद्धौत्रिकान्पुनरेव तु३०
उत्कृष्टान्मन्त्रजापेन तिष्ठध्वमिति जापकान्। एवमादिश्य तान्सर्वान्पर्युक्ष्याग्निं स मन्त्रवित्
जुहुयाद्वारुणैर्मन्त्रैराज्यं च समिधस्तथा। ऋत्विग्भिश्चाथ होतव्यं वारुणैरेव सर्वतः॥ ३२
ग्रहेभ्यो विधिवद्धुत्वा तथेन्द्रायेश्वराय च। मरुद्भ्यो लोकपालेभ्यो विधिवद्विश्वकर्मणे॥
रात्रिसूक्तं च रौद्रं च पावमानं सुमङ्गलम्। जपेयुः पौरुषं सूक्तं पूर्वतो बह्वृचः पृथक्॥३४
शाक्रं रौद्रं च सौम्यं च कूष्माण्डं जातवेदसम्। सौरसूक्तं जपेन्मन्त्रं दक्षिणेन यजुर्विदः ॥
वैराज्यं पौरुषं सूक्तं सौवर्णं रुद्रसंहिताम्। शैशवं पञ्चनिधनं गायत्रं ज्येष्ठसाम च ॥ ३६
वामदेव्यं बृहत्साम रौरवं सरथंतरम्। गवां व्रतं च काण्वं च रक्षोघ्नं वयसस्तथा ॥
गायेयुः सामगा राजन्पश्चिमं द्वारमाश्रिताः ॥ ३७

* इत उत्तरमयं श्लोकः ङ. च पुस्तकयोः—पालाशो ब्राह्मणस्योक्तो न्यग्रोधः क्षत्रियस्य तु ॥ बिल्वो वैश्यस्य यूपः स्याच्छूद्रस्यौदुम्बरः स्मृतः । इति । + एतदर्धस्थानेऽयं पाठो घ. च. पुस्तकयोः—दक्षिणां तु समां सर्वामाचार्ये द्विगुणां तत इति ।

१ घ. ङ. च. °नि सूत्राणि क° । २ ग. °ङ्गुलीय चित्रा° । घ. ङ. च. °ङ्गुलीपवित्रा° । ३ ग. च। दापये° । ४ क. ख °चार्यो द्वि° । ५ ग. ङ. वेदपुंगवैः । च. द्विजपुङ्गवैः । ६ ग. °माश्रित्य संधि° । घ. ङ. च. °माश्रित्य प्र° । ७ ग. घ. ङ. च. रजसा । ८ क ख. °तः । सन्य° । ९ क. ख. वारुण्यां । १० घ ङ. च. °म्भांश्च रत्नगर्भांस्तान्वारिणा परिपूरितान्। वस्त्रादिभिर° । ११ घ. च. °तः । जपध्व° । १२ ग च °याद्याजका° । १३ ग. °ग त्कृष्टमन्त्र° । १४ ग. °न्त्रजप्येन । १५ ङ. च. °जाप्येन । १६ घ. °माभाष्य ता° । १७ घ.ङ. च. जपेरन् । १८ घ. कौष्माण्डम् । १९ ग. घ. ङ. च. °पेरंस्ते द° । २० ग. घ. ङ. च. वैराजं । २१ ग. च. सौपर्णं । २२ ग. घ. ङ. च. °तं विकर्णं न र° ।

अथर्वणश्चोत्तरतः शान्तिकं पौष्टिकं त॰ ।। जपेयुर्मनसा देवमाश्रित्य वरुणं प्रभुम् ॥ ३७
पूर्वेद्युरभितो रात्रावेवं कृत्वाऽधिवासनम् । गजाश्वरथ्यावल्मीकात्संगमाद्ध्रदगोकुलात् ॥
मृदमादाय कुम्भेषु प्रक्षिपेच्चत्वरात्तथा ॥ ३८
रोचनां च सासिद्धार्थां[1] गन्धं गुग्गुलमेव च । स्नपनं[2] तस्य कर्तव्यं पञ्चगव्यसमन्वितम्[3] ॥३९
प्रत्येकं तु महामन्त्रैरेवं कृत्वा विधानतः । एवं क्षपाऽतिवाह्याऽथ विधियुक्तेन कर्मणा ॥ ४०
ततः प्रभाते विमले संजातेऽथ शतं गवाम् । ब्राह्मणेभ्यः प्रदातव्यमष्टषष्टिश्च वा पुनः ॥
पञ्चाशद्वाऽथ षट्त्रिंशत्पञ्चविंशतिरप्यथ ॥ ४१
ततः सांवत्सरप्रोक्ते शुभे लग्ने सुशोभने । वेदशब्दैश्च गान्धर्वैर्वाद्यैश्च विविधैः पुनः ॥ ४२
कनकालंकृतां कृत्वा जले गामवतारयेत् । सामगाय च सा देया ब्राह्मणाय विशां पते ॥
पात्रीमादाय सौवर्णीं पञ्चरत्नसमन्विताम् । ततो निक्षिप्य मकरमत्स्यादींश्चैव सर्वशः[4] ॥
धृतां चतुर्विधैर्विप्रैर्वेदवेदाङ्गपारगैः ॥ ४४
महानदीजलोपेतां दध्यक्षतसमन्विताम् । उत्तराभिमुखीं धेनुं जलमध्ये तु कारयेत् ॥ ४५
अथर्वणेन संस्नातां पुनर्मामेत्यथेति च । आपो हि ष्ठेतिमन्त्रेण क्षिप्त्वाऽऽगत्य च मण्डपम्[5]
पूजयित्वा सरस्तत्र बलिं दद्यात्समन्ततः । पुनर्दिनानि होतव्यं चत्वारि मुनिसत्तमाः ॥४७
चतुर्थीकर्म कर्तव्यं देया तत्रापि शक्तितः । दक्षिणा राजशार्दूल वरुणक्षमापणं[6] ततः ॥४८
कृत्वा तु यज्ञपात्राणि यज्ञोपकरणानि च । ऋत्विग्भ्यस्तु समं दत्त्वा मण्डपं विभजेत्पुनः ॥
हेमपात्रीं च शय्यां च स्थापकाय निवेदयेत् ॥ ४९
ततः सहस्रं विप्राणामथवाऽष्टशतं तथा । भोजनीयं यथाशक्ति पञ्चाशद्वाऽथ विंशतिः ॥
एवमेष[7] पुराणेषु तडागविधिरुच्यते ॥ ५०
कूपवापीषु सर्वासु तथा पुष्करिणीषु च । एष एव विधिर्दृष्टः प्रतिष्ठासु तथैव च ॥ ५१
मन्त्रतस्तु विशेषः स्यात्प्रासादोद्यानभूमिषु । अयं त्वशक्तावर्धेन विधिर्दृष्टः स्वयंभुवा ॥
अल्पेष्वेकाग्निवत्कृत्वा वित्तशाठ्याद्दृते नृणाम् ॥ ५२
प्रावृट्काले स्थिते तोये ह्यग्निष्टोमफलं स्मृतम् । शरत्काले स्थितं यत्स्यात्तदुक्तफलदायकम्
वाजपेयातिरात्राभ्यां हेमन्ते शिशिरे स्थितम् ॥ ५३
अश्वमेधसमं प्राहुर्वसन्तसमये स्थितम् । ग्रीष्मेऽपि[11] तत्[12]स्थितं तोयं राजसूयाद्विशिष्यते ॥ ५४

एतान्महाराज विशेषधर्मान्करोति योऽप्यागमशुद्धबुद्धिः ।
स याति रुद्रालयमाशु पूतः कल्पाननेकान्दिवि मोदते च ॥ ५५
अनेकलोकान्[13]स महत्[14]तमादीन्भुक्त्वा परार्धद्वयमङ्गनाभिः ।
सहैव विष्णोः परमं पदं यत्प्राप्नोति तद्[15]योगफलेन भूयः* ॥ ५७

इति श्रीमात्स्ये महापुराणे तडागविधिर्नामाष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ३५५३ ॥

---

* इतः परेषामध्यायत्रयाणां विपर्यासो वर्तते ङ. पुस्तके ।

१ ग. ङ. च सुसिद्धार्थान्गन्धान्गुग्गु॰ २ ग घ. स्नापन । ३ घ. ङ. 'म् । पूर्तकर्तमहा॰ । ४ घ सर्वतः । ५ क. मंण्डलम् । ६ ङ. ॰णश्रवणं । ७ ख. घ. च 'पनं त॰ ८ क ख च 'मेषु पु॰ । ९ क. ख. प्राह सवस । १० घ. ङ. ॰ष्णोऽप्यवास्थितं । ११ ग. ॰ति चोर्व्यामथ शु ङ. 'ति पौर्तानथ शु॰ । १२ घ यो वै भुवि शु॰ । १३ ग. ॰न्स सहस्रदीपान्भुक्त्वा । १४ ङ. च. ॰हर्जनादी॰ । १५ ग. तद्योग॰ । घ. ङ. च. तद्योगबले॰ ।

अथैकोनषष्टितमोऽध्यायः ।

ऋषय ऊचुः—

पादपानां विधिं सूत यथावद्विस्तराद्वद । विधिना केन कर्तव्यं पादपोद्यापनं बुधैः ॥
ये च लोकाः स्मृतास्तेषां तानिदानीं वदस्व नः । *यत्फलं लभते प्रेत्य तत्सर्वं वक्तुमर्हसि

सूत उवाच—

पादपानां विधिं वक्ष्ये तथैवोद्यानभूमिषु । तडागविधिवत्सर्वमासाद्य जगदीश्वर ॥ ३
ऋत्विङ्मण्डपसंभारश्चाऽऽचार्यश्चैव तद्विधः । पूजयेद्ब्राह्मणांस्तद्वद्धेमवस्त्रानुलेपनैः ॥ ४
सर्वौषध्युदकैः सिक्तान्पिष्टातकविभूषितान् । वृक्षान्माल्यैरलंकृत्य वासोभिरभिवेष्टयेत् ॥ ५
सूच्या सौवर्णया कार्यं सर्वेषां कर्णवेधनम् । अञ्जनं चापि दातव्यं तद्वद्धेमशलाकया ॥ ६
फलानि सप्त चाष्टौ वा कालधौतानि कारयेत् । प्रत्येकं सर्ववृक्षाणां वेद्यां तान्यधिवासयेत् ॥
धूपोऽत्र गुग्गुलः श्रेष्ठस्ताम्रपात्रैरधिष्ठितान् । सप्तधान्यस्थितान्कृत्वा वस्त्रगन्धानुलेपनैः ॥ ८
कुम्भान्सर्वेषु वृक्षेषु स्थापयित्वा नरेश्वर । सहिरण्यानशेषांस्तान्कृत्वा बलिनिवेदनम् ॥ ९
यथास्वं लोकपालानामिन्द्रादीनां विशेषतः । वनस्पतेश्च विद्वद्भिर्होमः कार्यो द्विजातिभिः
ततः शुक्लाम्बरधरां सौवर्णकृतभूषणाम् । सकांस्यदोहां सौवर्णशृङ्गाभ्यामतिशालिनीम् ॥
पयस्विनीं वृक्षमध्यादुत्सृजेद्गामुदङ्मुखीम् ॥ ११
ततोऽभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः । ऋग्यजुःसाममन्त्रैश्च वारुणैरभितस्तथा ॥
तैरेव कुम्भैः स्नपनं कुर्याद्ब्राह्मणपुंगवः ॥ १२
स्नातः शुक्लाम्बरस्तद्वद्यजमानोऽभिपूजयेत् । गोभिर्विभवतः सर्वानृत्विजस्तान्समाहितः ॥
हेमसूत्रैः सकटकैरङ्गुलीयपवित्रकैः । वासोभिः शयनीयैश्च तथोपस्करपादुकैः ॥
क्षीरेण भोजनं दद्याद्यावद्दिनचतुष्टयम् ॥ १४
होमश्च सर्षपैः कार्यो यवैः कृष्णतिलैस्तथा । पलाशसमिधः शस्ताश्चतुर्थेऽह्नि तथोत्सवः ॥
दक्षिणा च पुनस्तद्वद्देया तत्रापि शक्तितः ॥ १५
यद्यदिष्टतमं किंचित्तत्तद्दद्यादमत्सरी । आचार्ये द्विगुणं दद्यात्प्रणिपत्य विसर्जयेत् ॥ १६
अनेन विधिना यस्तु कुर्याद्वृक्षोत्सवं बुधः । सर्वान्कामानवाप्नोति फलं चाऽऽनन्त्यमश्नुते ॥
यश्चैकमपि राजेन्द्र वृक्षं संस्थापयेन्नरः । सोऽपि स्वर्गे वसेद्राजन्यावदिन्द्रायुतत्रयम् ॥ १८
भूतान्भव्यांश्च मनुजांस्तारयेद्द्रुमसंमितान् । परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् ॥ १९
य इदं शृणुयान्नित्यं श्रावयेद्वाऽपि मानवः । सोऽपि संपूजितो देवैर्ब्रह्मलोके महीयते ॥ २०

इति श्रीमात्स्ये महापुराणे वृक्षोत्सवो नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ३५७३ ॥

---

* एतदर्धं नास्ति क. ख. पुस्तकयोः ।

१ क. ख. सर्वान्धान्य° । २ ग. °थावल्लोक° । ३ ग. घ. ङ. कुर्युर्ब्राह्मणपुंगवाः । स्ना° । ४ ग. ङ. च. रथ. रोथज° । ५ ङ. भूतलस्थांश्च । म° । ६ ग. °रमं पदमा° । ७ ग. °लभम । य° ।

अथ षाष्टितमोऽध्यायः ।

मत्स्य उवाच—

तथैवान्यत्प्रवक्ष्यामि सर्वकामफलप्रदम् । सौभाग्यशयनं नाम यत्पुराणविदो विदुः ॥ १
पुरा दग्धेषु लोकेषु भूर्भुवःस्वर्महादिषु । सौभाग्यं सर्वभूतानामेकस्थमभवत्तदा ॥
वैकुण्ठं स्वर्गमासाद्य विष्णोर्वक्षःस्थलस्थितम् ॥ २
ततः कालेन महता पुनः सर्गविधौ नृप । अहंकारावृते लोके प्रधानपुरुषान्विते ॥ ३
स्पर्धायां च प्रवृत्तायां कमलासनकृष्णयोः । लिङ्गाकारा समुद्भूता वह्नेर्ज्वालाऽतिभीषणा ॥
तयाऽभितप्तस्य हरेर्वक्षसस्तद्विनिःसृतम् ॥ ४
वक्षःस्थलं समाश्रित्य विष्णोः सौभाग्यमास्थितम् । रसरूपं ततो यावत्प्राप्नोति वसुधातलम्
उत्क्षिप्तमन्तरिक्षे तद्ब्रह्मपुत्रेण धीमता । दक्षेण पीतमात्रं तद्रूपलावण्यकारकम् ॥ ६
बलं तेजो महज्जातं दक्षस्य परमेष्ठिनः । शेषं यदपतद्भूमावष्टधा समजायत ॥ ७
ततो जनानां संजाताः सप्त सौभाग्यदायिकाः । इक्षवो रसराजाश्च निष्पावाजाजिधान्यकम् ॥ ८
विकारवच्च गोक्षीरं कुसुम्भं कुङ्कुमं तथा । लवणं चाष्टमं तद्वत्सौभाग्याष्टकमुच्यते ॥ ९
पीतं यद्ब्रह्मपुत्रेण योगज्ञानविदा पुनः । दुहिता साऽभवत्तस्य या सतीत्यभिधीयते ॥ १०
लोकानतीत्य लालित्याल्ललिता तेन चोच्यते । त्रैलोक्यसुन्दरीमेनामुपयेमे पिनाकधृक् ॥ ११
या देवी सौभाग्यमयी भुक्तिमुक्तिफलप्रदा । तामाराध्य पुमान्भक्त्या नारी वा किं न विन्दति

मनुरुवाच—

कथमाराधनं तस्या जगद्धात्र्या जनार्दन । तद्विधानं जगन्नाथ तत्सर्वं च वदस्व मे ॥ १३

मत्स्य उवाच—

वसन्तमासमासाद्य तृतीयायां जनप्रिय । शुक्लपक्षस्य पूर्वाह्णे तिलैः स्नानं समाचरेत् ॥ १४
तस्मिन्नहनि सा देवी किल विश्वात्मना सती । पाणिग्रहणकैर्मन्त्रैरुदूढा वरवर्णिनी ॥ १५
तया सहैव देवेशं तृतीयायामथार्चयेत् । फलैर्नानाविधैर्धूपैर्दीपनैवेद्यसंयुतैः ॥ १६
प्रतिमां पञ्चगव्येन तथा गन्धोदकेन तु । स्नापयित्वाऽर्चयेद्गौरीमिन्दुशेखरसंयुताम् ॥ १७
नमोऽस्तु पाटलायै तु पादौ देव्याः शिवस्य तु । शिवायेति च संकीर्त्य जयायै गुल्फयोर्द्वयोः ॥
त्रिगुणायेति रुद्राय भवान्यै जङ्घयोर्युगम् । शिवां रुद्रेश्वरायै च विजयायेति जानुनी ॥
संकीर्त्य हरिकेशाय तथोरू वरदे नमः ॥ १९
ईशायै च कटिं देव्याः शंकरायेति शंकरम् । कुक्षिद्वयं च कोटव्यै शूलिने शूलपाणये ॥ २०

१ ग. घ. °दा । तच्च वैकुण्ठमा° । २ ग. घ. °स्थले स्थि° । ३ ग घ. च. °म् । यद्वक्षस्थलमा° । ङ. °म् । गद्वक्षस्थलमाद्य त्रि° । ४ ग. घ. ङ. च. ततस्त्वोषधयो जाताः । ५ ङ. कृ । सौभाग्यमाया या देवी भु° । ६ ङ. °री विन्दति वाञ्छितम् । म° । ७ ग. घ. ङ. त्वं । ८ ङ. जनाधिप । ९ ग. 'णिग्राहणिकै' । १० क. ख. 'भैरवसद्वर' । ११ ग. धैर्दीपैर्धूप° । १२ घ. घ. ङ. रुद्रस्य । १३ ग. शिवं रु° । ङ. शिवं भद्रेश्वरायेति वि° । १४ ग. घ. ङ. °यायै च. जा° ।

मङ्गलायै नमस्तुभ्यमुदरं चाभिपूजयेत् । सर्वात्मने नमो रुद्रमीशान्यै च कुचद्वयम् ॥ २१
शिवं वेदात्मने तद्वद्रुद्राण्यै कण्ठमर्चयेत् । त्रिपुरघ्नाय विश्वेशमनन्तायै करद्वयम् ॥ २२
त्रिलोचनाय च हरं बाहू कालानलप्रिये । सौभाग्यभवनायेति भूषणानि सदाऽर्चयेत् ॥
स्वाहास्वधायै च मुखमीश्वरायेति शूलिनम् ॥ २३
अशोकमधुवासिन्यै पूज्यावोष्ठौ च भूतिदौ । स्थाणवे तु हरं तद्वद्धास्यं चन्द्रमुखप्रिये ॥ २४
नमोऽर्धनारीशहरमसिताङ्गीति नासिकाम् । नम उग्राय लोकेशं ललितेति पुनर्भ्रुवौ ॥ २५
शर्वाय पुरहन्तारं वासव्यै तु तथाऽलकान् । नमः श्रीकण्ठनाथायै शिवकेशांस्ततोऽर्चयेत् ॥
भीमोग्रसमरूपिण्यै शिरः सर्वात्मने नमः ॥ २६
शिवमभ्यर्च्य विधिवत्सौभाग्याष्टकमग्रतः । स्थापयेद्घृतनिष्पावकुसुम्भक्षीरजीरकम् ॥ २७
रसराजं च लवणं कुस्तुम्बुरु तथाऽष्टकम् । दत्तं सौभाग्यमित्यस्मात्सौभाग्याष्टकमित्यतः ॥
एवं निवेद्य तत्सर्वमग्रतः शिवयोः पुनः । रात्रौ शृङ्गोदकं प्राश्य तद्वद्भूमावरिंदम ॥ २९
पुनः प्रभाते तु तथा कृतस्नानजपः शुचिः । संपूज्य द्विजदांपत्यं वस्त्रमाल्यविभूषणैः ॥ ३०
सौभाग्याष्टकसंयुक्तं सुवर्णचरणद्वयम् । प्रीयतामत्र ललिता ब्राह्मणाय निवेदयेत् ॥ ३१
एवं संवत्सरं यावत्तृतीयायां सदा मनो । कर्तव्यं विधिवद्भक्त्या सर्वसौभाग्यमीप्सुभिः ॥ ३२
प्राशने दानमन्त्रे च विशेषोऽयं निबोध मे । शृङ्गोदकं चैत्रमासे वैशाखे गोमयं पुनः ॥ ३३
ज्येष्ठे मन्दारकुसुमं बिल्वपत्रं शुचौ स्मृतम् । श्रावणे दधि संप्राश्यं नभस्ये च कुशोदकम् ॥ ३४
क्षीरमाश्वयुजे मासि कार्तिके पृषदाज्यकम् । मार्गे मासे तु गोमूत्रं पौषे संप्राशयेद्घृतम् ॥ ३५
माघे कृष्णतिलांस्तद्वत्पञ्चगव्यं च फाल्गुने । ललिता विजया भद्रा भवानी कुमुदा शिवा ॥
वासुदेवी तथा गौरी मङ्गला कमला सती । उमा च दानकाले तु प्रीयतामिति कीर्तयेत् ॥ ३७
मल्लिकाशोककमलं कदम्बोत्पलमालतीः । कुब्जकं करवीरं च बाणमम्लानकुङ्कुमम् ॥ ३८
सिन्धुवारं च सर्वेषु मासेषु क्रमशः स्मृतम् । जपाकुसुम्भकुसुमं मालती शतपत्रिका ॥ ३९
यथालाभं प्रशस्तानि करवीरं च सर्वदा । एवं संवत्सरं यावदुपोष्य विधिवन्नरः ॥ ४०
स्त्री भक्ता वा कुमारी वा शिवमभ्यर्च्य भक्तितः । व्रतान्ते शयनं दद्यात्सर्वोपस्करसंयुतम् ॥
उमामहेश्वरं हैमं वृषभं च गवा सह । स्थापयित्वाऽथ शयने ब्राह्मणाय निवेदयेत् ॥ ४२
अन्यान्यपि यथाशक्ति मिथुनान्यम्बरादिभिः । धान्यालंकारगोदानैरभ्यर्चेद्धनसंचयैः ॥
वित्तशाठ्येन रहितः पूजयेद्गतविस्मयः ॥ ४३
एवं करोति यः सम्यक्सौभाग्यशयनव्रतम् । सर्वान्कामानवाप्नोति पदमत्यन्तमश्नुते ॥
फलस्यैकस्य त्यागेन व्रतमेतत्समाचरेत् ॥ ४४

---

१ ग. ङ. 'ग्यभाव' । २ ग. °मीशानायै' । ३ ग. °द्वचाऽऽस्यं । घ. ङ. °द्वदास्यं । ४ ग. घ. ङ. थाय शि° । ५ क. ख. 'रकान् । र' । ६ ग घ. चैत्रे । ७ ग. घ. ङ. 'श्य स्वपेच्च° । ८ ग. घ ङ. °णंप्रतिमाद्व° । ९ घ. च. मे । गोःशृङ्गोदकमाद्यं स्याद्वै शा° । १० घ. ङ. मार्गोत्तमाद्वे गो° । ११ क. ख. 'तिलं तद्व° । १२ ग. कुङ्कुमं । १३ ङ. स्त्री पुमान्वा कु' । १४ ग. घ. ङ. °शक्त्या मि' । १५ ग. 'नैर्हिरण्यैर्धनसंज्ञयात् । वि' । घ. °नैर्हिरण्यैर्वर्णसंचयात् । वि' । ङ. च. 'नैरन्यत्र धनसंक्षयात् । वि' । १६ ग. °तिफलमानन्त्यम° । १७ घ. ङ. च. °दमानन्त्यम' ।

य इच्छन्कीर्तिमाप्नोति प्रतिमासं नराधिप। सौभाग्यारोग्यरूपायुर्वस्त्रालंकारभूषणैः ॥
न वियुक्तो भवेद्राजंन्नवार्बुदशतत्रयम्॥ ४५
यस्तु द्वादश वर्षाणि सौभाग्यशयनव्रतम्। करोति सप्त चाष्टौ वा श्रीकण्ठभवनेऽमरैः ॥
पूज्यमानो वसेत्सम्यग्यावत्कल्पायुतत्रयम्॥ ४६
नारी वा कुरुते वाऽपि कुमारी वा नरेश्वर। साऽपि तत्फलमाप्नोति देव्यनुग्रहलालिता॥ ४७
शृणुयादपि यश्चैव प्रदद्यादथवा मतिम्। सोऽपि विद्याधरो भूत्वा स्वर्गलोके चिरं वसेत्॥ ४८
इदमिह मदनेन पूर्वमिष्टं शतधनुषा कृतवीर्यसूनुना च।
कृतमथ वरुणेन नन्दिना वा किमु जननाथ ततो यदुद्भवः स्यात्॥ ४९

इति श्रीमात्स्ये महापुराणे सौभाग्यशयनव्रतं नाम षष्टितमोऽध्यायः॥ ६०॥

आदितः श्लोकानां समष्ट्यङ्काः॥ ३६२२॥

---

अथैकषष्टितमोऽध्यायः।

---

नारद उवाच—

भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महर्जनः। तपः सत्यं च सप्तैते देवलोकाः प्रकीर्तिताः॥ १
पर्यायेण तु सर्वेषामाधिपत्यं कथं भवेत्। इह लोके शुभं रूपमायुः सौभाग्यमेव च ॥
लक्ष्मीश्च विपुला नाथ कथं स्यात्पुरसूदन॥ २

महेश्वर उवाच—

पुरा हुताशनः सार्धं मारुतेन महीतले। आदिष्टः पुरुहूतेन विनाशाय सुरद्विषाम्॥ ३
निर्दग्धेषु ततस्तेन दानवेषु सहस्रशः। तारकः कमलाक्षश्च कालदंष्ट्रः परावसुः ॥
विरोचनश्च सङ्ग्रामादपलायंस्तपोधन॥ ४
अम्भः सामुद्रमाविश्य संनिवेशमकुर्वत। अशक्या इति तेऽप्यग्निमारुताभ्यामुपेक्षिताः॥ ५
ततः प्रभृति तं देवान्मनुष्यान्सह जङ्गमान्। संपीड्य च मुनीन्सर्वान्प्रविशन्ति पुनर्जलम्॥ ६
एवं वर्षसहस्राणि वीराः पञ्च च सप्त च। जलदुर्गबलाद्ब्रह्मन्पीडयन्ति जगत्रयम्॥ ७
ततः परमथो वह्निमारुतावमराधिपः। आदिदेश चिरादम्बुनिधिरेष विशोष्यताम्॥ ८
यस्मादस्मद्द्विपामेष शरणं वरुणालयः। तस्माद्भवद्भ्यामद्यैव क्षयमेष प्रणीयताम्॥ ९
तावूचतुस्ततः शक्रमुभौ शम्बरसूदनम्। अधर्म एष देवेन्द्र सागरस्य विनाशनम्॥ १०
यस्माज्जीवनिकायस्य महतः संक्षयो भवेत्। तस्मान्न पापमद्याऽऽवां करवाव पुरंदर॥ ११
अस्य योजनमात्रेऽपि जीवकोटिशतानि च। निवसन्ति सुरश्रेष्ठ स कथं नाशमर्हति॥ १२
एवमुक्तः सुरेन्द्रस्तु कोपात्संरक्तलोचनः। उवाचेदं वचो रोषान्निर्दहन्निव पावकम्॥ १३
न धर्माधर्मसंयोगं प्राप्नुवन्त्यमराः क्वचित्। भवंतोस्तु विशेषेण माहात्म्यं चाधितिष्ठतोः॥ १४

---

१ घ. ङ. °जन्वर्षार्बु°। २ घ. ङ. वा क्षितिज°। ३ घ ङ. तदद्भुतं महः स्या°। ४ ग. यदद्भुतं स्या°। ५ ग. मधुसूदन। ६ ग. मत्स्य। घ. ङ. च. भगवान्। ७ घ. ङ. प्रदिष्टः। ८ ग. अन्तःसमुद्र°। ९ ग. घ. ङ च. सभुज°। १० ग. शक्रं श्रयतां त्रिदशाधिप। अ°। ११ ग. ङ. च. पापं भूयिष्ठमुःसहां वः पु°। १२ क. ख. घ. °वतस्तु १३ क. ख. घ. °ष्ठति। म°।

मदाज्ञालङ्घनं यस्मान्मारुतेन समं त्वया । मुनिव्रतमहिंसादि परिगृह्य त्वया कृतम् ॥
धर्मार्थशास्त्ररहितं शत्रुं प्रति विभावसो ॥ १५
तस्मादेकेन वपुषा मुनिरूपेण मानुषे । मारुतेन समं लोके तव जन्म भविष्यति ॥ १६
यदा च मानुषत्वेऽपि त्वयाऽगस्त्येन शोषितः । भविष्यत्युदधिर्वह्ने तदा देवत्वमाप्स्यसि ॥ १७
इतीन्द्रशापात्पतितौ तत्क्षणात्तौ महीतले । अवाप्तावेकदेहेन कुम्भाज्जन्म तपोधन ॥ १८
मित्रावरुणयोर्वीर्याद्वसिष्ठस्यानुजोऽभवत् । अगस्त्य इत्युग्रतपाः संबभूव पुनर्मुनिः ॥ १९

नारद उवाच—

संभूतः स कथं भ्राता वसिष्ठस्याभवन्मुनिः । कथं च मित्रावरुणौ पितरावस्य तौ स्मृतौ ॥
जन्म कुम्भादगस्त्यस्य कथं स्यात्पुरसूदन ॥ २०

ईश्वर उवाच—

पुरा पुराणपुरुषः कदाचिद्गन्धमादने । भूत्वा धर्मसुतो विष्णुश्चचार विपुलं तपः ॥ २१
तपसा तस्य भीतेन विघ्नार्थं प्रेषितावुभौ । शक्रेण माधवानङ्गावप्सरोगणसंयुतौ ॥ २२
यदा न गीतवाद्येन नाङ्गरागादिना हरिः । न काममाधवाभ्यां च विषयान्प्रति चुक्षुभे ॥ २३
तदा काममधुस्त्रीणां विषादमगमन्गणः । संक्षोभाय ततस्तेषां स्वोरुदेशान्नराग्रजः ॥
नारीमुत्पादयामास त्रैलोक्यजनमोहिनीम् ॥ २४
संक्षुब्धास्तु तया देवास्तौ तु देववरावुभौ । अप्सरोभिः समक्षं हि देवानामब्रवीद्धरिः ॥ २५
अप्सरा इति सामान्या देवानामब्रवीद्धरिः । उर्वशीति च नाम्नेयं लोके ख्यातिं गमिष्यति ॥
ततः कामयमानेन मित्रेणाऽऽहूय सोर्वशी । उक्ता मां रमयस्वेति बाढमित्यब्रवीत्तु सा ॥ २७
गच्छन्ती चाम्बरं तद्वत्स्तोकमिन्दीवरेक्षणा । वरुणेन धृता पश्चाद्वरुणं नाभ्यनन्दत ॥ २८
मित्रेणाहं वृता पूर्वमद्य भार्या न ते विभो । उवाच वरुणश्चित्तं मयि संन्यस्य गम्यताम् ॥ २९
गतायां बाढमित्युक्त्वा मित्रः शापमदात्तदा । तस्यै मानुपलोके त्वं गच्छ सोमसुतात्मजम् ॥
भजस्वेति यतो वेश्याधर्म एष त्वया कृतः । जलकुम्भे ततो वीर्यं मित्रेण वरुणेन च ॥
प्रक्षिप्तमथ संजातौ द्वावेव मुनिसत्तमौ ॥ ३१
निमिर्नाम सह स्त्रीभिः पुरा द्यूतमदीव्यत । तत्रान्तरेऽभ्याजगाम वसिष्ठो ब्रह्मसंभवः ॥ ३२
तस्य पूजामकुर्वन्तं शशाप स मुनिर्नृपम् । विदेहस्त्वं भवस्वेति ततस्तेनाप्यसौ मुनिः ॥ ३३
अन्योन्यशापाच्च तयोर्विगते इव चेतसी । जग्मतुः शापनाशाय ब्रह्माणं जगतः पतिम् ॥ ३४
अथ ब्रह्मण आदेशाल्लोचनेष्ववसन्निमिः । निमेषाः स्युश्च लोकानां* तद्विश्रामाय नारद ३५
वसिष्ठोऽप्यभवत्तस्मिञ्जलकुम्भे च पूर्ववत् । ततः श्वेतश्चतुर्बाहुः साक्षसूत्रकमण्डलुः ॥
अगस्त्य इति शान्तात्मा बभूव ऋषिसत्तमः ॥ ३६
मलयस्यैकदेशे तु वैखानसविधानतः । सभार्यः संवृतो विप्रैस्तपश्चक्रे सुदुश्चरम् ॥ ३७

* आर्षश्चायं प्रयोगः ।

१ घ. च 'निग्राणम' । २ ग. घ. ङ. च. गण्डूपशो° । ३ क. ख. °तौ । तदा तद्गीत° । ४ घ. ङ. च. °द्बहा-रादि । ५ ग. च. °न्ती प्रान्तरे तस्मिस्तोक° । ६ ग. चान्तरं । ङ. चान्तरे त° । ७ ग. ङ. वृता । ८ ग. ङ. च. °द्वचनं ना° । ९ ग. °म पुरास्त्रीभिः सह द्यू° । ङ. °म पुरा स्त्रीभिर्नृपो द्यू° । १० घ. च. वैश्वानरं विधानवित् । स । ११ ङ. °नवित् । स ।

ततः कालेन महता तारकादतिपीडितम् । जगद्वीक्ष्य स कोपेन पीतवान्वरुणालयम् ॥ ३८
ततोऽस्य वरदाः सर्वे बभूवुः शंकरादयः । ब्रह्मा विष्णुश्च भगवान्वरदानाय जग्मतुः ॥
वरं वृणीष्व भद्रं ते यदभीष्टं च वै मुने ॥ ३९

अगस्त्य उवाच—

यावद्ब्रह्मसहस्राणां पञ्चविंशतिकोटयः । वैमानिको भविष्यामि दक्षिणाचलवर्त्मनि ॥ ४०
मद्विमानोदये कुर्याद्यः कश्चित्पूजनं मम । स सप्तलोकाधिपतिः पर्यायेण भविष्यति ॥४१

ईश्वर उवाच—

एवमस्त्विति तेऽप्युक्त्वा जग्मुर्देवा यथागतम् । तस्मादर्घः प्रदातव्यो ह्यगस्त्यस्य सदा बुधैः॥

नारद उवाच—

कथमर्घप्रदानं तु कर्तव्यं तस्य वै विभो । विधानं यदगस्त्यस्य पूजने तद्वदस्व मे ॥ ४३

ईश्वर उवाच—

प्रत्यूषसमये विद्वान्कुर्यादस्योदये निशि । स्नानं शुक्लतिलैस्तद्वच्छुक्लमाल्याम्बरो गृही ॥४४
स्थापयेदव्रणं कुम्भं माल्यवस्त्रविभूषितम् । पञ्चरत्नसमायुक्तं घृतपात्रसमन्वितम् ॥
*नानाभक्ष्यफलैर्युक्तं ताम्रपात्रसमन्वितम् ॥ ४५

अङ्गुष्ठमात्रं पुरुषं तथैव सौवर्णमत्यायतबाहुदण्डम् ।
चतुर्मुखं कुम्भमुखे निधाय धान्यानि सप्ताम्बरसंयुतानि ॥ ४६
सकांस्यपात्राक्षतशुक्तियुक्तं मन्त्रेण दद्याद्द्विजपुंगवाय ।
उत्क्षिप्य लम्बोदरदीर्घबाहुमनन्यचेता यमदिङ्मुखः सन् ॥ ४७
श्वेतां च दद्याद्यदि शक्तिरस्ति रौप्यैः खुरैर्हेममुखीं सवत्साम् ।
धेनुं नरः क्षीरवतीं प्रणम्य सवत्सघण्टाभरणां द्विजाय ॥ ४८
आसप्तरात्रोदयमेतदस्य दातव्यमेतत्सकलं नरेण ।
यावत्समाः सप्त दशाथवा स्युरथोर्ध्वमप्यत्र वदन्ति केचित् ॥ ४९

काशपुष्पप्रतीकाश वह्निमारुतसंभव । मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते ॥ ५०
+विन्ध्यवृद्धिक्षयकर मेघतोयविषापह । रत्नवल्लभ देवेश लङ्कावासिन्नमोऽस्तु ते ५१
वातापी भक्षितो येन समुद्रः शोषितः पुरा । लोपामुद्रापतिः श्रीमान्योऽसौ तस्मै नमो नमः
राजपुत्रि महाभागे ऋषिपत्नि वरानने । लोपामुद्रे नमस्तुभ्यमर्घो मे प्रतिगृह्यताम् ॥
प्रत्यब्दं तु फलत्यागमेवं कुर्वन्न सीदति ॥ ५३
होमं कृत्वा ततः पश्चाद्वर्जयेन्मानवः फलम् । अनेन विधिना यस्तु पुमानर्घ्यं निवेदयेत् ॥५४
इमं लोकं स चाऽऽप्नोति रूपारोग्यसमन्वितः । द्वितीयेन भुवर्लोकं स्वर्गलोकं ततः परम्॥५५
सप्तैव लोकानाप्नोति सप्तार्घान्यः प्रयच्छति । यावदायुश्च यः कुर्यात्परं ब्रह्माधिगच्छति॥५६

*एतदर्धं न विद्यते क. ख. घ. च. पुस्तकेषु । +इत आरभ्य अर्घो मे प्रतिगृह्यतामित्यन्तग्रन्थो ग. पुस्तके वर्तते ।

१ ग. यथाऽभीष्टं भवेन्मुने । २ ग. घ. ङ. च. °णापथव° । ३ ग. सगस्तलो° । ४ ग. °पात्रेण संयुतम् । ना° । ५ क. ख. °र्णमेवाय° । ६ क. ख. °श अभिमा° । ७ क. फलैर्योग° । ख. घ. फलैर्योग । ८ घ. दत्त्वा । ङ. च. कुर्यात् । ९ घ. ङ. च. लोकमवाप्नो° । १० क. ख. °साघ्यो न्यः ।

इह पठति शृणोति वा य एतं[1]युगलमुनिप्रभवार्घ्यसंप्रदानम् ।
मतिमपि च ददाति सोऽपि विष्णोर्भवनगतः परिपूज्यतेऽमरौघैः ॥ ५७

इति श्रीमात्स्ये महापुराणेऽगस्त्योत्पत्तिपूजाविधानं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ३६७९ ॥

---

अथ द्विषष्टितमोऽध्यायः ।

---

मनुरुवाच—

सौभाग्यारोग्यफलदममुत्राक्षय्यकारकम् । भुक्तिमुक्तिप्रदं देव तन्मे ब्रूहि जनार्दन ॥ १

मत्स्य उवाच—

यदुमायाः पुरा देव उवाच पुरसूदनः । कैलासशिखरासीनो देव्या पृष्टस्तदा किल ॥ २
कथासु संप्रवृत्तासु धर्म्यासु ललितासु च । तदिदानीं प्रवक्ष्यामि भुक्तिमुक्तिफलप्रदम् ॥ ३

ईश्वर उवाच—

शृणुष्वावहिता देवि तथैवानन्तपुण्यकृत् । नराणामथ नारीणामाराधनमनुत्तमम् ॥ ४
नभस्ये वाऽथ वैशाखे पुण्यमार्गशिरस्य* च । शुक्लपक्षे तृतीयायां सुस्नातो गौरसर्षपैः ॥ ५
गोरोचनं सगोमूत्रमुष्णं गोशकृतं तथा । दधिचन्दनसंमिश्रं ललाटे तिलकं न्यसेत् ॥
सौभाग्यारोग्यदं यस्मात्सदा च ललिताप्रियम् ॥ ६
प्रतिपक्षं तृतीयासु पुमानापीतवाससी । धारयेदथ रक्तानि नारी चेदथ संयता ॥ ७
विधवा धातुरक्तानि कुमारी शुक्लवाससी । देवीं तु पञ्चगव्येन ततः क्षीरेण केवलम् ॥
स्नापयेन्मधुना तद्वत्पुष्पगन्धोदकेन च ॥ ८
पूजयेच्छुक्लपुष्पैश्च फलैर्नानाविधैरपि । धान्यकाजाजिलवणैर्गुडक्षीरघृतान्वितैः ॥ ९
शुक्लाक्षततिलैरर्च्यां ततो देवीं सदाऽर्चयेत् । पादाद्यभ्यर्चनं कुर्यात्प्रतिपक्षं वरानने ॥ १०
वरदायै नमः पादौ तथा गुल्फौ नमः श्रियै । अशोकायै नमो जङ्घे पार्वत्यै जानुनी तथा
ऊरू मङ्गलकारिण्यै वामदेव्यै तथा कटिम् । पद्मोदरायै जठरमुरः कामश्रियै नमः ॥ १२
करौ सौभाग्यदायिन्यै बाहू *हरमुखश्रियै । मुखं दर्पणवासिन्यै स्मरदायै स्मितं नमः ॥ १३
गौर्यै नमस्तथा नासामुत्पलायै च लोचने । तुष्ट्यै ललाटमलकान्कात्यायन्यै शिरस्तथा ॥
नमो गौर्यै नमो धिष्ण्यै नमः कान्त्यै नमः श्रियै । रम्भायै ललितायै च वासुदेव्यै नमो नमः
एवं संपूज्य विधिवदग्रतः पद्ममालिखेत् । पत्रैर्द्वादशभिर्युक्तं कुङ्कुमेन सकर्णिकम् ॥ १६
पूर्वेण विन्यसेद्गौरीमपर्णां च ततः परम् । भवानीं दक्षिणे तद्वद्रुद्राणीं च ततः परम् १७
विन्यसेत्पश्चिमे सौम्यां सदा मदनवासिनीम् । वायव्ये पाटलामुग्रामन्तरेण ततोऽप्युमाम् ॥

---

* अस्य प्रयोगस्याऽऽर्षत्वं कल्पनीयम् ।

---

१ ग. °तद्वसुयुगलप्रभवाय सं° । घ. °तद्वसुयुगुलाङ्गभवस्य सं° । ङ. च. °तद्वसनशुभयुगस्य सं° । २ ग. °मान्नारी तया सती । धा° । ३ ग. °रीचे वातिसं । ४ क. ख. °हृदरमुखं श्रि° । घ. °दृदरमुन्नाश्रि° । ५ ग भूत्यै । ङ. धात्र्यै । ६ ग. ङ. °द्वदिन्द्राणीं ।

मध्ये यथास्वं मांसाङ्गां मङ्गलां कुमुदां सतीम्। रुद्रं च मध्ये संस्थाप्य ललितां कर्णिकोपरि।
कुसुमैरक्षतैर्वार्भिर्नमस्कारेण विन्यसेत्॥ १९
गीतमङ्गलनिर्घोषान्कारयित्वा सुवासिनीः। पूजयेद्रक्तवासोभी रक्तमाल्यानुलेपनैः॥
सिन्दूरं स्नानचूर्णं च तासां शिरसि पातयेत्॥ २०
सिन्दूरकुङ्कुमस्नानमतीवेष्टतमं यतः। तथोपदेष्टारमपि पूजयेद्यत्नतो गुरुम्॥
न पूज्यते गुरुर्यत्र सर्वास्तत्राफलाः क्रियाः॥ २१
नभस्ये पूजयेद्गौरीमुत्पलैरसितैः सदा। बन्धुजीवैराश्वयुजे कार्तिके शतपत्रकैः॥ २२
जातीपुष्पैर्मार्गशीर्षे पौषे पीतैः कुरण्टकैः। कुन्दकुङ्कुमपुष्पैस्तु देवीं माघे तु पूजयेत्॥
सिन्दुवारेण जात्या वा फाल्गुनेऽप्यर्चयेदुमाम्॥ २३
चैत्रे तु मल्लिकाशोकैर्वैशाखे गन्धपाटलैः। ज्येष्ठे कमलमन्दारैराषाढे च नवाम्बुजैः॥
कदम्बैरथ मालत्या श्रावणे पूजयेत्सदा॥ २४
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। बिल्वपत्रार्कपुष्पं च यवान्गोशृङ्गवारि च॥ २५
पञ्चगव्यं च बिल्वं च प्राशयेत्क्रमशस्तदा। एतद्भाद्रपदाद्यं तु प्राशनं समुदाहृतम्॥ २६
प्रतिपक्षं च मिथुनं तृतीयायां वरानने। पूजयित्वाऽर्चयेद्भक्त्या वस्त्रमाल्यानुलेपनैः॥ २७
पुंसः पीताम्बरे दद्यात्स्त्रियै कौसुम्भवाससी। निष्पावा[illegible]जिलवणमिक्षुदण्डगुडान्वितम्॥
तस्यै दद्यात्फलं पुष्पं सुवर्णोत्पलसंयुतम्॥ २८
यथा न देवि देवेशस्त्वां परित्यज्य गच्छति। तथा मामुद्धराशेषदुःखसंसारसागरात्॥ २९
कुमुदा विमलाऽनन्ता भवानी च सुधा शिवा। ललिता कमला गौरी सती रम्भाऽथ पार्वती॥
नभस्यादिषु मासेषु प्रीयतामित्युदीरयेत्। व्रतान्ते शयनं दद्यात्सुवर्णकमलान्वितम्॥ ३१
मिथुनानि चतुर्विंशद्दश द्वौ च समर्चयेत्। अष्टौ षड्वाऽप्यथ पुनश्चातुर्मासं समर्चयेत्॥ ३२
पूर्वं दत्त्वा तु गुरवे शेषानभ्यर्चयेद्बुधः। उक्तानन्ततृतीयैषा सदाऽनन्तफलप्रदा॥ ३३
सर्वपापहरां देवि सौभाग्यारोग्यवर्धिनीम्। न चैनां वित्तशाठ्येन कदाचिदपि लङ्घयेत्॥
नरो वा यदि वा नारी वित्तशाठ्यात्पतत्यधः। ३४
गर्भिणी सूतिका नक्तं कुमारी वाऽथ रोगिणी। यद्यशुद्धा तदाऽन्येन कारयेत्प्रयता स्वयम्॥
इमामनन्तफलदां यस्तृतीयां समाचरेत्। कल्पकोटिशतं साग्रं शिवलोके महीयते॥ ३६
वित्तहीनोऽपि कुरुते वर्षत्रयमुपोषणैः। पुष्पमन्त्रविधानेन सोऽपि तत्फलमाप्नुयात्॥ ३७
नारी वा कुरुते या तु कुमारी विधवाऽथवा। साऽपि तत्फलमाप्नोति गौर्यनुग्रहलालिता॥ ३८

इति पठति शृणोति वा य इत्थं गिरितनयाव्रतमिन्द्रवासंस्थः।
मतिमपि च ददाति सोऽपि देवैरमरवधूजनकिंनरैश्च पूज्यः॥ ३९

इति श्रीमात्स्ये महापुराणेऽनन्ततृतीयाव्रतं नाम द्विषष्टितमोऽध्यायः॥ ६२॥

आदितः श्लोकानां समष्ट्यङ्काः॥ ३७१८॥

---

१ ङ. ध्ये तथाऽप्युमां। २ ग. थास्वमासास् उद्रदां कु। ४. यास्वमासासु ग°। ३ ग. ङ. र्वाऽपि नम°। ४ ग. ख. °नवर्ण। ५ घ. ङ. च. दापयेत्। ६ ङ. °वेष्टं यतस्तव। त°। ७ ग. च. °श्चातुर्मासे स°। ८ ग. घ. ङ. °दर रे°। ९ ग. घ. ङ. °नीं। न। १० ग ङ. °मेन्क्रमशः गता। ष°। ११ ग. घ. ङ. च °न्द्रलोकम°।

अथ त्रिषष्टितमोऽध्यायः ।

---

ईश्वर उवाच—

अथान्यामपि वक्ष्यामि तृतीयां पापनाशिनीम् । रसकल्याणिनीमेतां पुराकल्पविदो विदुः ॥
माघमासे तु संप्राप्ते तृतीयां शुक्लपक्षतः । प्रातर्गव्येन पयसा तिलैः स्नानं समाचरेत् ॥ २
स्नापयेन्मधुना देवीं तथैवेक्षुरसेन च । *गन्धोदकेन तु पुनर्लेपयेत्कुङ्कुमेन तु ॥
दक्षिणाङ्गानि संपूज्य ततो वामानि पूजयेत् ॥ ३
ललितायै नमो देव्याः पादौ गुल्फौ ततोऽर्चयेत्। जङ्घां जानुं तथा शान्त्यै तथैवोरुं श्रियै नमः
मदालसायै तु कटिममलायै तथोदरम् । स्तनौ मदनवासिन्यै कुमुदायै च कन्दराम् ॥ ५
भुजं भुजाग्रं माधव्यै कमलायै मुखस्मिते । भ्रूललाटं च रुद्राण्यै शंकरायै तथाऽलकान् ॥ ६
मुकुटं विश्ववासिन्यै शिरः कान्त्यै तथाऽर्चयेत् । मदनायै ललाटं तु मोहनायै पुनर्भ्रुवौ ॥ ७
नेत्रे चन्द्रार्धधारिण्यै तुष्ट्यै च वदनं पुनः । उत्कण्ठिन्यै नमः कण्ठममृतायै नमः स्तनौ ॥ ८
रम्भायै वामकुक्षिं च विशोकायै नमः कटिम् । हृदयं मन्मथाधिष्ण्यै पाटलायै तथोदरम् ॥ ९
कटिं सुरतवासिन्यै तथोरुं चम्पकप्रिये । जानुजङ्घे नमो गौर्यै गायत्र्यै घुटिके नमः ॥ १०
धराधरायै पादौ तु विश्वकायै नमः शिरः । नमो भवान्यै कामिन्यै कामदेव्यै जगत्प्रिये ॥ ११
+आनन्दायै सुनन्दायै सुभद्रायै नमो नमः । एवं संपूज्य विधिवद्द्विजदांपत्यमर्चयेत् ॥
भोजयित्वाऽन्नपानेन मधुरेण विमत्सरैः ॥ १२
जलपूरितं तथा कुम्भं शुक्लाम्बरयुगद्वयम् । दत्त्वा सुवर्णकमलं गन्धमाल्यैः समर्चयेत् ॥ १३
प्रीयतामत्र कुमुदा गृह्णीयाल्लवणव्रतम् । अनेन विधिना देवीं मासि मासि सदाऽर्चयेत् ॥ १४
लवणं वर्जयेन्माघे फाल्गुने च गुडं पुनः । तैलं राजिं तथा चैत्रे वर्ज्यं च मधु माधवे ॥ १५
पानकं ज्येष्ठमासे तु आषाढे चाथ जीरकम् । श्रावणे वर्जयेत्क्षीरं दधि भाद्रपदे तथा ॥ १६
घृतमाश्वयुजे तद्वदूर्जे वर्ज्यं च माक्षिकम् । धान्यकं मार्गशीर्षे तु पौषे वर्ज्या च शर्करा ॥ १७
व्रतान्ते करकं पूर्णमेतेषां मासि मासि च । दद्याद्विकालवेलायां पूर्णपात्रेण संयुतम् ॥ १८
लड्डुकाञ्छ्वेतवर्णांश्च संयावमथ पूरिकाः । घारिकानप्यपूपांश्च पिष्टापूपांश्च मण्डकान् ॥ १९
क्षीरं शाकं च दध्यन्नमिण्डर्योऽशोकवर्तिकाः । माघादिक्रमशो दद्यादेतानि करकोपरि ॥ २०
कुमुदा माधवी गौरी रम्भा भद्रा जया शिवा । उमा रतिः सती तद्वन्मङ्गला रतिलालसा ॥ २१
क्रमान्माघादि सर्वत्र प्रीयतामिति कीर्तयेत् । सर्वत्र पञ्चगव्येन प्राशनं समुदाहृतम् ॥
उपवासी भवेन्नित्यमशक्ते नक्तमिष्यते ॥ २२
पुनर्माघे तु संप्राप्ते शर्करां करकोपरि । कृत्वा तु काञ्चनीं गौरीं पञ्चरत्नसमन्विताम् ॥ २३

---

* एतदर्धं न विद्यते क. ख. घ. पुस्तकेषु । + एतदर्धं न विद्यते क. ख. पुस्तकयोः ।

---

१ ङ. शुचिस्मिते । २ क. ख. ललाटे च । ३ ग. च. विन्ध्यवा° । ४ ग. शान्त्यै । ५ ग. ङ. च. °मेघाद्यै च । ६ ग. ङ. च. करम् । ७ ग. ङ. च. °यै गुल्फौ गायत्रियै न° । ८ ग. च. विशोकायै । ९ क. ख. कार्यै न° । १० ग. °मच्छन्ने । आ° । ११ ग. च. °रः । सल्लड्डुकं वादि कु° । ङ. °रः । मल्लकं वारकु° । १२ घ. पायसं । १३ ग. च. °यां भक्ष्यपा° । ङ. °यां भक्ष्यमाने । १४ ग. ङ. °काघृतपूरांश्च ।

हैमीमङ्गुष्ठमात्रां च साक्षसूत्रकमण्डलुम्। चतुर्भुजामिन्दुयुतां सितनेत्रपटावृताम् ॥ २४
तद्वद्गोमिथुनं शुक्लं सुवर्णास्यं सिताम्बरम्। सवस्त्रभाजनं दद्याद्भवानी प्रीयतामिति ॥ २५
अनेन विधिना यस्तु रसकल्याणिनीव्रतम्। कुर्यात्स सर्वपापेभ्यस्तत्क्षणादेव मुच्यते ॥ २६
नवार्बुदसहस्रं तु न दुःखी जायते नरः। सुवर्णकमलं गौरि मासि मासि ददन्नरः ॥
अग्निष्टोमसहस्रस्य यत्फलं तदवाप्नुयात् ॥ २७
नारी वा कुरुते या तु कुमारी वा वरानने। विधवा या तथा नारी साऽपि तत्फलमाप्नुयात् ॥
सौभाग्यारोग्यसंपन्ना गौरीलोके महीयते ॥ २८
इति पठति शृणोति श्रावयेद्यः प्रसङ्गात्कलिकलुषविमुक्तः पार्वतीलोकमेति ।
मतिमपि च नराणां यो ददाति प्रियार्थं विबुधपतिविमाने नायकः स्यादमोघः ॥ २९

इति श्रीमात्स्ये महापुराणे रसकल्याणिनीव्रतं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

आदितः श्लोकानां समष्ट्यङ्काः—३७४७

---

अथ चतुःषष्टितमोऽध्यायः ।

---

ईश्वर उवाच—

तथैवान्यां प्रवक्ष्यामि तृतीयां पापनाशिनीम् । नाम्ना च लोके विख्यातामार्द्रानन्दकरीमिमाम् ॥ १
यदा शुक्लतृतीयायामाषाढर्क्षं भवेत्क्वचित्। ब्रह्मर्क्षं वा मृगर्क्षं वा हस्तो मूलमथापि वा ॥
दर्भगन्धोदकैः स्नानं तदा सम्यक्समाचरेत् ॥ २
शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः। भवानीमर्चयेद्भक्त्या शुक्लपुष्पैः सुगन्धिभिः ॥
महादेवेन सहितामुपविष्टां महासने ॥ ३
वासुदेव्यै नमः पादौ शंकराय नमो हरम्। जङ्घे शोकविनाशिन्यै आनन्दाय नमः प्रभोः ॥
रम्भायै पूजयेदूरू शिवाय च पिनाकिनः। अदित्यै च कटिं देव्याः शूलिनः शूलपाणये ॥
माधव्यै च तथा नाभिमथ शंभोर्भवाय च। स्तनावानन्दकारिण्यै शंकरस्येन्दुधारिणे ॥ ६
उत्कण्ठिन्यै नमः कण्ठं नीलकण्ठाय वै हरम्। करावुत्पलधारिण्यै रुद्राय च जगत्पते ॥
बाहू च परिरम्भिण्यै त्रिशूलाय हरस्य च ॥ ७
देव्या मुखं विलासिन्यै वृषेशाय पुनर्विभोः। स्मितं सस्मेरलीलायै विश्ववक्त्राय वै विभोः ॥

---

१ ग. च. °ब्रभोज° । २ ग. ङ. च. क्वचित् । ३ ग. ङ. च. °हस्तेण य° । ४ ग. °वा चापि वेश्या वा सा । ङ. च. °वा वावराकी वा सा । ५ ङ. ब्रह्मलोके । ६ ग. च. °ति य इत्थं यः शृणोति व्रतं स कलि° । ङ. °ति य इत्थं यः शृणोति प्रसङ्गात्सकलकलु° । ७ ग. ङ. च. °तिजननां ना° । ८ ग. यमर्क्षं । घ.-ङ. च. मघर्क्षं । ९ ङ. °दनैः । भ° । १० ग. ङ. च. °देवं च सकलमुपविष्टं म° । ११ क. ग. प्रभोः । १२ ग. रमायै । १३ घ. °किने । आदि° । ङ. किने । आनन्दिन्यै क° । १४ ग. च. °त्पतेः । बा° । १५ ग. ण्यै नृत्यशीलाय वै हरम् । दे° । ङ. °ण्यै नृत्यशीलाय तत्पतेः । दे° । च. °ण्यै नृत्यशीलाय वै हरेः । दे° । १६ ङ. विशालिन्यै । च. विनाशिन्यै । १७ ग. वृषाङ्काय । ङ. विश्वेशाय । च. वृषाङ्काय । १८ ग. °तं च स्मरली° ।

नेत्रे मदनवासिन्यै विश्वधाम्ने त्रिशूलिनः। भ्रुवौ नृत्यप्रियायै तु ताण्डवेशाय शूलिनः॥९
देव्या ललाटमिन्द्राण्यै हव्यवाहाय वै विभोः। स्वाहायै मुकुटं देव्या विभोर्गङ्गाधराय वै ॥
विश्वकायौ विश्वमुखौ विश्वपादकरौ शिवौ। प्रसन्नवदनौ वन्दे पार्वतीपरमेश्वरौ ॥ ११
एवं संपूज्य विधिवदग्रतः शिवयोः पुनः। पद्मोत्पलानि रजसा नानावर्णेन कारयेत् ॥ १२
शङ्खचक्रे सकटके स्वस्तिकाङ्कुशचामरान्। यावन्तः पांसवस्तत्र रजसः पतिता भुवि ॥
तावद्वर्षसहस्राणि शिवलोके महीयते ॥ १३
चत्वारि घृतपात्राणि सहिरण्यानि शक्तितः। दत्त्वा द्विजाय करकमुदकान्नसमन्वितम् ॥
प्रतिपक्षं चतुर्मासं यावदेतन्निवेदयेत् ॥ १४
ततस्तु चतुरो मासान्पूर्ववत्करकोपरि। चत्वारि सक्तुपात्राणि तिलपात्राण्यतः परम् ॥१५
गन्धोदकं पुष्पवारि चन्दनं कुङ्कुमोदकम्। अपक्वं दधि दुग्धं च गोशृङ्गोदकमेव च॥१६
पिष्टोदकं तथा वारि कुष्ठचूर्णान्वितं पुनः। उशीरसलिलं तद्वद्यवचूर्णोदकं पुनः ॥ १७
तिलोदकं च संप्राश्य स्वपेन्मार्गशिरादिषु। मासेषु पक्षद्वितयं प्राशनं समुदाहृतम् ॥ १८
सर्वत्र शुक्लपुष्पाणि प्रशस्तानि सदाऽर्चने। दानकाले च सर्वत्र मन्त्रमेतमुदीरयेत् ॥ १९
गौरी मे प्रीयतां नित्यमघनाशाय मङ्गला। सौभाग्यायास्तु ललिता भवानी सर्वसिद्धये॥
संवत्सरान्ते लवणं गुडकुम्भं च सर्जिकाम्। चन्दनं नेत्रपट्टं च सहिरण्याम्बुजेन तु ॥ २१
उमामहेश्वरं हैमं तद्वदिक्षुफलैर्युतम्। सतूलावरणां शय्यां सविश्रामां निवेदयेत् ॥
सपत्नीकाय विप्राय गौरी मे प्रीयतामिति॥ २२
आर्द्रानन्दकरी नाम्ना तृतीयैषा सनातनी। यामुपोष्य नरो याति शंभोर्यत्परमं पदम् ॥२३
इह लोके सदाऽऽनन्दमाप्नोति धनसंपदः। आयुरारोग्यसंपत्त्या न कश्चिच्छोकमाप्नुयात् ॥
नारी वा कुरुते या तु कुमारी विधवा च या। साऽपि तत्फलमाप्नोति देव्यनुग्रहलालिता ॥
प्रतिपक्षमुपोष्यैवं मन्त्रार्चनविधानवित्। रुद्राणीलोकमभ्येति पुनरावृत्तिदुर्लभम् ॥ २६
य इदं शृणुयान्नित्यं श्रावयेद्वाऽपि मानवः। शक्रलोके स गन्धर्वैः पूज्यतेऽपि युगत्रयम् २७

*आनन्ददां सकलदुःखहरां तृतीयां या स्त्री करोत्यविधवा विधवाऽथ वाऽपि।
सा स्वे गृहे सुखशतान्यनुभूय भूयो गौरीपदं सदयिता दयिता प्रयाति॥ २८

इति श्रीमात्स्ये महापुराण आर्द्रानन्दकरीतृतीयाव्रतं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ३७७५ ॥

---

अथ पञ्चषष्टितमोऽध्यायः ।

---

+ईश्वर उवाच—

अथान्यामपि वक्ष्यामि तृतीयां सर्वकामदाम्। यस्यां दत्तं हुतं जप्तं सर्वं भवति चाक्षयम्॥१

* न विद्यतेऽयं श्लोकश्च. पुस्तके । + अयमध्यायश्च. पुस्तके नास्ति ।

१ ग. च. °मरम्। या°। २ ग. 'देवं समर्चयेत्°। ३ ग. °म्। दुग्धं मधु घृतं चैव गोः°। ४ ग. पिष्टातकं। ५ ग. च. 'शिरः क्रमात्। मा°। ६ च. कुम्भां च मार्जिका°। ङ. कुम्भसमन्वितम्। च°। ७ घ. म्भं समाक्षिकम्। च°। ८ ग. माक्षिकम्। ९ ग. च. °म्। स्वास्तरणाव°। १० वं यो मन्त्रार्चनतत्परः। रु°। ११ ग. च. 'तेऽब्दायुतत्र'। १२ ग. ङ. मुदिता।

वैशाखशुक्लपक्षे तु तृतीया यैरुपोषिता। अक्षयं फलमाप्नोति सर्वस्य सुकृतस्य च ॥ २
सा तथा कृत्तिकोपेता विशेषेण सुपूजिता। तत्र दत्तं हुतं जप्तं सर्वमक्षयमुच्यते ॥ ३
अक्षया संततिस्तस्यास्तस्यां सुकृतमक्षयम्। *अक्षतैः पूज्यते विष्णुस्तेन साऽक्षया स्मृता
अक्षतैस्तु नराः स्नाता विष्णोर्दत्त्वा तथाऽऽक्षतान् ॥ ४
विप्रेषु दत्त्वा तानेव तथा सक्तून्सुसंस्कृतान्[1]। यथाऽन्नभुङ्महाभाग[2] फलमक्षयमश्नुते ॥ ५
एकामप्युक्तवत्कृत्वा तृतीयां विधिवन्नरः। एतासामपि[3] सर्वासां तृतीयानां फलं भवेत् ॥ ६
तृतीयायां समभ्यर्च्य सोपवासो जनार्दनम्। राजसूयफलं प्राप्य गतिमग्र्यां च विन्दति ॥

इति श्रीमात्स्ये महापुराणेऽक्षय्यतृतीयाव्रतं नाम पञ्चषष्टितमोऽध्यायः। ६५ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ३७८२ ॥

---

अथ षट्षष्टितमोऽध्यायः।

---

मनुरुवाच—

मधुरा भारती केन व्रतेन मधुसूदन। तथैव जनसौभाग्यमतिविद्यासु कौशलम् ॥ १
अभेदश्चापि दंपत्योस्तथा बन्धुजनेन च। आयुश्च विपुलं पुंसां तन्मे कथय माधव ॥ २

मत्स्य उवाच—

सम्यक्पृष्टं त्वया राजञ्छृणु सारस्वतं व्रतम्। यस्य संकीर्तनादेव तुष्यतीह सरस्वती ॥ ३
यो यद्भक्तः पुमान्कुर्यादेतद्व्रतमनुत्तमम्[4]। तद्वासरादौ संपूज्य विप्रानेतान्समाचरेत् ॥ ४
अथवाऽऽदित्यवारेण ग्रहताराबलेन च। पायसं भोजयेद्विप्रान्कृत्वा ब्राह्मणवाचनम् ॥ ५
शुक्लवस्त्राणि दत्त्वा च सहिरण्यानि शक्तितः। गायत्रीं पूजयेद्भक्त्या शुक्लमाल्यानुलेपनैः ॥
यथा[5] न देवि भगवान्ब्रह्मलोके पितामहः। त्वां परित्यज्य +संतिष्ठेत्तथा भव वरप्रदा ॥ ७
वेदाः शास्त्राणि सर्वाणि गीतनृत्यादिकं च यत्। न विहीनं त्वया देवि तथा मे सन्तु सिद्धयः
लक्ष्मीर्मेधा धरा पुष्टिर्गौरी तुष्टिः प्रभा मतिः। एताभिः पाहि चाष्टाभिस्तनुभिर्मां सरस्वति।
एवं संपूज्य गायत्रीं वीणाक्षमणिधारिणीम्[7]। शुक्लपुष्पाक्षतैर्भक्त्या सकमण्डलुपुस्तकाम्[8] ॥
मौनव्रतेन भुञ्जीत सायं प्रातस्तु धर्मवित् ॥ १०
पञ्चम्यां प्रतिपक्षं च पूजयेद्ब्रह्मवासिनीम्। तथैव तण्डुलप्रस्थं घृतपात्रेण संयुतम्[9] ॥
क्षीरं दद्याद्धिरण्यं च गायत्री प्रीयतामिति ॥ ११
संध्यायां च[10] तथा मौनमेतत्कुर्वन्समाचरेत्। नान्तरा भोजनं कुर्याद्यावन्मासास्त्रयोदश ॥ १२
समाप्ते तु व्रते कुर्याद्भोजनं शुक्लतण्डुलैः। पूर्वं[11] सवस्त्रयुग्मं चं दद्याद्विप्राय भोजनम्[12] ॥ १३

---

* एतदर्धं न विद्यते। क. ख. पुस्तकयोः। + अत्र परस्मैपदमार्षम्।

---

१ ग. °न्। तथा°। ङ. °न्। तथाऽन्यान्सुम°। २ क. ङ. °भाग फ°। ३ ङ. °तासां तु तृतीयानां सर्वासां फलमश्नुते। त° । ४ क. ख. °मार्ग्यं मार्तं वि° । ग. ङ. यो मद्भ° । ५ ग. याऽर्थं दे° । ६ ग. ङ. त्वाऽप° । ७ ख. घ. °त्रीं वाणीक्षयनिवारि°। ८ क. °क्षमालधा° । ९ ङ. च. °ग्रेच्छन्दना°। १० ग. °तो दद्याद्भो°। ङ. °ते दद्याद्राज°। ११ ग. घ. ङ. च. पूर्णम्°। १२ ग. ङ. च च गां च विप्राय भोजनम्। °द्दे°।

कुबेरानुचरा ह्येते चत्वारस्तत्समाश्रिताः । एवमेव तु विज्ञेया सिद्धिः पर्वतवासिनाम् ॥ ६३
परस्परेण द्विगुणा धर्मतः कामतोऽर्थतः । हेमकूटस्य पृष्ठे तु सर्पाणां तत्सरः स्मृतम् ॥ ६४
सरस्वती प्रभवति तस्माज्ज्योतिष्मती तु या । अवगाढे ह्युभयतः समुद्रौ पूर्वपश्चिमौ॥६५
सरो विष्णुपदं नाम निषधे पर्वतोत्तमे । यस्मादग्रे प्रभवति गन्धर्वानुकुले च ते ॥ ६६
मेरोः पार्श्वात्प्रभवति ह्रदश्चन्द्रप्रभो महान् । जम्बूश्चैव नदी पुण्या यस्यां जाम्बूनदं स्मृतम्
पयोदस्तु ह्रदो नीलः स शुभ्रः पुण्डरीकवान् । पुण्डरीकात्पयोदाच्च तस्माद्द्वे संप्रसूयताम् ॥
सरसस्तु सरस्त्वेतत्स्मृतमुत्तरमानसम् । *मृग्या च मृगकान्ता च तस्माद्द्वे संप्रसूयताम्॥६९
ह्रदाः कुरुषु विख्याताः पद्ममीनकुलाकुलाः । नाम्ना ते वै जया नाम द्वादशोदधिसंनिभाः ॥
तेभ्यः शान्ती च मध्वी च द्वे नद्यौ संप्रसूयताम् । किंपुरुषाद्यानि यान्यष्टौ तेषु देवो न वर्षति
उद्भिदान्युदकान्यत्र प्रवहन्ति सरिद्वराः । बलाहकश्च ऋषभो चक्रो मैनाक एव च ॥७२
विनिविष्टाः प्रतिदिशं निमग्ना लवणाम्बुधिम् । चन्द्रकान्तस्तथा द्रोणः सुमहांश्च शिलोच्चयः
उदगायता उदीच्यां तु अवगाढा महोदधिम् । चक्रो बधिरकश्चैव तथा नारदपर्वतः ॥ ७४
प्रतीचीमायतास्ते वै प्रतिष्ठास्ते महोदधिम् । जीमूतो द्रावणश्चैव मैनाकश्चन्द्रपर्वतः ॥ ७५
आयतास्ते महाशैलाः समुद्रं दक्षिणं प्रति । चक्रमैनाकयोर्मध्ये दिवि सन्दक्षिणापथे ॥ ७६
तत्र संवर्तको नाम सोऽग्निः पिबति तज्जलम् । अग्निः समुद्रवासस्तु और्वोऽसौ वडवामुखः ॥
इत्येते पर्वताविष्टाश्चत्वारो लवणोदधिम् । छिद्यमानेषु पक्षेषु पुरा इन्द्रस्य वै भयात् ॥ ७८
तेषां तु दृश्यते चन्द्रे शुक्ले कृष्णे समाप्लुतिः । ते भारतस्य वर्षस्य भेदा येन प्रकीर्तिताः ॥ ७९
इहोदितस्य दृश्यन्ते अन्ये त्वन्यत्र चोदिताः । उत्तरोत्तरमेतेषां वर्षमुद्रिच्यते गुणैः ॥ ८०
आरोग्यायुःप्रमाणाभ्यां धर्मतः कामतोऽर्थतः । समन्वितानि भूतानि तेषु वर्षेषु भागशः ८१
वसन्ति नानाजातीनि तेषु सर्वेषु तानि वै । इत्येतद्धारयद्विश्वं पृथ्वी जगदिदं स्थिता ॥ ८२

इति श्रीमात्स्ये महापुराणे भुवनकोशे जम्बूद्वीपवर्णनं नामैकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ५४६६ ॥

---

अथ द्वाविंशत्यधिकशततमोऽध्यायः ।

---

सूत उवाच—

शाकद्वीपस्य वक्ष्यामि यथावदिह निश्चयम् । कथ्यमानं निबोध त्वं शाकं द्वीपं द्विजोत्तमाः १
जम्बूद्वीपस्य विस्ताराद्द्विगुणस्तस्य विस्तरः । विस्तारात्त्रिगुणश्चापि परिणाहः समन्ततः २
तेनाऽऽवृतः समुद्रोऽयं द्वीपेन लवणोदधिः । तत्र पुण्या जनपदाश्चिराच्च म्रियते जनः ॥ ३
कुत एव च दुर्भिक्षं क्षमातेजोयुतेष्विह । तत्रापि पर्वताः शुभ्राः सप्तैव मणिभूषिताः ॥ ४
शाकद्वीपादिषु त्वेषु सप्त सप्त नगास्त्रिषु । ऋज्वायताः प्रतिदिशं निविष्टा वर्षपर्वताः ॥ ५

---

* एतदर्धस्थानेऽयं पाठो ग. पुस्तके—वितस्ता मृगकान्ता च तस्माद्वैमं प्रसूयताम् ।

---

१ ग. °त्समीपगाः । ए° । २ ङ. °रीकपयोदा च तस्माद्वै सं° । ३ घ. °यत । स° । ङ. °यते । स° । ४ क. उद्गायता । ५ ग. म. च. °र्वतौ । प्र° । ६ ग. घ. °कश्चैव प° । ७ ग. और्वः स वडवानलः । इ° ।

रत्नाकराद्रिनामानः सानुमन्तो महाचिताः। समोदिताः प्रतिदिशं द्वीपविस्तारमानतः ॥ ६
उभयत्रावगाढौ च लवणक्षीरसागरौ । शाकद्वीपे तु वक्ष्यामि सप्त दिव्यान्महाचलान् ॥ ७
देवर्षिगन्धर्वयुतः प्रथमो मेरुरुच्यते । प्रागायतः स सौवर्ण उदयो नाम पर्वतः ॥ ८
तत्र मेघास्तु वृष्ट्यर्थं प्रभवन्त्यपयान्ति च । तस्यापरेण सुमहाञ्जलधारो महागिरिः ॥ ९
स वै चन्द्रः समाख्यातः सर्वौषधिसमन्वितः। तस्मान्नित्यमुपादत्ते वासवः परमं जलम् ॥१०
नारदो नाम चैवोक्तो दुर्गशैलो महाचितः। तत्राचलौ समुत्पन्नौ पूर्वं नारदपर्वतौ ॥ ११
तस्यापरेण सुमहाञ्श्यामो नाम महागिरिः। यत्र श्यामत्वमापन्नाः प्रजाः पूर्वमिमाः किल ॥
स एव दुन्दुभिर्नाम श्यामपर्वतसंनिभः । शब्दमृत्युः पुरा तस्मिन्दुन्दुभिस्ताडितः सुरैः॥ १३
रत्नमालान्तरमयः शाल्मलश्चान्तरालकृत् । तस्यापरेण रजतो महानस्तो गिरिः स्मृतः १४
स वै सोमक इत्युक्तो देवैर्यत्रामृतं पुरा । संभृतं च हृतं चैव मातुरर्थे गरुत्मता ॥ १५
तस्यापरे चाम्बिकेयः सुमनाश्चैव स स्मृतः । हिरण्याक्षो वराहेण तस्मिञ्छैले निषूदितः ॥
आम्बिकेयात्परो रम्यः सर्वौषधिनिषेवितः। विभ्राजस्तु समाख्यातः स्फाटिकस्तु महान्गिरिः
यस्माद्विभ्राजते वह्निर्विभ्राजस्तेन स स्मृतः। सैवेह केशवेत्युक्तो यतो वायुः प्रवाति च ॥ १८
तेषां वर्षाणि वक्ष्यामि पर्वतानां द्विजोत्तमाः। शृणुध्वं नामतस्तानि यथावदनुपूर्वशः ॥ १९
द्विनामान्येव वर्षाणि यथैव गिरयस्तथा । उदयस्योदयं वर्षं जलधारेति विश्रुतम् ॥ २०
नाम्ना गतभयं नाम वर्षं तत्प्रथमं स्मृतम् । द्वितीयं जलधारस्य सुकुमारमिति स्मृतम्॥ २१
तदेव शैशिरं नाम वर्षं तत्परिकीर्तितम् । नारदस्य च कौमारं तदेव च सुखोदयम् ॥ २२
श्यामपर्वतवर्षं तदनीचकमिति स्मृतम् । आनन्दकमिति प्रोक्तं तदेव मुनिभिः शुभम् ॥ २३
सोमकस्य शुभं वर्षं विज्ञेयं कुसुमोत्करम् । तदेवासितमित्युक्तं वर्षं सोमकसंज्ञितम् ॥ २४
आम्बिकेयस्य मैनाकं क्षेमकं चैव तत्स्मृतम् । *केसरः पर्वतस्यापि महाद्रुममिति स्मृतम् ॥
तदेव ध्रुवमित्युक्तं वर्षं विभ्राजसंज्ञितम् ॥ २५
द्वीपस्य परिणाहं च ह्रस्वदीर्घत्वमेव च । जम्बूद्वीपेन संख्यातं तस्य मध्ये वनस्पतिः॥ २६
शाको नाम महावृक्षः प्रजास्तस्य महानुगाः।एतेषु देवगन्धर्वाः सिद्धाश्च सह चारणैः२७
विहरन्ति रमन्ते च दृश्यमानाश्च तैः सह। तत्र पुण्या जनपदाश्चातुर्वर्ण्यसमन्विताः ॥ २८
तेषु नद्यश्च सप्तैव प्रतिवर्षं समुद्रगाः । द्विर्नाम्ना चैव ताः सर्वा गङ्गाः सप्तविधाः स्मृताः२९
प्रथमा सुकुमारीति गङ्गा शिवजला शुभा । मुनितप्ता च नाम्नैषा नदी संपरिकीर्तिता ॥३०
सुकुमारी तपःसिद्धा द्वितीया नामतः सती। नन्दा च पावनी चैव तृतीया परिकीर्तिता॥३१
शिबिका च चतुर्थी स्याद्द्विविधा च पुनः स्मृता। इक्षुश्च पञ्चमी ज्ञेया तथैव च पुनः कुहूः३२
वेणुका चामृता चैव षष्ठी संपरिकीर्तिता । सुकृता च गभस्ती च सप्तमी परिकीर्तिता॥ ३३
एताः सप्त महाभागाः प्रतिवर्षं शिवोदकाः । भावयन्ति जनं सर्वं शाकद्वीपनिवासिनम् ३४

* अत्रायंपाठो घ. पुस्तके—कमेरुपर्वतस्यापि महाद्रुममिति स्मृतम्। * एतदर्धस्थानेऽयं पाठश्च पुस्तके—कैचोरपर्वतस्यापि महाद्वयमिति स्मृतम् ।

१ ग. ङ. श्यामः प°। २ ग. °नस्तगि°। ३ ग. ङ. रैवतस्य । ४ ग. घ. ङ. °म् । अस्तस्यापि शु°। ५ ग. ङ. च. °देवाशिवमि°। ६ क. ख. °स्पतिम् । शा°। ७ ङ. द्विर्नाम्न्यथैव। ८ ग. नाम्न्यथैव। ९ ग. °हूः। वैदयका। ङ. °हूः। अन्धका वाऽमृ°। च. °हूः। दौश्यका।

अभिगच्छन्ति ताश्चान्या नदा नद्यः सरांसि च । बहूदकपरिस्रावा यतो वर्षति वासवः ॥ ३५
तासां तु नामधेयानि परिमाणं तथैव च । न शक्यं परिसंख्यातुं पुण्यास्ताः सरिदुत्तमाः ३६
ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते । एते शान्तभयाः प्रोक्ताः प्रमोदा ये च वै शिवाः
आनन्दाश्च सुखाश्चैव क्षेमकाश्च नवैः सह । वर्णाश्रमाचारयुता देशास्ते सप्त विश्रुताः ॥ ३८
आरोग्या बलिनश्चैव सर्वे मरणवर्जिताः । अवसर्पिणी न तेष्वस्ति तथैवोत्सर्पिणी पुनः ॥
न तत्रास्ति युगावस्था चतुर्युगकृता क्वचित् । त्रेतायुगसमः कालस्तथा तत्र प्रवर्तते ॥ ४०
शाकद्वीपादिषु ज्ञेयं पञ्चस्वेतेषु सर्वशः । देशस्य तु विचारेण कालः स्वाभाविकः स्मृतः
न तेषु संकरः कश्चिद्वर्णाश्रमकृतः क्वचित् । धर्मस्य चाव्यभीचारादेकान्तसुखिनः प्रजाः ॥
न तेषु माया लोभो वा ईर्ष्याऽसूया भयं कुतः । विपर्ययो न तेष्वस्ति तद्वै स्वाभाविकं स्मृतम्
कालो नैव च तेष्वस्ति न दण्डो न च दाण्डिकः । स्वधर्मेण च धर्मज्ञास्ते रक्षन्ति परस्परम् ४४
परिमण्डलस्तु सुमहान्द्वीपो वै कुशसंज्ञकः । नदीजलैः परिवृतः पर्वतश्चाभ्रसंनिभैः ॥ ४५
सर्वधातुविचित्रैश्च मणिविद्रुमभूषितैः । अन्यैश्च विविधाकारै रम्यैर्जनपदैस्तथा ॥ ४६
वृक्षैः पुष्पफलोपेतैः सर्वतो धनधान्यवान् । नित्यं पुष्पफलोपेतः सर्वरत्नसमावृतः ॥ ४७
आवृतः पशुभिः सर्वैर्ग्राम्यारण्यैश्च सर्वशः । आनुपूर्व्यात्समासेन कुशद्वीपं निबोधत ॥ ४८
अथ तृतीयं वक्ष्यामि कुशद्वीपं च कृत्स्नशः । कुशद्वीपेन क्षीरोदः सर्वतः परिवारितः ॥ ४९
शाकद्वीपस्य विस्ताराद्द्विगुणेन समन्वितः । तत्रापि पर्वताः सप्त विज्ञेया रत्नयोनयः ॥ ५०
रत्नाकरास्तथा नद्यस्तेषां नामानि मे शृणु । द्विनामानश्च ते सर्वे शाकद्वीपे यथा तथा ॥ ५१
प्रथमः सूर्यसंकाशः कुमुदो नाम पर्वतः । विद्रुमोच्चय इत्युक्तः स एव च महीधरः ॥ ५२
सर्वधातुमयैः शृङ्गैः शिलाजालसमन्वितैः । द्वितीयः पर्वतस्तत्र उन्नतो नाम विश्रुतः ॥ ५३
हेमपर्वत इत्युक्तः स एव च महीधरः । हरितालमयैः शृङ्गैर्द्वीपमावृत्य सर्वशः ॥ ५४
बलाहकस्तृतीयस्तु जात्यञ्जनमयो गिरिः । द्युतिमान्नामतः प्रोक्तः स एव च महीधरः ॥ ५५
चतुर्थः पर्वतो द्रोणो यत्रौषध्यो महागिरौ । विशल्यकरणी चैव मृतसंजीवनी तथा ॥ ५६
पुष्पवान्नाम सैवोक्तः पर्वतः सुमहाचितः । कङ्कस्तु पञ्चमस्तेषां पर्वतो नाम सारवान् ॥ ५७
कुशेशय इति प्रोक्तः पुनः स पृथिवीधरः । दिव्यपुष्पफलोपेतो दिव्यवीरुत्समन्वितः ॥ ५८
षष्ठस्तु पर्वतस्तत्र महिषो मेघसंनिभः । स एव तु पुनः प्रोक्तो हरिरित्याभविश्रुतः ॥ ५९
तस्मिन्सोऽग्निर्निवसति महिषो नाम योऽप्सुजः । सप्तमः पर्वतस्तत्र ककुद्मान्स हि भाषते ॥
मन्दरः सैव विज्ञेयः सर्वधातुमयः शुभः । मन्द इत्येष यो धातुरपामर्थे प्रकाशकः ॥ ६१
अपां विदारणाच्चैव मन्दरः स निगद्यते । तत्र रत्नान्यनेकानि स्वयं रक्षति वासवः ॥ ६२
प्रजापतिमुपादाय प्रजाभ्यो विदधत्स्वयम् । तेषामन्तरविष्कम्भो द्विगुणः समुदाहृतः ॥ ६३
इत्येते पर्वताः सप्त कुशद्वीपे प्रभाषिताः । तेषां वर्षाणि वक्ष्यामि सप्तैव तु विभागशः ॥ ६४
कुमुदस्य स्मृतः श्वेत उन्नतश्चैव स स्मृतः । उन्नतस्य तु विज्ञेय वर्षं लोहितसंज्ञकम् ॥ ६५
वेणुमण्डलकं चैव तथैव परिकीर्तितम् । बलाहकस्य जीमूतः स्वैरथाकारमित्यपि ॥ ६६

१ क. ख. घ. नदन° । २ क. ख. °र्भोमार° । ३ ग. °त्नजातयः । ४ ग °तो रत्नसानुमान् । कु° । ५ ग. ङ. °तो वृक्षवीरुत्समावृतः ।

द्रोणस्य हरिकं नाम लवणं च पुनः स्मृतम् । कङ्कस्यापि ककुन्नाम धृतिमच्चैव तत्स्मृतम् ॥६७
माहिषं माहिषस्यापि पुनश्चापि प्रभाकरम् । ककुद्मिनस्तु तद्वर्षं कापिलं नाम विश्रुतम् ॥ ६८
एतान्यपि विशिष्टानि सप्त सप्त पृथक्पृथक् । वर्षाणि पर्वताश्चैव नदीस्तेषु निबोधत ॥ ६९
तत्रापि नद्यः सप्तैव प्रतिवर्षं हि ताः स्मृताः । द्विनामवत्यस्ताः सर्वाः सर्वाः पुण्यजलाः स्मृताः
धूतपापा नदी नाम योनिश्चैव पुनः स्मृता । सीता द्वितीया विज्ञेया सा चैव हि निशा स्मृता॥
पवित्रा तृतीया विज्ञेया वितृष्णाऽपि च या पुनः । चतुर्थी ह्लादिनीत्युक्ता चन्द्रमा इति च स्मृता ॥ ७२
विद्युच्च पञ्चमी प्रोक्ता शुक्ला चैव विभाव्यते । पुण्ड्रा षष्ठी तु विज्ञेया पुनश्चैव विभावरी ॥ ७३
महती सप्तमी प्रोक्ता पुनश्चैवा धृतिः स्मृता । अन्यास्ताभ्योऽपि संजाताः शतशोऽथ सहस्रशः
अभिगच्छन्ति ता नद्यो यतो वर्षति वासवः । इत्येष संनिवेशो वः कुशद्वीपस्य वर्णितः ॥ ७५
शाकद्वीपेन विस्तारः प्रोक्तस्तस्य सनातनः । कुशद्वीपः समुद्रेण घृतमण्डोदकेन च ॥ ७६
सर्वतः सुमहान्द्वीपश्चन्द्रवत्परिवेष्टितः । विस्तारान्मण्डलाच्चैव क्षीरोदाद्द्विगुणो मतः ॥ ७७
ततः परं प्रवक्ष्यामि क्रौञ्चद्वीपं यथा तथा । कुशद्वीपस्य विस्ताराद्द्विगुणस्तस्य विस्तरः॥ ७८
घृतोदकः समुद्रो वै क्रौञ्चद्वीपेन संवृतः । चक्रनेमिप्रमाणेन वृतो वृत्तेन सर्वशः ॥ ७९
तस्मिन्द्वीपे नगाः श्रेष्ठा देवनो गिरिरुच्यते । देवनात्परतश्चापि गोविन्दो नाम पर्वतः ॥ ८०
गोविन्दात्परतश्चापि क्रौञ्चस्तु प्रथमो गिरिः । क्रौञ्चात्परे पावनकः पावनादन्धकारकः ॥
अन्धकारात्परे चापि देवावृन्नाम पर्वतः । देवावृतः परेणापि पुण्डरीको महान्गिरिः ॥ ८२
एते रत्नमयाः सप्त क्रौञ्चद्वीपस्य पर्वताः । परस्परस्य द्विगुणो विष्कम्भो वर्षपर्वतः ॥ ८३
वर्षाणि तस्य वक्ष्यामि नामतस्तु निबोधत । क्रौञ्चस्य कुशलो देशो वामनस्य मनोनुगः ॥८४
मनोनुगात्परे चोष्णस्तृतीयोऽपि स उच्यते । उष्णात्परे पावनकः पावनादन्धकारकः॥ ८५
अन्धकारकदेशात्तु मुनिदेशस्तथा परः । मुनिदेशात्परे चापि प्रोच्यते दुन्दुभिस्वनः ॥ ८६
सिद्धचारणसंकीर्णो गौरप्रायः शुचिर्जनः । श्रुतास्तत्रैव नद्यस्तु प्रतिवर्षं गताः शुभाः॥ ८७
गौरी कुमुद्वती चैव संध्या रात्रिर्मनोजवा । ख्यातिश्च पुण्डरीका च गङ्गा सप्तविधा स्मृता ॥
तासां सहस्रशश्चान्या नद्यः पार्श्वसमीपगाः । अभिगच्छन्ति ता नद्यो बहुलाश्च बहूदकाः ॥
तेषां निसर्गो देशानामानुपूर्व्येण सर्वशः न शक्यो विस्तराद्वक्तुमपि वर्षशतैरपि ॥ ९०
सर्गो यश्च प्रजानां तु संहारो यश्च तेषु वै । अत ऊर्ध्वं प्रवक्ष्यामि शाल्मलस्य निबोधत ॥ ९१
शाल्मलो द्विगुणो द्वीपः क्रौञ्चद्वीपस्य विस्तरात् । परिवार्य समुद्रं तु दधिमण्डोदकं स्थितः ॥
तत्र पुण्या जनपदाश्चिराच्च म्रियते जनः । कुत एव तु दुर्भिक्षं क्षमातेजोयुता हि ते॥ ९३
प्रथमः सूर्यसंकाशः सुमना नाम पर्वतः । परतस्तु मध्यमश्चाऽऽसीत्ततः कुम्भमयो गिरिः॥ ९४
नाम्ना सर्वसुखो नाम दिव्यौषधिसमन्वितः । तृतीयश्चैव सौवर्णो भृङ्गपत्रनिभो गिरिः ॥ ९५
सुमहान्रोहितो नाम दिव्यो गिरिवरो हि सः । सुमनाः कुशलो देशः सुखोदर्कः सुखोदयः ॥
रोहितो यस्तृतीयस्तु रोहिणो नाम विश्रुतः । तत्र रत्नान्यनेकानि स्वयं रक्षति वासवः ॥ ९७

---

१ घ. °भ्याऽपारज्ञाताः । २ क. ख. घ नराः । ३ ग. मस्तत्र शातकौम्भ° । ४ घ. °वर्णः शृङ्ग° । ५ ग. । स नाम्ना रोहिणो ना° । ६ घ. ङ. °मना रोहि° । ७ ग. घ. ङ. रो महान् । सु° ।

प्रजापतिमुपादाय प्रसन्नो विदधत्स्वयम्[1] । न तत्र मेघा वर्षन्ति शीतोष्णं च न तद्विधम् ॥ ९८
वर्णाश्रमाणां वार्ता वा त्रिषु द्वीपेषु विद्यते । न[2] ग्रहो न च चन्द्रोऽस्ति ईर्ष्याऽसूया भयं तथा ॥
उद्भिदान्युदकान्यत्र गिरिप्रस्रवणानि च । भोजनं षड्रसं तत्र तेषां स्वयमुपस्थितम् ॥ १००
अधमोत्तमं न तेष्वस्ति न लोभो न परिग्रहः । आरोग्यबलवन्तश्च एकान्तसुखिनो नराः ॥
त्रिंशद्वर्षसहस्राणि मानसीं सिद्धिमास्थिताः । सुखमायुश्च रूपं च धर्मैश्वर्यं तथैव च ॥ १०२
शाल्मलान्तेषु विज्ञेयं द्वीपेषु त्रिषु सर्वतः । व्याख्यातः शाल्मलान्तानां द्वीपानां तु विधिः शुभः ॥ १०३
परिमण्डलस्तु द्वीपस्य चक्रवत्परिवेष्टितः । सुरोदेन समुद्रेण द्विगुणेन समन्वितः ॥ १०४

इति श्रीमात्स्ये महापुराणे भुवनकोशे द्वीपवर्णनं नाम द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ५५७० ॥

---

अथ त्रयोविंशत्यधिकशततमोऽध्यायः ।

---

सूत उवाच—

गोमेदकं प्रवक्ष्यामि षष्ठं द्वीपं तपोधनाः । सुरोदकसमुद्रस्तु गोमेदेन समावृतः ॥ १
शाल्मलस्य तु विस्ताराद्द्विगुणस्तस्य विस्तरः । तस्मिन्द्वीपे तु विज्ञेयौ पर्वतौ द्वौ समाहितौ ॥
प्रथमः सुमना नाम जात्यञ्जनमयो गिरिः । द्वितीयः कुमुदो नाम सर्वौषधिसमन्वितः ॥ ३
शातकौम्भमयः श्रीमान्विज्ञेयः सुमहाचितः । समुद्रेक्षुरसोदेन वृतो गोमेदकश्च सः ॥ ४
षष्ठेन तु समुद्रेण सुरोदाद्द्विगुणेन च । धातकी कुमुदश्चैव ह्यव्युत्रौ सुविस्तृतौ ॥ ५
सौमनं प्रथमं वर्षं धातकीखण्डमुच्यते । धातकिनः स्मृतं तद्वै प्रथमं प्रथमस्य तु ॥ ६
गोमेदं यत्स्मृतं वर्षं नाम्ना सर्वसुखं तु तत् । कुमुदस्य द्वितीयस्य द्वितीयं कुमुदं ततः ॥ ७
एतौ द्वौ पर्वतौ वृत्तौ शेषौ सर्वसमुच्छ्रितौ । पूर्वेण तस्य द्वीपस्य सुमनाः पर्वतः स्थितः ॥ ८
प्राक्पश्चिमायतैः पादैरासमुद्रादिति स्थितः । पश्चार्धे कुमुदस्तस्य एवमेव स्थितस्तु वै ॥ ९
एतैः पर्वतपादैस्तु स देशो वै द्विधाकृतः । दक्षिणार्धं तु द्वीपस्य धातकीखण्डमुच्यते ॥ १०
कुमुदं तूत्तरे तस्य द्वितीयं वर्षमुत्तमम् । एतौ जनपदौ द्वौ तु गोमेदस्य तु विस्तृतौ ॥ ११
*अतः परं प्रवक्ष्यामि सप्तमं द्वीपमुत्तमम् । समुद्रेक्षुरसं चैव गोमेदाद्द्विगुणं हि सः ॥ १२
+आवृत्य तिष्ठति द्वीपः पुष्करः पुष्करैर्वृतः । पुष्करेण वृतः श्रीमांश्चित्रसानुर्महागिरिः ॥ १३
कूटैश्चित्रैर्मणिमयैः शिलाजालसमुद्भवैः । द्वीपस्यैव तु पूर्वार्धे चित्रसानुः स्थितो महान् ॥
परिमण्डलसहस्राणि विस्तीर्णः सप्तविंशतिः । ऊर्ध्वं स वै चतुर्दिशद्योजनानां महाबलः ॥ १५

---

* एतच्छ्लोकस्थानेऽयं पाठो ग. ङ. च पुस्तकेषु—पुष्करेण तु द्वीपेन वृतश्चेक्षुरसोदकम् । ससमुद्रेण महता गोमेदाद्द्विगुणेन तु इति । + एतदर्धं नास्ति ग. ङ. च. पुस्तकेषु ।

---

१ ङ. 'म् । तत्र नद्यो न वर्षं वा शी । २ ग. त्र नद्यो वर्षं वा शीतो ष्णदनतीच्छदाम् । व' । ३ ग ङ. न गृहं न च दण्डोऽस्ति । च न गृहे न च दण्ड्योऽस्ति । ४ ग. च. न्विबोधत । ५ च. कुसुमश्चै° । ६ क. ख. णार्धे तु । ७ ग ङ. च. 'रे पर्वतः ।

द्वीपार्धस्य परिक्षिप्तःपश्चिमे मानसो गिरिः। स्थितो वेलासमीपे तु पूर्वचन्द्र इवोदितः ॥ १६
योजनानां सहस्राणि सार्धं पञ्चाशदुच्छ्रितः। तस्य पुत्रो महावीतः पश्चिमार्धस्य रक्षिता॥१७
पूर्वार्धे पर्वतस्यापि द्विधा देशस्तु स स्मृतः। स्वादूदकेनोदधिना पुष्करः परिवारितः ॥ १८
विस्तारान्मण्डलाच्चैव गोमेदाद्विगुणेन तु। त्रिंशद्वर्षसहस्राणि तेषु जीवन्ति मानवाः॥ १९
विपर्ययो न तेष्वस्ति एतत्स्वाभाविकं स्मृतम्।आरोग्यं सुखबाहुल्यं मानसीं सिद्धिमास्थिताः
सुखमायुश्च रूपं च त्रिषु द्वीपेषु सर्वशः। अधमोत्तमौ न तेष्वास्तां तुल्यास्ते वीर्यरूपतः॥ २१
न तत्र वध्यवधकौ नेर्ष्याऽसूया भयं तथा। न लोभो न च दम्भो वा न च द्वेषः परिग्रहः ॥ २२
सत्यानृते न तेष्वास्तां धर्माधर्मौ तथैव च। वर्णाश्रमाणां वार्ता च पाशुपाल्यं वणिक्कृषिः॥२३
त्रयीविद्या दण्डनीतिः शुश्रूषा दण्ड एव च। न तत्र वर्षं नद्यो वा शीतोष्णं च न विद्यते॥ २४
उद्भिदान्युदकानि स्युर्गिरिप्रस्रवणानि च। तुल्योत्तरकुरूणां तु कालस्तत्र तु सर्वदा ॥ २५
सर्वतः सुखकालोऽसौ जराक्लेशविवर्जितः। सर्गस्तु धातकीखण्डे महावीते तथैव च ॥ २६
एवं द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः। द्वीपस्यानन्तरो यस्तु समुद्रस्तत्समस्तु वै ॥ २७
एवं द्वीपसमुद्राणां वृद्धिर्ज्ञेया परस्परम्। अपां चैव समुद्रेकात्समुद्र इति संज्ञितः ॥ २८
ऋषद्वसन्त्यो वर्षेषु प्रजा यत्र चतुर्विधाः। ऋषिरित्येव रमणे वर्षन्त्वेतेन तेषु वै ॥ २९
उदयतीन्दौ पूर्वे तु समुद्रः पूर्यते सदा। प्रक्षीयमाणे बहुले क्षीयतेऽस्तमिते च वै ॥ ३०
आपूर्यमाणो ह्युदधिरात्मनैवाभिपूर्यते। ततो वै क्षीयमाणे तु स्वात्मन्येव ह्यपां क्षयः॥ ३१
उदयात्पयसां योगात्पुष्णन्त्यापो यथा स्वयम्। तथा स तु समुद्रोऽपि वर्धते शशिनोदये ॥३२
अन्यूनानतिरिक्तात्मा वर्धन्त्यापो ह्रसन्ति च। उदयेऽस्तमये चेन्दोः पक्षयोः शुक्लकृष्णयोः ॥
क्षयवृद्धी समुद्रस्य शशिवृद्धिक्षये तथा। दशोत्तराणि पञ्चाऽऽहुरङ्गुलानां शतानि च ॥ ३४
अपां वृद्धिः क्षयो दृष्टः समुद्राणां तु पर्वसु। द्विरापत्वात्स्मृतो द्वीपो दधनाच्चोदधिः स्मृतः ॥
निगीर्णत्वाच्च गिरयो पर्वबन्धाच्च पर्वताः। शाकद्वीपेतु वै शाकः पर्वतस्तेन चोच्यते ॥ ३६
कुशद्वीपे कुशस्तम्बो मध्ये जनपदस्य तु। क्रौञ्चद्वीपे गिरिः क्रौञ्चस्तस्य नाम्ना निगद्यते ॥३७
शाल्मलिः शाल्मलद्वीपे पूज्यते स महाद्रुमः। गोमेदके तु गोमेदः पर्वतस्तेन चोच्यते ॥ ३८
न्यग्रोधः पुष्करद्वीपे पद्मवत्तेन स स्मृतः। पूज्यते स महादेवैर्ब्रह्मांशोऽव्यक्तसंभवः॥ ३९
तस्मिन्स वसति ब्रह्मा साध्यैः सार्धं प्रजापतिः। तत्र देवा उपासन्ते त्रयस्त्रिंशन्महर्षिभिः ॥
स तत्र पूज्यते देवो देवैर्महर्षिसत्तमैः। जम्बूद्वीपात्प्रवर्तन्ते रत्नानि विविधानि च ॥ ४१
द्वीपेषु तेषु सर्वेषु प्रजानां क्रमशस्तु वै। आर्जवाद्ब्रह्मचर्येण सत्येन च दमेन च ॥ ४२
आरोग्यायुःप्रमाणाभ्यां द्विगुणं द्विगुणं ततः। द्वीपेषु तेषु सर्वेषु यथोक्तं वर्षकेषु च ॥ ४३
गोपायन्ते प्रजास्तत्र सर्वैः सहजपण्डितैः। भोजनं चाप्रयत्नेन सदा स्वयमुपस्थितम् ॥ ४४
षड्रसं तन्महावीर्यं तत्र ते भुञ्जते जनाः। परेण पुष्करस्याथ आवृत्यावस्थितो महान् ॥ ४५
स्वादूदकसमुद्रस्तु स समन्तादवेष्टयत्। स्वादूदकस्य परितः शैलस्तु परिमण्डलः ॥ ४६
प्रकाशश्चाप्रकाशश्च लोकालोकः स उच्यते। आलोकस्तत्र चार्वाक्च निरालोकस्ततः परम्॥

---

१ ग. ङ- वीरः 'प। २ ग. विस्तरा'। ३ ग. °श्चार्धदृंशु°। ४ ग. 'बंवत्वाच। ५ घ महीम्। ६ ग. ङ. च. समन्तात्परिवेष्टितः। स्वा°।

लोकविस्तारमात्रं तु पृथिव्यर्धं तु बाह्यतः। प्रतिच्छन्नं समन्तात्तु उदकेनाऽऽवृतं महत्॥ ४८
भूमेर्दशगुणाश्चाऽऽपः समन्तात्पालयन्ति गाम्। अद्भ्यो दशगुणश्चाग्निः सर्वतो धारयत्यपः॥
अग्नेर्दशगुणो वायुर्धारयञ्ज्योतिरास्थितः। तिर्यक्च मण्डलो वायुर्भूतान्यावेष्ट्य धारयन्॥
दशाधिकं तथाऽऽकाशं वायोर्भूतान्यधारयत्। भूतादिर्धारयन्व्योम तस्माद्दशगुणस्तु वै॥५१
भूतादितो दशगुणं महद्भूतान्यधारयत्। महत्तत्त्वं ह्यनन्तेन अव्यक्तेन तु धार्यते॥ ५२
आधाराधेयभावेन विकारास्ते विकारिणाम्। पृथ्व्यादयो विकारास्ते परिच्छिन्नाः परस्परम्॥ ५३
परस्पराधिकाश्चैव प्रविष्टाश्च परस्परम्। एवं परस्परोत्पन्ना धार्यन्ते च परस्परम्॥ ५४
यस्मात्प्रविष्टास्तेऽन्योन्यं तस्मात्ते स्थिरतां गताः। आसंस्ते ह्यविशेषाश्च विशेषा अन्यवेशनात्॥ ५५
पृथ्व्यादयस्तु वाय्वन्ताः परिच्छिन्नास्तु तत्र ते। भूतेभ्यः परतस्तेभ्यो ह्यलोकः सर्वतः स्मृतः
तथा ह्यालोक आकाशे परिच्छिन्नानि सर्वशः। पात्रे महति पात्राणि यथा ह्यन्तर्गतानि च॥
भवन्त्यन्योन्यहीनानि परस्परसमाश्रयात्। तथा ह्यालोक आकाशे भेदास्त्वन्तर्गतागताः॥५८
कृतान्येतानि तत्त्वानि अन्योन्यस्याधिकानि च। यावदेतानि तत्त्वानि तावदुत्पत्तिरुच्यते॥
जन्तूनामिह संस्कारो भूतेष्वन्तर्गतेषु वै। प्रत्याख्यायेह भूतानि कार्योत्पत्तिर्न विद्यते॥६०
तस्मात्परिभिता भेदाः स्मृताः कार्यात्मकास्तु वै। ते कारणात्मकाश्चैव स्युर्भेदा महदादयः॥
इत्येवं संनिवेशोऽयं पृथ्व्याक्रान्तस्तु भागशः। सप्तद्वीपसमुद्राणां याथातथ्येन वै मया॥
विस्तारान्मण्डलाच्चैव प्रसंख्यानेन चैव हि। विश्वरूपं प्रधानस्य परिमाणैकदेशिनः॥६३
एतावत्संनिवेशस्तु मया सम्यक्प्रकाशितः। एतावदेव श्रोतव्यं संनिवेशस्य पार्थिव॥ ६४

इति श्रीमात्स्ये महापुराणे भुवनकोशे सप्तद्वीपनिवेशनं नाम त्रयोविंशत्यधिकशततमोऽध्यायः॥ १२३॥

आदितः श्लोकानां समष्ट्यङ्काः॥ ५६३४॥

---

अथ चतुर्विंशत्यधिकशततमोऽध्यायः।

---

सूत उवाच—

* अत ऊर्ध्वं प्रवक्ष्यामि सूर्याचन्द्रमसोर्गतिम्। सूर्याचन्द्रमसावेतौ भ्राजन्तौ यावदेव तु॥ १
सप्तद्वीपसमुद्राणां द्वीपानां भाति विस्तरः। विस्तरार्धं पृथिव्यास्तु भवेदन्यत्र बाह्यतः॥ २
पर्यासपरिमाणं च चन्द्रादित्यौ प्रकाशतः। पर्यासपारिमाण्यात्तु बुधैस्तुल्यं दिवः स्मृतम्॥३
+ त्रींल्लोकान्प्रति सामान्यात्सूर्यो यात्यविलम्बतः। अचिरात्तु प्रकाशेन अवनात्तु रविः स्मृतः

---

* एतदर्धं पूर्वाध्यायान्ते पठितं क. ख. घ. पुस्तकेषु परं तु तस्य ग ङ. च. संज्ञकेषु तत्र पाठादर्शनात्पुनरुक्तत्वाच्चोपरि न स्थापितम्। * एतदर्धस्थानेऽयं पाठो ग. पुस्तके—अवतीमांस्त्रयो लोकास्तस्मात्सूर्यः परिभ्रमन्। इति।
+ अत्रैव ङ. पुस्तकेऽयं पाठः—अवते त्रीनिमाल्लोकांस्तस्मात्सूर्यपरिभ्रम इति।

---

१ ग. ङ. °तः। स तिर्यङ्म°। २ ग. सप्तानां ससमु°। ङ. सप्तानां तु समु°। ३ ग. भान्ति विस्तराः। वि°। ङ. भावविः°। ४ ग. ङ. °माण्याच्च च°। ५ ग. °माण्यं तु बु°। ङ. °माण्ये तु बु°।

भूयो भूयः प्रवक्ष्यामि प्रमाणं चन्द्रसूर्ययोः। महितत्वान्महच्छब्दो ह्यस्मिन्नर्थे निगद्यते ॥ ५
अस्य भारतवर्षस्य विष्कम्भात्तुल्यविस्तृतम्। मण्डलं भास्करस्याथ योजनैस्तन्निबोधत ॥
नवयोजनसाहस्रो विस्तारो मण्डलस्य तु। विस्ताराात्त्रिगुणश्चापि परिणाहोऽत्र मण्डले ॥
विष्कम्भान्मण्डलाच्चैव भास्कराद्द्विगुणः शशी। अत॰ पृथिव्या वक्ष्यामि प्रमाणं योजनैः पुनः
सप्तद्वीपसमुद्राया विस्तारो मण्डलस्य तु। इत्येतदिह संख्यातं पुराणे परिमाणतः ॥ ९
तद्वक्ष्यामि प्रसंख्याय सांप्रतं चाभिमानिभिः। अभिमानिनो ह्यतीता ये तुल्यास्ते सांप्रतै-
स्त्विह ॥ १०
देवादेवैरतीतास्तु रूपैर्नामभिरेव च। तस्माद्वै सांप्रतैर्देवैर्वक्ष्यामि वसुधातलम् ॥ ११
दिव्यस्य संनिवेशो वै सांप्रतैरेव कृत्स्नशः। शतार्धकोटिविस्तारा पृथिवी कृत्स्नशः स्मृता ॥
तस्याश्चार्धप्रमाणं च मेरोश्चैवोत्तरोत्तरम्। मेरोर्मध्ये प्रतिदिशं कोटिरेका तु सा स्मृता ॥ १३
तथा शतसहस्राणामेकोननवतिं पुनः। पञ्चाशच्च सहस्राणि पृथिव्यर्धस्य विस्तरः ॥ १४
पृथिव्या विस्तरं कृत्स्नं योजनैस्तं निबोधत। तिस्रः कोट्यस्तु विस्तारात्संख्यातास्तु चतुर्दिशम्
तथा शतसहस्राणामेकोनाशीतिरुच्यते। सप्तद्वीपसमुद्रायाः पृथिव्याः स तु विस्तरः ॥ १६
विस्तारं त्रिगुणं चैव पृथिव्यन्तरमण्डलम्। गणितं योजनानां तु कोट्यस्त्वेकादश स्मृताः ॥
तथा शतसहस्राणां सप्तत्रिंशाधिकास्तु ताः। इत्येतद्वै प्रसंख्यातं पृथिव्यन्तरमण्डलम् ॥ १८
तारकासंनिवेशस्य दिवि यावत्तु मण्डलम्। पर्याप्तसंनिवेशस्य भूमेस्तावत्तु मण्डलम् ॥ १९
पर्याप्तपरिमाणं च भूमेस्तुल्यं दिवः स्मृतम्। मेरोः प्राच्यां दिशायां तु मानसोत्तरमूर्धनि ॥ २०
वस्त्वेकसारा माहेन्द्री पुण्या हेमपरिष्कृता। दक्षिणेन पुनर्मेरोर्मानसस्य तु पृष्ठतः ॥ २१
वैवस्वतो निवसति यमः संयमने पुरे। प्रतीच्यां तु पुनर्मेरोर्मानसस्य तु मूर्धनि ॥ २२
सुषा नाम पुरी रम्या वरुणस्यापि धीमतः। दिश्युत्तरस्यां मेरोस्तु मानसस्यैव मूर्धनि ॥ २३
तुल्या महेन्द्रपुर्याऽपि सोमस्यापि विभावरी। मानसोत्तरपृष्ठे तु लोकपालाश्चतुर्दिशम् ॥ २४
स्थिता धर्मव्यवस्थार्थं लोकसंरक्षणाय च। लोकपालोपरिष्टात्तु सर्वतो दक्षिणायने ॥ २५
काष्ठागतस्य सूर्यस्य गतिस्तत्र निबोधत। दक्षिणोपक्रमे सूर्यः क्षिप्तेषुरिव सर्पति ॥ २६
ज्योतिषां चक्रमादाय सततं परिगच्छति। मध्यगश्चामरावत्यां यदा भवति भास्करः ॥ २७
वैवस्वते संयमने उद्यन्सूर्यः प्रदृश्यते। सुषायामर्धरात्रस्तु विभावर्यांऽस्तमेति च ॥ २८
वैवस्वते संयमने मध्याह्ने तु रविर्यदा। सुषायामथ वारुण्यामुत्तिष्ठन्स तु दृश्यते ॥ २९
विभावर्यामर्धरात्रं माहेन्द्र्यामस्तमेव च। सुषायामथ वारुण्यां मध्याह्ने तु रविर्यदा ॥ ३०
विभावर्यां सोमपुर्यामुत्तिष्ठति विभावसुः। महेन्द्रस्यामरावत्यामुद्गच्छति दिवाकरः ॥ ३१
अर्धरात्रं संयमने वारुण्यामस्तमेति च। स शीघ्रमेव पर्येति भानुरालातचक्रवत् ॥ ३२
भ्रमन्वै भ्रममाणानि ऋक्षाणि चरते रविः। एवं चतुर्षु पार्श्वेषु दक्षिणान्तेषु सर्पति ॥ ३३
उदयास्तमये वाऽसावुत्तिष्ठति पुनः पुनः। पूर्वाह्णे चापराह्णे च द्वौ द्वौ देवालयौ तु सः ॥ ३४
पतत्येकं तु मध्याह्ने भाभिरेव च रश्मिभिः। उदितो वर्धमानाभिर्मध्याह्ने तपते रविः ॥ ३५

---

१ क. महत्तत्त्वं महाञ्शब्दो। २ ग. °न्महीशब्दो यस्मिन्नर्थे नि°। घ. °न्महाशब्दा। ३ ङ. निपात्यते।
४ घ. ङ. °त्कृत्स्नं तु°। ५ क. देवदे°। ६ ग. घ. °नैःयातप्रति°। ७ ग. मुखा। ८ ग °रात्रं तु विभायामस्त°।

अतः परं ह्रसन्तीभिर्गोभिरस्तं स गच्छति । उदयास्तमयाभ्यां च स्मृते पूर्वापरे तु वै ॥ ३६
यावत्पुरस्तात्तपति यावत्पृष्ठे तु पार्श्वयोः । यत्रोदयस्तु दृश्येत तेषां स उदयः स्मृतः ॥ ३७
प्रणाशं गच्छते यत्र तेषामस्तः स उच्यते । सर्वेषामुत्तरे मेरुर्लोकालोकस्य दक्षिणे ॥ ३८
विदूरभावादर्कस्य भूमेरेखा गतस्य च । श्रयन्ते रश्मयो यस्मात्तेन रात्रौ न दृश्यते ॥ ३९
ऊर्ध्वं शतसहस्रांशुः स्थितस्तत्र प्रदृश्यते । एवं पुष्करमध्ये तु यदा भवति भास्करः ॥४०
त्रिंशद्भागं च मेदिन्या मुहूर्तेन स गच्छति । योजनानां सहस्रस्य इमां संख्यां निबोधत४१
पूर्णं शतसहस्राणामेकत्रिंशच्च सा स्मृता । पञ्चाशच्च सहस्राणि तथाऽन्यान्यधिकानि च॥
मौहूर्तिकी गतिर्ह्येषा सूर्यस्य तु विधीयते । एतेन क्रमयोगेण यदा काष्ठां तु दक्षिणाम् ॥ ४३
परिगच्छति सूर्योऽसौ मासं काष्ठामुदग्दिनात् । मध्येन पुष्करस्याथ भ्रमते दक्षिणायने ॥ ४४
मानसोत्तरमेरोस्तु अन्तरं त्रिगुणं स्मृतम् । सर्वतो दक्षिणस्यां तु काष्ठायां तन्निबोधत ॥ ४५
नव कोट्यः प्रसंख्याता योजनैः परिमण्डलम् । तथा शतसहस्राणि चत्वारिंशच्च पञ्च च ४६
अहोरात्रात्पतङ्गस्य गतिरेषा विधीयते । दक्षिणादिङ्निवृत्तोऽसौ विषुवस्थो यदा रविः४७
क्षीरोदस्य समुद्रस्योत्तरतोऽपि दिशं चरन् । मण्डलं विषुवच्चापि योजनैस्तन्निबोधत ॥ ४८
तिस्रः कोट्यस्तु संपूर्णा विषुवस्यापि मण्डलम् । तथा शतसहस्राणि विंशत्येकाधिकानि तु॥
श्रावणे चोत्तरां काष्ठां चित्रभानुर्यदा भवेत् । गोमेदस्य परद्वीपे उत्तरां च दिशं चरन् ॥ ५०
उत्तरायाः प्रमाणं तु काष्ठाया मण्डलस्य तु । दक्षिणोत्तरमध्यानि तानि विन्द्याद्यथाक्रमम् ॥
स्थानं जरद्गवं मध्ये तथैरावतमुत्तमम् । वैश्वानरं दक्षिणतो निर्दिष्टमिह तत्त्वतः ॥ ५२
नागवीथ्युत्तरा वीथी ह्यजवीथिस्तु दक्षिणा । उभे आषाढमूलं तु अजवीथ्यादयस्त्रयः ॥ ५३
अभिजित्पूर्वतः स्वातिं नागवीथ्युत्तरास्त्रयः । अश्विनी कृत्तिका याम्या नागवीथ्यस्त्रयः स्मृताः ॥ ५४
रोहिण्यार्द्रा मृगशिरो नागवीथिरिति स्मृता । पुष्याश्लेषा पुनर्वस्वोर्वीथी चैरावती स्मृता ॥
तिस्रस्तु वीथयो ह्येता उत्तरो मार्ग उच्यते । पूर्वोत्तरा च फल्गुन्यौ मघा चैवाऽऽर्षभी भवेत् ॥
पूर्वोत्तरप्रोष्ठपदौ गोवीथी रेवती स्मृता । श्रवणं च धनिष्ठा च वारुणं च जरद्गवम् ॥ ५७
एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते । हस्तश्चित्रा तथा स्वाती ह्यजवीथिरिति स्मृता
ज्येष्ठा विशाखा मैत्रं च मृगवीथी तथोच्यते । मूलं पूर्वोत्तराषाढे वीथी वैश्वानरी भवेत् ॥ ५९
स्मृतास्तिस्रस्तु वीथ्यस्ता मार्गे वै दक्षिणे पुनः । काष्ठयोरन्तरं चैतद्वक्ष्यते योजनैः पुनः ॥ ६०
एतच्छतसहस्राणामेकत्रिंशत्तु वै स्मृतम् । शतानि त्रीणि चान्यानि त्रयस्त्रिंशत्तथैव च ॥ ६१
काष्ठयोरन्तरं ह्येतद्योजनानां प्रकीर्तितम् । काष्ठयोर्लेखयोश्चैव अयने दक्षिणोत्तरे ॥ ६२
ते वक्ष्यामि प्रसंख्याय योजनैस्तु निबोधत । एकैकमन्तरं तद्वद्युक्तान्येतानि सप्तभिः ॥ ६३
सहस्रेणातिरिक्ता च ततोऽन्या पञ्चविंशतिः । लेखयोः काष्ठयोश्चैव बाह्याभ्यन्तरयोश्चरन् ६४
अभ्यन्तरं स पर्येति मण्डलान्युत्तरायणे । बाह्यतो दक्षिणेनैव सततं सूर्यमण्डलम् ॥ ६५
चरन्नसावुदीच्यां च ह्यशीत्या मण्डलाञ्छतम् । अभ्यन्तरं स पर्येति क्रमते मण्डलानि तु॥६६

---

१ ग. °र्लोकस्तस्मात्तु द° । २ ग. ध्रियन्ते । ३ ग. ङ. °द्रस्य उत्तरान्ते दिशश्चर° । ४ ग. घ. ङ. °षुवे चापि ।

प्रमाणं मण्डलस्यापि योजनानां निबोधत। योजनानां सहस्राणि दश चाष्टौ तथा स्मृतम् ॥
अधिकान्यष्टपञ्चाशद्योजनानि तु वै पुनः। विष्कम्भो मण्डलस्यैव तिर्यक्स तु विधीयते॥६८
अहस्तु चरते नाभेः सूर्यो वै मण्डलं क्रमात्। कुलालचक्रपर्यन्तो यथा चन्द्रो रविस्तथा॥ ६९
दक्षिणे चक्रवत्सूर्यस्तथा शीघ्रं निवर्तते। तस्मात्प्रकृष्टां भूमिं तु कालेनाल्पेन गच्छति॥ ७०
सूर्यो द्वादशभिः शीघ्रं मुहूर्तैर्दक्षिणायने। त्रयोदशार्धमृक्षाणां मध्ये चरति मण्डलम्॥ ७१
मुहूर्तैस्तानि ऋक्षाणि नक्तमष्टादशैश्चरन्। कुलालचक्रमध्यस्थो यथा मन्दं प्रसर्पति॥ ७२
उदग्याने तथा सूर्यः सर्पते मन्दविक्रमः। तस्माद्दीर्घेण कालेन भूमिं सोऽल्पां प्रसर्पति॥ ७३
सूर्योऽष्टादशभिरह्नो मुहूर्तैरुदगायने। त्रयोदशानां मध्ये तु ऋक्षाणां चरते रविः ॥
मुहूर्तैस्तानि ऋक्षाणि रात्रौ द्वादशभिश्चरन्॥ ७४
ततो मन्दतरं ताभ्यां चक्रं तु भ्रमते पुनः। मृत्पिण्ड इव मध्यस्थो भ्रमतेऽसौ ध्रुवस्तथा॥ ७५
मुहूर्तैस्त्रिंशता तावदहोरात्रं ध्रुवो भ्रमन्। उभयोः काष्ठयोर्मध्ये भ्रमते मण्डलानि तु॥ ७६
उत्तरक्रमणेऽर्कस्य दिवा मन्दगतिः स्मृता। तस्यैव तु पुनर्नक्तं शीघ्रा सूर्यस्य वै गतिः॥ ७७
दक्षिणप्रक्रमे वाऽपि दिवा शीघ्रं विधीयते। गतिः सूर्यस्य वै नक्तं मन्दा चापि विधीयते ७८
एवं गतिविशेषेण विभजन्रात्र्यहानि तु। अजवीथ्यां दक्षिणायां लोकालोकस्य चोत्तरम्॥
लोकसंतानतो ह्येष वैश्वानरपथाद्बहिः। व्युष्टिर्यावत्प्रभा सौरी पुष्करात्संप्रवर्तते॥ ८०
पार्श्वेभ्यो बाह्यतस्तावल्लोकालोकश्च पर्वतः। योजनानां सहस्राणि दशोर्ध्वं चोच्छ्रितो गिरिः
प्रकाशश्चाप्रकाशश्च पर्वतः परिमण्डलः। नक्षत्रचन्द्रसूर्याश्च ग्रहास्तारागणैः सह॥ ८२
अभ्यन्तरे प्रकाशन्ते लोकालोकस्य वै गिरेः। एतावानेव लोकस्तु निरालोकस्ततः परम्॥८३
लोक आलोकने धातुर्निरालोकस्त्वलोकता। लोकालोकौ तु संधत्ते यस्मात्सूर्यः परिभ्रमन्॥
तस्मात्संध्येति तामाहुरुषाव्युष्ट्यैर्यथान्तरम्। उषा रात्रिः स्मृता विप्रैर्व्युष्टिश्चापि अहः स्मृतम्
त्रिंशत्कलो मुहूर्तस्तु अहस्ते दश पञ्च च। ह्रासो वृद्धिरहर्भागैर्दिवसानां यथा तु वै॥ ८६
संध्यामुहूर्तमात्रायां ह्रासवृद्धी तु ते स्मृते। लेखाप्रभृत्यथाऽऽदित्ये त्रिमुहूर्तागते तु वै॥ ८७
प्रातः स्मृतस्ततः कालो भागांश्चाऽऽह्नश्च पञ्च च। तस्मात्प्रातर्गतात्कालान्मुहूर्ताः संगवस्त्रयः
मध्याह्नस्त्रिमुहूर्तस्तु तस्मात्कालादनन्तरम्। तस्मान्मध्यंदिनात्कालादपराह्न इति स्मृतः॥
त्रय एव मुहूर्तास्तु काल एष स्मृतो बुधैः। अपराह्णव्यतीताच्च कालः सायं स उच्यते॥ ९०
दश पञ्च मुहूर्ताह्नो मुहूर्तास्त्रय एव च। दशपञ्चमुहूर्तं वै अहस्तु विषुवे स्मृतम्॥ ९१
वर्धत्यतो ह्रसत्येव अयने दक्षिणोत्तरे। अहस्तु ग्रसते रात्रिं रात्रिस्तु ग्रसते अहः॥ ९२
शरद्वसन्तयोर्मध्यं विषुवं तु विधीयते। आलोकान्तः स्मृतो लोको लोकांच्चालोक उच्यते ९३
लोकपालाः स्थितास्तत्र लोकालोकस्य मध्यतः। चत्वारस्ते महात्मानास्तिष्ठन्त्याभूतसंप्लवम्
सुधामा चैव वैराजः कर्दमश्च प्रजापतिः। हिरण्यरोमा पर्जन्यः केतुमान्राजसश्च सः॥ ९५
निर्द्वंद्वा निरभिमाना निस्तन्द्रा निष्परिग्रहाः। लोकपालाः स्थितास्त्वेते लोकालोके चतु-
र्दिशम्॥ ९६
उत्तरं यदगस्त्यस्य शृङ्गं देवर्षिसेवितम्। पितृयाणः स्मृतः पन्था वैश्वानरपथाद्बहिः॥ ९७

१ ग. ङ. संप्रकाशते। २ क. ख. °त्ते तस्मा°। ३ ग. घ. °शत्कालो। ४ ङ. °कालोकः स उ°। ५ ग. °रभिमा°।

तत्राऽऽसते प्रजाकामा ऋषयो येऽग्निहोत्रिणः । लोकस्य संतानकराः पितृयाणे पथि स्थिताः
भूतारम्भकृतं कर्म आशिषश्च विशां पते । प्रारभन्ते लोककामास्तेषां पन्थाः स दक्षिणः॥९९
चलितं ते पुनर्धर्मं स्थापयन्ति युगे युगे । संततास्तपसा चैव मर्यादाभिः श्रुतेन च ॥ १००
जायमानास्तु पूर्वे वै पश्चिमानां गृहेषु ते । पश्चिमाश्चैव पूर्वेषां जायन्ते निधनेष्विह ॥ १०१
एवमावर्तमानास्ते वर्तन्त्याभूतसंप्लवम् । अष्टाशीतिसहस्राणि ऋषीणां गृहमेधिनाम् ॥ १०२
सवितुर्दक्षिणं मार्गमाश्रित्याऽऽभूतसंप्लवम् । क्रियावतां प्रसंख्यैषा ये श्मशानानि भेजिरे ॥
लोकसंव्यवहारार्थं भूतारम्भकृतेन च । इच्छाद्वेषरताच्चैव मैथुनोपगमाच्च वै ॥ १०४
तथा कामकृतेनेह सेवनाद्विषयस्य च । इत्येतैः कारणैः सिद्धाः श्मशानानीह भेजिरे ॥ १०५
प्रजैषिणः सप्तर्षयो द्वापरेष्विह जज्ञिरे । संततिं ते जुगुप्सन्ते तस्मान्मृत्युर्जितस्तु तैः ॥ १०६
अष्टाशीतिसहस्राणि तेषामप्यूर्ध्वरेतसाम् । उदक्पन्था न पर्यन्तमाश्रित्याऽऽभूतसंप्लवम् १०७
ते संप्रयोगाल्लोकस्य मिथुनस्य च वर्जनात् । ईर्ष्याद्वेषनिवृत्त्या च भूतारम्भविवर्जनात् ॥१०८
ततोऽन्यकामसंयोगशब्दादेर्दोषदर्शनात् । इत्येतैः कारणैः शुद्धैस्तेऽमृतत्वं हि भेजिरे ॥ १०९
आभूतसंप्लवस्थानाममृतत्वं विभाव्यते । त्रैलोक्यस्थितिकालो हि न पुनर्मारगामिणाम् ॥
भ्रूणहत्याश्वमेधादिपापपुण्यनिभैः परम् । आभूतसंप्लवान्ते तु क्षीयन्ते चोर्ध्वरेतसः ॥ १११
ऊर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्रानुसंस्थितः । एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरम् ११२
यत्र गत्वा न शोचन्ति तद्विष्णोः परमं पदम् । धर्मे ध्रुवस्य तिष्ठन्ति ये तु लोकस्य काङ्क्षिणः

इति श्रीमात्स्ये महापुराणे भुवनकोशे चन्द्रसूर्यभुवनविस्तारो नाम चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ५७४७ ॥

---

अथ पञ्चविंशत्यधिकशततमोऽध्यायः ।

---

एवं श्रुत्वा कथां दिव्यामब्रुवँल्लोमहर्षणिम् । सूर्याचन्द्रमसोश्चारं ग्रहाणां चैव सर्वशः ॥ १

ऋषय ऊचुः—

भ्रमन्ति कथमेतानि ज्योतींषि रविमण्डले । अव्यूहेनैव सर्वाणि तथा चासंकरेण वा ॥ २
कश्च भ्रामयते तानि भ्रमन्ति यदि वा स्वयम् । एतद्वेदितुमिच्छामस्ततो निगद सत्तम ॥ ३

सूत उवाच—

भूतसंमोहनं ह्येतद्ब्रुवतो मे निबोधत । प्रत्यक्षमपि दृश्यं तत्संमोहयति वै प्रजाः ॥ ४
योऽसौ चतुर्दशर्क्षेषु शिशुमारो व्यवस्थितः । उत्तानपादपुत्रोऽसौ मेढीभूतो ध्रुवो दिवि ॥ ५
सैष भ्रमन्भ्रामयते चन्द्रादित्यौ ग्रहैः सह । भ्रमन्तमनुसर्पन्ति नक्षत्राणि च चक्रवत् ॥ ६
ध्रुवस्य मनसा यो वै भ्रमते ज्योतिषां गणः । वातानीकमयैर्बन्धैर्ध्रुवे बद्धः प्रसर्पति ॥ ७
तेषां भेदश्च योगश्च तथा कालस्य निश्चयः । अस्तोदयास्तथोत्पाता अयने दक्षिणोत्तरे ॥ ८

---

१ ग. च । ईर्ष्याद्वेषरताश्चैव । २ ग. परैषिणः । ३ ग. ङ. हि अपुनर्भवतां गताः । भ्रू । ४ ग. ध्रुवायास्तिष्ठ° । ५ ङ. °न्ति यत्र ते लोकसाक्षिणः । ६ ग. दक्षिणः । ७ ग. °दिव्या सुप्रिया लोमहर्षणं तु । सू° । ८ ग. °पि दिवि° । ९ ग. °व्यूहैरेव । १० घ. °सा वर्षे भ्र° । ङ. °सा वर्षो भ्र° ।

विषुवद्ग्रहवर्णश्च सर्वमेतद्ध्रुवेरितम्। जीमूता नाम ते मेघा यदेभ्यो जीवसंभवः ॥ ९
द्वितीय आवहस्त्वायुर्मेघास्ते त्वभिसंश्रिताः। इतो योजनमात्राच्च अध्यर्धविकृता अपि ॥१०
वृष्टिसर्गस्तथा तेषां धारासारः प्रकीर्तितः। पुष्करावर्तका नाम ये मेघाः पक्षसंभवाः ॥ ११
शक्रेण पक्षाश्छिन्ना वै पर्वतानां महौजसां । कामगानां समृद्धानां भूतानां नाशमिच्छताम्
पुष्करा नाम ते पक्षा बृहन्तस्तोयधारिणः। पुष्करावर्तका नाम कारणेनेह शब्दिताः ॥ १३
नानारूपधराश्चैव महाघोरस्वराश्च ते। कल्पान्तवृष्टिकर्तारः कल्पान्ताग्नेर्नियामकाः ॥ १४
वाप्वाधारा वहन्ते वै सांवृताः कल्पसाधकाः। यान्यस्याण्डस्य भिन्नस्य प्राकृतान्यभवंस्तदा
यस्मिन्ब्रह्मा समुत्पन्नश्चतुर्वक्त्रः स्वयं प्रभुः। तान्येवाण्डकपालानि सर्वे मेघाः प्रकीर्तिताः ॥
तेषामाप्यायनं धूमः सर्वेषामविशेषतः। तेषां श्रेष्ठश्च पर्जन्यश्चत्वारश्चैव दिग्गजाः ॥१७
गजानां पर्वतानां च मेघानां भोगिभिः सह। कुलमेकं द्विधा भूतं योनिरेका जलं स्मृतम् ॥१८
पर्जन्यो दिग्गजाश्चैव हेमन्ते शीतसंभवम्। तुषारवर्षं वर्षन्ति वृद्ध्या ह्यन्नविवृद्धये ॥ १९
षष्ठः परिवहो नाम वायुस्तेषां परायणः । योऽसौ बिभर्ति भगवान्गङ्गामाकाशगोचराम् ॥
दिव्यामृतजलां पुण्यां त्रिपथामिति विश्रुताम् । तस्या विस्पन्दितं तोयं दिग्गजाः पृथुभिः करैः ॥ २१
शीकरान्संप्रमुञ्चन्ति नीहार इति स स्मृतः। दक्षिणेन गिरिर्योऽसौ हेमकूट इति स्मृतः ॥ २२
उदग्घिमवतः शैलस्योत्तरे चैव दक्षिणे। पुण्ड्रं नाम समाख्यातं सम्यग्वृष्टिविवृद्धये ॥ २३
तस्मिन्प्रवर्तते वर्षं तत्तुषारसमुद्भवम्। ततो हिमवतो वायुर्हिमं तत्र समुद्भवम् ॥ २४
आनयत्यात्मवेगेन सिञ्चयानो महागिरिम्। हिमवन्तमतिक्रम्य वृष्टिशेषं ततः परम् ॥ २५
इमास्ये च ततः पश्चादिदं भूतविवृद्धये। वर्षद्वयं समाख्यातं सम्यग्वृष्टिविवृद्धये ॥ २६
मेघाश्चाऽऽप्यायनं चैव सर्वमेतत्प्रकीर्तितम्। सूर्य एव तु वृष्टीनां स्रष्टा समुपदिश्यते ॥ २७
वर्षं घर्मं हिमं रात्रिं संध्ये चैव दिनं तथा। शुभाशुभफलानीह ध्रुवात्सर्वं प्रवर्तते ॥ २८
ध्रुवेणाधिष्ठिताश्चापः सूर्यो वै गृह्य तिष्ठति। सर्वभूतशरीरेषु त्वापो ह्यनुश्रिताश्च याः ॥ २९
दह्यमानेषु तेष्वेव जङ्गमस्थावरेषु च। धूमभूतास्तु ता ह्यापो निष्क्रामन्तीह सर्वशः ॥ ३०
तेन चाभ्राणि जायन्ते स्थानमभ्रमयं स्मृतम्। तेजोभिः सर्वलोकेभ्य आदत्ते रश्मिभिर्जलम् ॥
समुद्राद्वायुसंयोगाद्वहन्त्यापो गभस्तयः। ततस्त्वृतुवशात्काले परिवर्तन्दिवाकरः ॥ ३२
नियच्छत्यापो मेघेभ्यः शुक्लाः शुक्लैस्तु रश्मिभिः। अभ्रस्थाः प्रपतन्त्यापो वायुना समुदीरिताः
ततो वर्षति षण्मासान्सर्वभूतविवृद्धये। वायुभिः स्तनितं चैव विद्युतस्त्वग्निजाः स्मृताः ॥३४
मेहनाच्च मिहेर्धातोर्मेघत्वं व्यञ्जयन्ति च। न भ्रश्यन्ते ततो ह्यापस्तस्मादभ्रस्य वै स्थितिः ॥
स्रष्टाऽसौ वृष्टिसर्गस्य ध्रुवेणाधिष्ठितो रविः ॥
ध्रुवेणाधिष्ठितो वायुर्वृष्टिं संहरते पुनः। ग्रहान्निर्वृत्त्या सूर्यात्तु चरते ऋक्षमण्डलम् ॥ ३६
चारस्यान्ते विशत्यर्कं ध्रुवेण समधिष्ठितम्। अतः सूर्यरथस्यापि संनिवेशं प्रचक्षते ॥ ३७
स्थितेन त्वेकचक्रेण पञ्चारेण त्रिणाभिना। हिरण्मयेनाणुना वै अष्टचक्रैकनेमिना ॥
चक्रेण भास्वता सूर्यः स्यन्दनेन प्रसर्पिणा ॥ ३८

१ ग. °ङ्क्रियाते। २ ग. ध °साम्। का। ३ घ. ङ. °योऽपो गृह्य वर्षति। ४ ग. ङ. °पो ह्यनुमता°। ५ ग. घ. ङ. °भिसृत्य सृ°। ६ ङ. °येन नल्केन भ°। ७ ग. ङ च °णा। दशयो°।

शतयोजनसाहस्रो विस्तारायाम उच्यते। द्विगुणा च रथोपस्थादीषादण्डः प्रमाणतः ॥
स तस्य ब्रह्मणा सृष्टो रथो ह्यर्थवशेन तु । असङ्गः काञ्चनो दिव्यो युक्तः पवनगैर्हयैः ॥
छन्दोभिर्वाजिरूपैस्तैर्यथाचक्रं समास्थितैः। वारुणस्य रथस्येह लक्षणैः सदृशश्च सः ॥ ४१
तेनासौ चरति व्योम्नि भास्वाननुदिनं दिवि। अथाङ्गानि तु सूर्यस्य प्रत्यङ्गानि रथस्य च ॥
संवत्सरस्यावयवैः कल्पितानि यथाक्रमम् ॥ ४२
अहर्नाभिस्तु सर्यस्य एकचक्रस्य वै स्मृतः । अराः संवत्सरास्तस्य नेम्यः षड् ऋतवः स्मृताः
रात्रिर्वरूथो धर्मश्च ध्वज ऊर्ध्वं व्यवस्थितः। अक्षकोट्योर्युगान्यस्य आर्तवाहाः कलाः स्मृताः
तस्य काष्ठा स्मृता घोणा दन्तपङ्क्तिः क्षणास्तु वै । निमेषश्चानुकर्षोऽस्य ईषा चास्य कला स्मृता ॥ ४५
युगाक्षकोटी ते तस्य अर्थकामावुभौ स्मृतौ। सप्ताश्वरूपाश्छन्दांसि वहन्ते वायुरंहसा ॥ ४६
गायत्री चव त्रिष्टुप्च जगत्यनुष्टुप्तथैव च। पङ्क्तिश्च बृहती चेव उष्णिगेव तु सप्तमम् ॥ ४७
चक्रमक्षे निबद्धं तु ध्रुव चाक्षः समर्पितः। सहचक्रो भ्रमत्यक्षः सहाक्षो भ्रमति ध्रुव ॥ ४८
अक्षः सहैव चक्रेण भ्रमतेऽसौ ध्रुवेरितः। एवमर्थवशात्तस्य संनिवेशो रथस्य तु ॥ ४९
तथा संयोगभागेन सिद्धो वै भास्करो रथः। तेनासौ तरणिर्देवो नभसः सर्पते दिवम्॥ ५०
युगाक्षकोटी ते तस्य दक्षिणे स्यन्दनस्य तु। भ्रमतो भ्रमतो रश्मी तौ चक्रयुगयोस्तु वै ॥ ५१
मण्डलानि भ्रमन्तेऽस्य खेचरस्य रथस्य तु। कुलालचक्रभ्रमवन्मण्डलं सर्वतोदिशम् ॥ ५२
युगाक्षकोटी ते तस्य वातोर्मी स्यन्दनस्य तु। संक्रमेते ध्रुवमहो मण्डले सर्वतोदिशम् ॥ ५३
भ्रमतस्तस्य रश्मी ते मण्डले तूत्तरायणे। वर्धेते दक्षिणेष्वत्र भ्रमतो मण्डलानि तु ॥ ५४
युगाक्षकोटीसंबद्धौ द्वौ रश्मी स्यन्दनस्य तु। ध्रुवेण प्रगृहीतौ तौ रश्मी यो वनतो रविम् ॥ ५५
आकृष्येते यदा ते तु ध्रुवेण समधिष्ठिते। तदा सोऽभ्यन्तरे सूर्यो भ्रमते मण्डलानि तु ॥ ५६
*अशीतिमण्डल शतं काष्ठयोरुभयोश्चरन्। ध्रुवेण मुच्यमानेन पुना रश्मियुगेन च ॥ ५७
तथैव बाह्यतः सूर्यो भ्रमते मण्डलानि तु । उद्वेष्टयन्वै वेगेन मण्डलानि तु गच्छति ॥ ५८

इति श्रीमात्स्ये महापुराणे भुवनकोशे सूर्याचन्द्रमश्चारो नाम पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ५८०५ ॥

---

अथ षड्विंशत्यधिकशततमोऽध्यायः ।

---

सूत उवाच—

स रथोऽधिष्ठितो देवैर्मासि मासि यथाक्रमम्। ततो वहत्यथाऽऽदित्यं बहुभिर्ऋषिभिः सह ॥
गन्धर्वैरप्सरोभिश्च सर्पग्रामणिराक्षसैः । एते वसन्ति वै सूर्ये मासौ द्वौ द्वौ क्रमेण च ॥ २
धाताऽर्यमा पुलस्त्यश्च पुलहश्च प्रजापती । उरगौ वासुकिश्चैव संकीर्णश्चैव तावुभौ ॥ ३

---

* न विद्यतेऽयंश्लोको ग. पुस्तके ।

---

१ ङ. दिव्यः पारगः शीघ्रगैः° । २ क. ख. आर्तवं° । ङ. आराः । ३ ग. घ. 'ते ऽ ऽस्थितम् । ' । ४ ग. घ. वर्धेते दक्षिणेष्वत्र । ङ. वर्धते दक्षिणे सत्र । ५ क रश्मी धारयता र° ।

तुम्बुरुर्नारदश्चैव गन्धर्वौ गायतां वरौ। क्रतस्थलाऽप्सराश्चैव या च सा पुञ्जिकस्थला ॥ ४
ग्रामण्यौ रथकृत्तस्य रथौजाश्चैव तावुभौ। रक्षो हेतिः प्रहेतिश्च यातुधानावुभौ स्मृतौ ॥ ५
मधुमाधवयोर्ह्येष गणो वसति भास्करे । वसन्ग्रीष्मे तु द्वौ मासौ मित्रश्च वरुणश्च वै ॥ ६
ऋषी अत्रिर्वसिष्ठश्च नागौ तक्षकरम्भकौ। मेनका सहजन्या च हाहा हूहूश्च गायकौ ॥ ७
रथंतरश्च ग्रामण्यौ रथकृच्चैव तावुभौ । पुरुषादो वधश्चैव यातुधानौ तु तौ स्मृतौ ॥ ८
एते वसन्ति वै सूर्ये मासयोः शुचिशुक्रयोः। ततः सूर्ये पुनश्चान्या निवसन्ति स्म देवताः ॥ ९
इन्द्रश्चैव विवस्वांश्च अङ्गिरा भृगुरेव च। एलापत्रस्तथा सर्पः शङ्खपालश्च पन्नगः ॥ १०
विश्वावसुसुषेणौ च प्रातश्चैव रथश्च हि। प्रम्लोचेत्यप्सराश्चैव निम्लोचन्ती च ते उभे ॥ ११
यातुधानस्तथा हेतिर्व्याघ्रश्चैव तु तावुभौ। नभस्यनभसोरेतैर्वसन्तश्च दिवाकरे ॥ १२
मासौ द्वौ देवताः सूर्ये वसन्ति च शरद्गतौ। पर्जन्यश्चैव पूषा च भरद्वाजः सगौतमः ॥ १३
चित्रसेनश्च गन्धर्वस्तथा वा सुरुचिश्च यः । विश्वाची च घृताची च उभे ते पुण्यलक्षणे ॥
नागश्चैरावतश्चैव विश्रुतश्च धनंजयः । सेनजिच्च सुषेणश्च सेनानीर्ग्रामणीस्तथा ॥ १५
चारो वातश्च द्वावेतौ यातुधानावुभौ स्मृतौ । वसन्त्येते च वै सूर्ये मासयोश्च त्विषोर्जयोः॥
हैमन्तिकौ च द्वौ मासौ निवसन्ति दिवाकरे । अंशो भगश्च द्वावेतौ कश्यपश्च क्रतुश्च तौ ॥
भुजंगश्च महापद्मः सर्पः कर्कोटकस्तथा । चित्रसेनश्च गन्धर्वः पूर्णायुश्चैव गायनौ ॥ १८
अप्सराः पुर्वचित्तिश्च गन्धर्वा ह्युर्वशी च या। तार्क्ष्यश्चारिष्टनेमिश्च सेनानीर्ग्रामणीश्च तौ ॥
विद्युत्सूर्यश्च तावुग्रौ यातुधानौ तु तौ स्मृतौ। सहे चैव सहस्ये च वसन्त्येते दिवाकरे ॥ २०
ततस्तु शिशिरे चापि मासयोर्निवसन्ति ते। त्वष्टा विष्णुर्जमदग्निर्विश्वामित्रस्तथैव च ॥
काद्रवेयौ तथा नागौ कम्बलाश्वतरावुभौ। गन्धर्वौ धृतराष्ट्रश्च सूर्यवर्चाश्च तावुभौ ॥ २२
तिलोत्तमाऽप्सराश्चैव देवी रम्भा मनोरमा। ग्रामणीर्ऋतजिच्चैव सत्यजिच्च महाबलः ॥ २३
ब्रह्मोपेतश्च वै रक्षो यज्ञोपेतस्तथैव च । इत्येते निवसन्ति स्म द्वौ द्वौ मासौ दिवाकरे ॥
स्थानाभिमानिनो ह्येते गणा द्वादश सप्तकाः । सूर्यमापादयन्त्येते तेजसा तेज उत्तमम् ॥
ग्रथितैस्तु वचोभिश्च स्तुवन्ति ऋषयो रविम्। गन्धर्वाप्सरसश्चैव गीतनृत्यैरुपासते ॥ २६
विद्याग्रामणिनो यक्षाः कुर्वन्त्याभीषुसंग्रहम्। सर्पाः सर्पन्ति वै सूर्ये यातुधानानुयान्ति च ॥
वालखिल्या नयन्त्यस्तं परिवार्योदयाद्रविम् । एतेषामेव देवानां यथावीर्यं यथातपः॥ २८
यथायोगं यथाधर्मं यथातत्त्वं यथाबलम्। तथा तपत्यसौ सूर्यस्तेषामिद्धस्तु तेजसा ॥ २९
भूतानामशुभं सर्वं व्यपोहति स्वतेजसा । मानवानां शुभैर्ह्येतैर्ह्रियते दुरितं तु वै ॥ ३०
दुरितं शुभचाराणां व्यपोहन्ति क्वचित्क्वचित्। एते सहैव सूर्येण भ्रमन्ति सानुगा दिवि॥ ३१
तपन्तश्च जपन्तश्च ह्लादयन्तश्च वै प्रजाः । गोपायन्ति स्म भूतानि ईहन्ते ह्यनुकम्पया ॥
स्थानाभिमानिनां ह्येतत्स्थानं मन्वन्तरेषु वै । अतीतानागतानां च वर्तन्ते सांप्रतं च ये ॥
एवं वसन्ति वै सूर्ये सप्तकास्ते चतुर्दश । चतुर्दशेषु वर्तन्ते गणा मन्वन्तरेषु वै ॥ ३४
ग्रीष्मे हिमे च वर्षासु मुञ्चमाना यथाक्रमम्। धर्मं हिमं च वर्षं च यथाक्रममहर्निशम् ॥

---

१ क. ख. स्थली । मा । २ ग. घ. ङ. क्रमिराश्रे° । ३ क. ख °हृयम्या । ४ ङ. °राणामप्याह° । ५ क. ख. °मानो घर्म हिमं च वर्षं च निशां दिनं च : ग° । ग. °मानौ सदा विभू । घ° । ६ ग. च सृजमानो दिशां दिनम् ग°।

गच्छत्यसावनुदिनं परिवृत्य रश्मीन्देवान्पितॄंश्च मनुजांश्च सुतर्पयन्वै ।
शुक्ले च कृष्णे तदहःक्रमेण कालक्षये चैव सुराः पिबन्ति ॥ ३६
मासेन तच्चामृतमस्य सृष्टं सुवृष्टये रश्मिषु रक्षितं तु ।
सर्वेऽमृतं तत्पितरः पिबन्ति देवाश्च सौम्याश्च तथैव काव्याः ॥ ३७
सूर्येण गोभिर्हि विवर्धिताभिरद्भिः पुनश्चैव समुच्छ्रिताभिः ।
वृष्ट्याऽभिवृष्टाभिरथौपधीभिर्मर्त्या अथान्नेन क्षुधं जयन्ति ॥ ३८
तृप्तिश्च तेनार्धमासं सुराणां मासं सुधाभिः स्वधया पितॄणाम् ।
अन्नेन जीवन्त्यनिशं मनुष्याः सूर्यः श्रितं तद्धि बिभर्ति गोभिः ॥ ३९

इत्येष एकचक्रेण सूर्यस्तूर्णं प्रसर्पति । तत्र तैरक्रमैरश्वैः *सर्पतेऽसौ दिनक्षये ॥ ४०
हरिर्हरिद्भिर्ह्रियते तुरंगमैः पिबत्यथापो हरिभिः सहस्रधा ।
पुनः प्रमुञ्चत्यथ ताश्च यो हरिः स मुह्यमानो हरिभिस्तुरंगमैः ॥ ४१

अहोरात्रं रथेनासावेकचक्रेण वै भ्रमन् । सप्तद्वीपसमुद्रांश्च सप्तभिः सप्तभिर्द्रुतम् ॥ ४२
छन्दोरूपैश्च तैरश्वैर्युतश्चक्रं ततः स्थितिः । कामरूपैः सकृद्युक्तैः कामगैस्तैर्मनोजवैः ॥ ४३
हरितैरव्यथैः पिङ्गैरीश्वरैर्ब्रह्मवादिभिः । वाह्यतोऽनन्तरं चैव मण्डलं दिवसक्रमात् ॥ ४४
कल्पादौ संप्रयुक्ताश्च वहन्त्याभूतसंप्लवम् । आवृतो वालखिल्यैश्च भ्रमते रात्र्यहानि तु ॥ ४५
ग्रथितैः स्ववचोभिश्च स्तूयमानो महर्षिभिः । सेव्यते गीतनृत्यैश्च गन्धर्वाप्सरसां गणैः ॥ ४६
पतङ्गैः पतगैरश्वैर्भ्राम्यमाणो दिवस्पतिः । वीथ्याश्रयाणि चरति नक्षत्राणि तथा शशी ॥
ह्रासवृद्धी तथैवास्य रश्मयः सूर्यवत्स्मृताः । त्रिचक्रोभयतोऽश्वश्च विज्ञेयः शशिनो रथः ॥
अपां गर्भसमुत्पन्नो रथः साश्वः ससारथिः । संहारैस्तैस्त्रिभिश्चक्रैर्युक्तः शुक्लैर्हयोत्तमैः ४९
दशभिस्तुरगैर्दिव्यैरसङ्गैस्तन्मनोजवैः । सकृद्युक्ते रथे तस्मिन्वहन्तस्त्वायुगक्षयम् ॥ ५०
संगृहीता रथे तस्मिञ्छ्वेतश्चक्षुःश्रवाश्च वै । अश्वास्तमेकवर्णास्ते वहन्ते शङ्खवर्चसः ॥ ५१
अजश्च त्रिपथश्चैव वृषो वाजी नरो हयः । अंशुमान्सप्तधातुश्च हंसो व्योममृगस्तथा ॥ ५२
इत्येते नामभिश्चैव दश चन्द्रमसो हयाः । एवं चन्द्रमसं देवं वहन्ति स्माऽऽयुगक्षयम् ॥
देवैः परिवृतः सोमः पितृभिः सह गच्छति । सोमस्य शुक्लपक्षादौ भास्करे परतः स्थिते ॥ ५४
आपूर्यते परो भागः सोमस्य तु अहःक्रमात् । ततः पीतक्षयं सोमं युगपद्व्यापयन्रविः ॥ ५५
पीतं पञ्चदशाहं च रश्मिनैकेन भास्करः । आपूरयन्ददौ तेन भागं भागमहःक्रमात् ॥ ५६
सुषुम्नाप्यायमानस्य शुक्ले वर्धन्ति वै कलाः । तस्माद्ध्रसन्ति वै कृष्णे शुक्ले ह्याप्यायन्ति च ॥ ५७
इत्येवं सूर्यवीर्येण चन्द्रस्याऽऽप्यायते तनुः । पौर्णमास्यां प्रदृश्येत शुक्लः संपूर्णमण्डलः ॥ ५८
एवमाप्यायते सोमः शुक्लपक्षेष्वहःक्रमात् । ततो द्वितीयाप्रभृति बहुलस्य चतुर्दशी ॥ ५९
अपां सारमयस्येन्दो रसमात्रात्मकस्य च । पिबन्त्यम्बुमयं देवा मधु सौम्यं तथाऽमृतम् ॥ ६०

---

* अत्राऽऽत्मनेपदमार्षम् ।

---

१ क. ख. 'भिश्चाप्यमृते' । २ क ख. मासे स्वाहाभिः । ३ ग. सूयाश्रय त' । ४ घ. ङ. सतारैः । ५ ग. 'हन्ति स्म यु' । ५ ग, 'हःक्षयात् । त' ।

संभृतं त्वर्धमासेन अमृतं सूर्यतेजसा । भक्षार्थमागतं सोमं पौर्णमास्यामुपासते ॥ ६१
एकरात्रं सुराः सार्धं पितृभिर्ऋषिभिश्च वै । सोमस्य कृष्णपक्षादौ भास्कराभिमुखस्य वै ॥
प्रक्षीयते पर ह्यात्मा पीयमानकलाक्रमात् । त्रयश्च त्रिंशता सार्धं त्रयस्त्रिंशच्छतानि तु ॥
त्रयस्त्रिंशत्सहस्राणि देवाः सोमं पिबन्ति वै । इत्येवं पीयमानस्य कृष्णे वर्धन्ति ताः कलाः
क्षीयन्ते च ततः शुक्लाः कृष्णा ह्याप्याययन्ति च । एवं दिनक्रमात्पीते देवैश्चापि निशाकरे ॥
पीत्वाऽर्धमासं गच्छन्ति अमावास्यां सुराश्च ते । पितरश्चोपतिष्ठन्ति अमावास्यां निशाकरम् ।
ततः पञ्चदशे भागे किंचिच्छेषे निशाकरे । ततोऽपराह्णे पितरो जघन्यदिवसे पुनः ॥ ६७
पिबन्ति द्विकलं कालं शिष्टास्तास्तु कलास्तु याः । विनिःसृतं त्वमावास्यां गभस्तिभ्य-
स्तदाऽमृतम् ॥ ६८
अर्धमाससमाप्तौ तु पीत्वा गच्छन्ति तेऽमृतम् । सौम्या बर्हिषदश्चैव अग्निष्वात्ताश्च ये स्मृताः
काव्याश्चैव तु ये प्रोक्ताः पितरः सर्व एव ते । संवत्सराश्च ये काव्याः पञ्चाब्दा वै द्विजाः स्मृताः
सौम्याः सुतपसो ज्ञेयाः सौम्या बर्हिषदस्तथा । अग्निष्वात्तास्त्रयश्चैव पितृसर्गस्थिता द्विजाः॥
पितृभिः पीयमानायां पञ्चदश्यां तु वै कलाम् । यावच्च क्षीयते तस्माद्भागः पञ्चदशस्तु सः॥
अमावास्यां तथा तस्य अन्तरा पूर्यते परः । वृद्धिक्षयौ वै पक्षादौ षोडश्यां शशिनः स्मृतौ
एवं सूर्यनिमित्ते ते क्षयवृद्धी निशाकरे ॥ ७३

इति श्रीमात्स्ये महापुराणे भुवनकोशे सूर्यादिगमनं नाम षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ५८७८ ॥

अथ सप्तविंशत्यधिकशततमोऽध्यायः ।

सूत उवाच—

ताराग्रहाणां वक्ष्यामि स्वर्भानोस्तु रथं पुनः । अथ तेजोमयः शुभ्रः सोमपुत्रस्य वै रथः॥१
युक्तो हयैः पिशङ्गैस्तु दशभिर्वातरंहसैः । श्वेतः पिशङ्गः सारङ्गो नीलः श्यामो विलोहितः॥२
श्वेतश्च हरितश्चैव पृषतो वृष्णिरेव च । दशभिस्तु महाभागैरुत्तमैर्वातसंभवैः ॥ ३
ततो भौमरथश्चापि अष्टाङ्गः काञ्चनः स्मृतः । अष्टभिर्लोहितैरश्वैः सध्वजैरग्निसंभवैः ॥
सर्पतेऽसौ कुमारो वै ऋजुवक्रानुवक्रगः ॥ ४
अतश्चाऽऽङ्गिरसो विद्वान्देवाचार्यो बृहस्पतिः । गौराश्वेन तु रौक्मेण स्यन्दनेन विसर्पति ॥ ५
युक्तेनाष्टाभिरश्वैश्च ध्वजैरग्निसमुद्भवैः । अब्दं वसति यो राशौ स्वदिशं तेन गच्छति ॥ ६
युक्तेनाष्टाभिरश्वैश्च सध्वजैरग्निसंनिभैः । रथेन क्षिप्रवेगेण भार्गवस्तेन गच्छति ॥ ७
ततः शनैश्चरोऽप्यश्वैः सबलैर्वातरंहसैः । कार्ष्णायसं समारुह्य स्यन्दनं यात्यसौ शनिः ॥ ८
स्वर्भानोस्तु यथाऽष्टाश्वाः कृष्णा वै वातरंहसः । रथं तमोमयं तस्य वहन्ति स्म सुदंशिताः॥९
आदित्यनिलयो राहुः सोमं गच्छति पर्वसु । आदित्यमेति सोमाच्च तमसोऽन्तेषु पर्वसु ॥ १०
ततः केतुमतस्त्वश्वा अष्टौ ते वातरंहसः । पलालधूमवर्णाभाः क्षामदेहाः सुदारुणाः ॥ ११

१ ग. घ. ङ. च. सुरैः । २ ग. घ. ङ. च. कृष्णा । ३ क. ख. 'रो यदन्य'। ४ घ. 'वक्रानु वक्रगः'।

एते ब्रह्मा ग्रहाणां वै मया प्रोक्ता रथैः सह । सर्वे ध्रुवे निबद्धास्ते निबद्धा वातरश्मिभिः ॥१२
एते वै भ्राम्यमाणास्ते यथायोगं व्रजन्ति वै । वायव्याभिरदृश्याभिः प्रबद्धा वातरश्मिभिः १३
परिभ्रमन्ति तद्बद्धाश्चन्द्रसूर्यग्रहा दिवि । यावत्तमनुपर्येति ध्रुवं व ज्योतिषां गणः ॥ १४
यथा नद्युदके नौस्तु उदकेन सहोह्यते । तथा देवगृहाणि स्युरुह्यन्ते वातरंहसा ॥
तस्माद्यानि प्रगृह्यन्ते व्योम्नि देवगृहा इति ॥ १५
यावत्यश्चैव ताराः स्युस्तावन्तोऽस्य मरीचयः । सर्वा ध्रुवनिबद्धास्ता भ्रमन्त्यो भ्रामयन्ति च
तैलपीडं यथा चक्रं भ्रमते भ्रामयन्ति वै । तथा भ्रमन्ति ज्योतींषि वातबद्धानि सर्वशः ॥१७
अलातचक्रवद्यान्ति वातचक्रेरितानि तु । यस्मात्प्रवहते तानि प्रवहस्तेन स स्मृतः ॥ १८
एवं ध्रुवे नियुक्तोऽसौ भ्रमते ज्योतिषां गणः । एष तारामयः प्रोक्तः शिशुमारे ध्रुवो दिवि॥१९
यदह्ना कुरुते पापं तं दृष्ट्वा निशि मुञ्चति । शिशुमारशरीरस्था यावत्यस्तारकास्तु ताः ॥ २०
वर्षाणि दृष्ट्वा जीवेत तावदेवाधिकानि तु । शिशुमाराकृतिं ज्ञात्वा प्रविभागेन सर्वशः ॥ २१
उत्तानपादस्तस्याथ विज्ञेयः सोत्तरो हनुः । यज्ञोऽधरस्तु विज्ञेयो धर्मो मूर्धानमाश्रितः ॥ २२
हृदि नारायणः साध्या अश्विनौ पूर्वपादयोः । वरुणश्चार्यमा चैव पश्चिमे तस्य सक्थिनी २३
शिश्ने संवत्सरो ज्ञेयो मित्रश्चापानमाश्रितः । पुच्छेऽग्निश्च महेन्द्रश्च मरीचिः कश्यपो ध्रुवः २४
एष तारामयः स्तम्भो नास्तमेति न चोदयम् । नक्षत्रचन्द्रसूर्याश्च ग्रहास्तारागणैः सह ॥ २५
तन्मुखाभिमुखाः सर्वे चक्रभूता दिवि स्थिताः । ध्रुवेणाधिष्ठिताश्चैव ध्रुवमेव प्रदक्षिणम्॥२६
परियान्ति सुरश्रेष्ठं मेढीभूतं ध्रुवं दिवि । आग्नीध्रकाश्यपानां तु तेषां स परमो ध्रुवः ॥ २७
एक एव भ्रमत्येष मेरोरन्तरमूर्धनि । ज्योतिषां चक्रमादाय आकर्षंस्तमधोमुखः ॥ २८
मेरुमालोकयन्नेव प्रतियाति प्रदक्षिणम् ॥ २९

इति श्रीमात्स्ये महापुराणे भुवनकोशे ध्रुवप्रशंसा नाम सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ५९०७ ॥

---

अथाष्टाविंशत्यधिकशततमोऽध्यायः ।

---

ऋषय ऊचुः—

यदेतद्भवता प्रोक्तं श्रुतं सर्वमशेषतः । कथं देवगृहाणि स्युः पुनर्ज्योतींषि वर्णय ॥ १

सूत उवाच—

एतत्सर्वं प्रवक्ष्यामि सूर्याचन्द्रमसोर्गतिम् । यथा देवगृहाणि स्युः सूर्याचन्द्रमसोस्तथा ॥ २
अग्नेर्व्युष्टौ रजन्यां वै ब्रह्मणाऽव्यक्तयोनिना । अव्याकृतमिदं त्वासीन्नैशेन तमसा वृतम् ॥ ३
चतुर्भूतावशिष्टेऽस्मिन्ब्रह्मणा समधिष्ठिते । स्वयंभूर्भगवांस्तत्र लोकतत्त्वार्थसाधकः ॥ ४
खद्योतरूपी विचरन्नाविर्भावं व्यचिन्तयत् । ज्ञात्वाऽग्निं कल्पकालादावपः पृथ्वीं च संश्रिताः
स संभृत्य प्रकाशार्थं त्रिधा तुल्योऽभवत्पुनः । पाचको यस्तु लोकेऽस्मिन्पार्थिवः सोऽग्निरुच्यते ॥ ६

---

१ ग. घ. च. वाताविद्धा° । २ ग °ह्मणोऽव्यक्तजन्मनः । अ° । ३ ग. घ. ङ. °रूपो वि° । ४ ग. च. °त्वा गिरिं तु कल्पादा° । ङ. °त्वाऽग्निः स तु कालादावापः । ५ ग. संश्रिताम् । ङ. संस्मृतम् । ६ ग. पावको ।

पश्चासौ तपते सूर्ये शुचिरग्निश्च स स्मृतः । वैद्युतो जाठरः सौम्यो वैद्युतश्चाप्यबिन्धनः ॥ ७
तेजोभिश्चाऽऽप्यते ऋश्चित्कश्चिदेवाप्यनिन्धनः। काष्ठेन्धनस्तु निर्मथ्यः सोऽद्भिः शाम्याते पावकः ॥ ८
अर्चिष्मान्पवनोऽग्निस्तु निष्प्रभः सौम्यलक्षणः। यश्चासौ मण्डले शुक्ले निरूष्मा न प्रकाशते
प्रभा सौरी तु पादेन अस्तं याति दिवाकरे। अग्निमाविशते रात्रौ तस्मादग्निः प्रकाशते ॥ १०
उदिते तु पुनः सूर्ये ऊष्माऽग्नेस्तु समाविशत्। पादेन तेजसश्चाग्नेस्तस्मात्संतपते दिवा ॥ ११
प्राकाश्यं च तथौष्ण्यं च सौर्याग्नेये तु तेजसी। परस्परानुप्रवेशादाप्यायेते दिवानिशम् ॥ १२
उत्तरे चैव भूम्यर्धे तथा ह्यस्मिंस्तु दक्षिणे। उत्तिष्ठति पुनः सूर्ये रात्रिराविशते ह्यपः ॥ १३
तस्मात्ताम्रा भवन्त्यापो दिवारात्रिप्रवेशनात्। अस्तं गते पुनः सूर्ये अहर्वै प्रविशत्यपः॥ १४
तस्मान्नक्तं पुनः शुक्ला ह्यापो दृश्यन्ति भासुराः। एतेन क्रमयोगेण भूम्यर्धे दक्षिणोत्तरे ॥ १५
उदयास्तमये ह्यत्र अहोरात्रं विशत्यपः । यश्चासौ तपते सूर्यः सोऽपः पिबति रश्मिभिः १६
सहस्रपादस्त्वेषोऽग्नी रक्तकुम्भनिभस्तु सः । आदत्ते स तु नाडीनां सहस्रेण समन्ततः १७
अपो नदीसमुद्रेभ्यो ह्रदकूपेभ्य एव च । तस्य रश्मिसहस्रेण शीतवर्षोष्णनिःस्रवः॥ १८
तासां चतुःशतं नाड्यो वर्षन्ते चित्रमूर्तयः । चन्दनाश्चैव मेध्याश्च केतनाश्चेतनास्तथा १९
अमृता जीवनाः सर्वा रश्मयो वृष्टिसर्जनाः। हिमोद्वहाश्च तेऽन्योन्यं रश्मयस्त्रिशतः स्मृताः
चन्द्रताराग्रहैः सर्वैः पीता भानोर्गभस्तयः ॥ २०
एता मध्यास्तथाऽन्याश्च ह्लादिन्यो हिमसर्जनाः। शुक्लाश्च ककुभश्चैव गावो विश्वंसृतश्च याः
शुक्लास्ता नामतः सर्वास्त्रिशतो घर्मसर्जनाः। संबिभ्रति हि ताः सर्वा मनुष्यान्देवताः पितॄन्
मनुष्यानोषधीभिश्च स्वधया च पितॄनपि । अमृतेन सुरान्सर्वान्संततं परितर्पयन् ॥ २३
वसन्ते चैव ग्रीष्मे च शनैः संतपते त्रिभिः । वर्षासु च शरद्येवं चतुर्भिः संप्रवर्षति ॥ २४
हेमन्ते शिशिरे चैव हिमोत्सर्गस्त्रिभिः पुनः । ओषधीषु बलं धत्ते सुधां च स्वधया पुनः॥
सूर्योऽमरत्वममृते त्रयस्त्रिषु नियच्छति । एवं रश्मिसहस्रं तु सौरं लोकार्थसाधकम् ॥ २६
भिद्यते ऋतुमासाद्य सहस्रं बहुधा पुनः। इत्येवं मडण्लं शुक्लं भास्वरं लोकसंज्ञितम् ॥ २७
नक्षत्रग्रहसोमानां प्रतिष्ठा योनिरेव च। चन्द्र ऋक्षग्रहाः सर्वे विज्ञेयाः सूर्यसंभवाः ॥ २८
सुषुम्ना सूर्यरश्मिर्या क्षीणं शशिनमेधते। हरिकेशः पुरस्तात्तु यो वै नक्षत्रयोनिकृत् ॥ २९
दक्षिणे विश्वकर्मा तु रश्मिराप्याययद्बुधम्। विश्वावसुश्च यः पश्चाच्छुक्रयोनिश्च स स्मृतः॥
संवर्धनस्तु यो रश्मिः स योनिर्लोहितस्य च। षष्ठस्तु ह्यश्वभू रश्मिर्योनिः स हि बृहस्पतेः॥३१
शनैश्चरं पुनश्चापि रश्मिराप्यायते सुराट्। न क्षीयते यतस्तानि तस्मान्नक्षत्रता स्मृता ॥ ३२
क्षेत्राण्येतानि वै सूर्यमापतन्ति गभस्तिभिः। क्षेत्राणि तेषामादत्ते सूर्यो नक्षत्रता ततः ॥३३

---

१ ग सोऽग्निः शाम्यति वारिणा । अ° । २ ग. °ष्मान्पावकोऽद्भिस्तु । ३ घ. ङ. °पवनोऽद्भिस्तु । ४ ग. °र्थे अस्तमग्निं समाविशेत्। पा° । घ. °र्ये औष्ण्यमग्नेः स° । ५ क. ख. °त्रि मावि° । ६ ग. ङ. °ग्रहाः सर्वे पी° । ७ ग. ङ. °श्वभृत° । ८ ग. च. भासुरं । ङ. भास्करं । ९ घ. °केशा पुनः सा तु या स न° । १० ग. ङ. च. पुनस्तासु यः सन° । ११ ग. °निहृत् । द° ।

अस्माल्लोकादमुं लोकं तीर्णानां सुकृतात्मनाम् । तारणात्तारका ह्येताः शुक्लत्वाच्चैव शुक्लिकाः
दिव्यानां पार्थिवानां च वंशानां चैव सर्वशः । तपनस्तेजसो योगादादित्य इति गद्यते ॥ ३५
स्रवतिः स्यन्दनार्थे च धातुरेष निगद्यते । स्रवणात्तेजसश्चैव तेनासौ सविता स्मृतः ॥ ३६
बह्वर्थश्चन्द इत्येष प्रधानो धातुरुच्यते । शुक्लत्वे ह्यमृतत्वे च शीतत्वे ह्लादनेऽपि च ॥ ३७
सूर्याचन्द्रमसोर्दिव्ये मण्डले भास्वरे खगे । जलतेजोमये शुक्ले वृत्तकुम्भनिभे शुभे ॥ ३८
वसन्ति कर्मदेवास्तु स्थानान्येतानि सर्वशः । मन्वन्तरेषु सर्वेषु ऋक्षसूर्यग्रहादयः ॥ ३९
तानि देवगृहाणि स्युः स्थानाख्यानि भवन्ति हि । सौरं सूर्योऽविशत्स्थानं सौम्यं सोमस्त-
थैव च ॥ ४०
शौक्रं शुक्रोऽविशत्स्थानं षोडशारं प्रभास्वरम् । बृहस्पतिर्बृहत्त्वं च लोहितं चापि लोहितः ॥
शनैश्चरोऽविशत्स्थानमेवं शानैश्चरं तथा । बुधोऽपि वै बुधस्थानं भानुं स्वर्भानुरेव च ॥ ४२
नक्षत्राणि च सर्वाणि नाक्षत्राण्याविशन्ति च । ज्योतींषि सुकृतामेते ज्ञेया देवगृहास्तु वै ॥
स्थानान्येतानि तिष्ठन्ति यावदाभूतसंप्लवम् । मन्वन्तरेषु सर्वेषु देवस्थानानि तानि वै ॥ ४४
अभिमानेन तिष्ठन्ति तानि देवाः पुनः पुनः । अतीतास्तु सहातीतैर्भाव्या भाव्यैः सुरैः सह ॥
वर्तन्ते वर्तमानैश्च सुरैः सार्धं तु स्थानिनः । सूर्यो देवो विवस्वांश्च अष्टमस्त्वदितेः सुतः ॥ ४६
द्युतिमान्धर्मयुक्तश्च सोमो देवो वसुः स्मृतः । शुक्रो दैत्यस्तु विज्ञेयो भार्गवोऽसुरयाजकः ॥
बृहस्पतिर्बृहत्तेजा देवाचार्योऽङ्गिरःसुतः । बुधो मनोहरश्चैव शशिपुत्रस्तु स स्मृतः ॥ ४८
शनैश्चरो विरूपश्च संज्ञापुत्रो विवस्वतः । अग्निर्विकेश्यां जज्ञे तु युवाऽसौ लोहिताधिपः ॥४९
नक्षत्रनाम्न्यः क्षेत्रेषु दाक्षायण्यः सुताः स्मृताः । स्वर्भानुः सिंहिकापुत्रो भूतसंसाधनोऽसुरः
चन्द्रार्कग्रहनक्षत्रेष्वभिमानी प्रकीर्तितः । स्थानान्येतानि चोक्तानि स्थानिन्यश्चैव देवताः ॥
शुक्लमग्निसमं दिव्यं सहस्रांशोर्विवस्वतः । सहस्रांशुत्विषः स्थानमम्मयं तैजसं तथा ॥ ५२
आपोस्थानं मनोज्ञस्य रविरश्मिगृहे स्थितम् । शुक्रः षोडशरश्मिस्तु यस्तु देवो ह्यपोमयः ॥
लोहितो नवरश्मिस्तु स्थानमाप्यं तु तस्य वै । बृहद्द्वादशरश्मीकं हरिद्राभं तु वेधसः ॥ ५४
अष्टरश्मिशनेस्तत्तु कृष्णं वृद्धमयस्मयम् । स्वर्भानोस्त्वायसं स्थानं भूतसंतापनालयम् ॥ ५५
सुकृतामाश्रयास्तारा रश्मयस्तु हिरण्मयाः । तारणात्तारका ह्येताः शुक्लत्वाच्चैव तारकाः ॥
नवयोजनसाहस्रो विष्कम्भः सवितुः स्मृतः । मण्डलं त्रिगुणं चास्य विस्तारो भास्करस्य तु॥
द्विगुणः सूर्यविस्ताराद्विस्तारः शशिनः स्मृतः । त्रिगुणं मण्डलं चास्य वैपुल्याच्छशिनः
स्मृतम् ॥ ५८
सर्वोपरि निसृष्टानि मण्डलानि तु तारकाः । योजनार्धप्रमाणानि ताभ्योऽन्यानि गणानि तु॥
तुल्यो भूत्वा तु स्वर्भानुस्तदधस्तात्प्रसर्पति । उद्धृत्य पार्थिवीं छायां निर्मितां मण्डलाकृतिम्
ब्रह्मणा निर्मितं स्थानं तृतीयं तु तमोमयम् । आदित्यात्स तु निष्क्रम्य सोमं गच्छति पर्वसु ॥

---

१ ग. घ. च. ऋक्षसूर्यग्रहाश्रयात् । ता° । ङ. ऋक्षसूर्यग्रहाश्रयाः । ता° । २ ग. घ. च. °तिर्वैधरश्च दे° । ३ ग. घ. तु सुधासौरार्चितोऽधि° । ४ ग. घ. च. °था । अशाश्वतं म° । ५ ङ. आस्थानं तन्मनो° । ६ ङ. °णो द्युमान्स्वयम् । लो° । ७ घ. ह्यपां स्वयम् । लो° । ८ क. ख. °मापं तु । ९ ग. च. °रिताभं तु वेधसम् । अ° । १० ग. ङ. च. °रिमकुमारं तु कृ° । ११ ग. च. °द्धस्य चामय° । १२ घ सुहृदामा° ।

आदित्यमेति सोमाच्च पुनः सौरेषु पर्वसु। स्वभासा तुदते यस्मात्स्वर्भानुरिति स स्मृतः ॥ ६२
चन्द्रतः षोडशो भागो भार्गवस्य विधीयते। विष्कम्भान्मण्डलाच्चैव योजनानां तु स स्मृतः
भार्गवात्पादहीनश्च विज्ञेयो वै बृहस्पतिः। बृहस्पतेः पादहीनौ केतुवक्रावुभौ स्मृतौ ॥ ६४
विस्तारमण्डलाभ्यां तु पादहीनस्तयोर्बुधः। तारानक्षत्ररूपाणि वपुष्मन्तीह यानि वै ॥ ६५
बुधेन समरूपाणि विस्तारान्मण्डलात्तु वै। तारानक्षत्ररूपाणि हीनानि तु परस्परम् ॥ ६६
शतानि पञ्च चत्वारि त्रीणि द्वे चैकमेव च। सर्वोपरि निसृष्टानि मण्डलानि तु तारकाः ॥ ६७
योजनार्धप्रमाणानि तेभ्यो ह्रस्वं न विद्यते। उपरिष्टात्तु ये तेषां ग्रहा ये क्रूरसात्त्विकाः ॥ ६८
सौरश्चाऽऽङ्गिरसो वक्रो विज्ञेया मन्दचारिणः। तेभ्योऽधस्तात्तु चत्वारः पुनश्चान्ये महाग्रहाः
सोमः सूर्यो बुधश्चैव भार्गवश्चेति शीघ्रगाः। यावन्ति चैव ऋक्षाणि कोटयस्तावन्ति तारकाः
सर्वेषां तु ग्रहाणां वै सूर्योऽधस्तात्प्रसर्पति। विस्तीर्णं मण्डलं कृत्वा तस्योर्ध्वं चरते शशी॥७१
नक्षत्रमण्डलं चापि सोमादूर्ध्वं प्रसर्पति। नक्षत्रेभ्यो बुधश्चोर्ध्वं बुधाच्चोर्ध्वं तु भार्गवः ॥ ७२
वक्रस्तु भार्गवादूर्ध्वं वक्रादूर्ध्वं बृहस्पतिः। तस्माच्छनैश्चरश्चोर्ध्वं देवाचार्योपरि स्थितः ॥७३
शनैश्चरात्तथा चोर्ध्वं ज्ञेयं सप्तर्षिमण्डलम्। सप्तर्षिभ्यो ध्रुवश्चोर्ध्वं समस्तं त्रिदिवं ध्रुवे ॥ ७४
द्विगुणेषु सहस्रेषु योजनानां शतेषु च। ग्रहान्तरमथैकैकमूर्ध्वं नक्षत्रमण्डलात् ॥ ७५
ताराग्रहान्तराणि स्युरुपर्युपर्यधिष्ठितम्। ग्रहाश्च चन्द्रसूर्यौ च दिवि दिव्येन तेजसा ॥ ७६
नक्षत्रेषु च युज्यन्ते गच्छन्तो नियतक्रमात्। चन्द्रार्कग्रहनक्षत्रा नीचोच्चगृहमाश्रिताः ॥ ७७
समागमे च भेदे च पश्यन्ति युगपत्प्रजाः। परस्परं स्थिता ह्येवं युज्यन्ते च परस्परम् ॥ ७८
असंकरेण विज्ञेयस्तेषां योगस्तु वै बुधैः। इत्येवं संनिवेशो वै पृथिव्या ज्योतिषां च यः ॥ ७९
द्वीपानामुदधीनां च पर्वतानां तथैव च। वर्षाणां च नदीनां च ये च तेषु वसन्ति वै ॥ ८०
इत्येषोऽर्कवशेनैव संनिवेशस्तु ज्योतिषाम्। आवर्तः सान्तरो मध्ये संक्षिप्तश्च ध्रुवात्तु सः ॥
सर्वतस्तेषु विस्तीर्णो वृत्ताकार इवोच्छ्रितः। लोकसंव्यवहारार्थमीश्वरेण विनिर्मितः ॥ ८२
कल्पादौ बुद्धिपूर्वं तु स्थापितोऽसौ स्वयंभुवा। इत्येष संनिवेशो वै सर्वस्य ज्योतिरात्मकः॥
वैश्वरूपं प्रधानस्य परिणाहोऽस्य यः स्मृतः। तेषां शक्यं न संख्यातुं याथातथ्येन केनचित् ॥
गतागतं मनुष्येण ज्योतिषां मांसचक्षुषा ॥ ८४

इति श्रीमात्स्ये महापुराणे भुवनकोशे देवग्रहवर्णनं नामाष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ५९९१ ॥

---

अथैकोनत्रिंशदधिकशततमोऽध्यायः।

---

ऋषय ऊचुः—

कथं जगाम भगवान्पुरारित्वं महेश्वरः। ददाह च कथं देवस्तन्नो विस्तरतो वद ॥ १
पृच्छामस्त्वां वयं सर्वे बहुमानात्पुनः पुनः। त्रिपुरं तद्यथा दुर्गं मयमायाविनिर्मितम् ॥
देवेनैकेषुणा दग्धं तथा नो वद मानद ॥ २

---

१ ग. 'नौ भौमसौरावु॰'। ङ. 'नौ शुक्रसौरावु॰'।

सूत उवाच—

शृणुध्वं त्रिपुरं देवो यथा दारितवान्भवः । मयो नाम महामायो मायानां जनकोऽसुरः ॥
निर्जितः स तु सङ्ग्रामे ततापपरमं तपः । तपस्यन्तं तु तं विप्रा दैत्यावन्यावनुग्रहात् ॥ ४
तस्यैव कृत्यमुद्दिश्य तेपतुः परमं तपः । विद्युन्माली च बलवांस्तारकाख्यश्च वीर्यवान् ॥
मयतेजःसमाक्रान्तौ तेपतुर्मयपार्श्वगौ । लोका इव यथा मूर्तास्त्रयस्त्रय इवाग्नयः ॥ ६
लोकत्रयं तापयन्तस्ते तेपुर्दानवास्तपः । हेमन्ते जलशय्यासु ग्रीष्मे पञ्चतपे तथा ॥ ७
वर्षासु च तथाऽऽकाशे क्षपयन्तस्तनूः प्रियाः । सेवानाः फलमूलानि पुष्पाणि च जलानि च
अन्यदा(थाऽ)चरिताहाराः पङ्केनाऽऽचितवल्कलाः । मग्नाः शैवालपङ्केषु विमलाविमलेषु च
निर्मांसाश्च ततो जाताः कृशा धमनिसंतताः । तेषां तपःप्रभावेन प्रभावविधुतं यथा ॥ १०
निष्प्रभं तु जगत्सर्वं मन्दमेवाभिभाषितम् । दह्यमानेषु लोकेषु तैस्त्रिभिर्दानवाग्निभिः ॥ ११
तेषामग्रे जगद्बन्धुः प्रादुर्भूतः पितामहः । ततः साहसकर्तारः प्राहुस्ते सहसागतम् ॥ १२
स्वकं पितामहं दैत्यास्तं वै तुष्टुवुरेव च । अथ तान्दानवान्ब्रह्मा तपसा तपनप्रभान् ॥ १३
उवाच हर्षपूर्णाक्षो हर्षपूर्णमुखस्तदा । वरदोऽहं हि वो वत्सास्तपस्तोषित आगतः ॥ १४
व्रियतामीप्सितं यच्च साभिलाषं तदुच्यताम् । इत्येवमुच्यमानास्तु प्रतिपन्नं पितामहम् ॥ १५
विश्वकर्मा मयः प्राह प्रहर्षोत्फुल्ललोचनः । देव दैत्याः पुरा देवैः सङ्ग्रामे तारकामये ॥ १६
निर्जितास्ताडिताश्चैव हताश्चाप्यायुधैरपि । देवैर्वैरानुबन्धाच्च धावन्तो भयवेपिताः ॥ १७
शरणं नैव जानीमः शर्म वा शरणार्थिनः । सोऽहं तपःप्रभावेन तव भक्त्या तथैव च ॥ १८
इच्छामि कर्तुं तद्दुर्गं यद्देवैरपि दुस्तरम् । तस्मिंश्च त्रिपुरे दुर्गे मत्कृते कृतिनां वर ॥ १९
भूम्यानां जलजानां च शापानां मुनितेजसाम् । देवप्रहरणानां च देवानां च प्रजापते ॥ २०
अलङ्घनीयं भवतु त्रिपुरं यदि ते प्रियम् । विश्वकर्मा इतीवोक्तः स तदा विश्वकर्मणा ॥ २१
उवाच प्रहसन्वाक्यं मयं दैत्यगणाधिपम् । सर्वामरत्वं नैवास्ति असद्वृत्तस्य दानव ॥ २२
तस्माद्दुर्गविधानं हि क्षणादपि विधीयताम् । पितामहवचः श्रुत्वा तदेवं दानवो मयः ॥ २३
प्राञ्जलिः पुनरप्याह ब्रह्माणं पद्मसंभवम् । यस्तदेकेषुणा दुर्गं सकृन्मुक्तेन निर्दहेत् ॥ २४
समं स संयुगे हन्यादवध्यं शेषतो भवेत् । एवमस्त्विति चाप्युक्त्वा मयं देवः पितामहः ॥ २५
स्वप्ने लब्धो यथाऽर्थो वै तत्रैवादर्शनं ययौ । गते पितामहे दैत्या गता मयरविप्रभाः ॥ २६
वरदानाद्विरेजुस्ते तपसा च महाबलाः । स मयस्तु महाबुद्धिर्दानवो वृषसत्तमः ॥ २७
दुर्गं व्यवसितः कर्तुमिति चाचिन्तयत्तदा । कथं नाम भवेद्दुर्गं तन्मया त्रिपुरं कृतम् ॥ २८
वर्त्स्यते तत्पुरं दिव्यं मत्तो नान्यैर्न संशयः । यथा चैकेषुणा तेन तत्पुरं न हि हन्यते ॥ २९
देवैस्तथा विधातव्यं मया मतिविचारणम् । विस्तारो योजनशतमेकैकस्य पुरस्य तु ॥ ३०
कार्यस्तेषां च विष्कम्भश्चैकैकशतयोजनम् । पुष्ययोगेण निर्माणं पुराणं च भविष्यति ॥ ३१

---

१ ग. °हातेजा माया° । २ ग. दृष्टा । ३ ग. °स्तेपुस्ते दितिनन्दनाः । हें° । ४ ग. च. °तस्तथा । ५ ग. मेवन्तः । ६ ग. घ. ङ. च. °रः सहसं स° । ७ क. ख. °मानं तु प्र° । ८ ग. प्रयताः प्रपि° । ९ ग. घ. दुर्गमम् । त° । १० क. ख. तृणादपि । ११ ग. च. ब्रह्मसंभवः य° । १२ क. ख. °म् । शंभुरेके° । १३ ग. °वो बुद्धिम° । १४ ख. वत्स्यं हित° । ग वत्स्यन्ते । १५ ग. घ. °राणां च ।

पुष्ययोगेण च दिवि समेष्यन्ति परस्परम् । पुष्ययोगेण युक्तानि यस्तान्यासादयिष्यति ॥३२
पुराण्येकप्रहारेण शतानि निहनिष्यति । आयसं तु क्षितितले राजतं तु नभस्तले ॥ ३३
राजतस्योपरिष्टात्तु सौवर्णं भविता पुरम् । एवं त्रिभिः पुरैर्युक्तं त्रिपुरं तद्भविष्यति ॥
शतयोजनविष्कम्भैरन्तरैस्तद्दुरासदम् ॥ ३४

अट्टालकैर्यन्त्रशतघ्निभिश्च सचक्रशूलोपलकम्पनैश्च ।
द्वारैर्महामन्दरमेरुकल्पैः प्राकारशृङ्गैः सुविराजमानम् ॥ ३५
सतारकाख्येन मयेन गुप्तं स्वस्थं च गुप्तं तडिन्मालिनाऽपि ।
को नाम हन्तुं त्रिपुरं समर्थो मुक्त्वा त्रिनेत्रं भगवन्तमेकम् ॥ ३६

इति श्रीमात्स्ये महापुराणे त्रिपुरोपाख्याने एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ६०२७ ॥

---

अथ त्रिंशदधिकशततमोऽध्यायः ।

---

सूत उवाच—

इति चिन्तायुतो दैत्यो दिव्योपायप्रभावजम् । चकार त्रिपुरं दुर्गं मनःसंचारचारितम् ॥ १
प्राकारोऽनेन मार्गेण इह वाऽमुत्र गोपुरम् । इह चाट्टालकद्वारमिह चाट्टालगोपुरम् ॥ २
राजमार्ग इतश्चापि विपुलो भवतामिति । रथ्योपरथ्याः संन्निका इह चत्वर एव च ॥ ३
इदमन्तःपुरस्थानं रुद्रायतनमत्र च । सवटानि तडागानि ह्यत्र वाप्यः सरांसि च ॥ ४
आरामाश्च सभाश्चात्र उद्यानान्यत्र वा तथा । उपनिर्गमो दानवानां भवत्यत्र मनोहरः ॥ ५
इत्येवं मानसं तत्राकल्पयत्पुरकल्पवित् । मयेन तत्पुरं सृष्टं त्रिपुरं त्विति नः श्रुतम् ॥ ६
कार्ष्णायसमयं यत्तु मयेन विहितं पुरम् । तारकाख्योऽधिपस्तत्र कृतस्थानाधिपोऽवसत् ॥ ७
यत्तु पूर्णेन्दुसंकाशं राजतं निर्मितं पुरम् । विद्युन्माली प्रभुस्तत्र विद्युन्माली त्विवाम्बुदः ॥ ८
सुवर्णाधिकृतं यच्च मयेन विहितं पुरम् । स्वयमेव मयस्तत्र गतस्तदधिपः प्रभुः ॥ ९
तारकस्य पुरं तत्र शतयोजनमन्तरम् । विद्युन्मालिपुरं चापि शतयोजनकेऽन्तरे ॥ १०
मेरुपर्वतसंकाशं मयस्यापि पुरं महत् । पुष्यसंयोगमात्रेण कालेन स मयः पुरा ॥ ११
कृतवांस्त्रिपुरं दैत्यस्त्रिनेत्रः पुष्पकं यथा । येन येन मयो याति प्रकुर्वाणः पुरं पुरात् ॥ १२
प्रशस्तास्तत्र तत्रैवं वारुण्यामालयाः स्वयम् । रुक्मरूप्यायसानां च शतशोऽथ सहस्रशः ॥
रत्नाचितानि शोभन्ते पुराण्यमरविद्विषाम् । प्रासादशतजुष्टानि कूटागारोत्कटानि च ॥ १४
सर्वेषां कामगानि स्युः सर्वलोकातिगानि च । सोद्यानवापीकूपानि सपद्मसरवन्ति च ॥ १५
अशोकवनभूतानि कोकिलारुतवन्ति च । चित्रशालाविशालानि चतुःशालोत्तमानि च ॥
सप्ताष्टदशभौमानि सत्कृतानि मयेन च । बहुध्वजपताकानि स्रग्दामालंकृतानि च ॥ १७

---

१ क घ. 'डिमालि' । २ क. ख घ. चिन्त्य मयो दै' । ३ क. सदृशा । ४ ग. घ. ङ. च. प्रतस्थे तत्र । ५ ङ. 'व धारण्या' । ६ ग. 'रुण्यः संनिधिः स्व° । ७ च. 'लधिः स्त्र' । ८ ग. घ. °श । यत्नात्कृता° । ९ ङ. रत्न-चित्राणि शो° । १० ग. 'प्रसव' ।

किङ्किणीजालशब्दानि गन्धवन्ति महान्ति च। सुसंयुक्तोपलिप्तानि पुष्पनैवेद्यवन्ति च॥
यज्ञधूमान्धकाराणि संपूर्णकलशानि च। गगनावरणाभानि हंसपङ्क्तिनिभानि च ॥१९
पङ्क्तीकृतानि राजन्ते गृहाणि त्रिपुरे पुरे। मुक्ताकलापैर्लम्बद्भिर्हसन्तीव शशिश्रियम् ॥
मल्लिकाजातिपुष्पाद्यैर्गन्धधूपाधिवासितैः। पञ्चेन्द्रियसुखैर्नित्यं समैः सत्पुरुषैरिव ॥ २१
हेमराजतलोहाद्यमणिरत्नाञ्जनाङ्किताः। प्राकारास्त्रिपुरे तस्मिन्गिरिप्राकारसंनिभाः ॥ २२
एकैकस्मिन्पुरे तस्मिन्गोपुराणां शतं शतम्। सपताकाध्वजवतां दृश्यन्ते गिरिशृङ्गवत्॥२३
नूपुरारावरम्याणि त्रिपुरे तत्पुराण्यपि । स्वर्गातिरिक्तश्रीकाणि तत्र कन्यापुराणि च॥२४
आरामैश्च विहारैश्च तडागवटचत्वरैः। सरोभिश्च सरिद्भिश्च वनैश्चोपवनैरपि ॥ २५
दिव्यभोगोपभोगानि नानारत्नयुतानि च। पुष्पोत्करैश्च सुभगास्त्रिपुरस्योपनिर्गमाः ॥
परिखाशतगम्भीराः कृता मायानिवारणैः ॥ २६

निशम्य तद्दुर्गविधानमुत्तमं कृतं मयेनाद्भुतवीर्यकर्मणा ।
दितेः सुता दैवतराजवैरिणः सहस्रशः प्रापुरनन्तविक्रमाः ॥ २७
तदासुरैर्दर्पितवैरिमर्दनैर्जनार्दनैः शैलकरीन्द्रसंनिभैः ।
बभूव पूर्णं त्रिपुरं तथा पुरा यथाऽम्बरं भूरिजलैर्जलप्रदैः ॥ २८

इति श्रीमात्स्ये महापुराणे त्रिपुरोपाख्याने त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ६०५५ ॥

---

अथैकत्रिंशदधिकशततमोऽध्यायः ।

---

सूत उवाच—
निर्मिते त्रिपुरे दुर्गे मयेनासुरशिल्पिना । तद्दुर्गं दुर्गतां प्राप बद्धवैरैः सुरासुरैः ॥ १
सकलत्राः सपुत्राश्च शस्त्रवन्तोऽन्तकोपमाः। मयादिष्टानि विविशुर्गृहाणि हृषिताश्च ते ॥२
सिंहा वनमिवानेके मकरा इव सागरम्। रोषैश्चैवातिपारुष्यैः शरीरमिव संहतैः ॥ ३
तद्वद्बलिभिरध्यस्तं तत्पुरं देवतारिभिः । त्रिपुरं संकुलं जातं दैत्यकोटिशताकुलम् ॥ ४
सुतलादपि निष्पत्य पातालाद्दानवालयात्। उपतस्थुः पयोदाभा ये च गिर्युपजीविनः ॥५
यो यं प्रार्थयते कामं संप्राप्तस्त्रिपुराश्रयात्। तस्य तस्य मयस्तत्र मायया विदधाति सः ॥६
सचन्द्रेषु प्रदोषेषु साम्बुजेषु सरःसु च। आरामेषु सचूतेषु तपोधनवनेषु च ॥ ७
स्वङ्गाश्चन्दनदिग्धाङ्गा मातङ्गाः समदा इव। मृष्टाभरणवस्त्राश्च मृष्टस्रगनुलेपनाः ॥ ८
प्रियाभिः प्रियकामाभिर्हावभावप्रसूतिभिः। नारीभिः सततं रेमुर्मुदिताश्चैव दानवाः ॥ ९
मयेन निर्मिते स्थाने मोदमाना महासुराः। अर्थे धर्मे च कामे च निदधुस्ते मतीः स्वयम्॥
तेषां त्रिपुरयुक्तानां त्रिपुरे त्रिदशारिणाम्। व्रजति स्म सुखं कालः स्वर्गस्थानां यथा तथा॥
शुश्रूषन्ते पितॄन्पुत्राः पत्न्यश्चापि पतींस्तथा। विमुक्तकलहाश्चापि प्रीतयः *प्रचुराऽभवन् ॥

* अत्र संधिरार्षः ।

१ ग. घ. ङ. च। साज्यधू°। २ क ख. 'वर्तहंस्य'। ३ ग. घ. सभूते°।

नाधर्मस्त्रिपुरस्थाना बाधते वीर्यवानपि। अर्चयन्तो दितेः पुत्रास्त्रिपुरायतने हरम्॥ १३
पुण्याहशब्दान्नुखेरुराशीर्वादांश्च वेदगान्। स्वनूपुररवोन्मिश्रान्वेणुवीणारवानपि ॥ १४
हासश्च वरनारीणां चित्तव्याकुलकारकः। त्रिपुरे दानवेन्द्राणां रमतां श्रूयते सदा॥ १५
तेषामर्चयतां देवान्ब्राह्मणांश्च नमस्यताम्। धर्मार्थकाममन्त्राणां महान्कालोऽभ्यवर्तत ॥
अथालक्ष्मीरसूया च तृड्बुभुक्षे तथैव च। कलिश्च कलहश्चैव(?) त्रिपुरं विविशुः सह॥ १७
संध्याकालं प्रविष्टास्ते त्रिपुरं च भयावहाः। समध्यासुः समं घोराः शरीराणि यथाऽऽमयाः
सर्व एते विशन्तस्तु मयेन त्रिपुरान्तरम्। स्वप्ने भयावहा दृष्टा आविशन्तस्तु दानवान्॥
उदिते च सहस्रांशौ शुभभासाकरे रवौ। मयः सभामाविवेश भास्कराभ्यामिवाम्बुदः॥ २०
मेरुकूटनिभे रम्य आसने स्वर्णमण्डिते। आसीनाः काञ्चनगिरेः शृङ्गे तोयमुचो यथा॥ २१
पार्श्वयोस्तारकाख्यश्च विद्युन्माली च दानवः। उपविष्टौ मयस्यान्ते हस्तिनः कलभाविव॥
ततः सुरारयः सर्वेऽशेषकोपा रणाजिरे। उपविष्टा दृढं विद्धा दानवा देवशत्रवः॥ २३
तेष्वासीनेषु सर्वेषु सुखासनगतेषु च। मयो मायाविजनक इत्युवाच स दानवान्॥ २४
खेचराः खेचरारावा भो भो दाक्षायणीसुताः। निशामयध्वं स्वप्नोऽयं मया दृष्टो भयावहः॥
चतस्रः प्रमदास्तत्र त्रयो(?) मर्त्या भयावहाः। कोपानलादीप्तमुखाः प्रविष्टास्त्रिपुरार्दिनः॥
प्रविश्य रुपितास्ते च पुराण्यतुलविक्रमाः। प्रविष्टाः स्म शरीराणि भूत्वा बहुशरीरिणः २७
नगरं त्रिपुरं चेदं तमसा समवस्थितम्। सगृहं सह युष्माभिः सागराम्भसि मज्जितम्॥२८
उलूकं रुचिरा नारी नग्नाऽऽरूढा खरं तथा। *सह स्त्रीभिर्हसन्ती च चुम्बने प्रमदा यथा॥
पुरुषः सिन्दुतिलकश्चतुरङ्घ्रिस्त्रिलोचनः॥ २९
येन सा प्रमदा नुन्ना अहं चैव विबोधितः। ईदृशी प्रमदा दृष्टा मया चातिभयावहा॥३०
एष ईदृशकः स्वप्नो दृष्टो वै दितिनन्दनाः। दृष्टः कथं हि कष्टाय असुराणां भविष्यति॥
यदि वोऽहं क्षमो राजा यदिदं वेत्थ चेङ्गितम्। निबोधध्वं सुमनसो न चासूयितुमर्हथ ॥
कामं चेर्ष्यां च कोपं च असूयां संविहाय च। सत्ये दमे च धर्मे च मुनिवादे च तिष्ठत॥
शान्तयश्च प्रयुज्यन्तां पूज्यतां च महेश्वरः। यदि नामास्य स्यप्नस्य ह्येवं चोपरमो भवेत्॥
कुप्यते नो ध्रुवं रुद्रो देवदेवस्त्रिलोचनः। भविष्याणि च दृश्यन्ते यतो नस्त्रिपुरेऽसुराः॥३५
कलह वर्जयन्तश्च अर्जयन्तस्तथाऽऽर्जवम्। स्वप्नोदयं प्रतीक्षध्वं कालोदयमथापि च॥ ३६
श्रुत्वा दाक्षायणीपुत्रा इत्येवं मयभाषितम्। क्रोधेर्ष्यावस्थया युक्ता दृश्यन्ते च विनाशगाः॥
विनाशमुपपश्यन्तो ह्यलक्ष्म्या व्यापितासुराः। तत्रैव दृष्ट्वा तेऽन्योन्यं संक्रोधापूरितेक्षणाः॥
अथ दैवपरिध्वस्ता दानवास्त्रिपुरालयाः। हित्वा सत्यं च धर्मं च अकार्याण्युपचक्रमुः॥ ३९
द्विषन्ति ब्राह्मणान्पुण्यान्न चार्चन्ति हि देवताः। गुरुं चैव न मन्यन्ते ह्यन्योन्यं चापि चुक्रुधुः
कलहेषु च सज्जन्ते स्वधर्मेषु हसन्ति च। परस्परं च निन्दन्ति अहमित्येव वादिनः॥ ४१
उच्चैर्गुरून्प्रभाषन्ते नाभिभाषन्ति पूजिताः। अकस्मात्साश्रुनयना जायन्ते च समुत्सुकाः॥

---

* एतदर्धं न विद्यते क. ख. पुस्तकयोः।

---

१ ग. च. 'लो व्यजायत। मायाल'। २ ग. ङ. च. 'रं त्वसुरालयम्। स'। ३ ग. च. 'पुरं नराः। स्व'। ४ ग. पातितम्। ५ क. ख. 'दाशिरः। ६ ग. 'क्ष्म्यऽव्यापि'। ७ ङ. संध्याप्राप्'। ८ ग. ङ. 'ण्यान्नार्चयन्ति।

दधिसक्तून्पयश्चैव कपित्थानि च रात्रिषु । भक्षयन्ति च शेरन्त उच्छिष्टाः संवृतास्तथा ॥ ४३
मूत्रं कृत्वोपस्पृशन्ति चाकृत्वा पादधावनम् । संविशन्ति च शय्यासु शौचाचारविवर्जिताः॥
संकुचन्ति भयाच्चैव मार्जाराणां यथाऽऽखुकः । भार्यां गत्वा न शुध्यन्ति रहोवृत्तिषु निस्त्रपाः
पुरा सुशीला भूत्वा च दुःशीलत्वमुपागताः । देवांस्तपोधनांश्चैव बाधन्ते त्रिपुरालयाः ॥ ४६
भयेन वार्यमाणाऽपि* ते विनाशमुपस्थिताः । विप्रियाण्येव विप्राणां कुर्वाणाः कलहैषिणः ॥
वैभ्राजं नन्दनं चैव तथा चैत्ररथं वनम् । अशोकं च वराशोकं सर्वर्तुकमथापि च ॥ ४८
स्वर्गं च देवतावासं पूर्वदेववशानुगाः । विध्वंसयन्ति संक्रुद्धास्तपोधनवनानि च ॥ ४९

विध्वस्तदेवायतनाश्रमं च संभग्नदेवद्विजपूजकं तु ।
जगद्बभूवामरराजदुष्टैरभिद्रुतं सस्यमिवालिवृन्दैः ॥ ५०

इति श्रीमात्स्ये महापुराणे त्रिपुरोपाख्याने दुःस्वप्नदर्शनं नामैकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ६१०५ ॥

---

अथ द्वात्रिंशदधिकशततमोऽध्यायः ।

---

सूत उवाच—

अशीलेषु प्रदुष्टेषु दानवेषु दुरात्मसु । लोकेषूत्साद्यमानेषु तपोधनवनेषु च ॥ १
सिंहनादे व्योमगानां तेषु भीतेषु जन्तुषु । त्रैलोक्ये भयसंमूढे तमोन्धत्वमुपागते ॥ २
आदित्या वसवः साध्याः पितरो मरुतां गणाः । भीताः शरणमाजग्मुर्ब्रह्माणं प्रपितामहम् ॥
ते तं स्वर्णोत्पलासीनं ब्रह्माणं समुपागताः । नेमुरूचुश्च सहिताः पञ्चास्यं चतुराननम् ॥ ४
वरगुप्तास्तवैवेह दानवास्त्रिपुरालयाः । बाधन्तेऽस्मान्यथा प्रेष्यानुशाधि ततोऽनघ ॥ ५
मेघागमे यथा हंसा मृगाः सिंहभयादिव । दानवानां भयात्तद्वद्भ्रमामो हि पितामह ॥ ६
पुत्राणां नामधेयानि कलत्राणां तथैव च । दानवैर्भ्राम्यमाणानां विस्मृतानि ततोऽनघ ॥ ७
देववेश्मप्रभङ्गाश्च आश्रमभ्रंशनानि च । दानवैर्लोभमोहान्धैः क्रियन्ते च भ्रमन्ति च ॥ ८
यदि न त्रायसे लोकं दानवैर्विद्रुतं द्रुतम् । धर्षणानेन निर्देवं निर्मनुष्याश्रमं जगत् ॥ ९
इत्येवं त्रिदशैरुक्तः पद्मयोनिः पितामहः । प्रत्याह त्रिदशान्सेन्द्रानिन्दुतुल्याननः प्रभुः ॥
भयस्य यो वरो दत्तो मया मतिमतां वराः । तस्यान्त एष संप्राप्तो यः पुरोक्तो मया सुराः ॥
तच्च तेषामधिष्ठानं त्रिपुरं त्रिदशर्षभाः । एकेषुपातमोक्षेण हन्तव्यं नेषुवृष्टिभिः ॥ १२
भवतां च न पश्यामि कमप्यत्र सुरर्षभाः । यस्तु चैकप्रहारेण पुरं हन्यात्सदानवम् ॥ १३
त्रिपुरं नाल्पवीर्येण शक्यं हन्तुं शरेण तु । एकं मुक्त्वा महादेवं महेशानं प्रजापतिम् ॥ १४
ते यूयं यदि अन्ये च क्रतुविध्वंसकं हरम् । याचामः सहिता देवं त्रिपुरं स हनिष्यति ॥ १५
कृतः पुराणां विष्कम्भो योजनानां शतं शतम् । यथा चैकप्रहारेण हन्यते वै भवेन तु ॥
पुष्ययोगेण युक्तानि तानि चैकक्षणेन तु ॥ १६

---

* अत्र संधिरार्षः ।

---

१ ग. घ. ङ. निघृणाः । २ ग. ङ. च भरा° । ३ ग. 'हान्यैर्द्दियमाणा भ्र' । ४ ग. च. 'भ्र' । वर्षे' ।

ततो देवैश्च संप्रोक्तो यास्याम इति दुःखितैः। पितामहश्च तैः सार्धं भवसंसदमागतः ॥ १७
तं भवं भूतभव्येशं गिरिशं शूलपाणिनम्। पश्यन्ति चोमया सार्धं नन्दिना च महात्मना ॥
अग्निवर्णमजं देवमग्निकुण्डनिभेक्षणम्। अग्न्यादित्यसहस्राभमग्निवर्णविभूषितम् ॥ १९
चन्द्रावयवलक्ष्माणं चन्द्रसौम्यतराननम्। आगम्य तमजं देवमथ तं नीललोहितम् ॥
अस्तुवन्गोपतिं शंभुं वरदं पार्वतीपतिम् ॥ २०

देवा ऊचुः—

नमो भवाय शर्वाय रुद्राय वरदाय च। पशूनां पतये नित्यमुग्राय च कपर्दिने ॥ २१
महादेवाय भीमाय त्र्यम्बकाय च शान्तये। ईशानाय भयघ्नाय नमस्त्वन्धकघातिने ॥ २२
नीलग्रीवाय भीमाय वेधसे वेधसा स्तुते। कुमारशत्रुनिघ्नाय कुमारजनकाय च ॥ २३
विलोहिताय धूम्राय वराय क्रथनाय च। नित्यं नीलशिखण्डाय शूलिने दिव्यशायिने ॥
उरगाय त्रिनेत्राय हिरण्यवसुरेतसे। अचिन्त्यायाम्बिकाभर्त्रे सर्वदेवस्तुताय च ॥ २५
वृषध्वजाय मुण्डाय जटिने ब्रह्मचारिणे। तप्यमानाय सलिले ब्रह्मण्यायाजिताय च ॥
विश्वात्मने विश्वसृजे विश्वमावृत्य तिष्ठते। नमोऽस्तु दिव्यरूपाय प्रभवे दिव्यशंभवे ॥ २७
अभिगम्याय काम्याय स्तुत्यायार्च्याय सर्वदा। भक्तानुकम्पिने नित्यं दिशते यन्मनोगतम् ॥

इति श्रीमात्स्ये महापुराणे त्रिपुरदाहे ब्रह्मादिसर्वदेवकृतमहेश्वरस्तवो नाम द्वात्रिंश-
दधिकशततमोऽध्यायः ॥ १३२ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ६१३३ ॥

---

अथ त्रयस्त्रिंशदधिकशततमोऽध्यायः।

---

सूत उवाच—

ब्रह्माद्यैः स्तूयमानस्तु देवैर्देवो महेश्वरः। प्रजापतिमुवाचेदं देवानां क्व भयं महत् ॥ १
भो देवाः स्वागतं वोऽस्तु ब्रूत यद्वो मनोगतम्। तावदेव प्रयच्छामि नास्त्यदेयं मया हि वः॥
युष्माकं नितरां शं वै कर्ताऽहं विबुधर्षभाः। चरामि महदत्युग्रं यच्चापि परमं तपः ॥ ३
विद्विष्टा वो मम द्विष्टाः कष्टाः कष्टपराक्रमाः। तेषामभावः संपाद्यो युष्माकं भव एव च ॥ ४
एवमुक्तास्तु देवेन प्रेम्णा सब्रह्मकाः सुराः। रुद्रमाहुर्महाभागं भागार्हाः सर्व एव ते ॥ ५
भगवंस्तैस्तपस्तप्तं रौद्रं रौद्रपराक्रमैः। असुरैर्वध्यमानाः स्म वयं त्वां शरणं गताः ॥ ६
मयो नाम दितेः पुत्रस्त्रिनेत्र कलहप्रियः। त्रिपुरं येन तद्दुर्गं कृतं पाण्डुरगोपुरम् ॥ ७
तदाश्रित्य पुरं दुर्गं दानवा वरनिर्भयाः। बाधन्तेऽस्मान्महादेव प्रेष्यमस्वामिनं यथा ॥ ८
उद्यानानि च भग्नानि नन्दनादीनि यानि च। वराश्चाप्सरसः सर्वा रम्भाद्या दनुजैर्हृताः ॥

---

१ क. ख. °म्। स्तुवन्तो वरदं शंभुं गोपतिं प°। २ ग. °ण्याय जयाय। घ. च. °ण्याय जनाय। ३ ग. घ. च. प्रभूत प्रभवे सदा। अ°। ४ ङ. भमिग°। ५ ङ. °य मुनिस्तव्याय। ६ ग. च. °याऽऽर्याय। ७ ङ. रः। वाचस्पति°। ८ ग. °ष्माकमृषभायत्तं कामं दास्यामि वाञ्छितम्। च°। ९ ग. च. °मि हिमवत्सु°। १० ग. च. वः। ११ घ. ञ. °वाश्चातिनि°। १२ ग. च. प्रेष्यं तरस्वामि°। ङ. प्रेष्यान्वै स्वा°।

इन्द्रस्य वाह्याश्च गजाः कुमुदाञ्जनवामनाः । ऐरावताद्याऽपहृता देवतानां महेश्वर ॥ १०
ये चेन्द्ररथमुख्याश्च हरयोऽपहृताऽसुरैः । जाताश्च दानवानां ते रथयोग्यास्तुरंगमाः ॥ ११
ये रथा ये गजाश्चैव याः स्त्रियो वसु यच्च नः । तन्नो व्यपहृतं दैत्यैः संशयो जीविते पुनः ॥ १२
त्रिनेत्र एवमुक्तस्तु देवैः शक्रपुरोगमैः । उवाच देवान्देवेशो वरदो वृषवाहनः ॥ १३
व्यपगच्छतु वो देवा महद्दानवजं भयम् । तदहं त्रिपुरं धक्ष्ये क्रियतां यद्ब्रवीमि तत् ॥ १४
यदीच्छत मया दग्धुं तत्पुरं सहमानवम् । रथमौपयिकं मह्यं सज्जयध्वं किमास्यते ॥ १५
दिग्वाससा तथोक्तास्ते सपितामहकाः सुराः । तथेत्युक्त्वा महादेवं चक्रुस्ते रथमुत्तमम् ॥ १६
धरां कूबरकौ द्वौ तु रुद्रपार्श्वचरावुभौ । अधिष्ठानं शिरो मेरोरक्षो मन्दर एव च ॥ १७
चक्रुश्चन्द्रं च सूर्यं च चक्रे काञ्चनराजते । कृष्णपक्षं शुक्लपक्षं पक्षद्वयमपीश्वराः ॥ १८
रथनेमिद्वयं चक्रुर्देवा ब्रह्मपुरःसराः । आदिद्वयं पक्षयन्त्रं यन्त्रमेताश्च देवताः ॥ १९
कम्बलाश्वतराभ्यां च नागाभ्यां समवेष्टितम् । *भार्गवश्चाङ्गिराश्चैव बुधोऽङ्गारक एव च २०
शनैश्चरस्तथा चात्र सर्वे ते देवसत्तमाः । वरूथं गगनं चक्रुश्चारुरूपं रथस्य ते ॥ २१
कृतं द्विजिह्वनयनं त्रिवेणुं शातकौम्भिकम् । मणिमुक्तेन्द्रनीलैश्च वृतं ह्यष्टमुखैः सुरैः ॥ २२
गङ्गा सिन्धुः शतद्रुश्च चन्द्रभागा इरावती । वितस्ता च विपाशा च यमुना गण्डकी तथा
सरस्वती देविका च तथा च सरयूरपि । एताः सरिद्वराः सर्वा वेणुसंज्ञा कृता रथे ॥ २४
धृतराष्ट्राश्च ये नागास्ते च वेश्यात्मकाः कृताः । वासुकेः कुलजा ये च ये च रैवतवंशजाः ॥ २५
ते सर्पा दर्पसंपूर्णाश्चापतूणेष्वनूनगाः । अवतस्थुः शरा भूत्वा नानाजातिशुभाननाः ॥ २६
सुरसा सरमा कद्रूर्विनता शुचिरेव च । तृषा बुभुक्षा सर्वोग्रा मृत्युः सर्वशमस्तथा ॥ २७
ब्रह्मवध्या च गोवध्या बालवध्या प्रजाभयाः । गदा भूत्वा शक्तयश्च तदा देवरथेऽभ्ययुः ॥ २८
युगं कृतयुगं चात्र चातुर्होत्रप्रयोजकाः । चतुर्वर्णाः सलीलाश्च बभूवुः स्वर्णकुण्डलाः ॥ २९
तद्युगं युगसंकाशं रथशीर्षे प्रतिष्ठितम् । धृतराष्ट्रेण नागेन बद्धं बलवता महत् ॥ ३०
ऋग्वेदः सामवेदश्च यजुर्वेदस्तथा परः । वेदाश्चत्वार एवैते चत्वारस्तुरगा भवन् ॥ ३१
अन्नदानपुरोगाणि यानि दानानि कानिचित् । तान्यासन्वाजिनां तेषां भूषणानि सहस्रशः
पद्मद्वयं तक्षकश्च कर्कोटकधनंजयौ । नागा बभूवुरेवैते हयानां बालबन्धनाः ॥ ३३
ओंकारप्रभवास्ता वा मन्त्रयज्ञक्रतुक्रियाः । उपद्रवाः प्रतीकाराः पशुबन्धेष्टयस्तथा ॥ ३४
यज्ञोपवाहान्येतानि तस्मिँल्लोकरथे शुभे । मणिमुक्ताप्रवालैस्तु भूषितानि सहस्रशः ॥ ३५
प्रतोदोंकार एवाऽऽसीत्तदग्रं च वषट्कृतम् । सिनीवाली कुहू राका तथा चानुमतिः शुभा ॥
योक्त्राण्यासंस्तुरंगाणामपसर्पणविग्रहाः ॥ ३६
कृष्णान्यथ च पीतानि श्वतमाञ्जिष्ठकानि च । अवदाताः पताकास्तु बभूवुः पवनेरिताः ॥
ऋतुमिश्च कृतः षड्भिर्धनुः संवत्सरोऽभवत् । अजरा ज्याऽभवच्चापि साम्बिका धनुषो दृढा
कालो हि भगवान्रुद्रस्तं च संवत्सरं विदुः । तस्मादुमा कालरात्रिर्धनुषो ज्याऽजराऽभवत् ॥

* एतदर्धस्थानेऽयं पाठो ग च. पुस्तकयोः—सभार्गवाङ्गिरबुधं साङ्गारकशनैश्चरम्, इति ।

१ ग. ङ. 'धतोऽप्यथो वाह्यो दे' । २ ग. घ ङ. दग्धं । ३ ग. घ. ङ. तु अङ्घे पा' । ४ ग. घ. ङ. विग्रवता ।
५ ग. ङ. च. 'वास्ते वा ।

सगर्भं त्रिपुरं येन दग्धवान्स त्रिलोचनः। स इषुर्विष्णुसोमाग्नित्रिदैवतमयोऽभवत् ॥ ४०
आननं ह्यग्निरभवच्छल्यं सोमस्तमोनुदः। तेजसः समवायोऽथ चेषोस्तेजो रथाङ्गधृक् ॥ ४१
तस्मिंश्च वीर्यवृद्ध्यर्थं वासुकिर्नागपार्थिवः। तेजःसंवसनार्थं वै मुमोचातिविषो विषम् ॥
कृत्वा देवा रथं चापि दिव्यं दिव्यप्रभावतः। लोकाधिपतिमभ्येत्य इदं वचनमब्रुवन् ॥ ४३
संस्कृतोऽयं रथोऽस्माभिस्तव दानवशत्रुजित्। इदमापत्परित्राणं देवान्सेन्द्रपुरोगमान् ॥
तं मेरुशिखराकारं त्रैलोक्यरथमुत्तमम्। प्रशस्य देवान्साध्विति रथं पश्यति शंकरः ॥ ४५
मुहुर्दृष्ट्वा रथं साधु साध्वित्युक्त्वा मुहुर्मुहुः। उवाच सेन्द्रानमरानमराधिपतिः स्वयम् ॥ ४६
यादृशोऽयं रथः क्लृप्तो युष्माभिर्मम सत्तमाः। ईदृशो रथसंपत्त्या यन्ता शीघ्रं विधीयताम् ॥
इत्युक्त्वा देवदेवेन देवा विद्धा इवेषुभिः। अवापुर्महतीं चिन्तां कथं कार्यमिति ब्रुवन् ॥ ४८
महादेवस्य देवोऽन्यः को नाम सदृशो भवेत्। मुक्त्वा चक्रायुधं देवं सोऽप्यस्येषुं समाश्रितः ॥
धुरि युक्ता इवोक्षाणो घटन्त इव पर्वतैः। निश्वसन्तः सुराः सर्वे कथमेतदिति * ब्रुवन् ॥ ५०
देवेष्वाह देवदेवो लोकनाथस्य धूर्गतान्। अहं सारथिरित्युक्त्वा जग्राहाश्वांस्ततोऽग्रजः ॥
ततो देवैः सगन्धर्वैः सिंहनादो महान्कृतः। प्रतोदहस्तं संप्रेक्ष्य ब्रह्माणं सूततां गतम् ॥ ५२
भगवानपि विश्वेशो रथस्थे वै पितामहे। सदृशः सूत इत्युक्त्वा चाऽऽरुरोह रथं हरः ॥ ५३
आरोहति रथं देवे ह्यश्वा हरभरातुराः। जानुभिः पतिता भूमौ रजोग्रासश्च ग्रासितः ॥ ५४
देवो दृष्ट्वाऽथ वेदांस्तानभीरुग्रहयान्भयात्। उज्जहार पितॄनार्तान्सुपुत्र इव दुःखितान् ॥ ५५
ततः सिंहरवो भूयो बभूव रथभैरवः। जयशब्दश्च देवानां संबभूवार्णवोपमः ॥ ५६
तदोंकारमयं गृह्य प्रतोदं वरदः प्रभुः। स्वयंभूः प्रययौ वाहानन्नुमन्त्र्य यथाजवम् ॥ ५७
ग्रसमाना इवाऽऽकाशं मुष्णन्त इव मेदिनीम्। मुखेभ्यः ससृजुः श्वासानुच्छ्वसन्त इवोरगाः ॥
स्वयंभुवा चोद्यमानाश्चोदितेन कपर्दिना। व्रजन्ति तेऽश्वा जवनाः क्षयकाल इवानिलाः ॥
ध्वजोच्छ्रयविनिर्माणे ध्वजयष्टिमनुत्तमाम्। आक्रम्य नन्दी वृषभस्तस्थौ तस्मिञ्छिवेच्छया
भार्गवाङ्गिरसौ देवौ दण्डहस्तौ रविप्रभौ। रथचक्रे तु रक्षेते रुद्रस्य प्रियकाङ्क्षिणौ ॥ ६१
शेषश्च भगवान्नागोऽनन्तोऽनन्तकरोऽरिणाम्। शरहस्तो रथं पाति शयनं ब्रह्मणस्तदा ॥
यमस्तूर्णं समास्थाय महिषं चातिदारुणम्। द्रविणाधिपतिर्व्यालं सुराणामधिपो द्विपम् ॥
मयूरं शतचन्द्रं च कूजन्तं किंनरं यथा। गुह आस्थाय वरदो युगोपमरथं पितुः ॥ ६४
नन्दीश्वरश्च भगवाञ्छूलमादाय दीप्तिमान्। पृष्ठतश्चापि पार्श्वाभ्यां लोकस्य क्षयकृद्यथा
प्रमथाश्चाग्निवर्णाभाः साग्निज्वाला इवाचलाः। अनुजग्मू रथं शार्वं नक्रा इव महार्णवम् ॥

भृगुर्भरद्वाजवसिष्ठगौतमाः क्रतुः पुलस्त्यः पुलहस्तपोधनाः।
मरीचिरत्रिर्भगवानथाङ्गिराः पराशरागस्त्यमुखा महर्षयः ॥ ६७

हरमजितमजं प्रतुष्टुवुर्वचनविशेषैर्विचित्रभूषणैः।
रथस्त्रिपुरे सकाञ्चनाचलो व्रजति सपक्ष ईवाद्रिरम्बरे ॥ ६८

* अडभाव आर्षः।

१ ग घ. ङ. वीरे क्रुद्धेऽथ वा°। २ ग. ङ. °मब्रवीत्। सं°। ३ ग. 'द मस्तु परित्रातुं दे°। ४ ङ. °मास्थाय त्रिपुरं दहदाहविदां वरः। तं। ५ क. ख. देवोऽदृश्यत देवांस्तु। ६ ग घ. °स्तस्मिन्गृष्टिमिवे°। ७ ग. °भैः। त्रिपुरमथरथश्च का°। ८ ग. इव मेघनिस्वनः।

*करिगिरिरविमेघसंनिभाः सजलपयोदनिनादनादिनः ।
प्रमथगणाः परिवार्य देवगुप्तं रथमभितः प्रययुः स्वदर्पयुक्ताः ॥ ६९
मकरतिमितिमिङ्गिलावृतः प्रलय इवातिसमुद्धतोऽर्णवः ।
व्रजति रथवरोऽतिभास्वरो ह्यशनिनिपातपयोदनिःस्वनः ॥ ७०

इति श्रीमात्स्ये महापुराणे त्रिपुरदाहे रथप्रयाणं नाम त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ६२०३ ॥

---

अथ चतुस्त्रिंशदधिकशततमोऽध्यायः ।

---

सूत उवाच—

पूज्यमाने रथे तस्मिँल्लोकैर्देवे रथे स्थिते । प्रमथेषु नदत्सूग्रं प्रवदत्सु च साध्विति ॥ १
ईश्वरस्वरघोषेण नर्दमाने महावृषे । जयत्सु विप्रेषु तथा गर्जत्सु तुरगेषु च ॥ २
रणाङ्गणात्समुत्पत्य देवर्षिर्नारदः प्रभुः । कान्त्या चन्द्रोपमस्तूर्णं त्रिपुरं पुरमागतः ॥ ३
औत्पातिकं तु दैत्यानां त्रिपुरे वर्तते ध्रुवम् । नारदश्चात्र भगवान्प्रादुर्भूतस्तपोधनः ॥ ४
आगतं जलदाभासं समेताः सर्वदानवाः । उत्तस्थुर्नारदं दृष्ट्वा अभिवादनवादिनः ॥ ५
तमर्घ्येण च पाद्येन मधुपर्केण चेश्वराः । नारदं पूजयामासुर्ब्रह्माणमिव वासवः ॥ ६
तेषां स पूजां पूजार्हः प्रतिगृह्य तपोधनः । नारदः सुखमासीनः काञ्चने परमासने ॥ ७
मयस्तु सुखमासीने नारदे नारदोद्भवे । यथार्हं दानवैः सार्धमासीनो दानवाधिपः ॥ ८
आसीनं नारदं प्रेक्ष्य मयस्त्वथ महासुरः । अब्रवीद्वचनं तुष्टो हृष्टरोमाननेक्षणः ॥ ९
औत्पातिकं पुरेऽस्माकं यथा नान्यत्र कुत्रचित् । वर्तते वर्तमानज्ञ वद त्वं हि च नारद ॥
दृश्यन्ते भयदाः स्वप्ना भज्यन्ते च ध्वजाः परम् । विना च वायुना केतुः पतते च तथा भुवि ॥
अट्टालकाश्च नृत्यन्ते सपताकाः सगोपुराः । हिंस हिंसेति श्रूयन्ते गिरश्च भयदाः पुरे ॥ १२
नाहं बिभेमि देवानां सेन्द्राणामपि नारद । मुक्त्वैकं वरदं स्थाणुं भक्ताभयकरं हरम् ॥
भगवन्नास्त्यविदितमुत्पातेषु तवानघ । अनागतमतीतं च भवाञ्जानाति तत्त्वतः ॥ १४
तदेतन्नो भयस्थानमुत्पाताभिनिवेदितम् । कथयस्व मुनिश्रेष्ठ प्रपन्नस्य तु नारद ॥ १५
इत्युक्तो नारदस्तेन मयेनाऽऽमयवर्जितः(?) ॥ १६

नारद उवाच—

शृणु दानव तत्त्वेन भवन्त्यौत्पातिका यथा । धर्मेति धारणे धातुर्माहात्म्ये चैव पठ्यते ॥
धारणाच्च महत्त्वेन धर्म एष निरुच्यते ॥ १७
स इष्टप्रापको धर्म आचार्यैरुपदिश्यते । इतरश्चानिष्टफल आचार्यैर्नोपदिश्यते ॥ १८
उत्पथान्मार्गमागच्छेन्मार्गाच्चैव विमार्गताम् । विनाशस्तस्य निर्देश्य इति वेदविदो विदुः
त्वमधर्मरथारूढः सहैभिर्मत्तदानवैः । अपकारिषु देवानां कुरुषे त्वं सहायताम् ॥ २०

---

* इत आरभ्य पयोदनिस्वन इत्यन्तग्रन्थो ग. पुस्तके न विद्यते ।

---

१ ग. घ. ङ. °वः । स तस्यपूजां । २ ग. प्रयत्नेन ।

तदेतान्येवमादीनि उत्पातावेदितानि च । वैनाशिकानि दृश्यन्ते दानवानां तथैव च ॥
एष रुद्रः समास्थाय महालोकमयं रथम् । आयाति त्रिपुरं हन्तुं मय त्वामसुरानपि ॥
स त्वं महौजसं नित्यं प्रपद्यस्व महेश्वरम् । यास्यसे सह पुत्रेण दानवैः सह मानद ॥
इत्येवमावेद्य भयं दानवोपस्थितं महत् । दानवानां पुनर्देवो देवेशपदमागतः ॥ २४
नारदे तु मुनौ याते मयो दानवनायकः । शूरसंमतमित्येवं दानवानाह दानवः* ॥ २५
शूराः स्थ जातपुत्राः स्थ कृतकृत्याः स्थ दानवाः । युध्यध्वं दैवतैः सार्धं कर्तव्यं चापि नो भयम् ॥ २६
जित्वा वयं भविष्यामः सर्वेऽमरसभासदः । देवांश्च सेन्द्रकान्हत्वा लोकान्भोक्ष्यामहेऽसुराः
अट्टालकेषु च तथा तिष्ठध्वं शस्त्रपाणयः । दंशिता युद्धसज्जाश्च तिष्ठध्वं प्रोद्यतायुधाः ॥
पुराणि त्रीणि चैतानि यथास्थानेषु दानवाः । तिष्ठध्वं लङ्घनीयानि भविष्यन्ति पुराणि च
नभोगतास्तथा शूरा देवता विदिता हि वः । ताः प्रयत्नेन वार्याश्च विदार्याश्चैव सायकैः ॥

इति दनुतनयान्मयस्तथोक्त्वा सुरगणवारणवारणे वचांसि ।
युवतिजनविषण्णमानसं तत्त्रिपुरपुरं सहसा विवेश राजा ॥ ३१
अथ रजतविशुद्धभावभावो भवमभिपूज्य दिगम्बरं सुगीर्भिः ।
शरणमुपजगाम देवदेवं मदनार्यन्धकयज्ञदेहघातम् ॥ ३२
भयमभयपदैषिणं प्रपन्नं न किल बुबोध तृतीयदीप्तनेत्रः ।
तदभिमतमदात्ततः शशाङ्की स च किल निर्भय एव दानवोऽभूत् ॥ ३३

इति श्रीमात्स्ये महापुराणे त्रिपुरदाहे नारदगमनं नाम चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ६२३६ ॥

अथ पञ्चत्रिंशदधिकशततमोऽध्यायः ।

सूत उवाच—

ततो रणे देवबलं नारदोऽभ्यगमत्पुनः । आगत्य चैव त्रिपुरात्सभायामास्थितः स्वयम् ॥ १
इलावृतमिति ख्यातं तद्वर्षं विस्तृतायतम् । यत्र यज्ञो बलेर्वृत्तो बलिर्यत्र च संयतः ॥ २
देवानां जन्मभूमिर्या त्रिषु लोकेषु विश्रुता । विवाहाः क्रतवश्चैव जातकर्मादिकाः क्रियाः॥३
देवानां यत्र वृत्तानि कन्यादानानि यानि च । रेमे नित्यं भवो यत्र सहायैः पार्षदैर्गणैः ॥ ४
लोकपालाः सदा यत्र तस्थुर्मेरुगिरौ यथा । मधुपिङ्गलनेत्रस्तु चन्द्रावयवभूषणः ॥
देवानामधिपं प्राह गणपांश्च महेश्वरः ॥ ५
वासवैतद्दरीणां ते त्रिपुरं परिदृश्यते । विमानैश्च पताकाभिर्ध्वजैश्च समलंकृतम् ॥ ६
इदं वृत्तमिदं ख्यातं वह्निवेदभृशतापनम् । एते जना गिरिप्रख्याः सकुण्डलकिरीटिनः ॥ ७

* इतःपरं मय उवाचेति ङ. पुस्तके ।

१ ग. घ. च. शूरः सं° । २ ग. ङ °वं यमनश्नान्ध° । ३ ग. घ. च. °कर्मक्रियाश्च याः । दे° । ४ ग. च. °दं चित्रमि° । ५ ग. घ. च. °वह्निपिता° ।

प्राकारगोपुराट्टेषु कक्षान्ते दानवाः स्थिताः। इमे च तोयदाभासा दनुजा विकृताननाः॥ ८
निर्गच्छन्ति पुरो दैत्याः सायुधा विजयैषिणः॥ ९
स त्वं सुरशतैः सार्धं ससहायो वरायुधः। सहद्भिर्मामकैर्भृत्यैर्व्यापादय महासुरान्॥ १०
अहं च रथवर्येण निश्चलाचलवत्स्थितः। पुरः पुरस्य रन्ध्रार्थी स्थास्यामि विजयाय वः॥
यदा तु पुष्ययोगेण एकत्वं स्थास्यते पुरम्। तदेतन्निर्दहिष्यामि*शरेणैकेन वासव॥ १२
इत्युक्तो वै भगवता रुद्रेणेह सुरेश्वरः। ययौ तत्त्रिपुरं जेतुं तेन सैन्येन संवृतः॥ १३
प्रक्रान्तरथभीमैस्तैः सदेवैः पार्षदां गणैः। कृतसिंहरवोपेतैरुन्नच्छद्भिरिवाम्बुदैः॥ १४
तेन नादेन त्रिपुराद्दानवा युद्धलालसाः। उत्पत्य दुद्रुवुश्चेलुः सायुधाः खे गणेश्वरान्॥
अन्ये पयोधरारावाः पयोधरसमा बभुः। ससिंहनादं वादित्रं वादयामासुरुद्धताः॥ १६
देवानां सिंहनादश्च सर्वतूर्यरवो महान्। ग्रस्तोऽभूद्दैत्यनादैश्च चन्द्रस्तोयधरैरिव ॥ १७
चन्द्रोदयात्समुद्भूतः पौर्णमास इवार्णवः। त्रिपुरं प्रभवत्तद्वद्भीमरूपमहासुरैः॥ १८
प्राकारेषु पुरे तत्र गोपुरेष्वपि चापरे। अट्टालकान्समारुह्य केचिच्चलितवादिनः॥ १९
स्वर्णमालाधराः शूराः प्रभासितकराम्बराः। केचिन्नदन्ति दनुजा स्तोयमत्ता इवाम्बुदाः॥
इतश्चेतश्च धावन्तः केचिदुद्धूतवाससः। किमेतदिति पप्रच्छुरन्योन्यं गृहमाश्रिताः॥ २१
किमेतन्नैव जानामि ज्ञानमन्तर्हितं हि मे। ज्ञास्यसेऽनन्तरेणेति कालो विस्तारतो महान्॥
सोऽप्यसौ पृथ्वीसारं च सिंहश्च रथमास्थितः। तिष्ठते त्रिपुरं पीड्य देहं व्याधिरिवोच्छ्रितः॥
य एषोऽस्ति स एषोऽस्तु का चिन्ता संभ्रमे सति। एहि आयुधमादाय क्व मे पृच्छा भविष्यति
इति तेऽन्योन्यमाविद्धा उत्तरोत्तरभाषिणः। आसाद्य पृच्छन्ति तदा दानवास्त्रिपुरालयाः॥
तारकाख्यपुरे दैत्यास्तारकाख्यपुरःसराः। निर्गताः कुपितास्तूर्णं बिलादिव महोरगाः॥ २६
निर्धावन्तस्तु ते दैत्याः प्रमथाधिपयूथपैः। निरुद्धा गजराजानो यथा केसरियूथपैः॥ २७
दर्पितानां ततश्चैषां दर्पितानामिवाग्निनाम्। रूपाणि जज्वलुस्तेषामग्नीनामिव धम्यताम्॥
ततो बृहन्ति चापानि भीमनादानि सर्वशः। निकृष्य जघ्नुरन्योन्यमिषुभिः प्राणभोजनैः॥
मार्जारमृगभीमास्यान्पार्षदान्विकृताननान्। दृष्ट्वा हृष्टाऽहसँन्नुच्चैर्दानवा रूपसंपदा॥ ३०
बाहुभिः परिघाकारैः कृष्यतां धनुषां शराः। भटवर्मेषु विविशुस्तडागानीव पक्षिणः॥ ३१
मृताः स्थ क्व नु यास्यध्वं हानिष्यामो निवर्तताम्। इत्येवं परुषाण्युक्त्वा दानवाः पार्षदर्षभान्
विभिदुः सायकैस्तीक्ष्णैः सूर्यपादा इवाम्बुदान्। प्रमथा अपि सिंहाक्षाः सिंहविक्रान्तविक्रमाः॥
खण्डशैलशिलावृक्षैर्बिभिदुर्दैत्यदानवान्॥ ३३
अम्बुदैराकुलमिव हंसाकुलमिवाम्बरम्। दानवाकुलमत्यर्थं तत्पुरं सकलं बभौ॥ ३४
विकृष्टचापा दैत्येन्द्राः सृजन्ति शरदुर्दिनम्। इन्द्रचापाङ्कितोरस्का जलदा इव दुर्दिनम्॥ ३५

* अत्रेडागम आर्षः।

१ ग. च. °परम्। अ°। घ. °परैः। अ°। २ ग. च. °हनिःसृताः। ३ ग. घ. च. °लोऽस्ति विरतो भवान्। कोऽप्य°। ४ ग. घ. च. °माविम्रा उ°। ५ ग. घ. ङ. °ज्वलुः कोपादग्नीनाभिव। ६ ग. घ. धूयताम्। ङ. धाम्यताम्। ७ ग. ङ. °सन्त्युच्चै°। ८ ग. घ. ङ. च. °राः। अस्माभिर्वैः प्र:क्ष्यन्ति तदा°। ९ क. ख. यास्येऽय ह°।

इषुभिस्ताड्यमानास्ते भूयो भूयो गणेश्वराः । चक्रुस्ते देहनिर्यासं स्वर्णधातुमिवाचलाः ॥ ३६
तथा वृक्षशिलावज्रशूलपट्टिपरश्वधैः । चूर्ण्यन्तेऽभिहता दैत्याः काचाष्टङ्कहता इव ॥ ३७
चन्द्रोदयात्समुद्भूतः पौर्णमास इवार्णवः । त्रिपुरं प्रभवत्तद्वद्भीमरूपमहासुरैः ॥ ३८
तारकाख्यो जयत्येष इति दैत्या अघोषयन् । जयतीन्द्रश्च रुद्रश्च इत्येव च गणेश्वराः ॥ ३९
वारिता दारिता बाणैर्योधास्तस्मिन्बलार्णवे । निःस्वनन्तोऽम्बुसमये जलगर्भा इवाम्बुदाः ॥
करैश्छिन्नैः शिरोभिश्च ध्वजैश्छत्रैश्च पाण्डुरैः । युद्धभूमिर्भयवती मांसशोणितपूरिता ॥ ४१
व्योम्नि चोत्प्लुत्य सहसा तालमात्रं वरायुधैः । दृढाहताः पतन्पूर्वं दानवाः प्रमथास्तथा ॥ ४२
सिद्धाश्चाप्सरसश्चैव चारणाश्च नभोगताः । दृढप्रहारैर्हर्षिताः साधु साध्विति चुक्रुशुः ॥ ४३
अनाहताश्च वियति देवदुन्दुभयस्तथा । नदन्तो मेघशब्देन शरभा इव रोषिताः ॥ ४४
ते तस्मिंस्त्रिपुरे दैत्या नद्यः सिन्धुपताविव । विशन्ति क्रुद्धवदना वल्मीकमिव पन्नगाः ॥ ४५
तारकाख्यपुरे तस्मिन्सुराः शूराः समन्ततः । सशस्त्रा निपतन्ति स्म सपक्षा इव भूधराः ॥ ४६
योधयन्ति त्रिभागेण त्रिपुरे तु गणेश्वराः । विद्युन्माली मयश्चैव मग्नौ च द्रुमवद्रणे ॥ ४७
विद्युन्माली स दैत्येन्द्रो गिरीन्द्रसदृशद्युतिः । आदाय परिघं घोरं ताडयामास नन्दिनम् ॥ ४८
स नन्दी दानवेन्द्रेण परिघेण दृढाहतः । भ्रमते मधुना व्यक्तः पुरा नारायणो यथा ॥ ४९
नन्दीश्वरे गते तत्र गणपाः ख्यातविक्रमाः । दुद्रुवुर्जातसंरम्भा विद्युन्मालिनमासुरम् ॥ ५०
घण्टाकर्णः शङ्कुकर्णो महाकालश्च पार्षदाः । ततश्च सायकैः सर्वान्गणपान्गणपाकृतीन् ॥ ५१
भूयो भूयः स विव्याध गणेश्वरमहत्तमान् । भित्त्वा भित्त्वा रुरावोच्चैर्नभस्यम्बुधरो यथा ॥ ५२
तस्यारम्भितशब्देन नन्दी दिनकरप्रभः । संज्ञां प्राप्य ततः सोऽपि विद्युन्मालिनमाद्रवत् ॥ ५३
रुद्रदत्तं तदा दीप्तं दीप्तानलसमप्रभम् । वज्रं वज्रनिभाङ्गस्य दानवस्य ससर्ज ह ॥ ५४
तं नन्दिभुजनिर्मुक्तं मुक्ताफलविभूषितम् । पपात वक्षसि तदा वज्रं दैत्यस्य भीषणम् ॥ ५५
स वज्रनिहतो दैत्यो वज्रसंहननोपमः । पपात वज्राभिहतः शक्रेणाद्रिरिवाहतः ॥ ५६
दैत्येश्वरं विनिहतं नन्दिना कुलनन्दिना । चुक्रुशुर्दानवाः प्रेक्ष्य दुद्रुवुश्च गणाधिपाः ॥ ५७
दुःखामर्षितरोषास्ते विद्युन्मालिनि पातिते । द्रुमशैलमहावृष्टिं पयोदाः ससृजुर्यथा ॥ ५८
ते पीड्यमाना गुरुभिर्गिरिभिश्च गणेश्वराः । कर्तव्यं न विदुः किंचिद्वन्ध्यमाधार्मिका इव ॥
ततोऽसुरवरः श्रीमांस्तारकाख्यः प्रतापवान् । सतरूणां गिरीणां वै तुल्यरूपधरो बभौ ॥ ६०
भिन्नोत्तमाङ्गा गणपा भिन्नपादाङ्कितानना: । विरेजुर्भुजगा मन्त्रैर्वार्यमाणा यथा तथा ॥ ६१
मयेन मायावीर्येण वध्यमाना गणेश्वराः । भ्रमन्ति बहुशब्दालाः पञ्जरे शकुना इव ॥ ६२
तथाऽसुरवरः श्रीमांस्तारकाख्यः प्रतापवान् । ददाह च बलं सर्वं शुष्केन्धनमिवानलः ॥ ६३
तारकाख्येन वार्यन्ते शरवर्षैस्तदा गणाः । मयेन मायानिहतास्तारकाख्येन चेषुभिः ॥
गणेशा विधुरा जाता जीर्णमूला यथा द्रुमाः ॥ ६४
भूयः संपतते चाग्निर्ग्रहान्ग्राहान्भुजंगमान् । गिरीन्द्रांश्च हरीन्व्याघ्रान्वृक्षान्सृमरवर्णकान् ॥

१ ग. घ. च. °दैत्यैरुत्स्वनाद्भिर्महास्वनैः । ता° । २ ग. च. °रभूयिष्ठा साधु । ३ क. ख सरमा । ४ ग. घ. ङ. अशक्ता । ५ ग. च. हते । ६ ग. घ. ङ. भूयस्त्रिभिश्चापि ग. । ७ ग. घ. ङ. °त्वा ररासासौ नभ° । ८ ग. ङ. नं. तस्य नर्दित° । ९ ग. ससर्ज नि° । १० ग. °पमम् । प° । ११ ग. घ. ङ. °धिपम् । दुः । १२ ग. चिदधर्मे धा° । ङ. °निद्ध्यमानाश्च धार्मिकाः । त° ।

शरभानष्टपादांश्च अपः पवनमेव च । मयो मायाबलेनैव पातयत्येव शत्रुषु ॥ ६६

ते तारकाख्येन मयेन मायया संमुह्यमाना विवशा गणेश्वराः ।
नाशक्नुवंस्ते मनसाऽपि चेष्टितुं यथेन्द्रियार्था मुनिनाऽभिसंयताः ॥ ६७
महाजलाग्न्यादिसकुञ्जरोरगैर्हरीन्द्रव्याघ्रर्क्षतरक्षुराक्षसैः ।
विबाध्यमानास्तमसा विमोहिताः समुद्रमध्येष्विव गाधकाङ्क्षिणः ॥ ६८
संमर्द्यमानेषु गणेश्वरेषु संनर्दमानेषु सुरेतरेषु ।
ततः सुराणां प्रवराऽभिरक्षितुं रिपोर्बलं संविविशुः सहायुधाः ॥ ६९
यमो गदास्त्रो वरुणश्च भास्करस्तथा कुमारोऽमरकोटिसंयुतः ।
स्वयं च शक्रः सितनागवाहनः कुलीशपाणिः सुरलोकपुंगवः ॥ ७०
स चोडुनाथः ससुतो दिवाकरः स सान्तकरूयक्षपतिर्महाद्युतिः ।
एते रिपूणां प्रबलाभिरक्षितं तदा बलं संविविशुर्मदोद्धताः ॥ ७१
यथा वनं दर्पितकुञ्जराधिपा यथा नभः साम्बुधरं दिवाकरः ।
यथा च सिंहैर्विजनेषु गोकुलं तथा बलं तत्रिदशैरभिद्रुतम् ॥ ७२
कृतप्रहारातुरदीनदानवं ततस्त्वभज्यन्त बलं हि पार्षदाः ।
स्वर्ज्योतिषां ज्योतिरिवोष्मवान्हरि*र्यथा तमो घोरतरं नराणाम् ॥ ७३
विशान्तयामास यथा सदैव निशाकरः संचितशार्वरं तमः ।
ततोऽपकृष्टे च तमःप्रभावे अस्त्रप्रभावे च विवर्धमाने ॥ ७४
दिग्लोकपालैर्गणनायकैश्च कृतो महान्सिंहरवो मुहूर्तम् ।
संख्ये विभग्ना विकरा विषादाश्छिन्नोत्तमाङ्गाः शरपूरिताङ्गाः ॥ ७५
देवेतरा देववरैर्विभिन्नाः सीदन्ति पङ्केषु यथा गजेन्द्राः ।
वज्रेण भीमेन च वज्रपाणिः शक्त्या च शक्त्या च मयूरकेतुः ॥ ७६
दण्डेन चोग्रेण च धर्मराजः पाशेन चोग्रेण च वारिगोप्ता ।
शूलेन कालेन च यक्षराजो वीर्येण तेजस्वितया सुकेशः ॥ ७७
गणेश्वरास्ते सुरसंनिकाशाः पूर्णाहुतीसिक्तशिखिप्रकाशाः ।
उत्सादयन्ते दनुपुत्रवृन्दान्यथैव इन्द्राशनयः पतन्त्यः ॥ ७८
मयस्तु देवान्परिरक्षितारमुमात्मजं देववरं कुमारम् ।
शरेण भित्त्वा स हि तारकासुतं स तारकाख्यासुरमाबभाषे ॥ ७९
कृत्वा प्रहारं प्रविशामि वीरं पुरं हि दैत्येन्द्रबलेन युक्तः ।
विश्राममूर्जस्करमप्यवाप्य पुनः करिष्यामि रणं प्रपन्नैः ॥ ८०

---

* इत आरभ्य सुकेश इत्यन्तग्रन्थस्थानेऽयं ग्रन्थो ग. पुस्तके–रिर्विपातयामास यथा स एनसा । स्वर्ज्योतिषा तेन तमः प्रदग्धं ननाश तूर्णं त्रिदशाधिपेन ॥ ततापं कृष्णं तपसः प्रभावैरस्त्रेण भीतो न च वज्रपाणिः ॥ शक्त्या च शक्त्या च मयूरकेतुर्दण्डेन चण्डेन च धर्मराजः ॥ पाशेन चोग्रेण च वारिगोप्ता शूलेन कालेन च यक्षराजः । वज्रेण तेजस्वितया सुकेशो देवाश्च सर्वे धृतिवीर्ययुक्ता इति ।

---

१ ग. °यार्थे मु° । २ ग. घ. °ताः । दिवाकराग्न्यागिरिकु° । ३ ग. घ. °पाणिर्वर° । ४ ग. च. °हारांस्तदरींश्च दानवांस्ततस्त्वभज्यन्त रणे न पा° । ५ ग. घ. ङ. °वृक्षान्य° ।

वयं हि शस्त्रक्षतविक्षताङ्गा विशीर्णशस्त्रध्वजवर्मवाहाः ।
जयैषिणस्ते जयकाशिनश्च गणेश्वरा लोकवराधिपाश्च ॥ ८१
मयस्य श्रुत्वा दिवि तारकाख्यो वचोऽभिकाङ्क्षन्क्षतजोपमाक्षः ।
विवेश तूर्णं त्रिपुरं दितेः सुतैः सुतैरदित्या युधि वृद्धहर्षैः ॥ ८२
ततः सशङ्खानकभेरिभीमं ससिंहनादं हरसैन्यमाबभौ ।
मयानुगं घोरगभीरगह्वरं यथा हिमाद्रेर्गजसिंहनादितम् ॥ ८३

इति श्रीमात्स्ये महापुराणे त्रिपुरदाहे प्रहारकृतं नाम पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ६३१९ ॥

---

अथ षट्त्रिंशदधिकशततमोऽध्यायः ।

---

सूत उवाच—

मयः प्रहारं कृत्वा तु मायावी दानवर्षभः । विवेश तूर्णं त्रिपुरमभ्रं नीलमिवाम्बरम् ॥ १
स दीर्घमुष्णं निःश्वस्य दानवान्वीक्ष्य मध्यगान् । दध्यौ लोकक्षये प्राप्ते कालं काल इवापरः ॥ २
इन्द्रोऽपि बिभ्यते यस्य स्थितो युद्धेप्सुरग्रतः । स चापि निधनं प्राप्तो विद्युन्माली महायशाः
दुर्गं वै त्रिपुरस्यास्य न समं विद्यते पुरम् । तस्याप्येषोऽनयः प्राप्तो न दुर्गं कारणं क्वचित् ॥ ४
कालस्यैव वशे सर्वं दुर्गं दुर्गतरं च यत् । काले क्रुद्धे कथं कालात्त्राणं नोऽद्य भविष्यति॥
लोकेषु त्रिषु यत्किंचिद्बलं वै सर्वजन्तुषु । कालस्य तद्वशं सर्वमिति पैतामहो विधिः ॥ ६
अस्मिन्कः प्रभवेद्योगो ह्यसंधार्येऽमितात्मनि । लङ्घने कः समर्थः स्यादृते देवं महेश्वरम्
बिभेमि नेन्द्राद्धि यमाद्वरुणान्न च वित्तपात् । स्वामी चैषां तु देवानां दुर्जयः स महेश्वरः ॥
ऐश्वर्यस्य फलं यत्तत्प्रभुत्वस्य च यत्फलम् । तदद्य दर्शयिष्यामि यावद्वीराः समन्ततः ॥ ९
वापीममृततोयेन पूर्णां स्रक्ष्ये वरौषधीः । जीविष्यन्ति तदा दैत्याः संजीवनवरौषधैः ॥ १०
इति संचिन्त्य बलवान्मयो मायाविनां वरः । मायया ससृजे वापीं रम्भामिव पितामहः ॥
द्वियोजनायतां दीर्घां पूर्णयोजनविस्तृताम् । आरोहसंक्रमवतीं चित्ररूपां कथामिव ॥ १२
इन्दोः किरणकल्पेन मृष्टेनामृतगन्धिना । पूर्णां परमतोयेन गुणपूर्णामिवाङ्गनाम् ॥ १३
उत्पलैः कुमुदैः पद्मैर्वृतां कादम्बकैस्तथा । चन्द्रभास्करवर्णाभैर्भीमैरावरणैर्वृताम् ॥ १४
खगैर्मधुररावैश्च चारुचामीकरप्रभैः । कामैषिभिरिवाऽऽकीर्णां जीवानाममरणीमिव ॥ १५
तां वापीं सृज्य स मयो गङ्गामिव महेश्वरः । तस्यां प्रक्षालयामास विद्युन्मालिनमादितः ॥
स वाप्यां मज्जितो दैत्यो देवशत्रुर्महाबलः । उत्तस्थाविन्धनैरिद्धः सद्यो हुत इवानलः ॥ १७
मयस्य चाञ्जलिं कृत्वा तारकाख्योऽभिवादितः । विद्युन्मालीति वचनं मयमुत्थाय चाब्रवीत्

---

१ ग. मयोऽवहा° । घ. मयोवह° । ङ. मयोवराहं कृ° । २ ग. °न्द्रो बिभेति यद्यस्मात्स्थितो । ३ ग. घ. दुर्गमपहारिणम् । का° । ४ ग. °चिद्रेतोनिर्यातबिन्दुषु । घ. °चिद्रेतोनिर्याससबिन्दुषु । ङ. चिद्रियते निर्भयात्मकम् । का° । ५ ग. °पी वाऽमृततोयस्य पू° । ६ ग. स्रक्ष्यामि तामहम् । जी° । ७ ग. घ. ङ. °व । चन्द्रनिर्यासकल्पस्य मृष्टस्यामृतगन्धिनः । पू° । ८ ग. घ. च. °रवाचालैश्चारु° ।

क्व नन्दी सह रुद्रेण वृतः प्रमथजम्बुकैः। युध्यामोऽरीन्विनिष्पीड्य दया देहेषु का हि नः॥
अन्वास्यैव च रुद्रस्य भवामः प्रभविष्णवः। तैर्वा विनिहता युद्धे भविष्यामो यमाशनाः॥
विद्युन्मालेर्निशम्यैतन्मयो वचनमूर्जितम्। तं परिष्वज्य साश्राक्ष इदमाह महासुरः॥ २१
विद्युन्मालिन्न मे राज्यमभिप्रेतं न जीवितम्। त्वया विना महाबाहो किमन्येन महासुर॥२२
महामृतमयी वापी ह्येषा मायाभिरीश्वर। सृष्टा दानवदैत्यानां हतानां जीववर्धिनी॥ २३
दिष्ट्या त्वां दैत्य पश्यामि यमलोकादिहाऽऽगतम्। दुर्गतावनयग्रस्तं भोक्ष्यामोऽद्य महानिधिम्॥ २४
दृष्ट्वा दृष्ट्वा च तां वापीं मायया मयनिर्मिताम्। हृष्टाननाक्षा दैत्येन्द्रा इदं वचनमब्रुवन्॥ २५
दानवा युध्यतेदानीं प्रमथैः सह निर्भयाः। मयेन निर्मिता वापी हतान्संजीवयिष्यति॥ २६
ततः क्षुब्धाम्बुधिनिभा भेरी सा तु भयंकरी। वाद्यमाना ननादोच्चै रौरवी सा पुनः पुनः॥
श्रुत्वा भेरीरवं घोरं मेघारम्भितसंनिभम्। न्यपतन्नसुरास्तूर्णं त्रिपुराद्युद्धलालसाः॥ २८
लोहराजतसौवर्णैः कटकैर्मणिराजितैः। आमुक्तैः कुण्डलैर्हारैर्मुकुटैरपि चोत्कटैः॥ २९
धूमायिता ह्यविरमा ज्वलन्त इव पावकाः। आयुधानि समादाय काशिनो दृढविक्रमाः॥
नृत्यमाना इव नटा गर्जन्त इव तोयदाः। करोच्छ्रया इव गजाः सिंहा इव च निर्भयाः॥
ह्रदा इव च गम्भीराः सूर्या इव प्रतापिताः। द्रुमा इव च दैत्येन्द्रास्त्रासयन्तो बलं महत्॥
प्रमथा अपि सोत्साहा गरुडोत्पातपातिनः। युयुत्सवोऽभिधावन्ति दानवान्दानवारयः॥
नन्दीश्वरेण प्रमथास्तारकाख्येन दानवाः। चक्रुः संहत्य सङ्ग्रामं चोद्यमाना बलेन च॥३४
तेऽसिभिश्चन्द्रसंकाशैः शूलैश्चानलपिङ्गलैः। बाणैश्च दृढनिर्मुक्तैरभिजघ्नुः परस्परम्॥ ३५
शराणां सृज्यमानानामसीनां च निपात्यताम्। रूपाण्यासन्महोल्कानां पतन्तीनामिवाम्बरात्
शक्तिभिर्भिन्नहृदया निर्दयां इव पातिताः। निरयेष्विव निर्मग्नाः कूजन्ते प्रमथासुराः॥ ३७
हेमकुण्डलयुक्तानि किरीटोत्कटवन्ति च। शिरांस्युर्व्यां पतन्ति स्म गिरिकूटा इवात्यये॥ ३८
परश्वधैः पट्टिशैश्च खड्गैश्च परिघैस्तथा। छिन्नाः करिवराकारा निपेतुस्ते धरातले॥ ३९
गर्जन्ति सहसा हृष्टाः प्रमथा भीमगर्जनाः। साधयन्त्यपरे सिद्धा युद्धगान्धर्वमद्भुतम्॥
बलवान्भासि प्रमथ दर्पितो भासि दानव। इति चोच्चारयन्वाचं चारणा रणधूर्गताः॥ ४१
परिघैराहताः केचिद्दानवैः शंकरानुगाः। वमन्ते रुधिरं वक्त्रैः स्वर्णधातुमिवाचलाः॥ ४२
प्रमथैरपि नाराचैरसुराः सुरशत्रवः। द्रुमैश्च गिरिशृङ्गैश्च गाढमेवाऽऽहवे हताः॥ ४३
सूदितानथ तान्दैत्यानन्ये दानवपुंगवाः। उत्क्षिप्य चिक्षिपुर्वाप्यां मयदानवचोदिताः॥
ते चापि भास्वरैर्देहैः स्वर्गलोक इवामराः। उत्तस्थुर्वापीमासाद्य सद्रूपाभरणाम्बराः॥
अथैके दानवाः प्राप्य वापीप्रक्षेपणादसून्। आस्फोट्य सिंहनादं च कृत्वाऽधावंस्तथाऽसुराः
दानवाः प्रमथानेतान्प्रसर्पत किमासथ। हतानपि हि वो वापी पुनरुज्जीवयिष्यति॥ ४७
एवं श्रुत्वा शङ्कुकर्णो वचोऽग्रग्रहसंनिभः। द्रुतमेवैत्य देवेशमिदं वचनमब्रवीत्॥ ४८

---

१ ग. घ °हताः सर्वे दर्थं युद्धे मयानुगाः। वि°। २ ग. घ ङ. °हो को नामेह महासुरः। ३ ग. घ °नाक्षो दैतेय इदं वचनमब्रवीत्। दा°। ४ ग. घ. ङ. च। तोमरैश्च°। ५ घ. च. °या हतरा°। ६ ग. खड्गैः परशुभिस्त। ७ ग. °रिकराका°। ८ ग. च. °मतर्ज°। ९ ग. चारणा। घ. रुजारणा। १० ग. कर्णे स °पग्रह°।

सूदिताः सूदिता ह्येव प्रमथैरसुरा ह्यमी । उत्तिष्ठन्ति पुनर्भीमाः सस्या इव जलोक्षिताः ॥
अस्मिन्किल पुरे वापी पूर्णामृतरसाम्भसा । निहता निहता यत्र क्षिप्ता जीवन्ति दानवाः
इति विज्ञापयद्देवं शङ्कुकर्णो महेश्वरम् । अभवन्दानवबल उत्पाता वै सुदारुणाः ॥ ५१
तारकाख्यः सुभीमाक्षो दारितास्यो हरिर्यथा । अभ्यधावत्सुसंक्रुद्धो महादेवरथं प्रति ॥५२
त्रिपुरे तु महान्घोरो भेरीशङ्खरवो बभौ । दानवा निःसृता दृष्ट्वा देवदेवरथे सुरम् ॥ ५३
भूकम्पश्चाभवत्तत्र शताङ्गो भूगतोऽभवत् । दृष्ट्वा क्षोभमगाद्रुद्रः स्वयंभूश्च पितामहः ॥ ५४
ताभ्यां देववरिष्ठाभ्यामन्वितः स रथोत्तमः । अनायतनमासाद्य सीदते गुणवानिव ॥ ५५
धातुक्षये देह इव ग्रीष्मे चाल्पमिवोदकम् । शैथिल्यं याति स रथः स्नेहो विप्रकृतो यथा ॥ ५६
रथादुत्पत्याऽऽत्मभूर्वै सीदन्तं तु रथोत्तमम् । उज्जहार महाप्राणो रथं त्रैलोक्यरूपिणम् ॥५७
तदा शराद्विनिष्पत्य पीतवासा जनार्दनः । वृषरूपं महत्कृत्वा रथं जग्राह दुर्धरम् ॥ ५८
स विषाणाभ्यां त्रैलोक्यं रथमेव महारथः । प्रगृह्योद्वहते सज्जं कुलं कुलवहो यथा ॥ ५९
तारकाख्योऽपि दैत्येन्द्रो गिरीन्द्र इव पक्षवान् । अभ्यद्रवत्तदा देवं ब्रह्माणं हतवांश्च सः ॥
स तारकाख्याभिहतः प्रतोदं न्यस्य कूबरे । विजज्वाल मुहुर्ब्रह्मा श्वासं वक्त्रात्समुद्गिरन् ॥
तत्र दैत्यैर्महानादो दानवैरपि भैरवः । तारकाख्यस्य पूजार्थं कृतो जलधरोपमः ॥ ६२

रथचरणकरोऽथ महामृधे वृषभवपुर्धृपभेन्द्रपूजितः ।
दितितनयबलं विमर्द्य सर्वं त्रिपुरपुरं प्रविवेश केशवः ॥ ६३
सजलजलदराजितां समस्तां कुमुदवरोत्पलफुल्लपङ्कजाढ्याम् ।
सुरगुरुरपिबत्पयोऽमृतं तद्रविरिव संचितशार्वरं तमोऽन्धम् ॥ ६४

वापीं पीत्वाऽसुरेन्द्राणां पीतवासा जनार्दनः । नर्दमानो महाबाहुः प्रविवेश शरं ततः ॥ ६५

ततोऽसुरा भीमगणेश्वरैर्हताः प्रहारसंवर्धितशोणितापगाः ।
पराङ्मुखा भीममुखैः कृता रणे यथा नयाभ्युद्यततत्परैर्नरैः ॥ ६६
स तारकाख्यस्तडिमालिरेव च मयेन सार्धं प्रमथैराभिद्रुताः ॥
पुरं परावृत्य नु ते शरार्दिता यथा शरीरं पवनोदये गताः ॥ ६७
गणेश्वराभ्युद्यतदर्पकाशिनो महेन्द्रनन्दीश्वरषण्मुखा युधि ।
विनेदुरुच्चैर्जहृषुश्च दुर्मदा जयेम चन्द्रादिदिगीश्वरैः सह ॥ ६८

इति श्रीमात्स्ये महापुराणे त्रिपुरदाहे षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ ६३८७ ॥

---

अथ सप्तत्रिंशदधिकशततमोऽध्यायः ।

---

सूत उवाच—

प्रमथैः समरे भिन्नास्त्रैपुरास्ते सुरारयः । पुरं प्रविविशुर्भीताः प्रमथैर्भग्नगोपुरम् ॥ १

१ ग. °बचलो यथा । ते तत्र निःसृता देवास्तारकाख्येन संयुगे । स च क्षो° । २ ग. °णं प्रभुमीश्वरम् । स ।

शीर्णदंष्ट्रा यथा नागा भग्नशृङ्गा यथा वृषाः । यथा विपक्षाः शकुना नद्यः क्षीणोदका यथा
मृतप्रायास्तथा दैत्या दैवतैर्विकृताननाः । बभूवुस्ते विमनसः कथं कार्यमिति ब्रुवन् ॥ ३
अथ तान्म्लानमनसस्तदा तामरसाननः । उवाच दैत्यो दैत्यानां परमाधिपतिर्मयः ॥ ४
कृत्वा युद्धानि घोराणि प्रमथैः सह सामरैः । तोषयित्वा तथा युद्धे प्रमथानमरैः सह ॥ ५
यूयं यत्प्रथमं दैत्याः पश्चाच्च बलपीडिताः । प्रविष्टा नगरं त्रासात्प्रमथैर्भृशमर्दिताः ॥ ६
अप्रियं क्रियते व्यक्तं देवैर्नास्त्यत्र संशयः । यत्र नाम महाभागाः प्रविशन्ति गिरेर्वनम् ॥ ७
अहो हि कालस्य बलमहो कालो हि दुर्जयः । यत्रेदृशस्य दुर्गस्य उपरोधोऽवमागतः ॥ ८
मये विवदमाने तु नर्दमान इवाम्बुदे । बभूवुर्निष्प्रभा दैत्या ग्रहा इन्दूदये यथा ॥ ९
वापीपालास्ततोऽभ्येत्य नमः काल इवाम्बुदाः । मयमाहुर्यमप्रख्यं साञ्जलिप्रग्रहाः स्थिताः
या साऽमृतरसा गूढा वापी वै निर्मिता त्वया । समाकुलोत्पलवना समीनाकुलपङ्कजा ॥ ११
पीता सा वृषरूपेण केनचिद्दैत्यनायक । वापी सा सांप्रतं दृष्टा मृतसंज्ञा इवाङ्गना ॥ १२
वापीपालवचः श्रुत्वा मयोऽसौ दानवप्रभुः । कष्टमित्यसकृत्प्रोच्य दितिजानिदमब्रवीत् ॥
मया मायाबलकृता वापी पीता त्वियं यदि । विनष्टाः स्म न संदेहस्त्रिपुरं दानवा गतम् ॥
निहतान्निहतान्दैत्यानाजीवयति दैवतैः । पीता वा यदि वा वापी पीता वै पीतवाससा ॥
कोऽन्यो मन्मायया गुप्तां वापीममृततोयिनीम् । पास्यते विष्णुमजितं वर्जयित्वा गदाधरम्
सुगुह्यमपि दैत्यानां नास्त्यस्याविदितं भुवि । यत्र मद्वरकौशल्यं विज्ञातं न वृतं बुधैः ॥ १७
समोऽयं रुचिरो देशो निर्द्रुमो निद्रुमाचलः । *नवाम्भःपूरितं कृत्वा बाधन्तेऽस्मान्मरुद्गणाः
ते यूयं यदि मन्यध्वं सागरोपरिधिष्ठिताः । प्रमथानां महावेगं सहामः श्वसनोपमम् ॥ १९
एतेषां च समारम्भास्तस्मिन्सागरसंप्लवे । निरुत्साहा भविष्यन्ति एतद्रथपथावृताः ॥ २०
युध्यतां निघ्नतां शत्रून्भीतानां च द्रविष्यताम् । सागरोऽम्बरसंकाशः शरणं नो भविष्यति ॥
इत्युक्त्वा स मयो दैत्यो दैत्यानामधिपस्तदा । त्रिपुरेण ययौ तूर्णं सागरं सिन्धुबान्धवम् ॥ २२
सागरे जलगम्भीर उत्पपात पुरं वरम् । अवतस्थुः पुराण्येव गोपुराभरणानि च ॥ २३
अपक्रान्ते तु त्रिपुरे त्रिपुरारिस्त्रिलोचनः । पितामहमुवाचेदं वेदवादविशारदम् ॥ २४
पितामह दृढं भीता भगवन्दानवा हि नः । विपुलं सागरं ते तु दानवाः समुपाश्रिताः ॥ २५
यत एव हि ते यातास्त्रिपुरेण तु दानवाः । तत एव रथं तूर्णं प्रापयस्व पितामह ॥ २६
सिंहनादं ततः कृत्वा देवा देवरथं च तम् । परिवार्य ययुर्हृष्टाः सायुधाः पश्चिमोदधिम् ॥ २७
ततोऽमरामरगुरुं परिवार्य भवं हरम् । नर्दयन्तो ययुस्तूर्णं सागरं दानवालयम् ॥ २८

अथ चारुपताकभूषितं पटहाडम्बरशङ्खनादितम् ।
त्रिपुरमभिसमीक्ष्य देवता विविधबला ननदुर्यथा घनाः ॥ २९
असुरवरपुरेऽपि दारुणो जलधररावमृदङ्गगह्वरः ।
दनुतनयनिनादमिश्रितः प्रतिनिधिसंक्षुभितार्णवोपमः ॥ ३०
अथ भुवनपतिर्गतिः सुराणामरिमृगयामददात्सुलब्धबुद्धिः ।
त्रिदशगणपतिर्ह्युवाच शक्रं त्रिपुरगतं सहसा निरीक्ष्य शत्रुम् ॥ ३१

* एतदर्धस्थानेऽयं पाठो ङ. पुस्तके—न च यत्र रथं कृत्वा बाधन्तेऽस्मान्यथाऽमरा इति ।

१ ग. घ. °स्या दवेषु विकृ । २ ग. त । नवुधेन च । स° । ३ क. ख. लभेमं दूरतः कृ° । ४ घ. °तद्रुद्रमन्याद्° ।
५ ग. सपुरेहिताः । ६ ग. °र्गीति सु° । ७ ग. °गयं ददौ ऋजुत्ववु° ।

तस्मादायुर्बलं रूपं प्रहीयन्ते कलौ युगे। दुःखेनाभिप्लुतानां च परमायुः शतं नृणाम् ॥ ४६
भूत्वा च न भवन्तीह वेदाः कलियुगेऽखिलाः। उत्सीदन्ते तथा यज्ञाः केवलं धर्महेतवः॥४७
एषा कलियुगावस्था संध्यांशौ तु निबोधत। युगे युगे तु हीयन्ते त्रींस्त्रीन्पादांश्च सिद्धयः॥
युगस्वभावाः संध्यासु *अवतिष्ठन्ति पादतः। संध्यास्वभावाः स्वांशेषु पादेनैवावतस्थिरे॥
एवं संध्यांशके काले संप्राप्ते तु युगान्तिके। तेषामधर्मिणां शास्ता भृगूणां च कुले स्थितः॥
गोत्रेण वै चन्द्रमसो नाम्ना प्रमतिरुच्यते। कलिसंध्यांशभोगेषु मनोः स्वायंभुवेऽन्तरे॥ ५१
समास्त्रिंशत्तु संपूर्णाः पर्यटन्वै वसुंधराम्। अश्वकर्मा स वै सेनां हस्त्यश्वरथसंकुलाम्॥ ५२
प्रगृहीतायुधैर्विप्रैः शतशोऽथ सहस्रशः। स तदा तैः परिवृतो म्लेच्छान्सर्वान्निजघ्निवान्॥५३
स हत्वा सर्वशश्चैव राजानः शूद्रयोनयः। पाषण्डान्स सदा सर्वान्निःशेषानकरोत्प्रभुः॥ ५४
अधार्मिकाश्च ये केचित्तान्सर्वान्हन्ति सर्वशः। उदीच्यान्मध्यदेशांश्च पार्वतीयांस्तथैव च ॥
प्राच्यान्प्रतीच्यांश्च तथा विन्ध्यपृष्ठापरान्तिकान्। तथैव दाक्षिणात्यांश्च द्रविडान्सिंहलैः सह
गान्धारान्पारदांश्चैव पह्लवान्यवनाञ्छकान्। तुषारान्बर्बराञ्श्वेतान्हलिकान्दरदान्खसान्॥
लम्पकानान्ध्रकांश्चापि चोरजातींस्तथैव च। प्रवृत्तचक्रो बलवाञ्छूद्राणामन्तकृद्बभौ ॥ ५८
विद्राव्य सर्वभूतानि चचार वसुधामिमाम्। मानवस्य तु वंशे तु नृदेवस्येह जज्ञिवान्॥ ५९
पूर्वजन्मनि विष्णुश्च प्रमतिर्नाम वीर्यवान्। सुतः स वै चन्द्रमसः पूर्वे कलियुगे प्रभुः॥ ६०
द्वात्रिंशेऽभ्युदिते वर्षे प्रक्रान्तो विंशतिं समाः। निजघ्ने सर्वभूतानि मानुषाण्येव सर्वशः॥६१
कृत्वा बीजावशिष्टां तां पृथ्वीं क्रूरेण कर्मणा। परस्परनिमित्तेन कालेनाऽऽकस्मिकेन च॥६२
संस्थिता सहसा या तु सेना प्रमतिना सह। गङ्गायमुनयोर्मध्ये सिद्धिं प्राप्ता समाधिना॥६३
ततस्तेषु प्रनष्टेषु संध्यांशे क्रूरकर्मसु। उत्साद्य पार्थिवान्सर्वांस्तेष्वतीतेषु वै तदा॥ ६४
ततः संध्यांशके काले संप्राप्ते च युगान्तिके। स्थितास्वल्पावशिष्टासु प्रजास्विह क्वचित्क्वचित्
स्वाप्रदानास्तदा ते वै लोभाविष्टास्तु वृन्दशः। उपहिंसन्ति चान्योन्यं प्रलुम्पन्ति परस्परम्॥
अराजके युगांशे तु संक्षये समुपस्थिते। प्रजास्ता वै तदा सर्वाः परस्परभयार्दिताः॥ ६७
व्याकुलास्ताः परावृत्तास्त्यक्त्वा देवं गृहाणि तु। स्वान्स्वान्प्राणाननवेक्षन्तो निष्कारुण्यात्सु-
दुःखिताः॥ ६८
नष्टे श्रौतस्मृते धर्मे कामक्रोधवशानुगाः। निर्मर्यादा निरानन्दा निःस्नेहा निरपत्रपाः॥ ६९
नष्टे धर्मे प्रतिहता ह्रस्वकाः पञ्चविंशकाः। हित्वा दारांश्च पुत्रांश्च विषादव्याकुलप्रजाः॥७०

* अत्र परस्मैपदमार्षम्।

१ ग. °ज्ञाः प्रबला ध°। २ घ. °बला ध°। ङ. °बला धर्मतश्च°। ३ ङ. °न्पादास्तु सि°। ४ ग. °भावास्सं°। ङ. भावात्संध्या तु अवतिष्ठति पा°। ५ ङ. °के। एवमेषामसाधूनां शा°। ६ ग. तेषां समस्तसंध्यादां भृ°। ७ ङ. °स्ता भृगुकुलकलोत्थितः। ८ घ. ङ. कलिः सं°। ९ ग घ. ङ. °भोगेषु°। १० क ख. ग. अश्व°। ११ ग. ङ. वाञ्छान्ति स°। १२ क. ख. घ. °शः। आंदी°। १३ ग. °श्च द्रावि°। १४ ग. °भौ। अभूत्पः सर्वभूतानां च°। १५ क. ख. घ. °न्। स्वतः। १६ क. ख. पूर्वे। १७ ङ. °क्रान्ते त्रि°। १८ ग. घ. °तानां मानुषानेव। ङ. °तानामादौ मध्ये च स°। १९ ङ. ससाधना। २० क. ख. युगान्तके। २१ ग. °द्। अनयाद्धस्तदार्थं मे। घ. °द्। स्नप्र°। २२ ग. °णान्वै रक्षन्तो। २३ ग. न श्रौतस्मार्त धर्मेषु का°।

अनावृष्टिहतास्ते वै वार्तामुत्सृज्य दुःखिताः । आश्रयन्ति स्म प्रत्यन्तान्हित्वा जनपदान्स्वकान् ॥ ७१
सरितः सागरानूपान्सेवन्ते पर्वतानपि । चीरकृष्णाजिनधरा निष्क्रिया निष्परिग्रहाः ॥ ७२
वर्णाश्रमपरिभ्रष्टाः संकरं घोरमास्थिताः । एवं कष्टमनुप्राप्ता ह्यल्पशेषाः प्रजास्ततः ॥ ७३
जन्तवश्च क्षुधाविष्टा दुःखान्निर्वेदमागमन् । *संश्रयन्ति च देशांस्तांश्चक्रवत्परिवर्तनाः ॥
ततः प्रजास्तु ताः सर्वा मांसाहारा भवन्ति हि । मृगान्वराहान्वृषभान्ये चान्ये वनचारिणः
भक्ष्यांश्चैवाप्यभक्ष्यांश्च सर्वांस्तान्भक्षयन्ति ताः । समुद्रं संश्रिता यास्तु नदीश्चैव प्रजास्तु ताः
तेऽपि मत्स्यान्हरन्तीह आहारार्थं च सर्वशः । अभक्ष्याहारदोषेण एकवर्णगताः प्रजाः ॥७७
यथा कृतयुगे पूर्वमेकवर्णमभूत्किल । तथा कलियुगस्यान्ते शूद्रीभूताः प्रजास्तथा ॥ ७८
एवं वर्षशतं पूर्णं दिव्यं तेषां न्यवर्तत । षट्त्रिंशच्च सहस्राणि मानुषाणि तु तानि वै ॥
अथ दीर्घेण कालेन पक्षिणः पशवस्तथा । मत्स्याश्चैव हताः सर्वैः क्षुधाविष्टैश्च सर्वशः ॥
निःशेषेष्वथ सर्वेषु मत्स्यपक्षिपशुष्वथ । संध्यांशे प्रतिपन्ने तु निःशेषास्तु तदा कृताः ॥
ततः प्रजास्तु संभूय कन्दमूलमर्थोऽखनन् । फलमूलाशनाः सर्वे अनिकेतास्तथैव च ॥ ८२
वल्कलान्यथ वासांसि अधःशय्याश्च सर्वशः । परिग्रहो न तेष्वस्ति धनशुद्धिमवाप्नुयुः ॥
एवं क्षयं गमिष्यन्ति ह्यल्पशिष्टाः प्रजास्तदा । तासामल्पावशिष्टानामाहाराद्वृद्धिरिष्यते
एवं वर्षशतं दिव्यं संध्यांशस्तस्य वर्तते । ततो वर्षशतस्यान्ते अल्पशिष्टाः स्त्रियः सुताः ॥
मिथुनानि तु ताः सर्वा ह्यन्योन्यं संप्रजज्ञिरे । ततस्तास्तु म्रियन्ते वै पूर्वोत्पन्नाः प्रजास्तु याः
जातमात्रेष्वपत्येषु ततः कृतमवर्तत । यथा स्वर्गे शरीराणि नरके चैव देहिनाम् ॥ ८७
उपभोगसमर्थानि एवं कृतयुगादिषु । एवं कृतस्य संतानः कलेश्चैव क्षयस्तथा ॥ ८८
विचारणात्तु निर्वेदः साम्यावस्थात्मना तथा । ततश्चैवाऽऽत्मसंबोधः संबोधाद्धर्मशीलता ॥
कलिशिष्टेषु तेष्वेवं जायन्ते पूर्ववत्प्रजाः । भाविनोऽर्थस्य च बलात्ततः कृतमवर्तत ॥९०
[+अतीतानागतानि स्युर्यानि मन्वन्तरेष्विह । एते युगस्वभावास्तु मयोक्तास्तु समासतः
विस्तरेणाऽऽनुपूर्व्याच्च नमस्कृत्य स्वयंभुवे । प्रवृत्ते तु ततस्तस्मिन्पुनः कृतयुगे तु वै ॥ ९२
उत्पन्नाः कलिशिष्टेषु प्रजाः कार्तयुगास्तथा । तिष्ठन्ति चेह ये सिद्धा अदृष्टा विहरन्ति च
सह सप्तर्षिभिर्ये तु तत्र ये च व्यवस्थिताः । ब्रह्मक्षत्रविशः शूद्रा बीजार्थे य इह स्मृताः
×कार्तयुगभवैः सार्धं निर्विशेषास्तदाऽभवन् ॥ ९४
तेषां सप्तर्षयो धर्मं कथयन्तीह तेषु च ॥ ९५
वर्णाश्रमाचारयुतं श्रौतस्मार्तविधानतः । एवं तेषु क्रियावत्सु प्रवर्तन्तीह वै कृते ॥ ९६
श्रौतस्मार्तस्थितानां तु धर्मे सप्तर्षिदर्शिते । ते तु धर्मव्यवस्थार्थं तिष्ठन्तीह कृते युगे ॥९७

---

* इत आरभ्य भवन्ति हि इत्यन्तग्रन्थो न विद्यते ग. पुस्तके । + धनुचिह्नान्तर्ग्रन्थो न विद्यते ग. ङ. पुस्तकयोः । × एतदर्धं नास्ति क. ख. पुस्तकयोः ।

---

१ ग. घ. °वं काष्ठा° । २ ग. °गताः । ३ ग. °र्वाश्चैके भुजस्तथा । स° । ङ. °वांन्वैकभुजस्तदा । स° । ४ ग. °र्थे सहस्रशः । ५ ग. प्रवर्तते । ङ. प्रवर्तत । ६ ङ. षड्विंश° । ७ ग. ङ. सर्वे । ८ ग. °र्थोवनम् । फ° । ९ ग. धनं शुद्धिरथापि वा । ए° । १० ग. स्त्रियस्तु ताः ।

मन्वन्तराधिकारेषु तिष्ठन्ति ऋषयस्तु ते ]। यथा दावप्रदग्धेषु तृणेष्वेवापरं तृणम् ॥ ९८
वनानां प्रथमं वृष्ट्या तेषां मूलेषु संभवः। एवं युगाद्युगानां वै संतानस्तु परस्परम्॥ ९९
प्रवर्तते ह्यविच्छेदाद्यावन्मन्वन्तरक्षयः। सुखमायुर्बलं रूपं धर्मार्थौ काम एव च ॥ १००
युगेष्वेतानि हीयन्ते त्रयः पादाः क्रमेण तु । इत्येष प्रतिसंधिर्वः कीर्तितस्तु मया द्विजाः ॥
चतुर्युगाणां सर्वेषामेतदेव प्रसाधनम् । एषां चतुर्युगाणां तु गणिता ह्येकसप्ततिः ॥ १०२
क्रमेण परिवृत्तास्ता मनोरन्तरमुच्यते। युगाख्यासु तु सर्वासु भवतीह यदा च यत् ॥ १०३
तदेव च तदन्यासु पुनस्तद्वै यथाक्रमम् । सर्गे सर्गे यथा भेदा ह्युत्पद्यन्ते तथैव च ॥१०४
चतुर्दशसु तावन्तो ज्ञेया मन्वन्तरेष्विह । आसुरी यातुधानी च पैशाची यक्षराक्षसी ॥
युगे युगे तदा काले प्रजा जायन्ति ताः शृणु। यथाकल्पं युगैः सार्धं भवन्ते तुल्यलक्षणाः
इत्येतल्लक्षणं प्रोक्तं युगानां वै यथाक्रमम् ॥ १०६

मन्वन्तराणां परिवर्तनानि चिरप्रवृत्तानि युगस्वभावात् ।
क्षणं न *संतिष्ठति जीवलोकः क्षयोदयाभ्यां परिवर्तमानः ॥ १०७

एते युगस्वभावा वः परिक्रान्ता यथाक्रमम्। मन्वन्तराणि यान्यस्मिन्कल्पे वक्ष्यामि तानि च

इति श्रीमात्स्ये महापुराणे मन्वन्तरानुकीर्तने युगवर्तनं नाम चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ६९२६ ॥

---

अथ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ।

---

सूत उवाच—

मन्वन्तराणि यानि स्युः कल्पे कल्पे चतुर्दश। व्यतीतानागतानि स्युर्यानि मन्वन्तरेष्विह
विस्तरेणाऽऽनुपूर्व्याच्च स्थितिं वक्ष्ये युगे युगे। तास्मिन्युगे च संभूतिर्यासां यावच्च जीवितम्
युगमात्रं तु जीवन्ति न्यूनं तेतस्याद्वयेन च। × चतुर्दशसु तावन्तो ज्ञेया मन्वन्तरेष्विह ॥ ३
मनुष्याणां पशूनां च पक्षिणां स्थावरैः सह। तेषामायुरुपक्रान्तं युगधर्मेषु सर्वशः ॥ ४
+ तथैवाऽऽयुः परिक्रान्तं युगधर्मेषु सर्वशः। अस्थितिं च कलौ दृष्ट्वा भूतानामायुपश्च वै ॥५
परमायुः शतं त्वेतन्मानुषाणां कलौ स्मृतम्। देवासुरमनुष्याश्च यक्षगन्धर्वराक्षसाः ॥ ६
परिणाहोच्छ्रये तुल्या जायन्ते ह कृते युगे। षण्णवत्यङ्गुलोत्सेधो ह्यष्टानां देवयोनिनाम् ॥
नवाङ्गुलप्रमाणेन निष्पन्नेन तथाऽष्टकम्। एतत्स्वाभाविकं तेषां प्रमाणमधिकुर्वताम्॥ ८
मनुष्या वर्तमानास्तु युगसंध्यांशकेष्विह। देवासुरप्रमाणं तु सप्तसप्ताङ्गुलं क्रमात् ॥ ९

---

* अत्राऽऽत्मनेपदं भवितुमुचितम्। + एतदर्धं नास्ति ग ङ. पुस्तकयोः। × एतदर्धं क ख. व्यतिरिक्तपुस्तकेषु नेदं तस्मादेतदधिकमिति भाति।

---

१ ङ °णेष्विव च वैद्युतः। व°। २ क. ख. °पनक्षितौ · व°। घ. पतत्पृतौ। व°। ३ ग घ. °मं दृष्टस्तेषां। ४ ङ. मूलेन। ५ ग. °न्ते त्रिपुपादक°। ङ न्ते त्रींस्त्रीन्पादान्क्रमे°। ६ ग. ङ. °श। अती°। ७ ग. ङ. °गे। यस्मि°। ८ ङ. नूनं°। ९ ग. तस्माद्ये°। ङ तस्योच्चये°। १० ग. ङ. °मायुःपरिक्रा°। ११ ग. ङ. °च्छ्रयैस्तुल्या। १२ ग. ङ. °ष्टकाः। ए°।

चतुरा(र)शीतिकैश्चैव कलिजैरङ्गुलैः स्मृतम् । आपादतलमस्तको नवतालो भवेत्तु यः ॥
संहत्याऽऽजानुबाहुश्च दैवतैरभिपूज्यते । गवां च हस्तिनां चैव महिषस्थावरात्मनाम् ॥ ११
क्रमेणैतेन विज्ञेये ह्रासवृद्धी युगे युगे ! षट्सप्तत्यङ्गुलोत्सेधः पशुराककुदो भवेत् ॥ १२
अङ्गुलानामष्टशतमुत्सेधो हस्तिनां स्मृतः । अङ्गुलानां सहस्रं तु द्विचत्वारिंशदङ्गुलम् ॥
शतार्धमङ्गुलानां तु ह्युत्सेधः शाखिनां परः । मानुषस्य शरीरस्य संनिवेशस्तु यादृशः ॥
तल्लक्षणं तु देवानां दृश्यतेऽन्वयदर्शनात् । बुद्ध्याऽतिशयसंयुक्तो देवानां काय उच्यते ॥
तथा नातिशयश्चैव मानुषः काय उच्यते । इत्येव हि परिक्रान्ता भावा ये दिव्यमानुषाः ॥
पशूनां पक्षिणां चैव स्थावराणां च सर्वशः । गावोऽजाश्वाश्च विज्ञेया हस्तिनःपक्षिणो मृगाः
उपयुक्ताः क्रियास्वेते यज्ञियास्त्विह सर्वशः । यथाक्रमोपभोगाश्च देवानां पशुमूर्तयः १८
तेषां रूपानुरूपैश्च प्रमाणैः स्थिरजङ्गमाः । मनोज्ञैस्तत्र तैर्भोगैः सुखिनो ह्युपपेदिरे ॥ १९
अथ शिष्टान्प्रवक्ष्यामि साधूनथ ततश्च वै । ब्राह्मणाः श्रुतिशब्दाश्च देवानां पशुमूर्तयः ॥
संयुज्य ब्रह्मणा ह्यन्तस्तेन सन्तः प्रचक्षते ॥ २०
सामान्येषु च धर्मेषु तथा वैशेषिकेषु च । ब्रह्मक्षत्रविशो युक्ताः श्रौतस्मार्तेन कर्मणा ॥ २१
वर्णाश्रमेषु युक्तस्य सुखोदर्कस्य स्वर्गतौ । श्रौतस्मार्तो हि यो धर्मो ज्ञानधर्मः स उच्यते ॥ २२
दिव्यानां साधनात्साधुर्ब्रह्मचारी गुरोर्हितः । कारणात्साधनाच्चैव गृहस्थः साधुरुच्यते ॥ २३
तपसश्च तथाऽरण्ये साधुर्वैखानसः स्मृतः । यतमानो यतिः साधुः स्मृतो योगस्य साधनात् ॥
धर्मो धर्मगतिः प्रोक्तः शब्दो ह्येष क्रियात्मकः । कुशलाकुशलौ चैव धर्माधर्मौ ब्रवीत्प्रभुः ॥
अथ देवाश्च पितर ऋषयश्चैव मानुषाः । अयं धर्मो ह्ययं नेति ब्रुवते मौनमूर्तिना ॥ २६
धर्मेति धारणे धातुर्महत्त्वे चैव उच्यते । आधारणे महत्त्वे वा धर्मः स तु निरुच्यते ॥ २७
तत्रेष्टप्रापको धर्म आचार्यैरुपदिश्यते । अधर्मश्चानिष्टफल आचार्यैर्नोपादिश्यते ॥ २८
वृद्धाश्चालोलुपाश्चैव आत्मवन्तो ह्यदाम्भिकाः । सम्यग्विनीता मृदवस्तानाचार्यान्प्रचक्षते ॥
धर्मज्ञैर्विहितो धर्मः श्रौतस्मार्तो द्विजातिभिः । दाराग्निहोत्रसंबन्धमिज्या श्रौतस्य लक्षणम्
स्मार्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः । पूर्वेभ्यो वेदयित्वेह श्रौतं सप्तर्षयोऽब्रुवन् ॥ ३१
ऋचो यजूंषि सामानि ब्रह्मणोऽङ्गानि वै श्रुतिः । मन्वन्तरस्यातीतस्य स्मृत्वा तन्मनुरब्रवीत् ॥
तस्मात्स्मार्तः स्मृतो धर्मो वर्णाश्रमविभागशः । एवं वै द्विविधो धर्मः शिष्टाचारः स उच्यते ॥
*शिषेर्धातोश्च निष्ठान्ताच्छिष्टशब्दं प्रचक्षते । मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्मिकाः ॥

* एतदर्धस्थानेऽयं पाठो ग. पुस्तके—वशेःशब्दस्तुनिष्ठेति शेषं शिष्टाः प्रचक्षते । अस्मिन्नेवार्धस्थानेऽयं पाठो ङ. पुस्तके—विशेशब्दस्य निष्ठेति शेषं शिष्टाः प्रचक्षते । इति ।

१ ग. ङ. °तिकं चैव । २ ग. °लमास्तिष्को न° । ३ ङ. °स्तक्यो न° । च. °स्तक्येन° । ४ ग. ङ. संहत्या । ५ ग. ङ. पशूनां क । ६ ग. तः । व्यङ्गुलसहस्रस्तु चत्वारिंशाङ्गुलं विना । श° । ७ ग. °ङ्गुलीनां । ८ ग. °शः । गव्यजा° । ङ. °शः । गजाश्वाश्चैव वि° । ९ क. ख. °थ सन्तः प्रव° । १० ग. घ. च. वै । ब्रह्मणः स्तुति° । ११ ग. घ. °यः । सायुज्यं ब्रह्मणो ह्य° । १२ ग. घ. च. °स्मार्तस्य धर्मस्य ज्ञा° । ङ. °स्मार्तस्य धर्मस्य ज्ञानाद्धर्मः । १३ ग. विधानां । १४ ग. धर्माधर्मगुणैः प्रो° । घ. च. धर्मांधर्म° । ङ. धर्माधर्मगतिप्रो । १५ ग. °शलं कर्म धर्मो° । १६ ङ. °लौ धर्माधर्मौ धर्मे ध्रुवाध्रुवौ । अ° । १७ ग. °वीत्प्रभौ । अ° । १८ ग. ङ. °षयो न च मा° । १९ ग. धर्मोऽभिधा° । २० ग. द्विधा द्विजैः । दा° । घ. ङ. द्विजाद्विजैः दा° ।

मनुः सप्तर्षयश्चैव लोकसंतानकारिणः। तिष्ठन्तीह च धर्मार्थं ताञ्छिष्टान्संप्रचक्षते॥ ३५
तैः शिष्टैश्चलितो धर्मः स्थाप्यते वै युगे युगे। त्रयी वार्ता दण्डनीतिः प्रजावर्णाश्रमेप्सया ॥३६
शिष्टैराचर्यते यस्मात्पुनश्चैव मनुक्षये। पूर्वैः पूर्वैर्मतत्वाच्च शिष्टाचारः स शाश्वतः॥ ३७
दानं सत्यं तपो लोको विद्येज्या पूजनं दमः। अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्षणम्॥
शिष्टा यस्माच्चरन्त्येनं मनुः सप्तर्षयश्च ह। मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृतः॥ ३९
विज्ञेयः श्रवणाच्छ्रौतः स्मरणात्स्मार्त उच्यते। इज्यावेदात्मकः श्रौतः स्मार्तो वर्णाश्रमात्मकः*
प्रत्यङ्गानि प्रवक्ष्यामि धर्मस्येह तु लक्षणम्॥ ४१
दृष्टानुभूतमर्थं च यः पृष्टो न विगूहते। यथाभूतप्रवादस्तु इत्येतत्सत्यलक्षणम्॥ ४२
ब्रह्मचर्यं तपो मौनं निराहारत्वमेव च। इत्येतत्तपसो रूपं सुघोरं तु दुरासदम्॥ ४३
पशूनां द्रव्यहविषामृक्सामयजुषां तथा। ऋत्विजां दक्षिणायाश्च संयोगो यज्ञ उच्यते॥
आत्मवत्सर्वभूतेषु यो हिताय शुभाय च। वर्तते सततं हृष्टः क्रिया श्रेष्ठा दया स्मृता॥ ४५
आक्रुष्टोऽभिहतो यस्तु नाऽऽक्रोशेत्प्रहरेदपि। अदुष्टो वाङ्मनःकायैस्तितिक्षुः सा क्षमा स्मृता
स्वामिना रक्ष्यमाणानामुत्सृष्टानां च संभ्रमे। परस्वानामनादानमलोभ इति संज्ञितम्॥ ४७
मैथुनस्यासमाचारो जल्पनाच्चिन्तनात्तथा। निवृत्तिर्ब्रह्मचर्यं च तदेतच्छमलक्षणम्॥ ४८
आत्मार्थे वा परार्थे वा इन्द्रियाणीह यस्य वै। विषये न प्रवर्तन्ते दमस्यैतत्तु लक्षणम्॥ ४९
+पञ्चात्मके यो विषये कारणे चाष्टलक्षणे। न क्रुध्येत प्रतिहतः स जितात्मा भविष्यति॥ ५०
यद्यदिष्टतमं द्रव्यं न्यायेनैवाऽऽगतं च यत्। तत्तद्गुणवते देयमित्येतद्दानलक्षणम्॥ ५१
श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः। शिष्टाचारप्रवृद्धश्च धर्मोऽयं साधुसंमतः॥५२
अप्रद्वेषो ह्यनिष्टेषु इष्टं वै नाभिनन्दति। प्रीतितापविषादानां विनिवृत्तिर्विरक्तता॥ ५३
संन्यासः कर्मणां न्यासः कृतानामकृतैः सह। कुशलाकुशलाभ्यां तु प्रहाणं न्यास उच्यते॥
अव्यक्तादिविशेषान्तविकारेऽस्मिन्निवर्तते। चेतनाचेतनं ज्ञात्वा ज्ञाने ज्ञानी स उच्यते॥५५
प्रत्यङ्गानि तु धर्मस्य चेत्येतल्लक्षणं स्मृतम्। ऋषिभिर्धर्मतत्त्वज्ञैः पूर्वैः स्वायंभुवेऽन्तरे॥ ५६
अत्र वो वर्णयिष्यामि विधिं मन्वन्तरस्य तु। तथैव चातुर्होत्रस्य चातुर्वर्ण्यस्य चैव हि॥५७
प्रतिमन्वन्तरं चैव श्रुतिरन्या विधीयते। ऋचो यजूंषि सामानि यथावत्प्रातिदैवतम्॥ ५८
विधिः स्तोत्रं तथा हौत्रं पूर्ववत्संप्रवर्तते। द्रव्यस्तोत्रं गुणस्तोत्रं कर्मस्तोत्रं तथैव च॥ ५९
तथैवाभिजनस्तोत्रं स्तोत्रमेवं चतुर्विधम्। मन्वन्तरेषु सर्वेषु यथा भेदा भवन्ति हि॥ ६०

---

* इत उत्तरमयं ग्रन्थो ग. पुस्तके—सत्यं तपस्तथा यज्ञो दया क्षमाऽलोभता। ब्रह्मचर्यं दमोऽक्रोधो दानं शिष्टस्य लक्षणम्। वैराग्यमथसंन्यासो ज्ञानं धर्मस्य लक्षणम्। इति। + एतदर्धस्थानेऽयं पाठो ङ. पुस्तके—पञ्चात्मका ये विषया करणैश्चेष्टलक्षणा इति।

---

१ ग. °कारणात्। ति° । २ ग. ङ. पूर्वपूर्वंगत° । ३ ग. °पोऽकौल्यं वि° । ४ ङ. लेभो वि° । ५ ग. °ष्टो नित्यं न गू° । ङ. ष्टो निष्टं निगू° । ६ ङ. °रस्त्र नाय । ७ ग. °मददानं सलो° । ८ ग. संस्मृतः । ९ ग. घ. तदच्छिद्रस्य ल° । ङ. तद्वच्छिद्रस्य ल° । १० ग. ङ. विभाव्यते । ११ ग. °दानवि° । १२ ङ °षान्तो विकारोऽस्मि° । १३ ग. °तनान्यस्वज्ञाने । ङ. °तनां कृत्वा ज्ञानं तज्ज्ञानमुच्य° । १४ ग. ङ. °ज्ञाना तु । १५ ग. ङ. धिहोत्रं तथा स्तोत्रं पू° । १६ क. °था भेदा भ° ।

प्रवर्तयन्ति तेषां वै ब्रह्मस्तोत्रं पुनः पुनः । एवं मन्त्रगुणानां तु समुत्पत्तिश्चतुर्विधा ॥ ६१
अथर्वऋग्यजुःसाम्नां वेदेष्विह पृथक्पृथक् । ऋषीणां तप्यतां तेषां तपः परमदुश्चरम् ॥ ६२
मन्त्राः प्रादुर्भवन्त्यादौ पूर्वमन्वन्तरस्य ह । असंतोषाद्भयाद्दुःखान्मोहाच्छोकाच्च पञ्चधा ॥
ऋषीणां तारका येन लक्षणेन यदृच्छया । ऋषीणां यावृषीत्वं हि तद्वक्ष्यामीह लक्षणम् ॥ ६४
अतीतानागतानां च पञ्चधा ह्यार्षकं स्मृतम् । तथा ऋषीणां वक्ष्यामि आर्षस्येह समुद्भवम् ॥
गुणसाम्येन वर्तन्ते सर्वसंप्रलये तदा । अविभागेन देवानामनिर्देश्ये तमोमये ॥ ६६
अबुद्धिपूर्वकं तद्वै चेतनार्थं प्रवर्तते । तेनाऽऽर्षं बुद्धिपूर्वं तु चेतनेनाप्यधिष्ठितम् ॥ ६७
प्रवर्तते तथा ते तु यथा मत्स्योदकावुभौ । चेतनाधिष्ठितं सर्वं प्रावर्तत गुणात्मकम् ॥
कार्यकारणभावेन तथा तस्य प्रवर्तते ॥ ६८
विषयो विषयित्वं च तदा ह्यर्थपदात्मकौ । कालेन प्रापणीयेन भेदाश्च कारणात्मकाः ॥ ६९
सांसिद्धिकास्तदा वृत्ताः क्रमेण महदादयः । महतोऽसावहंकारस्तस्माद्भूतेन्द्रियाणि च ॥ ७०
भूतभेदाश्च भूतेभ्यो जज्ञिरे तु परस्परम् । संसिद्धिकारणं कार्यं सद्य एव विवर्तते ॥ ७१
यथोल्मुकांस्तु विटपा एककालाद्भवन्ति हि । तथा प्रवृत्ताः क्षेत्रज्ञाः कालेनैकेन कारणात् ॥ ७२
यथाऽन्धकारे खद्योतः सहसा संप्रदृश्यते । तथा निवृत्तो ह्यव्यक्तः खद्योत इव संज्वलन् ॥ ७३
स महात्मा शरीरस्थस्तत्रैवेह प्रवर्तते । महतस्तमसः पारे वैलक्षण्याद्विभाव्यते ॥ ७४
तत्रैव संस्थितो विद्वांस्तपसोऽन्त* इति श्रुतम् । बुद्धिर्विवर्धतस्तस्य प्रादुर्भूता चतुर्विधा ॥ ७५
ज्ञानं वैराग्यमैश्वर्यं धर्मश्चेति चतुष्टयम् । सांसिद्धिकान्यथैतानि अप्रतीतानि तस्य वै ॥ ७६
महात्मनः शरीरस्य चैतन्यात्सिद्धिरुच्यते । पुरि शेते यतः पूर्वं क्षेत्रज्ञानं तथाऽपि च ॥ ७७
पुरे शयनात्पुरुषो ज्ञानात्क्षेत्रज्ञ उच्यते । यस्माद्धर्मात्प्रसूते हि तस्माद्वै धार्मिकस्तु सः ॥ ७८
सांसिद्धिके शरीरे च बुद्ध्याऽव्यक्तस्तु चेतनः । एवं विवृत्तः क्षेत्रज्ञः क्षेत्रं ह्यनभिसंधितः ॥ ७९
निवृत्तिसमकाले तु पुराणं तदचेतनम् । क्षेत्रज्ञेन परिज्ञातं भोग्योऽयं विषयो मम ॥ ८०
ऋषिर्हिंसागतौ धातुर्विद्या सत्यं तपः श्रुतम् । एष संनिचयो यस्माद्ब्राह्मणस्तु ततस्त्वृषिः ८१
निवृत्तिसमकालाच्च बुद्ध्याऽव्यक्त ऋषिस्त्वयम् । ऋषते परमं यस्मात्परमर्षिस्ततः स्मृतः ॥ ८२
गत्यर्थादृषतेर्धातोर्नामनिर्वृत्तिकारणम् । यस्मादेष स्वयंभूतस्तस्माच्च ऋषिता मता ॥ ८३
सेश्वराः स्वयमुद्भूता ब्रह्मणो मानसाः सुताः । निवर्तमानैस्तैर्बुद्ध्या महान्परिगतः परः ॥ ८४

---

* इत आरभ्य शरीरस्थेत्यन्तग्रन्थो न विद्यते ग. पुस्तके ।

---

१ ग. घ. 'कायेनल' । ङ. 'काणां च ल' । २ ङ 'णां यदपि त्वं । ३ ग. °दृशं वृत्त त° । ४ ङ. धा °ह्यमुखं स्मृ° । ५ ङ आचार्यस्य । ६ ग. ङ. °नःस्य बु° । ७ क यथा । ८ ङ. 'कृतः सत्त्वं प्रवर्तेत । ९ ग. °तं तत्त्वं प्रवृत्तं त्रिगु° । १० ग. तथा ह्यर्थवशात्म° । ११ ङ. भेदाः स्वकर° । १२ ङ. 'स्तथा व्यक्ताः क्र° । ग 'स्तथा ह्युक्तास्क्रमे' । १३ ग. कार्यं मप्येवं संनिव' । १४ ग. 'काद्विन्नठय ए° । ङ. °का वितुतय । १५ ङ. °त्रैव परि व° । १६ ग. विद्वांश्चैतन्यात्सिद्धि रुच्यते । १७ ङ. वै । व्यसनाध्वर्णवात्तस्य वैधर्म्यात्सिद्धि' । १८ ग. °ते । अभिद्यो' । ङ. 'ते । अतिशे° । १९ ग. 'त्रज्ञो नान्यथाऽपि वा । पु° । ङ. 'त्रजाताख्ययाऽपिवा । पु° । २० ग. °रे वै शयनात्पुरुषो ज्ञा° । ङ. °रेषु शयनात्पुरुषः क्षेत्रज्ञान उ° । २१ ङ. °स्माद्ब्रह्मानुसूतेह त° । २२ ङ. निवृत्तः । २३ ग. ङ. भोज्योऽयं । २४ क. ख. 'स्माद्ब्रह्म' । २५ ग. ङ. कालं तु बु° । २६ ग. °ता । न सुराः ६ासमु° । ङ, °ता । नेश्व° । २७ ग. 'ता । विवृतमनसैर्बु° । ङ. °ताः । विवर्त° ।

यस्माद्दृष्टशपरत्वेन सह तस्मान्महर्षयः । ईश्वराणां सुतास्तेषां मानसाश्चौरसाश्च वै ॥ ८५
ऋषिस्तस्मात्परत्वेन भूतादिर्ऋषयस्ततः । ऋषिपुत्रा ऋषीकास्तु मैथुनाद्गर्भसंभवाः ॥ ८६
परत्वेन ऋषन्ते वै भूतादीनृषिकास्ततः । ऋषिकाणां सुता ये तु विज्ञेया ऋषिपुत्रकाः ॥ ८७
श्रुत्वा ऋषं परत्वेन श्रुतास्तस्माच्छ्रुतर्षयः । अव्यक्तात्मा महात्मा वाऽहंकारात्मा तथैव च ८८
भूतात्मा चेन्द्रियात्मा च तेषां तज्ज्ञानमुच्यते । इत्येवमृषिजातिस्तु पञ्चधा नामविश्रुता ॥ ८९
भृगुर्मरीचिरत्रिश्च अङ्गिराः पुलहः क्रतुः । मनुर्दक्षो वसिष्ठश्च पुलस्त्यश्चापि ते दश ॥ ९०
ब्रह्मणो मानसा ह्येते उत्पन्नाः स्वयमीश्वराः । परत्वेनर्षयो यस्मान्मतास्तस्मान्महर्षयः ॥ ९१
ईश्वराणां सुतास्त्वेषामृषयस्तान्निबोधत । काव्यो बृहस्पतिश्चैव कश्यपश्च्यवनस्तथा ॥ ९२
उतथ्यो वामदेवश्च अगस्त्यः कौशिकस्तथा । कर्दमो वालखिल्याश्च विश्रवाः शक्तिवर्धनः ॥
इत्येते ऋषयः प्रोक्तास्तपसा ऋषितां गताः । तेषां पुत्रानृषीकांस्तु गर्भोत्पन्नान्निबोधत ॥ ९४
वत्सरो नग्नहूश्चैव भरद्वाजश्च वीर्यवान् । ऋषिर्दीर्घतमाश्चैव बृहद्वक्षाः शरद्वतः ॥ ९५
वाजिश्रवाः सुचिन्तश्च शावश्च सपराशरः । शृङ्गी च शङ्खपाच्चैव राजा वैश्रवणस्तथा ॥ ९६
इत्येते ऋषिकाः सर्वे सत्येन ऋषितां गताः । ईश्वरा ऋषयश्चैव ऋषीका ये च विश्रुताः ॥ ९७
एवं मन्त्रकृतः सर्वे कृत्स्नशश्च निबोधत । भृगुः काश्यपः प्रचेता दधीचो ह्यात्मवानपि ॥ ९८
ऊर्वोऽथ जमदग्निश्च वेदः सारस्वतस्तथा । आर्ष्टिषेणश्च्यवनश्च वीतहव्यः सवेधसः ॥ ९९
वैन्यः पृथुर्दिवोदासो ब्रह्मवान्गृत्सशौनकौ । एकोनविंशतिर्ह्येते भृगवो मन्त्रकृत्तमाः ॥१००
अङ्गिराश्चैव त्रितश्च भरद्वाजोऽथ लक्ष्मणः । कृतवाचस्तथा गर्गः स्मृतिसंकृतिरेव च ॥१०१
गुरुवीतश्च मांधाता अम्बरीषस्तथैव च । युवनाश्वः पुरुकुत्सः स्वश्रवस्तु सदस्यवान् ॥ १०२
अजमीढोऽस्वहार्यश्च ह्युत्कलः कविरेव च । पृषदश्वो विरूपश्च काव्यश्चैवाथ मुद्गलः ॥ १०३
उतथ्यश्च शरद्वांश्च तथा वाजिश्रवा अपि । अपस्यौषः सुचित्तिश्च वामदेवस्तथैव च ॥ १०४
ऋषिजो बृहच्छुक्लश्च ऋषिर्दीर्घतमा अपि । कक्षीवांश्च त्रयस्त्रिंशत्स्मृता ह्यङ्गिरसां वराः १०५
एते मन्त्रकृतः सर्वे काश्यपांस्तु निबोधत । काश्यपः सहवत्सारो नैध्रुवो नित्य एव च ॥ १०६
असितो देवलश्चैव षडेते ब्रह्मवादिनः । अत्रिरर्धस्वनश्चैव शावास्योऽथ गविष्ठिरः ॥ १०७
कर्णकश्च ऋषिः सिद्धस्तथा पूर्वातिथिश्च यः ॥ १०८
इत्येते त्वत्रयः प्रोक्ता मन्त्रकृत्षण्महर्षयः । वसिष्ठश्चैव शक्तिश्च तृतीयश्च पराशरः ॥ १०९
ततस्तु इन्द्रप्रतिमः पञ्चमस्तु भरद्वसुः । षष्ठस्तु मित्रावरुणः सप्तमः कुण्डिनस्तथा ॥ ११०
इत्येते सप्त विज्ञेया वासिष्ठा ब्रह्मवादिनः । विश्वामित्रश्च गाधेयो देवरातस्तथा बलः ॥१११
तथा विद्वान्मधुच्छन्दा ऋषिश्चान्योऽघमर्षणः । अष्टको लोहितश्चैव भृतकीलश्च माम्बुधिः ॥
देवश्रवा देवरातः पुराणश्च धनंजयः । शिशिरश्च महातेजाः शालङ्कायन एव च ॥ ११३

---

१ ङ. 'स्मादृषिर्महत्त्वेन ज्ञेयास्तस्मा'। २ ग. °पन्ते वै कृता°। ३ ग. ऋषिप'। ४ ग ङ °हृदुस्थः श°। ५ ङ. एते मनुकृ°। ६ ङ °त। गुणवास्य प्रचेताश्च द°। ७ ग. ङ षेणो युधाजिच्च वीतहव्यसुवर्चसौ। वै°। ८ ग. ङ. °सो बन्ध्यश्वो गृत्स°। ९ ग. ङ. °रा वेधसश्चैव म°। १० ग. °जो भलनन्दनः। कृ°। ङ. °जो लभन्दनः। कृ°। ११ ङ. °णः। ऋतवादी तथा। १२ ङ. °कृत्सुमह°। १३ ग. शरद्वसुः। ङ. मरुद्वसुः। १४ ग. ङ. °रुणिः स°। १५ ग. ङ °श्च तावुभौ। दे°।

त्रयोदशैते विज्ञेया ब्रह्मिष्ठाः कौशिका वराः । अगस्त्योऽथ दृढद्युम्नो इन्द्रबाहुस्तथैव च ११४
ब्रह्मिष्ठागस्तयो ह्येते त्रयः परमकीर्तयः । मनुर्वैवस्वतश्चैव ऐलो राजा पुरूरवाः ॥ ११५
क्षत्रियाणां वरा ह्येते विज्ञेया मन्त्रवादिनः । भलन्दकश्च वासाश्वः संकीलश्चैव ते त्रयः ११६
एते मन्त्रकृतो ज्ञेया वैश्यानां प्रवराः सदा । इति द्विनवतिः प्रोक्ता मन्त्रायैश्च बहिष्कृताः ॥
ब्राह्मणाः क्षत्रिया वैश्या ऋषिपुत्रान्निबोधत । ऋषीकाणां सुता ह्येते ऋषिपुत्राः श्रुतर्षयः ॥

इति श्रीमात्स्ये महापुराणे मन्वन्तरकल्पवर्णनो नाम पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ७०४४ ॥

---

अथ षट्चत्वारिंशदधिकशततमोऽध्यायः ।

---

ऋषय ऊचुः—

कथं मत्स्येन कथितस्तारकस्य वधो महान् । कस्मिन्काले विनिर्वृत्ता कथेयं सूतनन्दन ॥ १
त्वन्मुखक्षीरसिन्धूत्था कथेयममृतात्मिका । कर्णाभ्यां पिबतां तृप्तिरस्माकं न प्रजायते ॥
इदं मुने समाख्याहि महाबुद्धे मनोगतम् ॥ २ ॥

सूत उवाच—

* पृष्टस्तु मनुना देवो मत्स्यरूपी जनार्दनः । कथं शरवणे जातो देवः षड्वदनो विभो ॥ ३
एतत्तु वचनं श्रुत्वा पार्थिवस्यामितौजसः । उवाच भगवान्प्रीतो ब्रह्मसूनुर्महामतिम् ॥ ४

मत्स्य उवाच—

वज्राङ्गो नाम दैत्योऽभूत्तस्य पुत्रस्तु तारकः । सुरानुद्वासयामास पुरेभ्यः स महाबलः ॥ ५
ततस्ते ब्रह्मणोऽभ्याशं जग्मुर्भयनिपीडिताः । भीतांश्च त्रिदशान्दृष्ट्वा ब्रह्मा तेषामुवाच ह ॥ ६
संत्यजध्वं भयं देवाः शंकरस्याऽऽत्मजः शिशुः । तुहिनाचलदौहित्रस्तं हनिष्यति दानवम् ॥ ७
ततः काले तु कस्मिंश्चिद्दृष्ट्वा वै शैलजां शिवः । स्वरेतो वह्निवदने व्यसृजत्कारणान्तरे ॥ ८
तत्प्राप्तं वह्निवदने रेतो देवानतर्पयत् । विदार्य जठराण्येषामजीर्णं निर्गतं मुने ॥ ९
पतितं तत्सरिद्वरां ततस्तु शरकानने । तस्मात्तु स समुद्भूतो गुहो दिनकरप्रभः ॥ १०
स सप्तदिवसो बालो निजघ्ने तारकासुरम् । एवं श्रुत्वा ततो वाक्यं तमूचुर्ऋषिसत्तमाः ॥

ऋषय ऊचुः—

अत्याश्चर्यवती रम्या कथेयं पापनाशिनी । विस्तरेण हि नो ब्रूहि याथातथ्येन शृण्वताम् ॥
वज्राङ्गो नाम दैत्येन्द्रः कस्य वंशोद्भवः पुरा । यस्याभूत्तारकः पुत्रः सुरप्रमथनो बली १२
निर्मितः को वधे चाभूत्तस्य दैत्येश्वरस्य तु । गुहजन्म तु कार्त्स्न्येन अस्माकं ब्रूहि मानद ॥

---

* एतदर्धं न विद्यते ङ. पुस्तके ।

---

१ ग ङ. °श्च वत्सश्च सं° । २ घ. ङ. इत्येकन । ३ ङ प्रोक्तासंशयै° । ४ ग. ङ. °वृत्ता वद त्वं सू° । ५ ग. ङ. °दं च नः स° । ६ ग. °द्धेऽमृतोपमम् । कथं । ७ ग. °नोऽरिहा । ए° । ङ. °नोऽरिहा । सकथं निहतस्तेन तारको बालके । न । ए° । ८ ग. ङ °हाद्युतिः । सूत उ° । ९ ग. घ. °श्चिदूढाशै° । १० ङ. °तं तु शरोवर्यें तास्मिंस्तु । ११ ग. °त्सरोवर्यें तस्मात्तु श° । १२ ग. ङ. वंशेऽभवत्पुरा ।

सूत उवाच—

मानसो ब्रह्मणः पुत्रो दक्षो नाम प्रजापतिः। षष्टिं सोऽजनयत्कन्या वैरिण्यामेव नः श्रुतम्
ददौ स दश धर्माय कश्यपाय त्रयोदश। सप्तविंशतिं सोमाय चतस्रोऽरिष्टनेमये ॥ १६
द्वे वै बाहुकपुत्राय द्वे वै चाङ्गिरसे तथा। द्वे कृशाश्वाय विदुषे प्रजापतिसुतः प्रभुः ॥ १७
अदितिर्दितिर्दनुर्विश्वा ह्यरिष्टा सुरसा तथा। सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा ॥
कद्रूर्मुनिश्च लोकस्य मातरो गोषु मातरः। तासां सकाशाल्लोकानां जङ्गमस्थावरात्मनाम्॥
जन्म नानाप्रकाराणां ताभ्योऽन्ये देहिनः स्मृताः। देवेन्द्रोपेन्द्रपूपाद्याः सर्वे ते दितिजा मताः
दितेः सकाशाल्लोकास्तु हिरण्यकशिपादयः। दानवाश्च दनोः पुत्रा गावश्च सुरभीसुताः ॥
पक्षिणो विनतापुत्रा गरुडप्रमुखाः स्मृताः। नागाः कद्रूसुता ज्ञेयाः शेषाश्चान्येऽपि जन्तवः॥
त्रैलोक्यनाथं शक्रं तु सर्वामरगणप्रभुम्। हिरण्यकशिपुश्चक्रे जित्वा राज्यं महाबलः ॥ २३
ततः केनापि कालेन हिरण्यकशिपादयः। निहता विष्णुना संख्ये शेषाश्चेन्द्रेण दानवाः ॥
ततो निहतपुत्रा ऽभूद्दितिर्वरमयाचत । भर्तारं कश्यपं देवं पुत्रमन्यं महाबलम् ॥ २५
समरे शक्रहन्तारं स तस्या अददात्प्रभुः ॥ २६
* नियमे वर्तं हे देवि सहस्रं शुचिमानसा। वर्षाणां लप्स्यसे पुत्रमित्युक्ता सा तथाऽकरोत्
वर्तन्त्या नियमे तस्याः सहस्राक्षः समाहितः । उपासामाचरत्तस्याः सा चैनमन्वमन्यत ॥
दशवत्सरशेषस्य सहस्रस्य तदा दितिः। उवाच शक्रं सुप्रीता वरदा तपसि स्थिता॥ २९

दितिरुवाच—

पुत्रोत्तीर्णव्रतां प्रायो विद्धि मां पाकशासन। भविष्यति च ते भ्राता तेन सार्धमिमां श्रियम्॥
भुङ्क्ष्व वत्स यथाकामं त्रैलोक्यं हतकण्टकम्। इत्युक्त्वा निद्रयाऽऽविष्टा चरणाक्रान्तमूर्धजा
स्वयं सुष्वापानियता भाविनोऽर्थस्य गौरवात्। तत्तु रन्ध्रं समासाद्य जठरं पाकशासनः ॥
चकार सप्तधा गर्भं कुलिशेन तु देवराट् । एकैकं तु पुनः खण्डं चकार मघवा ततः ॥ ३३
सप्तधा सप्तधा कोपात्प्राबुध्यत ततो दितिः। विबुध्योवाच मा शक्र घातयेथाः प्रजां मम ॥
तच्छ्रुत्वा निर्गतः शक्रः स्थित्वा प्राञ्जलिरग्रतः। उवाच वाक्यं संत्रस्तो मातुर्वै वदनेरितम्

शक्र उवाच—

दिवास्वप्नपरा मातः पादाक्रान्तशिरोरुहा। सप्तसप्तभिरेवातस्तव गर्भः कृतो मया॥ ३६
एकोनपञ्चाशत्कृता भागा वज्रेण ते सुताः। दास्यामि तेषां स्थानानि दिवि दैवतपूजिते॥३७
इत्युक्ता सा तदा देवी सैवमस्त्वित्यभाषत। पुनश्च देवी भर्तारमु [illegible] चांसितलोचना ॥ ३८
पुत्रं प्रजापते देहि शक्रजेतारमूर्जितम्। यो नाम्नश्शत्रैर्वध्यस्त्वं गच्छेत्त्रिदिववासिनाम् ॥
इत्युक्तः स तथोवाच तां पत्नीमतिदुःखिताम्। दश वर्षसहस्राणि तपः कृत्वा तु लप्स्यसे॥
वज्रासारमयैरङ्गैरच्छेद्यैरायसंहढैः। वज्राङ्गो नाम पुत्रस्ते भविता पुत्रवत्सले॥ ४१

* वर्तस्व नियमे देवीति भवितुं युक्तम् ।

१ क. ख. घ. नीत्वा । २ ग. °रं देहि मे त्वं स्वयं प्रभो । नियमे वर्तसे दे° । ३ ङ. °र्तते दे° । ४ ङ. °व्रत- प्रायां वि° । ५ ग. ङ. °ष्वापनि° । ६ ङ. °पादबु° । ७ ग. °वै शनकैरिदम् । ८ ग. °वा स्वापपरा । ९ ङ. °तान्भागा- न्वज्रे° । १० ङ. °चाभ्येत्य कश्यपम् । पु° । ११ ग. नास्त्रैर्वध्यतां गच्छेदपि त्रिदि° । १२ ग. ङ. °ता धर्मवत्सलः । सा ।

सा तु लब्धवरा देवी जगाम तपसे वनम् । दश वर्षसहस्राणि सा तपो घोरमाचरत् ॥४२
तपसोऽन्ते भगवती जनयामास दुर्जयम् । पुत्रमप्रतिकर्माणमजेयं वज्रदुश्छिदम् ॥ ४३
स जातमात्र एवाभूत्सर्वशास्त्रास्त्रपारगः । उवाच मातरं भक्त्या मातः किं करवाण्यहम् ॥
तमुवाच ततो हृष्टा दितिर्दैत्याधिपं च सा । बहवो मे हताः पुत्राः सहस्राक्षेण पुत्रक ॥ ४५
तेषां त्वं प्रतिकर्तुं वै गच्छ शक्रवधाय च । बाढमित्येव तामुक्त्वा जगाम त्रिदिवं बली ॥
बध्द्वा ततः सहस्राक्षं पाशेनामोघवर्चसा । मातुरन्तिकमागच्छद्व्याघ्रः क्षुद्रमृगं यथा ॥ ४७
एतस्मिन्नन्तरे ब्रह्मा कश्यपश्च महातपाः । आगतौ तत्र यत्राऽऽस्तां मातापुत्रावभीतकौ ॥
दृष्ट्वा तु तावुवाचेदं ब्रह्मा कश्यप एव च ।। मुञ्चैनं पुत्र देवेन्द्रं किमनेन प्रयोजनम् ॥ ४९
अपमानो वधः प्रोक्तः पुत्र संभावितस्य च । अस्मद्वाक्येन यो मुक्तो विद्धि तं मृतमेव च ॥
परस्य गौरवान्मुक्तः शत्रूणां भारमावहेत् । जीवन्नेव मृतो वत्स दिवसे दिवसे स तु ॥५१
महतां वशमायाते वैरं नैवास्ति वैरिणि । एतच्छ्रुत्वा तु वज्राङ्गः प्रणतो वाक्यमब्रवीत् ॥५२
न मे कृत्यमनेनास्ति मातुराज्ञा कृता मया । त्वं सुरासुरनाथोऽसि मम च प्रपितामहः ॥५३
करिष्ये त्वद्वचो देव एष मुक्तः शतक्रतुः । तपसे मे रतिर्देव निर्विघ्नं चैव मे भवेत् ॥ ५४
त्वत्प्रसादेन भगवन्नित्युक्त्वा विरराम सः । तस्मिंस्तूष्णीं स्थिते दैत्ये प्रोवाचेदं पितामहः ॥

ब्रह्मोवाच—

तपस्त्वं क्रूरमापन्नो ह्यस्मच्छासनसंस्थितः । अनया चित्तशुद्ध्या ते पर्याप्तं जन्मनः फलम् ॥
इत्युक्त्वा पद्मजः कन्यां ससर्जाऽऽयतलोचनाम् । तामस्मै प्रददौ देवः पत्न्यर्थं पद्मसंभवः ॥
वराङ्गीति च नामास्याः कृत्वा यातः पितामहः । वज्राङ्गोऽपि तया सार्धं जगाम तपसे वनम् ॥ ५८
ऊर्ध्वबाहुः स दैत्येन्द्रोऽचरदब्दसहस्रकम् । कालं कमलपत्राक्षः शुद्धबुद्धिर्महातपाः ॥ ५९
*तावच्चावाङ्मुखः कालं तावत्पञ्चाग्निमध्यगः । निराहारो घोरतपास्तपोराशिरजायत ॥
ततः सोऽन्तर्जले चक्रे कालं वर्षसहस्रकम् । जलान्तरं प्रविष्टस्य तस्य पत्नी महाव्रता ॥ ६१
तस्यैव तीरे सरसस्तत्प्रीत्या मौनमास्थिता । निराहारा तपो घोरं प्रविवेश महाद्युतिः ॥६२
तस्यां तपसि वर्तन्त्यामिन्द्रश्चक्रे विभीषिकाम् । भूत्वा तु मर्कटस्तत्र तदाश्रमपदं महान् ॥
चक्रे विलोलं निःशेषं तुम्बीघटकरण्डकम् । ततस्तु मेषरूपेण कम्पं तस्याकरोन्महान् ॥
ततो भुजंगरूपेण बद्ध्वा च चरणद्वयम् । अपाकर्षत्ततो दूरं भ्रमंस्तस्या महीमिमाम् ॥
तपोबलाढ्या सा तस्य न वध्यत्वं जगाम ह । ततो गोमायुरूपेण तस्यादूषयदाश्रमम् ॥६६

* एतदर्धस्थानेऽयं पाठो ग. पुस्तके—हेमन्ते जलमध्यास्थो ग्रीष्मे पञ्चाग्निमध्यग इति ।

१ ग. वद । २ ग. ङ. °धिपस्य तु । व । ३ ग. तेषामपचितिं कर्तुं ग° । ४ ग. ङ. क्षवना । ५ ग 'मुक्तस्त्वद्वस्तान्मृत एव सः । प । ङ. मुक्तन्तद्विद्धि मृ' । ६ ग. शत्रुणा स महाहवे । सजीवन्नेव हि मृतो दिवसेदि' । ङ. शत्रुणा शक्रमाहवे । जी' । ७ ग. 'से तु वै । म' । ८ ग. ङ. °वः प्रीत्यर्थं । ९ । ग 'त्वाऽगा त्वपि' । १० ङ. तावानवा° । ११ ग. घ. ङ 'अलं च' । १२ ग. °स्तत्प्रीत्या मौ' । १३ ग. 'म् । तस्या तु मर्कटाकारं तस्या श्र° । १४ ङ. °र्कटाकारस्तस्याऽऽश्र' । १५ ङ. 'पदे महत् । च' । १६ ङ. °शेषवृतीविघटकण्डक' । १७ °षं कुटीघ° । १८ ङ 'स्तु कपिरूपेण भूतशङ्कां तस्याश्च ह । त' । १९ ग. मेषरू' । २० ग. °लाद्यसौ त' । २१ ङ. °ण चक्रि नादान्सुभीषणान् । ततस्तु ।

ततस्तु मेघरूपेण तस्याः क्लेदयदाश्रमम्। भीपिकाभिरनेकाभिस्तां क्लिश्यन्पाकशासनः ॥
विरराम यदा नैवं वज्राङ्गमहिषी तदा। शैलस्य दुष्टतां मत्वा शापं दातुं व्यवस्थिता॥६८
स शापाभिमुखां दृष्ट्वा शैलः पुरुषविग्रहः। उवाच तां वरारोहां वराङ्गीं भीरुचेतनः॥६९
*नाहं वराङ्गने दुष्टः सेव्योऽहं सर्वदेहिनाम्। विभ्रमं तु करोत्येप रुपितः पाकशासनः ॥
एतस्मिन्नन्तरे जातः कालो वर्षसहस्रिकः। तस्मिन्गते तु भगवान्काले कमलसंभवः ॥
तुष्टः प्रोवाच वज्राङ्गं तमागम्य जलाश्रयम् ॥ ७१

ब्रह्मोवाच—

ददामि सर्वकामांस्ते उत्तिष्ठ दितिनन्दन। एवमुक्तस्तदोत्थाय दैत्येन्द्रस्तपसां निधिः ॥
उवाच प्राञ्जलिर्वाक्यं सर्वलोकपितामहम् ॥ ७२

वज्राङ्ग उवाच—

आसुरो माऽस्तु मे भावः सन्तु लोका ममाक्षयाः। तपस्येव रतिर्मेऽस्तु शरीरस्यास्तु वर्तनम्
एवमस्त्विति तं देवो जगाम स्वकमालयम्। वज्राङ्गोऽपि समाप्ते तु तपसि स्थिरसंयमः॥७४
आहारमिच्छन्भार्यां स्वां न ददर्शाऽऽश्रमे स्वके। क्षुधाविष्टः स शैलस्य गहनं प्रविवेश ह ॥
आदातुं फलमूलानि स च तस्मिन्व्यलोकयत्। रुदतीं तां प्रियां दीनां तनुप्रच्छादिताननाम्
तां विलोक्य स दैत्येन्द्रः प्रोवाच परिसान्त्वयन् ॥ ७६

वज्राङ्ग उवाच—

केन तेऽपकृतं भीरु यमलोकं यियासुना। कं वा कामं प्रयच्छामि शीघ्रं मे ब्रूहि भामिनि ॥

इति श्रीमात्स्ये महापुराणे षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ७१२१ ॥

---

अथ सप्तचत्वारिंशदधिकशततमोऽध्यायः।

---

वराङ्ग्युवाच—

त्रासिताऽस्म्यपविद्धाऽस्मि ताडिता पीडिताऽपि च। रौद्रेण देवराजेन नष्टनाथेव भूरिशः॥
दुःखपारमपश्यन्ती प्राणांस्त्यक्तुं व्यवस्थिता। पुत्रं मे तारकं देहि दुःखशोकमहार्णवात् ॥ २
एवमुक्तः स दैत्येन्द्रः कोपव्याकुललोचनः। शक्तोऽपि देवराजस्य प्रतिकर्तुं महासुरः ॥ ३
तपः कर्तुं पुनर्दैत्यो व्यवस्येत् महाबलः। ज्ञात्वा तु तस्य संकल्पं ब्रह्मा क्रूरतरं पुनः ॥ ४
आजगाम तदा तत्र यत्रासौ दितिनन्दनः। उवाच तस्मै भगवान्प्रभुर्मधुरया गिरा ॥ ५

ब्रह्मोवाच—

किमर्थं पुत्र भूयस्त्वं नियमं क्रूरमिच्छसि। आहाराभिमुखो दैत्य तन्नो ब्रूहि महाव्रत ॥ ६

* अत्र शैल उवाचेति ग. ङ. पुस्तकयोः।

१ ग. °हं महाव्रते दुष्टः से°। ङ °हं महाव्रते दु°। २ ङ. च °हस्रकः। ३ ङ. °लाशय°। ४ ग. स्वां। ५ ग. ङ. तदत्र°। ६ ग. ङ. °घ्रं प्रब्रूहि मानिनि। ७ ग. °लचेतनः। ८ ङ. तप एव चचारोग्रमसुरेन्द्रः पुनः पुनः। वाञ्छितं तपसा लभ्यं नान्यथेति विचिन्तयन्। आगत्य हंसमारुह्य प्राहैनं पङ्कजोद्भवः। इति मत्वा निरस्यन्तं निराहारमु°। ९ ग. क्रूरं महाव्रतम्। याव°।

यावद्वर्षसहस्रेण निराहारस्य यत्फलम् । क्षणेनैकेन तल्लभ्यं त्यक्त्वाऽऽहारमुपस्थितम् ॥ ७
त्यागो ह्यप्राप्तकामानां कामेभ्यो न तथा गुरुः । यथा प्राप्तं परित्यज्य कामं कमललोचन ॥
श्रुत्वैतद्ब्रह्मणो वाक्यं दैत्यः प्राञ्जलिरब्रवीत् । चिन्तयंस्तपसा युक्तो हृदि ब्रह्ममुखेरितम् ॥

वज्राङ्ग उवाच—

उत्थितेन मया दृष्टा समाधानात्त्वदाज्ञया । महिषी भीषिता दीना रुदती शाखिनस्तले ॥ १०
सा मयोक्ता तु तन्वङ्गी दूयमानेन चेतसा । किमेवं वर्तसे भीरु* वद त्वं किं चिकीर्षसि ॥
इत्युक्ता सा मया देव प्रोवाच स्खलिताक्षरम् । वाक्यं चोवाच तन्वङ्गी भीता सा हेतुसंहितम् ॥

वराङ्ग्युवाच—

त्रासिताऽस्म्यपविद्धाऽस्मि कर्षिता पीडिताऽस्मि च । रौद्रेण देवराजेन नष्टनाथेव भूरिशः ॥
दुःखस्यान्तमपश्यन्ती प्राणांस्त्यक्तुं व्यवस्थिता । पुत्रं मे तारकं देहि ह्यस्माद्दुःखमहार्णवात् ॥
एवमुक्तस्तु संक्षुब्धस्तस्याः पुत्रार्थमुद्यतः । तपो घोरं करिष्यामि जयाय त्रिदिवौकसाम् ॥
एतच्छ्रुत्वा वचो देवः पद्मगर्भोद्भवस्तदा । उवाच दैत्यराजानं प्रसन्नश्चतुराननः ॥ १६

ब्रह्मोवाच—

अलं ते तपसा वत्स मा क्लेशे दुस्तरे विश । पुत्रस्ते तारको नाम भविष्यति महाबलः ॥ १७
देवसीमन्तिनीनां तु धम्मिल्लस्य विमोक्षणः । इत्युक्तो दैत्यनाथस्तु प्रणिपत्य पितामहम् ॥
आगत्याऽऽनन्दयामास महिषीं हर्षिताननः । तौ दंपती कृतार्थौ तु जग्मतुः स्वाश्रमं मुदा ॥
वज्राङ्गेणाऽऽहितं गर्भं वराङ्गी वरवर्णिनी । पूर्णं वर्षसहस्रं च दधारोदर एव हि ॥ २०
ततो वर्षसहस्रान्ते वराङ्गी सुषुवे सुतम् । जायमाने तु दैत्येन्द्रे तस्मिँल्लोकभयंकरे ॥ २१
चचाल सकला पृथ्वी समुद्राश्च चकम्पिरे । चेलुर्महीधराः सर्वे ववुर्वाताश्च भीषणाः ॥
जेपुर्जप्यं मुनिवरा नेदुर्व्यालमृगा अपि । चन्द्रसूर्यौ जहुः कान्तिं सनीहारा दिशोऽभवन् ॥
जाते महासुरे तस्मिन्सर्वे चापि महासुराः । आजग्मुर्हर्षितास्तत्र तथा चासुरयोषितः ॥
जगुर्हर्षसमाविष्टा ननृतुश्चासुराङ्गनाः । ततो महोत्सवो जातो दानवानां द्विजोत्तमाः ॥ २५
विषण्णमनसो देवाः समहेन्द्रास्तदाऽभवन् । वराङ्गी स्वसुतं दृष्ट्वा हर्षेणाऽऽपूरिता तदा ॥
बहु मेने न देवेन्द्रविजयं तु तदैव सा । जातमात्रस्तु दैत्येन्द्रस्तारकश्चण्डविक्रमः ॥ २७
अभिषिक्तोऽसुरैः सर्वैः कुजम्भमहिषादिभिः । सर्वासुरमहाराज्ये पृथिवीतुलनक्षमैः ॥ २८
स तु प्राप्य महाराज्यं तारको मुनिसत्तमाः । उवाच दानवश्रेष्ठान्युक्तियुक्तमिदं वचः ॥

इति श्रीमात्स्ये महापुराणे तारकासुरोपाख्याने तारकोत्पत्तिर्नाम सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ७१५० ॥

---

* इतउत्तरग्रन्थो हेतुसंहितमित्यन्तो न विद्यते ङ. पुस्तके ।

१ ग. तीसाश्रुलोचना । सा । २ ख. 'क्यं वाचस्पते भीता तन्वङ्गी हे° । ३ ग. °सैगत° । ४ ङ. °च । ताडिता । ५ ग. 'ल्लचविमोक्षकः । इ । ६ ग. ङ. दा । अ हितं त तदा ग° । ७ ग. ङ. °ङ्गी संप्रसूयत । जा° । ८ ग. ङ. °थ्वी प्रोद्भूताश्च महार्णवाः । चे° । ९ ग. °न्ति नीहाराच्छादितादिशः । जा° । १० ग. ङ. °त्सवे जाते दा° । ११ ग. °ने च देवेन्द्रं विजयश्च तदा तु सा । १२ ग. °क्षमः । स । १३ ग. °ष्ठान्बुद्धियुक्त° ।

अथाष्टचत्वारिंशदधिकशततमोऽध्यायः ।

---

तारक उवाच—

शृणुध्वमसुराः सर्वे वाक्यं मम महाबलाः । श्रेयसे क्रियतां बुद्धिः सर्वैः कृत्यस्य संविधौ ॥ १
वंशक्षयंकरा देवाः सर्वेषामेव दानवाः । अस्माकं जातिधर्मो वै विरूढं वैरमक्षयम् ॥ २
वयमद्य गमिष्यामः सुराणां निग्रहाय तु । स्वबाहुबलमाश्रित्य सर्व एवं न संशयः ॥ ३
किंतु नातपसा युक्तो मन्येऽहं सुरसंगमम् । अहमादौ करिष्यामि ततो घोरं दितेः सुताः ॥ ४
ततः सुरान्विजेष्यामो भोक्ष्यामोऽथ जगत्त्रयम् । स्थिरोपायो हि पुरुषः स्थिरश्रीरपि जायते
रक्षितुं नैव शक्नोति चपलश्चपलाः श्रियः । तच्छ्रुत्वा दानवाः सर्वे वाक्यं तस्यासुरस्य तु ॥ ६
साधु साध्वित्यवोचंस्ते तत्र दैत्याः सविस्मयाः । सोऽगच्छत्पारियात्रस्य गिरेः कंदरमुत्तमम्
सर्वर्तुकुसुमाकीर्णं नानौषधिविदीपितम् । नानाधातुरसस्रावचित्रं नानागुहागृहम् ॥ ८
गहनैः सर्वतो गूढं चित्रकल्पद्रुमाश्रयम् । अनेकाकारबहुलं पृथक्पक्षिकुलाकुलम् ॥ ९
नानाप्रस्रवणोपेतं नानाविधजलाशयम् । प्राप्य तत्कन्दरं दैत्यश्चचार विपुलं तपः ॥ १०
निराहारः पञ्चतपाः पत्रभुग्वारिभोजनः । शतं शतं समानां तु तपांस्येतानि सोऽकरोत्॥
ततः स्वदेहादुत्कृत्य कर्षं कर्षं दिने दिने । मांसस्याग्नौ जुहावासौ ततो निर्मांसतां गतः ॥
तस्मिन्निर्मांसतां याते तपोराशित्वमागते । जज्वलुः सर्वभूतानि तेजसा तस्य सर्वतः ॥ १३
उद्विग्नाश्च सुराः सर्वे तपसा तस्य भीषिताः । एतस्मिन्नन्तरे ब्रह्मा परमं तोषमाणतः १४
तारकस्य वरं दातुं जगाम त्रिदशालयात् । प्राप्य तं शैलराजानं स गिरेः कंदरस्थितम् ॥
उवाच तारकं देवो गिरा मधुरया युतः ॥ १५

ब्रह्मोवाच—

पुत्रालं तपसा तेऽस्तु नास्त्यसाध्यं तवाधुना । वरं वृणीष्व रुचिरं यत्ते मनसि वर्तते ॥ १६
इत्युक्तस्तारको दैत्यः प्रणम्याऽऽत्मभुवं विभुम् । उवाच प्राञ्जलिर्भूत्वा प्रणतः पृथुविक्रमः ॥

तारक उवाच—

देवभूतमनोवांस वेत्सि जन्तुविचेष्टितम् । कृतप्रतिकृताकाङ्क्षी जिगीषुः प्रायशो जनः ॥ १८
वयं च जातिधर्मेण कृतवैराः सहामरैः । तैश्च निःशेषिता दैत्याः क्रूरैः संत्यज्य धर्मिताम् ॥
तेषामहं समुद्धर्ता भवेयमिति मे मतिः ॥ १९
अवध्यः सर्वभूतानामस्त्राणां च महौजसाम् । स्यामहं परमो ह्येष वरो मम हृदि स्थितः ॥ २०
एतन्मे देहि देवेश नान्यो मे रोचते वरः । तमुवाच ततो दैत्यं विरिञ्चिः सुरनायकः ॥ २१
न युज्यन्ते विना मृत्युं देहिनो दैत्यसत्तम । यतस्ततोऽपि वरय मृत्युं यस्मान्न शङ्कसे ॥ २२
ततः संचिन्त्य दैत्येन्द्रः शिशोर्वै सप्तवासरात् । वव्रे महासुरो मृत्युमवलेपेन मोहितः ॥ २३

---

१ ग. °ला: । श्रुत्वा वः श्रेयसी बुद्धिः क्रियतां कृत्यसं° । २ ग. °यपरा । ३ ग. वयं तत्रं घटिष्या° । ४ क. ख. °वनसं° । ५ ङ. °रु संगरम् । अ° । ६ ग. °पलां श्रियम् । त° । ७ ङ. °नेकरत्नबहुलं नृत्यत्पाक्षि° । ८ ग. °क्षिगणाकुल° । ९ ग. ङ. °म शिखरं गिरेः । प्रा° । १० ग. ङ. °रवर्णया । व्र° । ११ ग. प्रभुम् । १२ ङ. °वासी वे° । १३ ग. मनः । १४ ग. सदाऽम° ।

[ *ब्रह्मा चास्मै वरं दत्त्वा यत्किंचिन्मनसेप्सितम् । जगाम त्रिदिवं देवो दैत्योऽपि स्वकमालयम् ॥ २४
उत्तीर्णं तपसस्तं तु दैत्यं दैत्येश्वरास्तथा । परिवव्रुः सहस्राक्षं दिवि देवगणा यथा ॥ २५
तस्मिन्महति राज्यस्थे तारके दैत्यनन्दने । ऋतवो मूर्तिमन्तश्च स्वकालगुणबृंहिताः ॥ ] २६
अभवन्किंकरास्तस्य लोकपालाश्च सर्वशः । कान्तिर्द्युतिर्धृतिर्मेधा श्रीरवेक्ष्य च दानवम् ॥ २७
परिवव्रुर्गुणाकीर्णा निश्छिद्राः सर्व एव हि । कालागुरुविलिप्ताङ्गं महामुकुटभूषणम् ॥ २८
रुचिराङ्गदनद्धाङ्गं महासिंहासने स्थितम् । वीजयन्त्यप्सरःश्रेष्ठा भृशं मुञ्चन्ति नैव ताः ॥ २९
चन्द्रार्कौ दीपमार्गेषु व्यजनेषु च मारुतः । कृतान्तोऽग्रेसरस्तस्य बभूवुर्मुनिसत्तमाः ॥ ३०
एवं प्रयाति काले तु वितते तारकासुरः । बभाषे सचिवान्दैत्यः प्रभूतवरदर्पितः ॥ ३१

तारक उवाच—

राज्येन कारणं किं मे त्वनाक्रम्य त्रिविष्टपम् । अनिर्याप्य सुरैर्वैरं का शान्तिर्हृदये मम ॥ ३२
भुञ्जतेऽद्यापि यज्ञांशानमरा नाक एव हि । विष्णुः श्रियं न जहति तिष्ठते च गतभ्रमः ॥ ३३
स्वस्थाभिः स्वर्गनारीभिः पीड्यन्तेऽमरवल्लभाः । सोत्पला मदिरामोदा दिवि क्रीडायनेषु च
लब्ध्वा जन्म न यः कश्चिद्घटयेत्पौरुषं नरः । जन्म तस्य वृथा भूतमजन्मा तु विशिष्यते ॥ ३५

मातापितृभ्यां न करोति कामान्बन्धूनशोकान्न करोति यो वा ।
कीर्तिं हि वा नार्जयते हिमाभां पुमान्स जातोऽपि मृतो मतं मे ॥ ३६
तस्माज्जयायामरपुंगवानां त्रैलोक्यलक्ष्मीहरणाय शीघ्रम् ।
संयोज्यतां मे रथमष्टचक्रं बलं च मे दुर्जयदैत्यचक्रम् ॥
ध्वजं च मे काञ्चनपट्टनद्धं छत्रं च मे मौक्तिकजालबद्धम् ॥ ३७

तारकस्य वचः श्रुत्वा ग्रसनो नाम दानवः । सेनानीर्दैत्यराजस्य तथा चक्रे बलान्वितः ३८
आहत्य भेरीं गम्भीरां दैत्यानाहूय सत्वरः । तुरगाणां सहस्रेण चक्राष्टकविभूषितम् ॥ ३९
शुक्लाम्बरपरिष्कारं चतुर्योजनविस्तृतम् । नानाक्रीडागृहयुतं गीतवाद्यमनोहरम् ॥ ४०
विमानमिव देवस्य सुरभर्तुः शतक्रतोः । दशकोटीश्वरा दैत्या दैत्यानां चण्डविक्रमाः ॥ ४१
तेषामग्रेसरो जम्भः कुजम्भोऽनन्तरस्ततः । महिषः कुञ्जरो मेघः कालनेमिर्निमिस्तथा ॥ ४२
मथनो जम्भकः शुम्भो दैत्येन्द्रा दश नायकाः । अन्येऽपि शतशस्तस्य पृथिवीदलनक्षमाः ॥
दैत्येन्द्रा गिरिवर्ष्माणः सन्ति चण्डपराक्रमाः । नानायुधप्रहरणा नानाशस्त्रास्त्रपारगाः ॥ ४४
तारकस्याभवत्केतू रौद्रः कनकभूषणः । केतुना मकरेणापि सेनानीर्ग्रसनोऽरिहा ॥ ४५
पैशाचं यस्य वदनं जम्भस्याऽऽसीदयोमयम् । खरं विधूतलाङ्गूलं कुजम्भस्याभवद्ध्वजे ॥
महिषस्य तु गोमायुः केतौ हैमस्तदाऽभवत् । ध्वाङ्क्षो ध्वजे तु शुम्भस्य कृष्णायोमयमुच्छ्रितम्
अनेकाकारविन्यासाश्चान्येषां तु ध्वजास्तथा । शतेन शीघ्रवेगाणां व्याघ्राणां हेममालिनाम्

---

* धनुश्चिह्नान्तर्गतग्रन्थो न विद्यते ग. पुस्तके ।

---

१ ग. °रखण्डा च दानवे । प° । ङ. °रखण्डा च । २ ग. अनिर्वाप्य । ३ ग. °तक्रमः । ४ ग. °भिः क्रीडन्ति सुरसत्तमाः । सा° । ५ ग. °ति स्वकां ना° । ङ. °ति श्रियं ना° ६ ङ. °स्य सज्जं चक्रे रथे महत् । आ° । ७ ङ. वर्तुल° । ८ ग. ङ. °पाणयः । ता° । ९ ग. ङ. रौक्मः । १० ग. ङ. °ध्वजम् । म° । ११ क. ध्वाङ्क्षं ध्वजे तु शु° । १२ ग. शतशः ।

ग्रसनस्य रथो युक्तो किङ्किणीजालमालिनाम्। शतेनापि च सिंहानां रथो जम्भस्य दुर्जयः॥
कुजम्भस्य रथो युक्तः पिशाचवदनैः खरैः। रथस्तु महिषस्योष्ट्रैर्गजस्य तु तुरंगमैः॥ ५०
मेघस्य द्वीपिभिर्भीमैः कुञ्जरैः कालनेमिनः। पर्वताभैः समारूढो निर्मिर्मत्तैर्महागजैः॥५१
चतुर्दन्तैर्गन्धवद्भिः शिक्षितैर्मेघभैरवैः। शतहस्तायतैः कृष्णैस्तुरंगैर्हेमभूषणैः॥ ५२
सितचामरजालेन शोभिते दक्षिणां दिशम्। सितचन्दनचार्वङ्गो नानापुष्पस्रजोज्ज्वलः॥
मथनो नाम दैत्येन्द्रः पाशहस्तो व्यराजत। जम्भकः किंकिणीजालमालमुष्ट्रं समास्थितः॥
[*कालशुक्लमहामेषमारूढः शुम्भदानवः। अन्येऽपि दानवा वीरा नानावाहनगामिनः॥
प्रचण्डचित्रकर्माणः कुण्डलोष्णीषभूषणाः। नानाविधोत्तरासङ्गा नानामाल्यविभूषणाः ]
नानासुगन्धिगन्धाढ्या नानावन्दिजनस्तुताः। नानावाद्यपरिस्पन्दाश्चाग्रेसरमहारथाः॥५७
नानाशौर्यकथासक्तास्तस्मिन्सैन्ये महासुराः। तद्बलं दैत्यसिंहस्य भीमरूपं व्यजायत॥५८
प्रमत्तचण्डमातङ्गतुरंगरथसंकुलम्। प्रतस्थेऽमरयुद्धाय बहुपत्तिपताकि तत्॥ ५९
एतस्मिन्नन्तरे वायुर्देवदूतोऽम्बरालये। दृष्ट्वा स दानवबलं जगामेन्द्रस्य शंसितुम्॥ ६०
स गत्वा तु सभां दिव्यां महेन्द्रस्य महात्मनः। शशंस मध्ये देवानां तत्कार्यं समुपस्थितम्॥
तच्छ्रुत्वा देवराजस्तु निमीलितविलोचनः। बृहस्पतिमुवाचेदं वाक्यं काले महाभुजः॥ ६२

इन्द्र उवाच—

संप्राप्तोऽति विमर्दोऽयं देवानां दानवैः सह। कार्यं किमत्र तद्ब्रूहि नीत्युपायसमन्वितम्॥ ६३
एतच्छ्रुत्वा तु वचनं महेन्द्रस्य गिरांपतिः। इत्युवाच महाभागो बृहस्पतिरुदारधीः॥ ६४
+सामपूर्वा स्मृता नीतिश्चतुरङ्गा पताकिनी। जिगीषतां सुरश्रेष्ठ स्थितिरेषा सनातनी॥ ६५
साम भेदस्तथा दानं दण्डश्चाङ्गचतुष्टयम्। नीतौ क्रमाद्देशकालरिपुयोग्यक्रमादिदम्॥ ६६
×न शान्तिगोचरे लुब्धः क्रूरो लब्धसमाश्रयः। संतापितः खलो याति साध्यतां भ्रष्टसंशयः॥
साम दैत्येषु नैवास्ति यतस्ते लब्धसंश्रयाः। जातिधर्मेण वा भेद्या दानं प्राप्तश्रिये च किम्॥
एकोऽभ्युपायो दण्डोऽत्र भवतां यदि रोचते। दुर्जनेषु कृतं साम महद्याति च वन्ध्यताम्॥ ६९
भयादिति व्यवस्यन्ति क्रूराः साम महात्मनाम्। ऋजुतामार्यबुद्धित्वं दयानीतिव्यतिक्रमम्॥
मन्यन्ते दुर्जना नित्यं साम चापि भयोदयात्। तस्माद्दुर्जनमाक्रान्तुं श्रेयान्पौरुषसंश्रयः॥७१
आक्रान्ते तु क्रिया युक्ता सतामेतन्महाव्रतम्। दुर्जनः सुजनत्वाय कल्पते न कदाचन॥ ७२

* धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके नास्ति। + इतःपरं बृहस्पतिरुवाचेति ङ. च. पुस्तकयोः। × न विद्यतेऽयं श्लोकः क. ख. पुस्तकयोः।

१ ङ. °पिभिः शीघ्रैः कूष्माण्डैः का°। २ ङ. ताभे स°। ३ ङ. निर्मिभीतमहागजे। चतुर्दष्ट्रे गन्धवता शिक्षिते मेघभैरवे। शतहस्तायते कृष्णे तुरङ्गे हेमभूषणे। सि°। ४ ग. मत्ते महागजे। चतुर्दष्ट्रे गन्धवाते शिक्षिते मे भैरवे। शतहस्तायते कृष्णे तुरगे हेमभूषिते। सि°। ५ ङ. शोभमाने भृशं दिवि। सि°। ६ ग. ङ. °र्वङ्गे नानापु°। ७ ग. ङ. °ज्ज्वले। म°। ८ ङ. जालं नद्धमु°। च. जालं मालाशब्दं स°। ९ ङ. °नाचित्रोत्त°। १० ग. °हारथाः। त°। ११ ङ °स्य भ्रमरूप्यं व्यराजत। प्र°। १२ ग. ङ. लयः द°। १३ ग ङ. °पायोपबृंहितम्। १४ क. ख. °रङ्गां पताकिनीम्। जि°। ङ. °रङ्गपताकानी। जि°। १५ ग. घ. °मादयः। न। १६ ग. घ. ङ. मन्यते। १७ ङ. च. वाच्यताम्। १८ ग. °म्। दुर्जनानामबु°। १९ ङ. °तामप्यबु°। २० ङ. °दयम्। त°। २१ ङ. सुनयत्वा°।

सुजनोऽपि स्वभावस्य त्यागं वाञ्छेत्कदाचन । एवं मे बुध्यते बुद्धिर्यूयमत्र व्यवस्यत ॥ ४६
एवमुक्तः सहस्राक्ष एवमेवेत्युवाच तम् । कर्तव्यतां स संचिन्त्य प्रोवाचामरसंसदि ॥ ७४

इन्द्र उवाच—

सावधानेन मे वाचं शृणुध्वं नाकवासिनः । भवन्तो यज्ञभोक्तारस्तुष्टात्मानोऽतिसात्त्विकाः ॥
स्वे महिम्नि स्थिता नित्यं जगतः परिपालकाः । भवतश्चानिमित्तेन बाधन्ते दानवेश्वराः ॥
तेषां सामादि नैवास्ति दण्ड एव विधीयताम् । क्रियतां समरोद्योगः सैन्यं संयोज्यतां मम ॥
आद्रियन्तां च शस्त्राणि पूज्यन्तामस्त्रदेवताः । वाहनानि च यानानि योजयन्तु ममामराः ॥
यमं सेनापतिं कृत्वा शीघ्रमेवं दिवौकसः । इत्युक्ताः समनह्यन्त देवानां ये प्रधानतः ॥ ७९
वाजिनामयुतेनाऽऽजौ हेमघण्टापरिष्कृतम् । नानाश्चर्यगुणोपेतं संप्राप्तं सर्वदैवतैः ॥ ८०
रथं मातलिना क्लृप्तं देवराजस्य दुर्जयम् । यमो महिषमास्थाय सेनाग्रे समवर्तत ॥ ८१
*चण्डकिंकरवृन्देन सर्वतः परिवारितः । कल्पकालोद्धतज्वालापूरिताम्बरलोचनः ॥ ८२
हुताशनश्छागरूढः शक्तिहस्तो व्यवस्थितः । पवनोऽङ्कुशपाणिस्तु विस्तारितमहाजवः ॥
भुजगेन्द्रसमारूढो जलेशो भगवान्स्वयम् । नरयुक्तरथे देवो राक्षसेशो वियच्चरः ॥ ८४
तीक्ष्णखड्गयुतो भीमः समरे समवस्थितः । महासिंहरवो देवो धनाध्यक्षो गदायुधः ॥ ८५
चन्द्रादित्यावाश्विनौ च चतुरङ्गबलान्वितौ । राजभिः सहितास्तस्थुर्गन्धर्वा हेमभूषणाः ॥ ८६
हेमपीतोत्तरासङ्गाश्चित्रवर्मरथायुधाः । नाकपृष्ठशिखण्डास्तु वैदूर्यमकरध्वजाः ॥ ८७
जपारक्तोत्तरासङ्गा राक्षसा रक्तमूर्धजाः । गृध्रध्वजा महावीर्या निर्मलायोविभूषणाः ॥
मुसलासिगदाहस्ता रथे चोष्णीषदंशिताः । महामेघरवा नागा भीमोल्काशनिहेतयः ॥ ८९
यक्षाः कृष्णाम्बरभृतो भीमबाणधनुर्धराः । ताम्रोलूकध्वजा रौद्रा हेमरत्नविभूषणाः ॥ ९०
द्वीपिचर्मोत्तरासङ्गं निशाचरबलं बभौ । गार्ध्रपत्त्रध्वजप्रायमस्थिभूषणभूषितम् ॥ ९१
मुसलायुधदुष्प्रेक्ष्यं नानाप्राणिमहारवम् । किंनराः श्वेतवसनाः सितंपत्त्रिपताकिनः ॥ ९२
मत्तेभवाहनप्रायास्तीक्ष्णतोमरहेतयः । मुक्ताजालपरिष्कारो हंसो रजतनिर्मितः ॥ ९३
केतुर्जलाधिनाथस्य भीमधूमध्वजानलः । पद्मरागमहारत्नविटपं धनदस्य तु ॥ ९४
ध्वजं समुच्छ्रितं भाति गन्तुकाममिवाम्बरम् । वृकेण कांष्ठलोहेन यमस्याऽऽसीन्महाध्वजः
राक्षसेशस्य केतोर्वै प्रेतस्य मुखमाबभौ । हेमसिंहध्वजौ देवौ चन्द्रार्कावमितद्युती ॥ ९६
कुम्भेन रत्नचित्रेण केतुराश्विनयोरभूत् । हेममातङ्गरचितं चित्ररत्नपरिष्कृतम् ॥ ९७
ध्वजं शतक्रतोरासीत्सितचामरमण्डितम् । सनागयक्षगन्धर्वमहोरगनिशाचरौ ॥ ९८

* इत आरभ्य व्यवस्थित इत्यन्तग्रन्थो नास्ति ङ. पुस्तके ।

१ ग. °ञ्छेन्न कर्हिचित् । ए° । २ ग. आह्रियन्तां । ३ क. °न्तु सहाम° । ४ ग. ङ. °मेव दि° । ५ ग. °त । दण्डार्कि° । ६ ग. °वृतेन । ७ ग. च. °क्तिहेतिर्व्यव° । ८ ग. °जर्षिस° । ९ क. ख. घ. °पठित्त° । १० घ. °त्रचर्म° । ११ ङ. संत्रराय° । १२ घ. °युताः । ना° १३ ग. °क्तलोचनाः । गृ° । १४ ङ. °लायुधम्° । १५ ङ. रथैश्चोष्ट्रैश्च दं° । १६ ङ. °र्न पिशाचबलमाबभौ । ताम्रप° । १७ ङ. च.° । तपादाः । प° । १८ ग. घ. ङ. °र्जलधि° । १९ ग. घ. °तिमातृका° । ङ. °नि मातृका । २० ग. काष्ठलो° । २१ ग. °रा । साचाऽऽसीद्वि° ।

सेना सा देवराजस्य दुर्जया भुवनत्रये। कोटयस्तास्त्रयस्त्रिंशद्देवदेवनिकायिनाम् ॥ ९९

हिमाचलाभे सितकर्णचामरे सुवर्णपद्मामलसुन्दरस्रजि।
कृताभिरागोज्ज्वलकुङ्कुमाङ्कुरे कपोललीलालिकदम्बसंकुले ॥ १००
स्थितस्तदैरावतनामकुञ्जरे महाबलश्चित्रविभूषणाम्बरः।
विशालवज्रांशुवितानभूषितः प्रकीर्णकेयूरभुजाग्रमण्डलः॥
सहस्रदृग्बन्दिसहस्रसंस्तुतस्त्रिविष्टपेऽशोभत पाकशासनः॥ १०१
तुरङ्गमातङ्गचलौघसंकुला सितातपत्रध्वजराजिशालिनी।
चमूश्च सा दुर्जयपंक्तिसंतता विभाति नानायुधयोधदुस्तरा ॥ १०२

इति श्रीमात्स्ये महापुराणे तारकोपाख्याने रणयोजनं नामाष्टाचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ७२५२ ॥

अथ नवचत्वारिंशदधिकशततमोऽध्यायः।

सूत उवाच—

सुरासुराणां संमर्दस्तस्मिंस्त्वत्यन्तदारुणे। तुमुलोऽतिमहानासीत्सेनयोरुभयोरपि ॥ १
गर्जतां देवदैत्यानां शङ्खभेरीरवेण च। तूर्याणां चैव निर्घोषैर्मातङ्गानां च बृंहितैः ॥ २
ह्रेषतां हयवृन्दानां रथनेमिस्वनेन च। ज्याघोषेण च शूराणां तुमुलोऽतिमहानभूत् ॥ ३
समासाद्योभये? सेने परस्परजयैषिणाम्। रोषेणातिपरीतानां त्यक्तजीवितचेतसाम् ॥ ४
समासाद्य तु तेऽन्योन्यं प्रक्रमेण विलोमतः। रथेनाऽऽसक्तपादातो रथेन च तुरंगमः ॥५
हस्ती पदातिसंयुक्तो रथिना च क्वचिद्रथी। मातङ्गेनापरो हस्ती तुरंगैर्बहुभिर्गजः ॥ ६
पदातिरेको बहुभिर्गजैर्मत्तैश्च युज्यते। ततः प्रासाशनिगदाभिन्दिपालपरश्वधैः ॥ ७
शक्तिभिः पट्टिशैः शूलैर्मुद्गरैः कुणपैर्गडैः। चक्रैश्च शङ्कुभिश्चैव तोमरैरङ्कुशैः सितैः ॥ ८
कर्णिनालीकनाराचवत्सदन्तार्धचन्द्रकैः। भल्लैश्च शतपत्रैश्च शुकतुण्डैश्च निर्मलैः ॥ ९
वृष्टिरत्यद्भुताकारा गगने समदृश्यत। संप्रच्छाद्य दिशः सर्वास्तमोमयमिवाकरोत् ॥ १०
न प्राज्ञायत तेऽन्योन्यं तस्मिंस्तमसि संकुले। अलक्ष्यं विसृजन्तस्ते हेतिसंघातमुद्धतम् ॥
पतितं सेनयोर्मध्ये निरीक्षन्ते परस्परम्। ततो ध्वजैर्भुजैश्छत्रैः शिरोभिश्च सकुण्डलैः ॥
गजैस्तुरंगैः पादातैः पतद्भिः पतितैरपि। आकाशसरसो भ्रष्टैः पङ्कजैरिव भूः स्तृता ॥१३
भग्नदन्ता भिन्नकुम्भाश्छिन्नदीर्घमहाकराः। गजाः शलनिभाः पेतुर्धरण्यां रुधिरस्रवाः ॥
भग्नेषादण्डचक्राक्षा रथाश्च शकलीकृताः। पेतुः शकलतां यातास्तुरंगाश्च सहस्रशः ॥१५
ततोऽसृग्ह्रददुस्तारा पृथिवी समजायत। नद्यश्च रुधिरावर्ता हर्षदाः पिशिताशिनाम् ॥
वेतालाक्रीडमभवत्तत्संकुलरणाजिरम् ॥ १६

इति श्रीमात्स्ये महापुराणे तारकासुरोपाख्याने देवासुरयुद्धं नामैकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ७२६८ ॥

१ क. ख. °शद्देवदेवनि°। २ ग. °यथ्नसं। ३ ङ. °पत्तिसंयुता। ४ ङ. °स्मिन्परमदा°। ५ ङ. °मेणानुमलो°। ६ ङ. कुठपैर्गडैः। च°। ७ ङ. प्रत्यगयत। ८ ग. ङ. °मुत्तमम्। प°। ९ ग. °म्। आक्रीडमभवत्प्रेतैः संकुलं च र°।

अथ पञ्चाशदधिकशततमोऽध्यायः ।

---

सूत उवाच—
अथ ग्रसनमालोक्य यमः क्रोधविमूर्छितः । ववर्ष शरवर्षेण विशेषेणाग्निवर्चसां ॥ १
स विद्धो बहुभिर्बाणैर्ग्रसनोऽतिपराक्रमः । कृतप्रतिकृताकाङ्क्षी धनुरानम्य भैरवम् ॥ २
शतैः पञ्चभिरत्युग्रैः शराणां यममर्दयत् । स विचिन्त्य यमो बाणान्ग्रसनस्यातिपौरुषम् ॥ ३
बाणवृष्टिभिरुग्राभिर्यमो ग्रसनमर्दयत् । कृतान्तशरवृष्टिं तां वियति प्रतिसर्पिणीम् ॥ ४
चिच्छेद शरवर्षेण ग्रसनो दानवेश्वरः । विफलां तां समालोक्य यमस्तां शरसंततिम् ॥ ५
स विचिन्त्य शरव्रातं ग्रसनस्य रथं प्रति । चिक्षेप मुद्गरं घोरं तरसा तस्य चान्तकः ॥ ६
स तं मुद्गरमायान्तमुत्प्लुत्य गगनस्थितम् । जग्राह वामहस्तेन याम्यं दानवनन्दनः ॥ ७
तमेव मुद्गरं * गृह्य यमस्य महिषं रुषा । पातयामास वेगेन स पपात महीतले ॥ ८
उत्प्लुत्याथ यमस्तस्मान्महिषात्क्षिप्यतिव्यतः । प्रासेन ताडयामास ग्रसनं वदने दृढम् ॥ ९
स तु प्रासप्रहारेण मूर्छितो न्यपतद्भुवि । ग्रसनं पतितं दृष्ट्वा जम्भो भीमपराक्रमः ॥ १०
यमस्य भिन्दिपालेन प्रहारमकरोद्‌धृदि । यमस्तेन प्रहारेण सुस्राव रुधिरं मुखात् ॥ ११
कृतान्तं मर्दितं दृष्ट्वा गदापाणिर्धनाधिपः । वृतो यक्षायुतशतैर्जम्भं प्रत्युद्ययौ रुषा ॥ १२
जम्भो रुषा तमायान्तं दानवानीकसंवृतः । उवाच प्राज्ञो वाक्यं तु यथा स्निग्धेन भाषितम् ॥
ग्रसनो लब्धसंज्ञोऽथ यमस्य प्राहिणोद्गदाम् । मणिहेमपरिष्कारां गुर्वीमरिविमर्दिनीम् ॥ १४
तामप्रतर्क्यां संप्रेक्ष्य गदां महिषवाहनः । गदायाः प्रतिघातार्थं जगद्दलनभैरवम् ॥ १५
दण्डं मुमोच कोपेन ज्वालामालासमाकुलम् । स गदां वियति प्राप्य ररासाम्बुधरो यथा ॥ १६
संघट्टमभवत्ताभ्यां शैलाभ्यामिव दुःसहम् । ताभ्यां निष्पेषनिर्ह्रादजडीकृतदिगन्तरम् ॥ १७
जगद्व्याकुलतां यातं प्रलयागमशङ्कया । क्षणात्प्रशान्तनिर्ह्रादं ज्वलदुल्कासमाचितम् ॥ १८
निष्पेषेण तयोर्भीममभूद्गगनगोचरम् । निहत्याथ गदां दण्डस्ततो ग्रसनमूर्धनि ॥ १९
हृत्वा श्रियमिवानर्थो दुर्वृत्तस्यापतद्‌दृढः । स तु तेन प्रहारेण दृष्ट्वा सतिमिरा दिशः ॥ २०
पपात भूमौ निःसंज्ञो भूमिरेणुविभूषितः । ततो हाहारवो घोरः सेनयोरुभयोरभूत् ॥ २१
ततो मुहूर्तमात्रेण ग्रसनः प्राप्य चेतनाम् । अपश्यत्स्वां तनुं ध्वस्तां विलोलाभरणाम्बराम्
स चापि चिन्तयामास कृते प्रतिकृतिक्रियाम् । मद्विधे वस्तुनि पुंसि प्रभोः परिभवोदयात् ॥
मय्याश्रितानि सैन्यानि जिते मयि विनाशिता । असंभावित एवास्तु जनः स्वच्छन्दचेष्टितः ॥
न तु व्यर्थशतोद्‌घुष्टसंभावितधनो नरः । एवं संचिन्त्य वेगेन समुत्तस्थौ महाबलः ॥ २५
मुद्गरं कालदण्डाभं गृहीत्वा गिरिसंनिभः । ग्रसनो घोरसंकल्पः संदष्टौष्ठपुटच्छदः ॥ २६
रथेन त्वरितो गच्छन्नाससादान्तकं रणे । समासाद्य यमं युद्धे ग्रसनो भ्राम्य मुद्गरम् ॥ २७

---

* अत्राऽऽर्षो ल्यप् ।

---

१ ङ. विमर्दनः । व° । २ क. ख. °साम् । स । ३ क. ख. °यन् । स । ४ क. ख. °यन् । कृ° । ५ ग. घ ङ. तामापतन्तीं सं° । ६ °र्थं नदञ्जलदभै° । ७ ग. °घर्षम° । ८ ख. °माहित° । ९ ग. °थे या श्रुतिः पु° । १० ङ. °स्तुतः पुं° । ११ क. °दयाः । म° । ङ. °दयः । मं° । १२ ङ. °निभम् । प्र° ।

वेगेन महता रौद्रं चिक्षेप यममूर्धनि । विलोक्य मुद्गरं दीप्तं यमः संभ्रान्तलोचनः ॥ २८
वञ्चयामास दुर्धर्षं मुद्गरं स महाबलः । तस्मिन्नपसृते दूरं चण्डानां भीमकर्मणाम् ॥ २९
याम्यानां किंकराणां तु सहस्रं निष्पिपेष ह । ततस्तां निहतां दृष्ट्वा घोरां किंकरवाहिनीम् ॥
अगमत्परमं क्षोभं नानाप्रहरणोद्यतः । ग्रसनस्तु समालोक्य तां किंकरमयीं चमूम् ॥ ३१
मेने यमसहस्राणि सृष्टानि यममायया । निग्राह्य ग्रसनः सेनां विसृजन्नस्त्रवृष्टयः* ॥ ३२
कल्पान्तघोरसंकाशो बभूव क्रोधमूर्छितः । कांश्चिद्बिभेद शूलेन कांश्चिद्बाणैरजिह्मगैः ३३
कांश्चित्पिपेष गदया कांश्च मुद्गरवृष्टिभिः । केचित्प्रासप्रहारैश्च दारुणैस्ताडितास्तदा ॥ ३४
अपरे बहुशस्तस्य ललम्बुर्बाहुमण्डले । शिलाभिरपरे जघ्नुर्द्रुमैरन्यैर्महोच्छ्रयैः ॥ ३५
तस्यापरे तु गात्रेषु दशनैरप्यदंशयन् । अपरे मुष्टिभिः पृष्ठं किंकराः प्रहरन्ति च ॥ ३६
अभिद्रुतस्तथा घोरैर्ग्रसनः क्रोधमूर्छितः । उत्सृज्य गात्रं भूपृष्ठे निष्पिपेष सहस्रशः ॥ ३७
कांश्चिदुत्थाय मुष्टीभिर्जघ्ने किंकरसंश्रयान् । स तु किंकरयुद्धेन ग्रसनः श्रममाप्तवान् ॥ ३८
तमालोक्य यमः श्रान्तं निहतां च स्ववाहिनीम् । आजगाम समुद्यम्य दण्डं महिषवाहनः ३९
ग्रसनस्तु समायान्तमाजघ्ने गदयोरसि । अचिन्तयित्वा तत्कर्म ग्रसनस्यान्तकोऽरिहा ॥ ४०
जघ्ने रथस्य मूर्धन्यान्व्याघ्रान्दण्डेन कोपनः । स रथो दण्डमथितैर्व्याघ्रैरर्धैर्विकृष्यते ॥ ४१
संशयः पुरुषस्येव चित्तं दैत्यस्य तद्रथम् । समुत्सृज्य रथं दैत्यः पदातिर्धरणीं गतः ॥ ४२
यमं भुजाभ्यामादाय योधयामास दानवः । यमोऽपि शस्त्राण्युत्सृज्य बाहुयुद्धेष्ववर्तत ४३
ग्रसनः कटिवस्त्रेस्तु यमं गृह्य बलोद्धतः । भ्रामयामास वेगेन प्राचित्तभिद संभ्रमः ॥ ४४
यमोऽपि कण्ठेऽवष्टभ्य दैत्यं बाहुयुगेन तु । वेगेन भ्रामयामास समुत्क्षिप्य महीतलात् ॥४५
ततो मुष्टिभिरन्योन्यं निर्दयौ तौ निजघ्नतुः । दैत्येन्द्रस्यातिकायत्वात्ततः श्रान्तभुजो यमः ४६
स्कन्धे निधाय दैत्यस्य मुखं विश्रान्तिमैच्छत । तमालक्ष्य ततो दैत्यः श्रान्तमन्तकमोजसा ४७
निष्पिपेष महीपृष्ठे बहुशः पार्ष्णिपाणिभिः । यावद्यमस्य वदनात्सुस्राव रुधिरं बहु ॥ ४८
निर्जीवितं यमं दृष्ट्वा ततः संत्यज्य दानवः । जयं प्राप्योद्धतं दैत्यो नादं मुक्त्वा महास्वनः ॥
स्वं स्वं सैन्यं समासाद्य तस्थौ गिरिरिवाचलः । धनाधिपस्य जम्भेन सायकैर्मर्मभेदिभिः ॥५०
दिशोऽवरुद्धाः क्रुद्धेन सैन्यं चास्य निकृन्तितम् । ततः क्रोधपरीतस्तु धनेशो जम्भदानवम् ॥
हृदि विव्याध बाणानां सहस्रेणाग्निवर्चसाम् । सारथिं च शतेनाऽऽजौ ध्वजं दशभिरेव च ॥
हस्तौ च पञ्चसप्तत्या मार्गणैर्दशभिर्धनुः । मार्गणैर्बर्हिपत्राङ्गैस्तैलधौतैरजिह्मगैः ॥ ५३

---

* अत्र द्वितीयार्थे प्रथमा बोद्धव्या ।

---

१ ग. ङ. °भिः । कांश्चित्प्रा° । २ ग °रुणैः पट्टिशैस्त° । ३ ङ. °रनाडयन्स तु । अ° । ४ ग. ङ. °रे संघश° । ५ ग. °त्सृष्टगात्रात्भूपृ° । ङ °रमृष्ट ग्रान्भूपृ° । ६ ग. °घ्ने मूर्धन्यथाऽऽदाय प्राणदण्डे° । घ. °घ्ने धेरथमूर्धन्याघ्नितां च स्ववाहिनीम् । स । ७ ङ. °घ्रैनंष्टैर्न कृ° । ८ ग. संशयः । ङ संशये । च संशयं । ९ ङ. शस्त्रमुत्सृ° । १० ग. °द्धेऽव्यव° । ङ. °द्धे व्यव° । ११ ङ. न विचित्तवि° । १२ ग. प्रदीपमिव संभ्रमम् । य° । १३ क. ज. ग. °भिराजघ्नुरर्दयन्तौ परस्परम् । दै° । १४ ङ. °भिः । ततो यम° । १५ ग. स्वीयं । ङ. च. स्वकं । १६ ङ. °न्यं तत्र द्रुतं भृशम् । त° । १७ ग. निर्वर्तित° । १८ ग. °गैः । रथाण्डसिंहमेवं तु विव्या° । ङ. °गैः । रथं च सिंहमेकेन विव्या° ।

सिंहमेकेन तं तीक्ष्णैर्विव्याध दशभिः शरैः । जम्भस्तु कर्म तद्दृष्ट्वा धनेशस्यातिदुष्करम् ॥५४
हृदि धैर्यं समालम्ब्य किंचित्संत्रस्तमानसः । जग्राह निशितान्बाणांञ्छत्रुमर्मविभेदिनः ५५
आकर्णाकृष्टचापस्तु जम्भः क्रोधपरिप्लुतः । विव्याध धनदं तीक्ष्णैः शरैर्वक्षसि दानवः॥५६
सारथिं चास्य बाणेन दृढेनाभ्यहनद्धृदि । चिच्छेद ज्यामथैकेन तैलधौतेन दानवः ॥ ५७
ततस्तु निशितैर्बाणैर्दारुणैर्मर्मभेदिभिः । विव्याधोरसि वित्तेशं दशभिः क्रूरकर्मकृत् ॥ ५८
मोहं परमतो गच्छन्दृढविद्धो हि वित्तपः । स क्षणाद्धैर्यमालम्ब्य धनुराकृष्य भैरवम् ॥ ५९
किरन्बाणसहस्राणि निशितानि धनाधिपः । दिशः खं विदिशो भूमीरनीकान्यसुरस्य च
पूरयामास वेगेन संछाद्य रविमण्डलम् । जम्भोऽपि परमैकैकं शरैर्बहुभिराहवे ॥ ६१
चिच्छेद लघुसंधानो धनेशस्यातिपौरुषात् । ततो धनेशः संक्रुद्धो दानवेन्द्रस्य कर्मणा ॥६२
व्यधमत्तस्य सैन्यानि नानासायकवृष्टिभिः । तद्दृष्ट्वा दुष्कृतं कर्म धनाध्यक्षस्य दानवः ६३
गृहीत्वा मुद्गरं भीममायसं हेमभूषितम् । धनदानुचरान्यक्षान्निष्पिपेष सहस्रशः ॥ ६४
ते वध्यमाना दैत्येन मुञ्चन्तो भैरवान्रवान् । रथं धनपतेः सर्वे परिवार्य व्यवस्थिताः ॥ ६५
दृष्ट्वा तानर्दितान्देवः शूलं जग्राह दारुणम् । तेन दैत्यसहस्राणि सूदयामास सत्वरः ॥ ६६
क्षीयमाणेषु दैत्येषु दानवः क्रोधमूर्छितः । जग्राह परशुं दैत्यो मर्दनं दैत्यविद्विषाम् ॥ ६७
स तेन शितधारेण धनभर्तुर्महारथम् । चिच्छेद शतशो दैत्यो ह्याखुः स्निग्धमिवाम्बरम् ६८
पदातिरथ वित्तेशो गदामादाय भैरवीम् । महाहवविमर्देषु दृप्तशत्रुविनाशिनीम् ॥ ६९
अधृष्यां सर्वभूतानां बहुदर्पगणार्चिताम् । नानाचन्दनदिग्धाङ्गां दिव्यपुष्पविवासिताम् ७०
निर्मलायोमयीं गुर्वीममोघां हेमभूषणाम् । चिक्षेप मूर्ध्नि संक्रुद्धो जम्भस्य तु धनाधिपः॥
आयान्तीं तां समालोक्य तडित्संघातमण्डिताम् । दैत्यो गदाभिघातार्थं शस्त्रवृष्टिं मुमोच ह
चक्राणि कुणपान्प्रासान्भुशुण्डीः पट्टिशानपि । हेमकेयूरनद्धाभ्यां बाहुभ्यां चण्डविक्रमः ॥
व्यर्थीकृत्य तु तान्सर्वानायुधान्दैत्यवक्षसि । प्रस्फुरन्ती पपातोग्रा महोल्केवाद्रिकंदरे ॥ ७४
स तयाऽभिहतो गाढं पपात रथकूबरे । स्रोतोभिश्चास्य रुधिरं सुस्राव गतचेतसः ॥ ७५
जम्भं तु निहतं मत्वा कुजम्भो भैरवस्वनः । धनाधिपस्य संक्रुद्धो वाक्येनातीव कोपितः॥७६
चक्रे बाणमयं जालं दिक्षु यक्षाधिपस्य तु । चिच्छेद बाणजालं तदर्धचन्द्रैः शितैस्ततः॥ ७७
मुमोच शरवृष्टिं तु तस्मै यक्षाधिपो बली । स तं दैत्यः शरव्रातं चिच्छेद निशितैः शरैः ॥ ७८
व्यर्थीकृतां तु तां दृष्ट्वा शरवृष्टिं धनाधिपः । शक्तिं जग्राह दुर्धर्षां हेमघण्टाट्टहासिनीम्॥ ७९
बाहुना रत्नकेयूरकान्तिसंतानहासिना । स तां निरूप्य वेगेन कुजम्भाय मुमोच ह ॥ ८०
सा कुजम्भस्य हृदयं दारयामास दारुणम् । वित्तेहा स्वल्पसत्त्वस्य पुरुषस्येव भाविता ८१
अथास्य हृदयं भित्त्वा जगाम धरणीतलम् । ततो मुहूर्तादस्वस्थो दानवो दारुणाकृतिः ॥८२
जग्राह पट्टिशं दैत्यः प्रांशुं शितशिलीमुखम् । स तेन पट्टिशेनाऽऽजौ धनदस्य स्तनान्तरम्८३
वाक्येन तीक्ष्णरूपेण मर्मान्तरविसर्पिणा । निर्बिभेदाभिजातस्य हृदयं दुर्जनो यथा ॥ ८४
तेन पट्टिशघातेन धनेशः परिमूर्छितः । निपपात रथोपस्थे जर्जरो धूर्वहो यथा ॥ ८५

---

१ ग. °णाञ्छेत्तुं म° । २ ग. °भिः । मो° । ३ ङ. दानवः । ४ ग. च. भैरवाम् । ५ ग. दृढ्वा° । ङ. दृष्ट्वाश° । ६ ग. °योमुखीं गु° । ७ ग. °न्सर्वास्ते सर्वे दैत्य° । ८ ङ. दुर्जयो ।

तथागतं तु तं दृष्ट्वा धनेशं नरवाहनम्। खड्गास्त्रो निर्ऋतिर्देवो निशाचरबलानुगः॥ ८६
अभिदुद्राव वेगेन कुजम्भं भीमविक्रमम्। अथ दृष्ट्वा तु दुर्धर्षं कुजम्भो राक्षसेश्वरम्॥ ८७
चोदयामास सैन्यानि राक्षसेन्द्रवधं प्रति। स दृष्ट्वा चोदितां सेनां भल्लनानास्त्रभीषणाम्॥
रथादाप्लुत्य वेगेन भूषणद्युतिभास्वरः। खड्गेन कमलानीव विकोशेनाम्बरत्विषा॥ ८९
चिच्छेद रिपुवक्त्राणि विचित्राणि समन्ततः। तिर्यक्पृष्ठमधश्चोर्ध्वं दीर्घबाहुर्महासिना॥९०
संदष्टौष्ठपुटाटोपभ्रुकुटीविकटाननः। प्रचण्डकोपरक्ताक्षो न्यकृन्तद्दानवाव्रणे॥ ९१
ततो निःशेषितप्रायां विलोक्य स्वामनीकिनीम्। मुक्त्वा कुजम्भो धनदं राक्षसेन्द्रमभिद्रवन्
लब्धसंज्ञोऽथ जम्भस्तु धनाध्यक्षपदानुगान्। जीवग्राहान्स जग्राह बद्ध्वा पाशैः सहस्रशः
[ *मूर्तिमन्ति तु रत्नानि विविधानि च दानवाः। वाहनानि च दिव्यानि विमानानि सहस्रशः॥ ९४
धनेशो लब्धसंज्ञोऽथ तामवस्थां विलोक्य तु। ] +निःश्वसन्दीर्घमुष्णं च रोषात्ताम्रविलोचनः॥ ९५
ध्यात्वाऽस्त्रं गारुडं दिव्यं बाणं संधाय कार्मुके। मुमोच दानवानीके तं बाणं शत्रुदारणम्
प्रथमं कार्मुकात्तस्य निश्चेरुर्धूमराजयः। अनन्तरं स्फुलिङ्गानां कोटयो दीप्तवर्चसाम्॥
ततो ज्वालाकुलं व्योम चकारास्त्रं समन्ततः। ततः क्रमेण दुर्वारं नानारूपं तदाऽभवत्॥
अमूर्तश्चाभवल्लोको ह्यन्धकारसमावृतः। ततोऽन्तरिक्षे शंसन्ति तेजस्ते तु परिष्कृतम्॥९९
कुजम्भस्तत्समालोच्य दानवोऽतिपराक्रमः। अभिदुद्राव वेगेन पदातिर्धनदं नदन्॥ १००
अथाभिमुखमायान्तं दैत्यं दृष्ट्वा धनाधिपः। बभूव संभ्रमाविष्टः पलायनपरायणः॥ १०१
ततः पलायतस्तस्य मुकुटं रत्नमण्डितम्। पपात भूतले दीप्तं रविबिम्बमिवाम्बरात्॥ १०२
शूराणामभिजातानां भर्तर्यपसृते रणात्। मर्तुं सङ्ग्रामशिरसि युक्तं तद्भूषणाग्रतः॥ १०३
इति व्यवस्य दुर्धर्षा नानाशस्त्रास्त्रपाणयः। युयुत्सवः स्थिता यक्षा मुकुटं परिवार्य तम्॥
अभिमानधना वीरा धनदस्य पदानुगाः। तानमर्षाच्च संप्रेक्ष्य दानवश्चण्डपौरुषः॥ १०५
भुशुण्डीं भैरवाकारां गृहीत्वा शैलगौरवाम्। रक्षिणो मुकुटस्याथ निष्पिपेष निशाचरान्॥
तान्प्रमथ्याथ दनुजो मुकुटं तत्स्वके रथे। समारोप्यामररिपुर्जित्वा धनदमाहवे॥ १०७
धनानि रत्नानि च मूर्तिमन्ति तथा निधानानि शरीरिणश्च।
आदाय सर्वाणि जगाम दैत्यो जम्भः स्वसैन्यं दनुजेन्द्रसिंहः॥
धनाधिपो वै विनिकीर्णमूर्धजो जगाम दीनः सुरभर्तुरन्तिकम्॥ १०८
कुजम्भेनाथ संसक्तो रजनीचरनन्दनः। मायाममोघामाश्रित्य तामसीं राक्षसेश्वरः॥ १०९
मोहयामास दैत्येन्द्रं जगत्कृत्वा तमोमयम्। ततो विफलनेत्राणि दानवानां बलानि तु॥११०

* एतच्चिह्नान्तर्गतग्रन्थो ग. पुस्तके नास्ति। न विद्यतेऽयं श्लोको घ. पुस्तके। + एतदर्धस्थानेऽयं पाठो ग. पुस्तके—ततस्तु निर्ऋतिर्देवो रोषादाताम्रलोचन इति।

१ ग. °भास्करः। ङ. भासुरः। २ ग. ङ. °वत्। ल°। ३ ङ. शस्त्रं। ४ ग. °रिक्षं संशान्ततेजस्कं तु परस्परम्। ते शस्त्रे द्वे समालोक्य दा°। ५ ङ. °क्षे संजाते तेजस्को तु पराक्रमम्। नानाशस्त्रैः समालोक्य दा°। ६ ङ. च. °रीरश्नन्ति। भा°। ७ ग. °त्सो बलोद्धतो हर्षसमन्वितश्च। कृत्वा तमोमयीं मायां ताम°।

न शेकुश्चलितं तत्र पदादपि पदं तदा । ततो नानास्त्रवर्षेण दानवानां महाचमूम् ॥ १११
जघान घननीहारतिमिरातुरवाहनाम् । वध्यमानेषु दैत्येषु कुजम्भे मूढचेतसि ॥ ११२
माहिषो दानवेन्द्रस्तु कल्पान्ताम्भोदसंनिभः । अस्त्रं चकार सावित्रमुल्कासंघातमण्डितम् ॥
विजृम्भत्यथ सावित्रे परमास्त्रे प्रतापिनि । प्रणाशमगमत्तीव्रं तमो घोरमनन्तरम् ॥ ११४
ततोऽस्त्रं विस्फुलिङ्गाङ्कं तमः कृत्स्नं व्यनाशयत् । प्रफुल्लारुणपद्मौघं शरदीवामलं सरः॥११५
ततस्तमसि संशान्ते दैत्येन्द्राः प्राप्तचक्षुषः । चक्रुः क्रूरेण मनसा देवानीकैः सहाद्भुतम् ॥११६
शस्त्रैरमर्षान्निर्मुक्तैर्भुजंगास्त्रं विनोदितम् । अथाऽऽदाय धनुर्घोरमिषूंश्चाऽऽशीविषोपमान् ॥
कुजम्भोऽधावत क्षिप्तं रक्षोराजबलं प्रति । राक्षसेन्द्रस्तमायान्तं विलोक्य सपदानुगः[३] ॥११८
विव्याध निशितैर्बाणैः क्रूराशीविषभीषणैः । तदादानं च संधानं न मोक्षश्चापि लक्ष्यते ॥
चिच्छेदास्य[४] शरव्रातान्स्वशरैरतिलाघवात् । ध्वजं परमतीक्ष्णेन चित्रकर्माऽमरद्विषः ॥ १२०
सारथिं चास्य भल्लेन रथनीडादपातयत्[६] । कुजम्भः कर्म तद्दृष्ट्वा[५] राक्षसेन्द्रस्य संयुगे ॥ १२१
रोषरक्तेक्षणयुतो रथादाप्लुत्य दानवः । खड्गं जग्राह वेगेन शरदम्बरनिर्मलम् ॥ १२२
चर्म चोदयखण्डेन्दुदशकेन विभूषितम् । अभ्यद्रवद्रणे दैत्यो रक्षोधिपतिमोजसा ॥ १२३
तं रक्षोधिपतिः प्रासं मुद्गरेणाहनद्धृदि । स तु तेन प्रहारेण क्षीणः संभ्रान्तमानसः ॥ १२४
तस्थावचेष्टो दनुजो यथा धीरो धराधरः । स मुहूर्तं समाश्वस्तो दानवेन्द्रोऽतिदुर्जयः ॥ १२५
रथमारुह्य जग्राह रक्षो वामकरेण तु । केशेषु निर्ऋतिं दैत्यो जानुनाऽऽक्रम्य धिष्ठितम् १२६
ततः खड्गेन च शिरश्छेत्तुमैच्छदमर्षणः । तस्मिंस्तदन्तरे देवो वरुणोऽपांपतिर्द्रुतम् ॥ १२७
पाशेन दानवेन्द्रस्य बबन्ध च भुजद्वयम् । ततो बद्धभुजं दैत्यं विफलीकृतपौरुषम् ॥ १२८
ताडयामास गदया दयामुत्सृज्य पाशभृत् । स तु तेन प्रहारेण स्रोतोभिः क्षतजं वमन् ॥ १२९
दधार रूपं मेघस्य विद्युन्मालालतावृतम् । तदवस्थागतं दृष्ट्वा कुजम्भं महिषासुरः ॥ १३०
व्यावृत्तवदनेऽगाधे ग्रस्तुमैच्छत्सुरावुभौ । निर्ऋतिं वरुणं चैव तीक्ष्णदंष्ट्रोत्कटाननः ॥ १३१
तावभिप्रायमालक्ष्य तस्य दैत्यस्य दूषितम् । त्यक्त्वा रथपथं भीतौ माहिषस्यातिरंहसा॥१३२
भृशं द्रुतौ जवाद्दिग्भ्यामुभाभ्यां भयविह्वलौ । जगाम निर्ऋतिः क्षिप्रं शरणं पाकशासनम्॥
क्रुद्धस्तु महिषो दैत्यो वरुणं समभिद्रुतः । तमन्तकमुखासक्तमालोक्य हिमवद्द्युतिः ॥१३४
चक्रे सोमास्त्रनिःसृष्टं हिमसंघातकण्टकम् । वायव्यं चास्त्रमतुलं चन्द्रश्चक्रे द्वितीयकम् १३५
वायुना तेन चन्द्रेण[१३] संशुष्केण हिमेन च । व्यथिता दानवाः सर्वे शीतोच्छिन्ना विपौरुषाः ॥
न शेकुश्चलितुं पद्भ्यां नास्त्राण्यादातुमेव च । महाहिमनिपातेन शस्त्रैश्चन्द्रप्रचोदितैः ॥१३७
गात्राण्यसुरसैन्यानामदह्यन्त समन्ततः । माहिषो निष्प्रयत्नस्तु शीतेनाऽऽकम्पिताननः॥१३८
कक्षावालम्ब्य पाणिभ्यामुपविष्टो ह्यधोमुखः । सर्वे ते निष्प्रतीकारा दैत्याश्चन्द्रमसा जिताः

---

१ ग. पदान्तरम् । त° । ङ. पदात्पदम् । त° । २ ङ. °स्त्रं नभः कृत्स्नं व्यजायत । प्र° । ३ ङ. °ते । निरस्यतः शर° । ४ च. °च्छेद तैः शरव्रातैस्ताञ्शरानति° । ५ ग. °न चकर्तामरविद्विट्° । ङ. °न निचकर्ताम° । ६ ङ. च. °पाहरत् । कु° । ७ ङ. पीनाग्रं । ८ ग. °ण किंचित्संभ्रान्तलोचनः । त° । ९ ङ. संभ्रान्त° । १० ङ. °दनोऽत्यर्थं भ्रं° । ११ ग. °क्ष्णं बन्धोत्क° । १२ ग. °मर्दाधिति । ङ. °मदीधितिम् । च° । १३ ग. ङ. चण्डेन ।

रणेच्छां दूरतस्त्यक्त्वा तस्थुस्ते जीवितार्थिनः । तत्राब्रवीत्कालनेमिर्दैत्यान्कोपेन दीपितः ॥
भो भोः शूङ्गारिणः शूराः सर्वे शस्त्रास्त्रपारगाः । एकैकोऽपि जगत्सर्वं शक्तस्तुलयितुं भुजैः
एकैकोऽपि क्षमो ग्रस्तुं जगत्सर्वं चराचरम् । एकैकस्यापि पर्याप्ता न सर्वेऽपि दिवौकसः॥१४२
कलां पूरयितुं यत्नात्षोडशीमतिविक्रमाः । किं प्रयाताश्च तिष्ठध्वं समरेऽमरनिर्जिताः ॥१४३
न युक्तमेतच्छूराणां विशेषाद्दैत्यजन्मनाम् । राजा चान्तरितोऽस्माकं तारको लोकमारकः ॥
विरतानां रणादस्मात्क्रुद्धः प्राणान्हरिष्यति । शीतेन नष्टश्रुतयो भ्रष्टवाक्पाटवास्तथा १४५
मूकास्तदाऽभवन्दैत्या रणद्दशनपङ्क्तयः । तान्दृष्ट्वा नष्टचेतस्कान्दैत्याञ्छीतेन सादितान् ॥
मत्वा कालक्षमं कार्यं कालनेमिर्महासुरः । आश्रित्य दानवीं मायां वितत्य स्वं महावपुः १४७
पूरयामास गगनं दिशो विदिश एव च । निर्ममे दानवेन्द्रेशः शरीरे भास्करायुतम् ॥ १४८
दिशश्च मायया चण्डैः पूरयामास पावकैः । ततो ज्वालाकुलं सर्वं त्रैलोक्यमभवत्क्षणात् ॥
तेन ज्वालासमूहेन हिमांशुरगमच्छमम् । ततः क्रमेण विभ्रष्टं शीतदुर्दिनमावभौ ॥ १५०
तद्बलं दानवेन्द्राणां मायया कालनेमिनः । तद्दृष्ट्वा दानवानीकं लब्धसंज्ञं दिवाकरः ॥
उवाचारुणमुद्भ्रान्तः कोपालोकैकलोचनः ॥ १५१

दिवाकर उवाच—

नयारुण रथं शीघ्रं कालनेमिरथो यतः । विमर्दस्तत्र विषमो भविता शूरसंक्षयः ॥ १५२
जित एष शशाङ्कोऽत्र यद्बलं वयमाश्रिताः । इत्युक्तश्चोदयामास रथं गरुडपूर्वजः ॥ १५३
प्रयत्नविधृतैरश्वैः सितचामरमालिभिः । जगद्दीपोऽथ भगवाञ्जग्राह विततं धनुः ॥ १५४
शरौ च द्वौ महाभागो दिव्यावाशीविषद्युती । संचारास्त्रेण संधाय बाणमेकं ससर्ज सः १५५
द्वितीयमिन्द्रजालेन योजितं प्रमुमोच ह । संचारास्त्रेण रूपाणां क्षणाच्चक्रे विपर्ययम् ॥१५६
देवानां दानवं रूपं दानवानां च दैविकम् । मत्वा सुरान्स्वकानेव जघ्ने घोरास्त्रलाघवात् ॥
कालनेमी रुषाविष्टः कृतान्त इव संक्षये । कांश्चित्खड्गेन तीक्ष्णेन कांश्चिन्नाराचवृष्टिभिः ॥
कांश्चिद्गदाभिर्घोराभिः कांश्चिद्घोरैः परश्वधैः ॥ १५९

शिरांसि केषांचिदपातयच्च भुजान्रथान्सारथींश्चोग्रवेगः ।
कांश्चित्पिपेषाथ रथस्य वेगात्कांश्चित्क्रुधा चोद्धतमुष्टिपातैः ॥ १६०

रणे विनिहतान्दृष्ट्वा नेमिः स्वान्दानवाधिपः । रूपं स्वं तु प्रपद्यन्त ह्यसुराः सुरधर्षिताः ॥१६१
कालनेमी रुषाविष्टस्तेषां रूपं न बुद्धवान् । नेमिर्दैत्यस्तु तान्दृष्ट्वा कालनेमिमुवाच ह ॥ १६२
अहं नेमिः सुरो नैव कालनेमे विदस्व माम् । भवता मोहितेनाऽऽजौ निहता भूरिविक्रमाः ॥
दैत्यानां दशलक्षाणि दुर्जयानां सुरैरिह । सर्वास्त्रवारणं मुञ्च ब्राह्ममस्त्रं त्वरान्वितः ॥ १६४
स तेन बोधितो दैत्यः संभ्रमाकुलचेतनः । योजयामास बाणं हि ब्रह्मास्त्रविहितेन तु ॥ १६५
मुमोच चापि दैत्येन्द्रः स स्वयं सुरकण्टकः । ततोऽस्त्रतेजसा व्याप्तं त्रैलोक्यं सचराचरम्१६६

---

१ ङ. ॰कतार॰ । ग. ॰क्षार॰ । २ ग. ॰न् । सत्त्वकालक्षये मूकान्कालने॰ । ३ ङ. मूर्यं । ४ ग. ॰मरक्षयम् । त॰ । ४ ग. घ. ॰भ्रष्टे शी॰ । ५ क. ख. ॰भ्रष्टशी॰ । ६ ग. घ. च. ॰त्र यद्बलं बलमाश्रिताः । ङ. ॰ह्यावेगौ विषमाशी॰ । ८ क. ॰तान्युरु विक्रम । दै॰ । ङ. ॰ता युधि विक्रमात् । दै॰ । ९ ङ. ॰श्च प्रयासं तु त्व॰ ।

देवानां चाभवत्सैन्यं सर्वमेव भयान्वितम् । संचरास्त्रं च संशान्तं स्वयमायोधने बभौ ॥ १६७
तस्मिन्प्रतिहते ह्यस्त्रे भ्रष्टतेजा दिवाकरः । महेन्द्रजालमाश्रित्य चक्रे स्वां कोटिशस्तनुम् ॥१६८
विस्फूर्जत्करसंपातसमाक्रान्तजगत्त्रयम् । ततापं दानवानीकं गतमज्जौघशोणितम् ॥ १६९
ततश्चावर्षद्नलं समन्तादतिसंहतम् । चक्षूंषि दानवेन्द्राणां चकारान्धानि च प्रभुः ॥ १७०
गजानामगलन्मेदः पेतुश्चाप्यरवा भुवि । तुरगा निःश्वसन्तश्च घर्मार्ता रथिनोऽपि च ॥१७१
इतश्चेतश्च सलिलं प्रार्थयन्तस्तृपातुराः । प्रच्छायविटपांश्चैव गिरीणां गह्वराणि च ॥ १७२
*तेषां प्रार्थयतां शीतं द्रुमान्तरविसर्पिणाम् । दावाग्निः प्रज्वलंश्चैव घोरार्चिर्दग्धपादपः ॥
तोयार्थिनः पुरो दृष्ट्वा तोयं कल्लोलमालिनम् ॥ १७३
पुरःस्थितमपि प्राप्तुं न शेकुरवमर्दिताः । अप्राप्य सलिलं भूमौ व्यात्तास्या गतचेतसः ॥ १७४
तत्र तत्र व्यदृश्यन्त मृता दैत्येश्वरा भुवि । रथा गजाश्च पतितास्तुरंगाश्च समापिताः ॥ १७५
स्थिता वमन्तो धावन्तो गलद्रक्तवसासृजः । दानवानां सहस्राणि व्यदृश्यन्त मृतानि तु ॥१७६
संक्षये दानवेन्द्राणां तस्मिन्महति वर्तिते । प्रकोपोद्भूतताम्राक्षः कालनेमी रुपातुरः ॥ १७७
अभवत्कल्पमेघाभः स्फुरद्भूरिशतह्रदः । गम्भीरास्फोटनिर्ह्रादजगद्धृदयघट्टकः ॥ १७८
प्रच्छाद्य गगनाभोगं रविमायां व्यनाशयत् । शीतं ववर्ष सलिलं दानवेन्द्रबलं प्रति ॥ १७९
दैत्यास्तां वृष्टिमासाद्य समाश्वस्तास्ततः क्रमात् । बीजाङ्कुरा इवाम्लानाः प्राप्य वृष्टिं धरातले
ततः स मेघरूपी तु कालनेमिर्महासुरः । शस्त्रवृष्टिं ववर्षोग्रां देवानीकेषु दुर्जयाम् ॥ १८१
तया वृष्ट्या बाध्यमाना दैत्येन्द्राणां महौजसाम् । गतिं कां च न पश्यन्तो गावः शीतार्दिता इव ॥ १८२
परस्परं व्यलीयन्त पृष्ठेषु व्यस्त्रपाणयः । स्वेषु बाधे व्यलीयन्त गजेषु तुरगेषु च ॥ १८३
रथेषु त्वमरास्त्रस्तास्तत्र तत्र निलिल्यिरे । अपरे कुञ्चितैर्गात्रैः स्वहस्तपिहिताननाः ॥ १८४
इतश्चेतश्च संभ्रान्ता बभ्रमुर्वै दिशो दश । एवंविधे तु सङ्ग्रामे तुमुले देवसंक्षये ॥ १८५
दृश्यन्ते पतिता भूमौ शस्त्रभिन्नाङ्गसंधयः । विभुजा भिन्नमूर्धानस्तथा छिन्नोरुजानवः १८६
विपर्यस्तरथासङ्गा निष्पिष्टध्वजपङ्क्तयः । निर्भिन्नाङ्गैस्तुरंगैस्तु गजैश्चाचलसंनिभैः ॥ १८७
स्रुतरक्तह्रदैर्भूमिर्विकृतांविकृता बभौ । एवमाजौ बली दैत्यः कालनेमिर्महासुरः ॥ १८८
जघ्ने मुहूर्तमात्रेण गन्धर्वाणां दशायुतम् । यक्षाणां पञ्च लक्षाणि रक्षसामयुतानि षट् ॥१८९
त्रीणि लक्षाणि जघ्ने स किंनराणां तरस्विनाम् । जघ्ने पिशाचमुख्यानां सप्त लक्षाणि निर्भयः
इतरेषामसंख्याताः सुरजातिनिकायिनाम् । जघ्ने स कोटीः संक्रुद्धश्चित्रास्त्रैरस्त्रकोविदः ॥
एवं परिभवे भीमे तदा त्वमरसंक्षये । संक्रुद्धावश्विनौ देवौ चित्रास्त्रकवचोज्ज्वलौ ॥ १९२

* एतदर्धं न विद्यते क. ख. पुस्तकयोः ।

१ ग. ङ. संवरास्त्रं । २ ग. °स्फूर्थं करसंपातं स° । ३ ग. ततोऽपि दा° । ४ ग. गलन्मज्जा° । ५ ग. °राः । सुच्छायान्विट° । ६ ग. ङ. गह्नानि । ७ ङ. °मौ विद्रस्तद्रुत° । ८ ग. °स्या द्रुतमेदसः । ९ ग. °रगाः श्लथकाः स्थिताः । ङ. °रग°ः श्लथमास्थिता । १० ग. ङ. °लद्रुतव° । ११ ग. संक्षयो । च. संक्षयं । १२ ग. ङ च. वर्तते । १३ ङ. °यकण्टकः । च. °यघातक° । प्र° । १४ ग. °त्यान्स्वान्दृष्टि° । १५ क ख. दुर्जयः । १६ °परैर्विद्रुतै° । १७ घ. कुत्सितै° । १८ ग. °र्मुदंक्षु सर्वशः । ए° । १९ ग. ङ. °भुजाच्छिन्न° । २० ग. ङ. °ता समजायत । ए° । २१ ग. कोटयः क्रुद्धः शस्त्रेण रणदुर्मदः । ए° । २२ ङ. °श्चित्रतोमरदुर्मदः ।

जघ्नतुः समरे दैत्यं कृतान्तानलसंनिभम् । तमासाद्य रणे घोरमेकैकः षष्टिभिः शरैः ॥ १९३
जघ्ने मर्मसु तीक्ष्णाग्रैरसुरं भीमदर्शनम् । ताभ्यां बाणप्रहारैः स किंचिदायस्तचेतनः ॥ १९४
जग्राह चक्रमष्टारं तैलधौतं रणान्तकम् । तेन चक्रेण सोऽश्विभ्यां चिच्छेद रथकूबरम् ॥१९५
जग्राहाथ धनुर्दैत्यः शरांश्चाऽऽशीविषोपमान् । ववर्ष भिषजो मूर्ध्नि संछाद्याऽऽकाशगो-
चरम्* ॥ १९६
तावप्यस्त्रैरश्विच्छिदतुः शितैस्तैर्दैत्यसायकान् । तच्च कर्म तयोर्दृष्ट्वा विस्मितः कोपमाविशत् ॥
महता स तु कोपेन सर्वायोमयसादनम् । जग्राह मुद्गरं भीमं कालदण्डविभीषणम् ॥ १९८
स ततो भ्राम्य वेगेन चिक्षेपाश्विरथं प्रति । तं तु मुद्गरमायान्तमालोक्याम्बरगोचरम् ॥ १९९
त्यक्त्वा रथौ तु तौ वेगादाप्लुतौ तरसाऽश्विनौ । तौ रथौ स तु निष्पिष्य मुद्गरोऽचलसंनिभः॥
दारयास धरणीं हेमजालपरिष्कृतः । तस्य कर्माश्विनौ दृष्ट्वा भिषजौ चित्रयोधिनौ ॥२०१
वज्रास्त्रं तु प्रकुर्वाते दानवेन्द्रनिवारणम् । ततो वज्रमयं वर्षं प्रावर्तदतिदारुणम् ॥ २०२
घोरवज्रप्रहारैस्तु दैत्येन्द्रः स परिष्कृतः । रथो ध्वजो धनुश्चक्रं कवचं चापि काञ्चनम् ॥
क्षणेन तिलशो जातं सर्वसैन्यस्य पश्यतः । तद्दृष्ट्वा दुष्करं कर्म सोऽश्विभ्यां भीमविक्रमः ॥
नारायणास्त्रं बलवान्मुमोच रणमूर्धनि । वज्रास्त्रं शमयामास दानवेन्द्रोऽस्त्रतेजसा ॥ २०५
तस्मिन्प्रशान्ते वज्रास्त्रे कालनेमिरनन्तरम् । जीवग्राहं ग्राहयितुमश्विनौ तु प्रचक्रमे ॥ २०६
तावश्विनौ रणाद्भीतौ सहस्राक्षरथं प्रति । प्रयातौ वेपमानौ तु पदा शस्त्रविवर्जितौ ॥२०७
तयोरनुगतो दैत्यः कालनेमिर्महाबलः । प्राप्येन्द्रस्य रथं क्रूरो दैत्यानीकपदानुगः॥ २०८
तं दृष्ट्वा सर्वभूतानि वित्रेसुर्विह्वलानि तु । दृष्ट्वा दैत्यस्य तत्क्रौर्यं सर्वभूतानि मेनिरे॥ २०९
पराजयं महेन्द्रस्य सर्वलोकक्षयावहम् । चेलुः शिखरिणो मुख्याः पेतुरुल्का नभस्तलात् ॥
जगर्जुर्जलदा दिक्षु क्षुब्धूताश्च महार्णवाः । तां भूतविकृतिं दृष्ट्वा भगवान्गरुडध्वजः ॥
व्यबुध्यताहिपर्यङ्के योगनिन्द्रां विहाय तु । लक्ष्मीकरयुगाजस्रलालिताङ्घ्रिसरोरुहः ॥
शरदम्बरनीलाब्जकान्तदेहच्छविर्विभुः । कौस्तुभोद्भासितोरस्को कान्तकेयूरभास्वरः ॥
विमृश्य सुरसंक्षोभं वैनतेयं समाह्वयत् । आहूतेऽवस्थिते तस्मिन्नागावस्थितवर्ष्मणि ॥
दिव्यनानास्त्रतीक्ष्णार्चिरारुह्यागात्सुरान्स्वयम् । तत्रापश्यत देवेन्द्रमभिद्रुतमभिप्लुतैः ॥
दानवेन्द्रैर्नवाम्भोदसच्छायैः पौरुषोत्कटैः । यथा हि पुरुषं घोरैरभाग्यैर्वंशशालिभिः ॥
परित्राणायाऽऽशु कृतं सुक्षेत्रे कर्म निर्मलम् । अथापश्यन्त दैतेया वियति ज्योतिमण्डलम्
स्फुरन्तमुदयाद्रिस्थं सूर्यमुष्णत्विषा इव । प्रभावं ज्ञातुमिच्छन्तो दानवास्तस्य तेजसः ॥
गरुत्मन्तमपश्यन्तः कल्पान्तानलसंनिभम् । तमास्थितं च मेघौघद्युतिमक्षयमच्युतम् ॥
तमालोक्यासुरेन्द्रास्तु हर्षसंपूर्णमानसाः । अयं वै देवसर्वस्वं जितेऽस्मिन्निर्जिताः सुराः ॥
अयं स दैत्यचक्राणां कृतान्तः केशवोऽरिहा । एनमाश्रित्य लोकेषु यज्ञभागभुजोऽमराः ॥
इत्युक्त्वा दानवाः सर्वे परिवार्य समन्ततः । निजघ्नुर्विविधैरस्त्रैस्ते तमायान्तमाहवे ॥२२२
कालनेमिप्रभृतयो दश दैत्या महारथाः । षष्ट्या विव्याध बाणानां कालनेमिर्जनार्दनम् ॥

* इतः परमेतदधिकं ग. पुस्तके—स तु तद्भ्राम्यवेगेन चिक्षेपाश्विरथं प्रति । इति ।

१ ग. °मे । तौ त्यज्य समरं भीतौ । २ ग. ङ. च. °र्यद्यायोग' । ३ ङ. 'राद्दनम् । त° । ४ ङ. °लभैरवम् । त° ५ ग. वेष्टयित्वा ।

निमिः शतेन बाणानां मथनोऽशीतिभिः शरैः । जम्भकश्चैव सप्तत्या शुम्भो दशभिरेव च
शेषा दैत्येश्वराः सर्वे विष्णुमेकैकशः शरैः । दशभिश्चैव यत्तास्ते जघ्नुः सगरुडं रणे ॥ २२५
तेषाममृष्य तत्कर्म विष्णुर्दानवसूदनः । एकैकं दानवं जघ्ने षड्भिः षड्भिरजिह्मगैः ॥२२६
आकर्णकृष्टैर्भूयश्च कालनेमिस्त्रिभिः शरैः । विष्णुं विव्याध हृदये क्रोधाद्रक्तविलोचनः ॥
तस्याशोभन्त ते बाणा हृदये तप्तकाञ्चनाः । मयूखानीव दीप्तानि कौस्तुभस्य स्फुटत्विषः
तैर्बाणैः किंचिदायस्तो हरिर्जग्राह मुद्गरम् । सततं भ्राम्य वेगेन दानवाय व्यसर्जयत् ॥ २२९
दानवेन्द्रस्तमप्राप्तं वियत्येव शतैः शरैः । चिच्छेद तिलशः क्रुद्धो दर्शयन्पाणिलाघवम् ॥
ततो विष्णुः प्रकुपितः प्रासं जग्राह भैरवम् । तेन दैत्यस्य हृदयं ताडयामास गाढतः ॥ २३१
क्षणेन लब्धसंज्ञस्तु कालनेमिर्महासुरः । शक्तिं जग्राह तीक्ष्णाग्रां हेमघण्टाट्टहासिनीम् ॥
तया वामभुजं विष्णोर्बिभेद दितिनन्दनः । भिन्नः शक्त्या भुजस्तस्य स्रुतशोणित आबभौ
पद्मरागमयेनेव केयूरेण विभूषितः । ततो विष्णुः प्रकुपितो जग्राह विपुलं धनुः ॥ २३४
सप्तदश च नाराचांस्तीक्ष्णान्मर्मविभेदिनः । दैत्यस्य हृदयं षड्भिर्विव्याध च त्रिभिः शरैः ॥
चतुर्भिः सारथिं चास्य ध्वजं चैकेन पत्रिणा । द्वाभ्यां ज्याधनुषी चापि भुजं सव्यं च पत्रिणा
स विद्धो हृदये गाढं दैत्यो हरिशिलीमुखैः । स्रुतरक्तारुणप्रांशुः पीडाकुलितमानसः ॥
चकम्पे मारुतेनेव नोदितः किंशुकद्रुमः । तमाकम्पितमालक्ष्य गदां जग्राह केशवः ॥२३८
तां च वेगेन चिक्षेप कालनेमिरथं प्रति । सा पपात शिरस्युग्रा विपुला कालनेमिनः ॥
संचूर्णितोत्तमाङ्गस्तु निष्पिष्टमुकुटोऽसुरः । स्रुतरक्तौघरन्ध्रस्तु स्रुतधातुरिवाचलः ॥ २४०
प्रापतत्स्वे रथे भग्ने विसंज्ञः शिष्टजीवितः । पतितस्य रथोपस्थे दानवस्याच्युतोऽरिहा ॥
स्मितपूर्वमुवाचेदं वाक्यं चक्रायुधः प्रभुः । गच्छासुर विमुक्तोऽसि सांप्रतं जीव निर्भयः ॥
ततः स्वल्पेन कालेन अहमेव तवान्तकः । एतच्छ्रुत्वा वचस्तस्य सारथिः कालनेमिनः ॥
अपवाह्य रथं दूरमनयत्कालनेमिनः ॥

इति श्रीमात्स्ये महापुराणे देवासुरसङ्ग्रामे कालनेमिपराजयो नाम पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ७५११ ॥

---

अथैकपञ्चाशदधिकशततमोऽध्यायः ।

---

सूत उवाच—

तं दृष्ट्वा दानवाः क्रुद्धाश्चेरुः स्वैस्वैर्बलैर्वृताः । सरघा इव माक्षीकहरणे सर्वतोदिशम् ॥ १
कृष्णचामरजालाढ्ये सुधाविरचिताङ्कुरे । चित्रपञ्चपताके तु प्रभिन्नकरटामुखे ॥ २
पर्वताभे गजे भीमे मदस्राविणि दुर्धरे । आरुह्याऽऽजौ निमिर्दैत्यो हरिं प्रत्युद्ययौ बली ॥
तस्याऽऽसन्दानवा रौद्रा गजस्य पदरक्षिणः । सप्तविंशतिसाहस्राः किरीटकवचोज्ज्वलाः ॥
अश्वारूढश्च मथनो जम्भकश्चोष्ट्रवाहनः । शुम्भोऽपि विपुलं मेषं समारुह्याव्रजद्रणम् ॥

---

१ ग. दैत्यवराः । २ ग. हृदये । ३ ङ. माभवः । ४ ङ. दानवः । ५ ग. °ळः । अपपात र° । ६ ग. ङ च. °मिनम् । इ° । ७ ङ. च. परिर° ।

अपरे दानवेन्द्रास्तु यत्ता नानास्त्रपाणयः। आजघ्नुः समरे क्रुद्धा विष्णुमक्लिष्टकारिणम्।
परिघेण निमिर्दैत्यो मथनो मुद्गरेण तु। शुम्भः शूलेन तीक्ष्णेन प्रासेन ग्रसनस्तथा ॥ ७
चक्रेण महिषः क्रुद्धो जम्भः शक्त्या महारणे। जघ्नुर्नारायणं सर्वे शेषास्तीक्ष्णैश्च मार्गणैः
तान्यस्त्राणि प्रयुक्तानि शरीरं विविशुर्हरेः। गुरूक्तान्युपदिष्टानि सच्छिष्यस्य श्रुताविव ॥
असंभ्रान्तो रणे विष्णुरथ जग्राह कार्मुकम्। शरांश्चाऽऽशीविषाकारांस्तैलधौतानजिह्मगान्
ततोऽभिसंध्य दैत्यास्तानाकर्णाकृष्टकार्मुकः। अभ्यद्रवद्रणे क्रुद्धो दैत्यानीके तु पौरुषात् ११
निमिं विव्याध विंशत्या बाणानामग्निवर्चसाम्। मथनं दशभिर्बाणैः शुम्भं पञ्चभिरेव च॥१२
एकेन महिषं क्रुद्धो विव्याधोरसि पत्रिणा। जम्भं द्वादशभिस्तीक्ष्णैः सर्वांश्चैकैकशोऽष्टभिः॥
तस्य तल्लाघवं दृष्ट्वा दानवाः क्रोधमूर्छिताः। नर्दमानाः प्रयत्नेन चक्रुरत्यद्भुतं रणम् ॥ १४
चिच्छेदाथ धनुर्विष्णोर्निमिर्भल्लेन दानवः। संध्यमानं शरं हस्ते चिच्छेद महिषासुरः ॥ १५
पीडयामास गरुडं जम्भस्तीक्ष्णैस्तु सायकैः। भुजं तस्याहनद्गाढं शुम्भो भूधरसंनिभः ॥ १६
छिन्ने धनुषि गोविन्दो गदां जग्राह भीषणाम्। तां प्राहिणोत्स वेगेन मथनाय महाहवे ॥ १७
तामप्राप्तां निमिर्बाणैश्चिच्छेद तिलशो रणे। तां नाशमागतां दृष्ट्वा हीनाग्रे प्रार्थनामिव ॥१८
जग्राह मुद्गरं घोरं दिव्यरत्नपरिष्कृतम्। तं मुमोचाथ वेगेन निमिमुद्दिश्य दानवम् ॥ १९
तमायान्तं वियत्येव त्रयो दैत्या न्यवारयन्। गदया जम्भदैत्यस्तु ग्रसनः पट्टिशेन तु ॥ २०
शक्त्या च महिषो दैत्यः स्वपक्षेजयकाङ्क्षया। निराकृतं तमालोक्य दुर्जने प्रणयं यथा॥ २१
जग्राह शक्तिमुग्राग्रामष्टघण्टोत्कटस्वनाम्। जम्भाय तां समुद्दिश्य प्राहिणोद्रणभीषणः॥२२
तामम्बरस्थां जग्राह गजो दानवनन्दनः। गृहीतां तां समालोक्य शिक्षामिव विवेकिभिः २३
दृढं भारसहं सारमन्यदादाय कार्मुकम्। रौद्रास्त्रमभिसंधाय तस्मिन्बाणं मुमोच ह ॥ २४
ततोऽस्त्रतेजसा सर्वं व्याप्तं लोकं चराचरम्। ततो बाणमयं सर्वमाकाशं समदृश्यत ॥ २५
भूर्दिशो विदिशश्चैव बाणजालमया बभुः। दृष्ट्वा तदस्त्रमाहात्म्यं सेनानीर्ग्रसनोऽसुरः ॥ २६
ब्राह्ममस्त्रं चकारासौ सर्वास्त्रविनिवारणम्। *तेन तत्प्रशमं यातं रौद्रास्त्रं लोकघस्मरम् २७
अस्त्रे प्रतिहते तस्मिन्विष्णुर्दानवसूदनः। कालदण्डास्त्रमकरोत्सर्वलोकभयंकरम् ॥ २८
संधीयमाने तस्मिंस्तु मारुतः परुषो ववौ। चकम्पे च मही देवी दैत्या भिन्नधियोऽभवन्॥२९
तदस्त्रमुग्रं दृष्ट्वा तु दानवा युद्धदुर्मदाः। चक्रुरस्त्राणि दिव्यानि नानारूपाणि संयुगे ॥ ३०
नारायणास्त्रं ग्रसनो गृहीत्वा चक्रं निमिः स्वास्त्रवरं मुमोच।
ऐषीकमस्त्रं च चकार जम्भस्तत्कालदण्डास्त्रनिवारणाय ॥ ३१

* एतदर्धस्थानेऽयं पाठो ग. पुस्तके—तेन तत्प्रशमं यातमस्त्र प्रतिहते पुनरिति। + इतःपरमयं ग्रन्थो ग. पुस्तके—एवं दैत्याः साधयन्ति यावदस्त्राणि यत्नतः। तावत्खगेन्द्रांसगतो महात्मा संभ्राम्य हस्तेन तदस्त्रसारम्। दैत्यो धसेनो परिसंभ्रमेण मोक्तुं तदैक्षत्खलु दानवारिः॥ सदा तत्कालदण्डाभं वि°।

१ ङ. °णे। तत्रासमा°। २ ग. °ष्ट्वालोभिनः प्रा°। ङ. °ष्ट्वा एस्थाने प्रा°। ३ ग. ङ. °क्षक्षय°। ४ ग. ङ. °किना। द°। ५ ङ. °लदंष्ट्रास्त्र°। ६ ग. °वेदैत्यभ°। ७ ग. °वीभिन्नाश्च निश्चयो नव। त°। घ. °वी भिन्नाश्च निश्चयो°। ङ. °वी भिन्नाश्चाम्बुधयो। ८ ङ. °सनस्तु चक्रे त्वाष्ट्रं निमिश्चास्त्र वलं मु°। ९ ग. °नोऽथ चक्रे त्वाष्ट्रं निमिः स्वस्त्रव°।

यावन्न संख्या न पृथां प्रयान्ति दैत्येश्वराश्चास्त्रनिवारणाय ।
तावत्क्षणेनैव जघान कोटीर्दैत्येश्वराणां सगजान्सहाश्वान् ॥ ३२
अनन्तरं शान्तमभूत्तदस्त्रं दैत्यास्त्रयोगेण तु कालदण्डम् ।
शान्तं तदालोक्य हरिः स्वशस्त्रं स्वविक्रमे मन्युपरीतमूर्तिः ॥ ३३
जग्राह चक्रं तपनायुताभमुग्रारमात्मानमिव द्वितीयम् ।
चिक्षेप सेनापतयेऽभिसंधय कण्ठस्थलं वज्रकठोरमुग्रम् ॥ ३४
चक्रं तदाकाशगतं विलोक्य सर्वात्मना दैत्यवराः स्ववीर्यैः ।
नाशक्नुवन्वारयितुं प्रचण्डं दैवं यथा कर्म मुधा प्रपन्नम् ॥ ३५
तमप्रतर्क्यं जनयन्नजय्यं चक्रं पपात ग्रसनस्य कण्ठे ।
छित्वा तु कृत्वा ग्रसनस्य कण्ठं तद्रक्तधारारुणघोरनाभि ॥
जगाम भूयोऽपि जनार्दनस्य पाणिं प्रवृद्धानलतुल्यदीप्ति ॥ ३६

इति श्रीमात्स्ये महापुराणे देवासुरसङ्ग्रामे ग्रसनवधो नामैकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ ७५४७ ॥

---

अथ द्विपञ्चाशदधिकशततमोऽध्यायः ।

---

सूत उवाच—
तस्मिन्विनिहते दैत्ये ग्रसने लोकनायके । निर्मर्यादमयुध्यन्त हरिणा सह दानवाः ॥ १
पट्टिशैर्मुशलैः पाशैर्गदाभिः कुणपैरपि । तीक्ष्णाननैश्च नाराचैश्चक्रैः शक्तिभिरेव च ॥ २
तानस्त्रान्दानवैर्मुक्तांश्छिन्नयोधी जनार्दनः । एकैकं शतशश्चक्रेबाणैरग्निशिखोपमैः ॥ ३
ततः क्षीणायुधप्रोणा दानवा भ्रान्तचेतसः । अस्त्राण्यादातुमभवन्नसमर्था यदा रणे ॥ ४
तदा मृतैर्गजैरश्वैर्जनार्दनमयोधयन् । समन्तात्कोटिशो दैत्याः सर्वतः प्रत्ययोधयन् ॥ ५
बहु कृत्वा वपुर्विष्णुः किंचिच्छान्तभुजोऽभवत् । उवाच च गरुत्मन्तं तस्मिन्सुतुमुले रणे ॥
गरुत्मन्कच्चिदश्रान्तस्त्वमस्मिन्नपि सांप्रतम् । यद्यश्रान्तोऽसि तद्याहि मथनस्य रथं प्रति ॥ ७
श्रान्तोऽस्यथ मुहूर्तं त्वं रणादपसृतो भव । इत्युक्तो गरुडस्तेन विष्णुना प्रभविष्णुना ॥ ८
आससाद रणे दैत्यं मथनं घोरदर्शनम् । दैत्यस्त्वभिमुखं दृष्ट्वा शङ्खचक्रगदाधरम् ॥ ९
जघान भिन्दिपालेन शितबाणेन वक्षसि । तत्प्रहारमचिन्त्यैव विष्णुस्तस्मिन्महाहवे ॥ १०
जघान पञ्चभिर्बाणैर्गार्जितैश्च शिलाशितैः । पुनर्दशभिराकृष्टैस्तं तताड स्तनान्तरे ॥ ११
विद्धो मर्मसु दैत्येन्द्रो हरिबाणैरकम्पत । स मुहूर्तं समाश्वास्य जग्राह परिघं तदा ॥ १२
जघ्ने जनार्दनं चापि परिघेणाग्निवर्चसा । विष्णुस्तेन प्रहारेण किंचिदाघूर्णितोऽभवत् ॥ १३
ततः क्रोधविवृत्ताक्षो गदां जग्राह माधवः । मथनं सरथं रोपान्निष्पिपेपाथ रोपतः ॥ १४
स पपाताथ दैत्येन्द्रः क्षयकालेऽचलो यथा । तस्मिन्निपतिते भूमौ दानवे वीर्यशालिनि ॥ १५
अवसादं ययुर्दैत्याः कर्दमे करिणो यथा । ततस्तेपु विपन्नेपु दानवेष्वतिमानिपु ॥ १६

---

१ ग. °भे सुधां प्र । २ ङ. °ने बलना° । ३ ग. °क्रमायिके । ४ क. ख. °प्राया दा° ।

प्रकोपाद्रक्तनयनो महिषो दानवेश्वरः। प्रत्युद्ययौ हरिं रौद्रः स्वबाहुबलमास्थितः ॥ १७
तीक्ष्णधारेण शूलेन महिषो हरिमर्दयन्। शक्त्या च गरुडं वीरो महिषोऽभ्यहनद्धृदि ॥ १८
ततो व्यावृत्य वदनं महाचलगुहानिभम्। ग्रस्तुमैच्छद्रणे दैत्यः स गरुत्मन्तमच्युतम् ॥ १९
अथाच्युतोऽपि विज्ञाय दानवस्य चिकीर्षितम्। वदनं पूरयामास दिव्यैरस्त्रैर्महाबलः ॥ २०
महिषस्याथ ससृजे बाणौघं गरुडध्वजः। पिधाय वदनं दिव्यैर्दिव्यास्त्रपरिमन्त्रितैः ॥ २१
स तैर्बाणैरभिहतो महिषोऽचलसंनिभः। परिवर्तितकायोऽधः पपात न ममार च ॥ २२
महिषं पतितं दृष्ट्वा भूमौ प्रोवाच केशवः। महिषासुर मत्तस्त्वं वधं नास्त्रैरिहार्हसि ॥ २३
योषिद्वध्यः पुरोक्तोऽसि साक्षात्कमलयोनिना। उत्तिष्ठ जीवितं रक्ष गच्छास्मात्संगराद्द्रुतम् ॥ २४
तस्मिन्पराङ्मुखे दैत्ये महिषे शुम्भदानवः। संदष्टौष्ठपुटः कोपाद्भ्रुकुटीकुटिलाननः ॥ २५
निर्मथ्य पाणिना पाणिं धनुरादाय भैरवम्। सज्यं चकार स धनुः शरांश्चाऽऽशीविषोपमान्

स चित्रयोधी दृढमुष्टिपातस्ततस्तु विष्णुं गरुडं च दैत्यः।
बाणैर्ज्वलद्वह्निशिखानिकाशैः क्षिप्तैरसंख्यैः परिघातहीनैः ॥ २७
विष्णुश्च दैत्येन्द्रशराहतोऽपि भुशुण्डिमादाय कृतान्ततुल्याम्।
तया भुशुण्ड्या च पिपेष मेषं शुम्भस्य पत्रं धरणीधराभम् ॥ २८
तस्मादवप्लुत्य हताच्च मेषाद्भूमौ पदातिः स तु दैत्यनाथः।
ततो महीस्थस्य हरिः शरौघान्मुमोच कालानलतुल्यभासः ॥ २९
शरैस्त्रिभिस्तस्य भुजं बिभेद षड्भिश्च शीर्षं दशभिश्च केतुम्।
विष्णुर्विकृष्टैः श्रवणावसानं दैत्यस्य विव्याध विवृत्तनेत्रः ॥ ३०
स तेन विद्धो व्यथितो बभूव दैत्येश्वरो विस्रुतशोणितौघः।
ततोऽस्य किंचिच्चलितस्य धैर्यादुवाच शङ्खाम्बुजशार्ङ्गपाणिः ॥ ३१
कुमारिवध्योऽसि रणं विमुञ्च शुम्भासुर स्वल्पतरैरहोभिः।
वधं न मत्तोऽर्हसि चेह मूढ वृथैव किं युद्धसमुत्सुकोऽसि ॥ ३२
जम्भो वचो विष्णुमुखान्निशम्य निमिश्च निष्पेष्टुमियेष विष्णुम्।
गदामथोद्यम्य निमिः प्रचण्डां जघान गाढां गरुडं शिरस्तः ॥ ३३
शुम्भोऽपि विष्णुं परिघेण मूर्ध्नि प्रमृष्टरत्नौघविचित्रभासा।
तौ दानवाभ्यां विषमैः प्रहारैर्निपेतुरुर्व्यां घनपावकाभौ ॥ ३४
तत्कर्म दृष्ट्वा दितिजास्तु सर्वे जगर्जुरुच्चैः कृतसिंहनादाः।
धनूंषि चाऽऽस्फोट्य खुराभिघातैर्व्यदारयन्भूमिमपि प्रचण्डाः ॥
वासांसि चैवाऽऽदुधुवुः परे तु दध्मुश्च शङ्खानकगोमुखौघान् ॥ ३५
अथ संज्ञामवाप्याऽऽशु गरुडोऽपि सकेशवः। पराङ्मुखो रणात्तस्मात्पलायत महाजवः ॥

इति श्रीमात्स्ये महापुराणे देवासुरसङ्ग्रामे मथनादिसङ्ग्रामो नाम द्विपञ्चाशदधिकशततमोऽध्यायः ॥१५२॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ७५८३ ॥

---

१ ङ. निष्पिष्य । २ ग. 'वावदधुः प' ।

अथ त्रिपञ्चाशदधिकशततमोऽध्यायः ।

सूत उवाच—

तमालोक्य पलायन्तं विभ्रष्टध्वजकार्मुकम् । हरिं देवः सहस्राक्षो मेने मग्नं दुराहवे ॥ १
दैत्यांश्च मुदितान्दृष्ट्वा कर्तव्यं नाध्यगच्छत । अथायान्निकटे विष्णोः सुरेशः पाकशासनः
उवाच चैनं मधुरं प्रोत्साहपरिबृंहकम् । किमेभिः क्रीडसे देव दानवैर्दुष्टमानसैः ॥ २
दुर्जनैर्लब्धरन्ध्रस्य पुरुषस्य कुतः क्रियाः । शक्तेनोपेक्षितो नीचो मन्यते बलमात्मनः ॥ ४
तस्मान्न नीचं मतिमान्दुर्गहीनं हि संत्यजेत् । अथाग्रेसरसंपत्त्या रथिनो जयमाप्नुयुः ॥ ५
कस्ते सखाऽभवच्चाग्रे हिरण्याक्षवधे विभो । हिरण्यकशिपुर्दैत्यो वीर्यशाली मदोद्धतः ॥ ६
त्वां प्राप्यापश्यदसुरो विषमं स्मृतिविभ्रमम् । पूर्वेऽप्यतिबला ये च दैत्येन्द्राः सुरविद्विषः ॥७
विनाशमागताः प्राप्य शलभा इव पावकम् । युगे युगे च दैत्यानां त्वमेवान्तकरो हरे ॥ ८
तथैवाद्येह मग्नानां भव विष्णो सुराश्रयः । एवमुक्तस्ततो विष्णुर्व्यवर्धत महाभुजः ॥ ९
ऋद्ध्या परमया युक्तः सर्वभूताश्रयोऽरिहा । अथोवाच सहस्राक्षं कालक्षममधोक्षजः ॥ १०
दैत्येन्द्राः स्वैर्वधोपायैः शक्या हन्तुं हि नान्यतः । दुर्जयस्तारको दैत्यो मुक्त्वा सप्तदिनं शिशुम्
कश्चित्स्त्रीवध्यतां प्राप्तो वधेऽन्यस्य कुमारिका । जम्भस्तु वध्यतां प्राप्तो दानवः क्रूरविक्रमः ॥
तस्माद्वीर्येण दिव्येन जहि जम्भं जगद्धरम् । अवध्यः सर्वभूतानां त्वां विना स तु दानवः ॥ १३
मया गुप्तो रणे जम्भं जगत्कण्टकमुद्धर । तद्वैकुण्ठवचः श्रुत्वा सहस्राक्षोऽमरारिहा ॥ १४
समादिशंत्सुरान्सर्वान्सैन्यस्य रचनां प्रति । यत्सारं सर्वलोकेषु वीर्यस्य तपसोऽपि च ॥ १५
तदेकादश रुद्रांस्तु चकाराग्रेसरान्हरिः । व्यालभोगाङ्गसंनद्धा बलिनो नीलकंधराः ॥ १६
चन्द्रखण्डनृमुण्डालीमण्डितोरुशिखण्डिनः । शूलज्वालावलिप्ताङ्गा भुजमण्डलभैरवाः ॥
पिङ्गोत्तुङ्गजटाजूटाः सिंहचर्मानुपङ्गिणः । कपालीशादयो रुद्रा विद्रावितमहासुराः ॥ १८
कपाली पिङ्गलो भीमो विरूपाक्षो विलोहितः । अजेशः शासनः शास्ता शंभुश्चण्डो ध्रुवस्तथा ॥ १९
एत एकादशानन्तबला रुद्राः प्रभाविणः । पालयन्तो बलस्याग्रे दारयन्तश्च दानवान् ॥ २०
आप्याययन्तस्त्रिदशाँन्गर्जन्त इव चाम्बुदाः । हिमाचलाभे महति काञ्चनाम्बुरुहस्रजि ॥२१
प्रचलच्चामरे हेमघण्टासंघातमण्डिते । ऐरावते चतुर्दन्ते मातङ्गेऽचलसंस्थिते ॥ २२
महामदजलस्रावे कामरूपे शतक्रतुः । तस्थौ हिमगिरेः शृङ्गे भानुमानिव दीप्तिमान् ॥ २३
तस्यारक्षत्पदं सव्यं मारुतोऽमितविक्रमः । जुगोपापरमग्निस्तु ज्वालापूरितदिङ्मुखः ॥ २४
पृष्ठरक्षोऽभवद्विष्णुः ससैन्यस्य शतक्रतोः । आदित्या वसवो विश्वे मरुतश्चाश्विनावपि ॥
गन्धर्वा राक्षसा यक्षाः सकिंनरमहोरगाः । नानाविधायुधाश्चित्रा दधाना हेमभूषणाः ॥२६

---

१ ङ. ॰ने भग्नान्सुरानिति । दै॰ । २ ङ. ॰थागाभि॰ । ३ च. समभवत्पूर्वे । ४ ग. ङ. ॰भवेत्पूर्वं हि॰ । ५ ग. पुरा । ६ ङ. रणे । ७ ङ. ॰हावलः । ऋ॰ । ८ ग. ॰न्यथा । दु॰ । ९ क ॰गज्ज्वर॰ । १० ग. ॰शत्तदास्वान्स्त्रान्सैन्य॰ । ११ ङ. ॰वंभूतेषु । १२ ग. ॰लाभिपङ्काङ्कान्भुजमण्डलभैरवान् । पि॰ । १३ ङ ॰शान्विगर्जन्तोऽम्बुदा इव । हि॰ । १४ ग. ॰ङ्गे मत्तसं॰ । ङ. ॰ङ्गे मदसं॰ ।

कोटिशः कोटिशः कृत्वा वृन्दं चिह्नोपलक्षितम्। विश्रामयन्तः स्वां कीर्तिं बन्दिवृन्दपुरःसराः
चेरुर्दैत्यवधे हृष्टाः संहेन्द्राः सुरजातयः ॥ २७

शतक्रतोरमरनिकायपालिता पताकिनी गजशतवाजिनादिता ।
सितोन्नतध्वजपटकोटिमण्डिता बभूव सा दितिसुतशोकवर्धिनी ॥ २८

आयान्तीमवलोक्याथ सुरसेनां गजासुरः । गजरूपी महाम्भोदसंघातो भाति भैरवः ॥ २९
परश्वधायुधो दैत्यो दंशितोष्ठकसंपुटः। ममर्द च रणे देवांश्चिक्षेपान्यान्करेण तु ॥ ३०
परान्परशुना जघ्ने दैत्येन्द्रो रौद्रविक्रमः । तस्य पातयतः सेनां यक्षगन्धर्वकिंनराः ॥ ३१
[illegible] संहताः सर्वे चित्रशस्त्रास्त्रसंहतिम् । पाशान्परश्वधांश्चक्रान्भिन्दिपालान्समुद्गरान्
कुन्तान्प्रासानसींस्तीक्ष्णान्मुद्गरांश्चापि दुःसहान्। तान्सर्वान्सोऽग्रसद्दैत्यः कवलानिव यूथपः
कोपास्फालितदीर्घाग्रकरास्फोटेन पातयन्। विचचार रणे देवान्दुष्प्रेक्ष्ये गजदानवः ॥ ३४
यस्मिन्यस्मिन्निपतति सुरवृन्दे गजासुरः। तस्मिंस्तस्मिन्महाशब्दो हाहाकारकृतोऽभवत् ॥
अथ विद्रवमाणं तद्बलं प्रेक्ष्य समन्ततः। रुद्राः परस्परं प्रोचुरहंकारोत्थितार्चिषः ॥ ३६
भो भो गृह्णीत दैत्येन्द्रं मर्दतैनं हताश्रयम्। कर्पतैनं शितैः शूलैर्भञ्जतैनं च मर्मसु ॥ ३७
कपाली वाक्यमाकर्ण्य शूलं शितशिखामुखम्। संमार्ज्य वामहस्तेन संरम्भविवृतेक्षणः ॥ ३८
अधावद्भृकुटीवक्त्रो दैत्येन्द्राभिमुखो रणे। दृढेन मुष्टिबन्धेन शूलं विष्टभ्य निर्मलम् ॥ ३९
जघान कुम्भदेशे तु कपाली गजदानवम्। ततो दशापि ते रुद्रा निर्मलायोमये रणे ॥ ४०
जघ्नुः शूलैश्च दैत्येन्द्रं शैलवर्ष्माणमाहवे। स्रुतशोणितरन्ध्रस्तु शितशूलमुखार्दितः ॥ ४१
बभौ कृष्णच्छविर्दैत्यः शरदीवामलं सरः। प्रोत्फुल्लारुणनीलाब्जसंघातः सर्वतोदिशम् ॥ ४२
भस्मशुभ्रतनुच्छायै रुद्रैर्हंसैरिवाऽऽवृतः। उपस्थितार्तिर्दैत्योऽथ प्रचलत्कर्णपल्लवः ॥ ४३
शंभुं बिभेद दशनैर्नाभिदेशे गजासुरः। दृष्ट्वा सक्तं तु रुद्राभ्यां नव रुद्रास्ततोऽद्भुतम् ॥ ४४
ततक्षुर्विविधैः शस्त्रैः शरीरममरद्विपः। निर्भया बलिनो युद्धे रणभूमौ व्यवस्थिताः ॥ ४५
मृतं महिषमासाद्य वने गोमायवो यथा। कपालिनं परित्यज्य गतश्चासुरपुंगवः ॥ ४६
वेगेन कुपितो दैत्यो नव रुद्रानुपाद्रवत्। ममर्द चरणाघातैर्दन्तैश्चापि करेण च ॥ ४७
स तैस्तुमुलयुद्धेन श्रममासादितो यदा। तदा कपाली जग्राह करं तस्यामरद्विपः ॥ ४८
भ्रामयामास वेगेन ह्यतीव च गजासुरम्। दृष्ट्वा श्रमातुरं दैत्यं किंचित्स्फुरितजीवितम् ॥ ४९
निरुत्साहं रणे तस्मिन्गतयुद्धोत्सवोद्यमम्। ततः पतत एवास्य चर्म चोत्कृत्य भैरवम् ॥ ५०
स्रवत्सर्वाङ्गरक्तौघं चकाराम्बरमात्मनः । दृष्ट्वा विनिहतं दैत्यं दानवेन्द्रा महाबलाः ॥ ५१
वित्रेसुर्दुद्रुवुर्जग्मुर्निपेतुश्च सहस्रशः । दृष्ट्वा कपालिनो रूपं गजचर्माम्बरावृतम् ॥ ५२

---

१ ङ. °वृन्दैः पुरः सरैः । चे° । २. ग. समस्ताः । ३ ङ. °समालिनी प° । ४ ग. ङ. °जरथवा° । ५ ङ. °जिपत्तिधृक् । सि° । ६ क. ख. सितातपत्रध्व° । ७ ग. °तस्रज° । ८ ग. °त्यो दशनाष्टकसंयतः । मस° । ङ. °त्यो दशनाभोगसंकटः । ९ ङ. देवैर्दुष्प्रेक्ष्यो ग° । १० ङ. विद्राव्यमा° । ११ ङ. °रपका° । १२ ङ. °नं महाश्रयाः । क. । १३ ग. °णः । आवद्धभ्रुकुटीवक्त्रो दै° । १४ च. अथागा कृ° । १५ ग. प. °बद्धेन । १६ ग. घ. ङ. °स्रार्पिताः । १७ ङ. °तः । अभूत्कृष्ण° । १८ ङ. दैत्यो अमलं वा सरत्सरः । १९ ङ. °लाब्जं संघातैः स° । २० घ. °दितः । भ° । २१ ग. ङ. धुवं घ. कृयं । २२ ग. ङ. °तो द्रुत° । २३ ग. °द्धे समम्° । ङ. °द्धे द्विपं भूयो व्यवस्थितम् । मृ° ।

दिक्षु भूमौ तमेवोग्रं रुद्रं दैत्या व्यलोकयन् । एवं विलुलिते तस्मिन्दानवेन्द्रे महाबले ॥ ५३
द्विपाधिरूढो दैत्येन्द्रो हतदुंदुभिना ततः । कल्पान्ताम्बुधराभेण दुर्धरेणापि दानवः ॥ ५४
निमिरभ्यपतत्तूर्णं सुरसैन्यानि लोडयन् । यां यां निमिगजो याति दिशं तां तां सवाहनाः ५५
संत्यज्य दुद्रुवुर्देवा भयार्तास्त्यक्तहेतयः । गन्धेन सुरमातङ्गा दुद्रुवुस्तस्य हस्तिनः ॥ ५६
पलायितेषु सैन्येषु सुराणां पाकशासनः । तस्थौ दिक्पालकैः सार्धमष्टभिः केशवेन च ॥ ५७
संप्राप्तो निमिमातङ्गो यावच्छक्रगजं प्रति । तावच्छक्रगजो यातो मुक्त्वा नादं स भैरवम् ॥५८
ध्रियमाणोऽपि यत्नेन स रणे नैव तिष्ठति । पलायिते गजे तस्मिन्नारूढः पाकशासनः ॥ ५९
विपरीतमुखोऽयुध्यद्दानवेन्द्रबलं प्रति । शतक्रतुस्तु वज्रेण[1] निमिं वक्षस्यताडयत् ॥ ६०
गदया दन्तिनश्चास्य गण्डदेशेऽहनद्दृढम् । तत्प्रहारमचिन्त्यैव निमिर्निर्भयपौरुषः ॥ ६१
ऐरावणं कटीदेशे मुद्गरेणाभ्यताडयत् । स हतो मुद्गरेणाथ शक्रकुञ्जर आहवे ॥ ६२
जगाम पश्चाच्चरणैर्धरणीं भूधराकृतिः । लाघवात्क्षिप्रमुत्थाय ततोऽमरमहागजः ॥ ६३
रणादपससर्पाऽऽशु भीपितो निमिहस्तिना । ततो वायुर्ववौ रूक्षो बहुशर्करपांसुलः ॥ ६४
संमुखो निमिमातङ्गो जवनाचलकम्पनः । सुतरक्तो बभौ शैलो घनधातुह्रदो यथा ॥६५
धनेशोऽपि गदां गुर्वीं तस्य दानवहस्तिनः । चिक्षेप वेगाद्दैत्येन्द्रो निपपातास्य मूर्धनि ॥
गजो गदानिपातेन स तेन परिमूर्छितः । दन्तैर्भित्त्वा धरां वेगात्पपाताचलसंनिभः ॥ ६७
पतिते तु गजे तस्मिन्सिंहनादो महानभूत् । सर्वतः सुरसैन्यानां गजबृंहितबृंहितैः ॥ ६८
ह्रेषारवेण चाश्वानां गुणास्फोटैश्च धन्विनाम् । गजं तं निहतं दृष्ट्वा निमिं चापि पराङ्मुखम्
श्रुत्वा च सिंहनादं च सुराणामतिकोपनः । जम्भो जज्वाल कोपेन पीताज्य इव पावकः ॥
स सुरान्कोपरक्ताक्षो धनुष्यारोप्य सायकम् । तिष्ठतेत्यब्रवीत्तावत्सारथिं चाप्यचोदयत् ॥
वेगेन चलतस्तस्य तद्रथस्याभवद्द्युतिः । यथाऽऽदित्यसहस्रस्याभ्युदितस्योदयाचले ॥७२
पताकिना रथेनाऽऽजौ किङ्किणीजालमालिना । शशिशुभ्रातपत्रेण स तेन स्यन्दनेन तु
घट्टयन्सुरसैन्यानां हृदयं समदृश्यत । तमायान्तमभिप्रेक्ष्य धनुष्याहितसायकः ॥ ७४
शतक्रतुरदीनात्मा दृढमाधत्त कार्मुकम् । बाणं च तैलधौताग्रमर्धचन्द्रमजिह्मगम् ॥ ७५
तेनास्य सशरं चापं रणे चिच्छेद वृत्रहा । क्षिप्रं संत्यज्य तच्चापं जम्भो दानवनन्दनः ॥
अन्यत्कार्मुकमादाय वेगवद्भारसाधनम् । शरांश्चाऽऽशीविषाकारांस्तैलधौतानजिह्मगान्
शक्रं विव्याध दशभिर्जत्रुदेशे तु पत्रिभिः । हृदये च त्रिभिश्चापि द्वाभ्यां च स्कन्धयोर्द्वयोः
शक्रोऽपि दानवेन्द्राय बाणजालमपीदृशम् । अप्राप्तान्दानवेन्द्रस्तु शराञ्छक्रभुजेरितान्
चिच्छेद दशधाऽऽकाशे शरैरग्निशिखोपमैः । ततस्तु शरजालेन देवेन्द्रो दानवेश्वरम् ॥८०
आच्छादयत यत्नेन वर्षास्विव घनैर्नभः । दैत्योऽपि बाणजालं तद्व्यधमत्सायकैः शितैः
यथा वायुर्घनाटोपं परिवार्य दिशो मुखे । शक्रोऽथ क्रोधसंरम्भान्न विशेषयते यदा ॥ ८२
दानवेन्द्रं तदा चक्रे गन्धर्वास्त्रं महाद्भुतम् । तदुत्थतेजसा व्याप्तमभून्नमनगोचरम् ॥ ८३
गन्धर्वनगरैश्चापि नानाप्राकारतोरणैः । मुञ्चद्भिरद्भुताकारैरस्त्रवृष्टिं समन्ततः ॥ ८४
अथास्त्रवृष्ट्या दैत्यानां हन्यमाना महाचमूः । जम्भं शरणमागच्छदप्रमेयपराक्रमम् ॥ ८५

---

१ ग. घ. चक्रेण । २ । घ. °मिं चक्षुष्यता° । ३ गं. लसंनिभः । सु° ।

व्याकुलोऽपि स्वयं दैत्यः सहस्राक्षास्त्रपीडितः । स्मरन्साधुसमाचारं भीतत्राणपरोऽभवत् ॥
अथास्त्रं मौसलं नाम मुमोच दितिनन्दनः । ततोऽयोमुसलैः सर्वमभवत्पूरितं जगत् ॥ ८७
एकप्रहारकरणैरप्रधृष्यैः समन्ततः । गन्धर्वनगरं तेषु गन्धर्वास्त्रविनिर्मितम् ॥ ८८
गान्धर्वमस्त्रं संधाय सुरसैन्येषु चापरम् । एकैकेन प्रहारेण गजानश्वान्महारथान् ॥ ८९
रथाश्वान्सोऽहनत्क्षिप्रं शतशोऽथ सहस्रशः । ततः सुराधिपस्त्वाष्ट्रमस्त्रं च समुदीरयत् ॥
संध्यमाने ततस्त्वाष्ट्रे निश्चेरुः पावकार्चिषः । ततो यन्त्रमयान्दिव्यानायुधान्दुष्प्रधर्षिणः ॥
तैर्यन्त्रैरभवद्वद्धमन्तरिक्षे वितानकम् । वितानकेन तेनाथ प्रशमं मौसले गते ॥ ९२
शैलास्त्रं मुमुचे जम्भो यन्त्रसंघातताडनम् । व्यामप्रमाणैरुपलैस्ततो वर्षमवर्तत ॥ ९३
त्वाष्ट्रस्य निर्मितान्याशु यन्त्राणि तदनन्तरम् । तेनोपलनिपातेन गतानि तिलशस्ततः ॥
यन्त्राणि तिलशः कृत्वा शैलास्त्रं परमूर्धसु । निपपातातिवेगेनादारयत्पृथिवीं ततः ॥ ९५
ततो वज्रास्त्रमकरोत्सहस्राक्षः पुरंदरः । तदोपलमहावर्षं व्यशीर्यत समन्ततः ॥ ९६
ततः प्रशान्ते शैलास्त्रे जम्भो भूधरसंनिभः । ऐषीकमस्त्रमकरोदभीतोऽतिपराक्रमः ॥ ९७
ऐषीकेणागमन्नाशं वज्रास्त्रं शक्रवल्लभम् । विजृम्भत्यथ चैषीके परमास्त्रेऽतिदुर्धरे ॥ ९८
जज्वलुर्देवसैन्यानि सस्यन्दनगजानि तु । दह्यमानैष्वनीकेषु तेजसा सुरसत्तमः ॥ ९९
आग्नेयमस्त्रमकरोद्बलवान्पाकशासनः । तेनास्त्रेण तदस्त्रं च बभ्रंशे तदनन्तरम् ॥ १००
तस्मिन्प्रतिहते चास्त्रे पावकास्त्रं व्यजृम्भत । जज्वाल कायं जम्भस्य सरथं च ससारथिम् ॥
ततः प्रतिहतः सोऽथ दैत्येन्द्रः प्रतिभानवान् । वारुणास्त्रं मुमोचाथ शमनं पावकार्चिषाम् ॥
ततो जलधरैर्व्योम स्फुरद्विद्युल्लताकुलैः । गम्भीरमुरजध्वानैरापूरितमिवाम्बरम् ॥ १०३
करीन्द्रकरतुल्याभिर्जलधाराभिरम्बरात् । पतन्तीभिर्जगत्सर्वं क्षणेनाऽऽपूरितं बभौ ॥ १०४
शान्तमाग्नेयमस्त्रं तत्प्रविलोक्य सुराधिपः । वायव्यमस्त्रमकरोन्मेघसंघातनाशनम् ॥ १०५
वायव्यास्त्रबलेनाथ निर्धूते मेघमण्डले । बभूव विमलं व्योम नीलोत्पलदलप्रभम् ॥ १०६
वायुना चातिघोरेण कम्पितास्ते तु दानवाः । न शेकुस्तत्र ते स्थातुं रणेऽतिबलिनोऽपि ये ॥
तदा जम्भोऽभवच्छैलो दशयोजनविस्तृतः । मारुतप्रतिघातार्थं दानवानां भयापहः ॥
मुक्तनानायुधोदग्रतेजोभिज्वलितद्रुमः । ततः प्रशमिते वायौ दैत्येन्द्रे पर्वताकृतौ ॥ १०९
महाशनीं वज्रमयीं मुमोचाऽऽशु शतक्रतुः । तयाऽशन्या पतितया दैत्यस्याचलरूपिणः ॥
कंदराणि व्यशीर्यन्त समन्तान्निर्झराणि तु । ततः सा दानवेन्द्रस्य शैलमाया न्यवर्तत ॥
निवृत्तशैलमायोऽथ दानवेन्द्रो मदोत्कटः । बभूव कुञ्जरो भीमो महाशैलसमाकृतिः ॥ ११२
स ममर्द सुरानीकं दन्तैश्चाप्यहनत्सुरान् । बभञ्ज पृष्ठतः कांश्चित्करेणाऽऽवेष्टय दानवः ॥
ततः क्षपयतस्तस्य सुरसैन्यानि वृत्रहा । अस्त्रं त्रैलोक्यदुर्धर्षं नारसिंहं मुमोच ह ॥ ११४
ततः सिंहसहस्राणि निश्चेरुर्मन्त्रतेजसा । कृष्णदंष्ट्राट्टहासानि क्रकचाभनखानि च ॥ ११५
तैर्विपाटितगात्रोऽसौ गजमायां व्यपोथयत । ततश्चाऽऽशीविषो घोरोऽभवत्फणशताकुलः ॥
विषनिःश्वासनिर्दग्धं सुरसैन्यं महारथः । ततोऽस्त्रं गारुडं चक्रे शक्रश्चारुभुजस्तदा ॥

---

१ ख. ग. घ. प्रथमं । २ ङ. शैलश्चामरमू° । ३ ग. °दुर्जये । ४ ग. घ. °तिरूपेग । ङ. °तिरूक्षेण । ५ ग. महाबलः । ङ. भयावहः । ६ ग. °भिर्गतानितु ।

ततो गरुत्मतस्तस्मात्सहस्राणि विनिर्ययुः । तैर्गरुत्मद्भिरासाद्य जम्भो भुजगरूपवान् ॥
कृतस्तु खण्डशो दैत्यः साऽस्य माया व्यनश्यत । प्रनष्टायां तु मायायां ततो जम्भो महासुरः
चकार रूपमतुलं चन्द्रादित्यपथानुगम् । विवृत्तवदनो ग्रस्तुमियेष सुरपुंगवान् ॥ १२०
ततोऽस्य विविशुर्वक्त्रं समहारथकुञ्जरा । सुरसेनाऽविशद्भीमं पातालोत्तानतालुकम् ॥
सैन्येषु ग्रस्यमानेषु दानवेन बलीयसा । शक्रो दैन्यं समापन्नः श्रान्तबाहुः सवाहनः ॥
कर्तव्यतां नाध्यगच्छत्प्रोवाचेदं जनार्दनम् । किमनन्तरमत्रास्ति कर्तव्यस्यावशेषितम् ॥
यदाश्रित्य घटामोऽस्य दानवस्य युयुत्सवः । ततो हरिरुवाचेदं वज्रायुधमुदारधीः ॥ १२४
न सांप्रतं रणस्त्याज्यस्त्वया कातरभैरवः । वर्धस्वाऽऽशु महामायां पुरंदर रिपुं प्रति॥१२५
मयैष लक्षितो दैत्योऽधिष्ठितः प्राप्तपौरुषः । मा शक्र मोहमागच्छ क्षिप्रमस्त्रं स्मर प्रभो॥
ततः शक्रः प्रकुपितो दानवं प्रति देवराट् । नारायणास्त्रं प्रयतो मुमोचासुरवक्षसि ॥ १२७
एतस्मिन्नन्तरे दैत्यो विवृतास्योऽग्रसत्क्षणात् । त्रीणि लक्षाणि गन्धर्वकिंनरोरगराक्षसान्॥
ततो नारायणास्त्रं तत्पपातासुरवक्षसि । महास्त्रभिन्नहृदयः सुस्राव रुधिरं च सः ॥ १२९
रणागारमिवोद्गारं तत्याजासुरनन्दनः । तदस्त्रतेजसा तस्य रूपं दैत्यस्य नाशितम् ॥१३०
ततश्चान्तर्दधे दैत्यो वियत्यनुपलक्षितः । गगनस्थः स दैत्येन्द्रः शस्त्रासनमतीन्द्रियम् ॥
मुमोच सुरसैन्यानां संहारे कारणं परम् । प्रासान्परश्वधांश्चक्रान्बाणान्वज्रान्समुद्गरान् ॥
कुठारान्सह खड्गैश्च भिन्दिपालानयोगुडान् । ववर्ष दानवो रौद्रो ह्यवन्ध्यानक्षयानपि॥
तैरस्त्रैर्दानवैर्मुक्तैर्देवानीकेषु भीषणैः । बाहुभिर्धरणिः पूर्णा शिरोभिश्च सकुण्डलैः॥ १३४
ऊरुभिर्गजहस्ताभैः करीन्द्रैर्वाऽचलोपमैः । भग्नेषादण्डचक्राक्षै रथैः सारथिभिः सह ॥ १३५
दुःसंचाराऽभवत्पृथ्वी मांसशोणितकर्दमा । रुधिरौघह्रदावर्ता शवराशिशिलोच्चयैः ॥१३६

कबन्धनृत्यसंकुले स्रवद्वसास्रकर्दमे
जगत्त्रयोपसंहृतौ समे समस्तदेहिनाम् ।
शृगालगृध्रवायसाः परं प्रमोदमादधुः
क्वचिद्विकृष्टलोचनः शवस्य रौति वायसः ॥ १३७ ॥
विकृष्टपीवरान्त्रकाः प्रयान्ति जम्बुकाः क्वचित्
क्वचित्स्थितोऽतिभीषणः श्वचञ्चुचर्वितो बकः ।
मृतस्य मांसमाहरञ्छ्वजातयश्च संस्थिताः
क्वचिद्वृकी गजासृजं पपौ निलीयतोऽन्तरतः ॥ १३८ ॥
क्वचित्तुरंगमण्डली विकृष्यते श्वजातिभिः
क्वचित्पिशाचजातकैः प्रपीतशोणितासवैः ।
स्वकामिनीयुतैर्द्रुतं प्रमोदमत्तसंभ्रमै-
र्ममैतदानयाऽऽननं खुरोऽयमस्तु मे प्रियः ॥ १३९ ॥

---

१ ग. घ. जम्भं भु° । २ ग. घ. °रूपिणम् । कृतं तु ख° । ३ ङ. °पथक् । कृ° । ४ ग. क्रो°दानवमा° । ङ. °को दीनत्वमा° । ५ चं. रणं त्यक्तुं शक्यं कातरभीतवन । व° । ६ ङ. °रं यदु । र° । ७ क. ख. °त एवान्त° । ८ क. °न्बाणवज्रा° । ९ ङ. च. °घया । क° । १० ग. °को नगाद्य° । ११ °ताभयः । क्र° ।

करोऽयमब्जसंनिभो ममास्तु कर्णपूरकः
सरोपमीक्षतेऽपरा वैपां विना प्रियं तदा ।
परा प्रिया ह्यवाप यद्भृतोष्णशोणितासवं
विकृष्य शवचर्म तत्प्रबद्धसान्द्रपल्लवम् ॥ १४० ॥
चकार यक्षकामिनी तरुं कुठारपाटितं
गजस्य दन्तमात्मजं प्रगृह्य कुम्भसंपुटम् । (?)
विपाट्य मौक्तिकं परं प्रियप्रसादमिच्छते
समांसशोणितासवं पपुश्च यक्षराक्षसाः ॥ १४१ ॥
मृताश्वकेशवासितं रसं प्रगृह्य पाणिना
प्रियाविमुक्तजीवितं समानयासृगासवम् ।
न पश्यतां प्रयाति मे गतं श्मशानगोचरं
नरस्य तज्जहात्यसौ प्रशस्य किंनराननम् ॥ १४२ ॥
स नाग एप नो भयं दधाति मुक्तजीवितो
न दानवस्य शक्यते मया तदेकयाऽऽननम् ।
इति प्रियाय वल्लभा वदन्ति यक्षयोषितः
परे कपालपाणयः पिशाचयक्षराक्षसाः ॥ १४३ ॥
वदन्ति देहि देहि मे ममातिभक्ष्यचारिणः
परेऽवतीर्य शोणितापगासु धौतमूर्तया ।
पितॄन्प्रतर्प्य देवताः समर्चयन्ति चाऽऽमिषै—
र्गजोडुपे सुसंस्थितास्तरन्ति शोणितं ह्रदम् ॥ १४४ ॥
इति प्रगाढसंकटे सुरासुरे सुसंगरे
भयं समुज्झ्य दुर्जया भटाः स्फुटन्ति मानिनः ॥ १४५ ॥

ततः शक्रो धनेशश्च वरुणः पवनोऽनलः । यमोऽपि निर्ऋतिश्चापि दिव्यास्त्राणि महाबलाः ॥
आकाशे मुमुचुः सर्वे दानवानभिसंध्य ते । अस्त्राणि व्यर्थतां जग्मुर्देवानां दानवान्प्रति १४६
संरम्भेणाप्ययुध्यन्त संहतास्तुमुलेन च । गतिं न विविदुश्चापि श्रान्ता दैत्यस्य देवताः ॥ १४७
दैत्यास्त्रभिन्नसर्वाङ्गा ह्यकिंचित्करतां गताः । परस्परं व्यलीयन्त गावः शीतार्दिता इव १४८
तदवस्थान्हरिर्दृष्ट्वा देवाञ्छक्रमुवाच ह । ब्रह्मास्त्रं स्मर देवेन्द्र यस्यावध्यो न विद्यते ॥
विष्णुना चोदितः शक्रः सस्मारास्त्रं महौजसम् ॥ १४९

संपूजितं नित्यमरातिनाशनं समाहितं बाणममित्रघातने ।
धनुष्यजय्ये विनियोज्य बुद्धिमानभूत्ततो मन्त्रसमाधिमानसः ॥ १५०
स मन्त्रमुच्चार्य यतान्तराशयो वधाय दैत्यस्य धियाऽभिसंध्य तु ।
विकृष्य कर्णान्तमकुण्ठदीधितिं मुमोच वीक्ष्याम्बरमार्गमुन्मुखः ॥ १५१

---

१ ग. दयां° । २ ग. प्रियामपाययद्घनोष्ण° । ३ ङ. °क्तिकान्प्रियान्प्रसादमिच्छति स्थितिम् । स° । ४ घ. °च्छत । स° । ५ ग. मृतस्य के° । ६ ङ. 'वितान्मपानयाऽऽशु आस° । ७ ङ. 'वाभिमखं ततः । अ° ।

अथासुरः प्रेक्ष्य महास्त्रमाहितं विहाय मायामवनौ व्यतिष्ठत ।
प्रवेपमानेन मुखेन शुष्यता वलेन गात्रेण च संभ्रमाकुलः ॥ १५२
ततस्तु तस्यास्त्रवराभिमन्त्रितः शरोऽर्धचन्द्रप्रतिमो महारणे ।
पुरंदरस्यासनबन्धुतां गतो नवार्कबिम्बं वपुषा विडम्बयन् ॥ १५३
किरीटकोटिस्फुटकान्तिसंकटं सुगन्धिनानाकुसुमाधिवासितम् ।
प्रकीर्णधूमज्वलनाभमूर्धजं पपात जम्भस्य शिरः सकुण्डलम् ॥ १५४

तस्मिन्विनिहते जम्भे दानवेन्द्राः पराङ्मुखाः । ततस्ते भग्नसंकल्पाः प्रययुर्यत्र तारकः ॥ १५५
तांस्तु त्रस्तान्समालोक्य श्रुत्वा रोषमगात्परम् । स [1]जम्भदान[2]वेन्द्रं तु सुरै रणमुखे [3]हतम् १५६
सावलेपं ससंरम्भं सगर्वं सपराक्रमम् । *साविष्कारमनाकारं तारको भावमाविशत् ॥ १५७
स जैत्रं रथमास्थाय सहस्रेण गरुत्मताम् । संरम्भाद्दानवेन्द्रस्तु सुरै रणमुखे गतः ॥ १५८
सर्वायुधपरिष्कारः सर्वास्त्रपरिरक्षितः । त्रैलोक्यऋद्धिसंपन्नः सुविस्तृतमहाननः ॥ १५९
रणायाभ्यपतत्तूर्णं सैन्येन महता वृतः । जम्भास्त्रक्षतसर्वा[4]ङ्गं त्यक्त्वैरावतदन्तिनम् ॥ १६०
सज्जं मातलिना गुप्तं रथमिन्द्रस्य तेजसा । तप्तहेमपरिष्कारं महारत्नसमन्वितम् ॥ १६१
चतुर्योजनविस्तीर्णं सिद्धसंघपरिष्कृतम् । गन्धर्वकिंनरोद्गीतमप्सरोनृत्यसंकुलम् ॥ १६२
सर्वायुधमसम्बाधं विचित्रैरचनोज्ज्वलम् । तं रथं देवराजस्य परिवार्य समन्ततः ॥ १६३
दंशिता लोकपालास्तु तस्थुः सगरुडध्वजाः । ततश्चचाल वसुधा ततो रूक्षो मरुद्ववौ ॥ १६४
ततोऽम्बुधय उद्भूतास्ततो नष्टा रविप्रभा । ततस्तमः समुद्भूतं नातोऽदृश्यन्त तारकाः १६५
ततो जज्वलुरस्त्राणि ततोऽकम्पत वाहिनी । एकतस्तारको दैत्यः सुरसंघस्तु चैकतः १६६
लोकावसादमेकत्र जगत्पालनमेकतः । चराचराणि भूतानि सुरासुरविभेदतः ॥ १६७
तद्द्विधाऽप्येकतां यातं ददृशुः प्रेक्षका इव । यद्वस्तु किंचिल्लोकेषु त्रिषु सत्तास्वरूपकम् ॥
तत्तत्राहृश्यदखिलं खिलीभूतविभूतिकम् ॥ १६८

अस्त्राणि तेजांसि धनानि धैर्यं [10]सेनाबलं वीर्यपरा[11]क्रमौ च ।
[12]सत्त्वौजसां तन्निकरं बभूव सुरासुराणां त[13]पसो बलेन ॥ १६९

अथाभिमुखमायान्तं नवभिर्नतपर्वभिः । बाणैरनलकल्पाग्रैर्बिभिदुस्तारकं हृदि ॥ १७०
स तानचिन्त्य दैत्येन्द्रः सुर[14]बा[15]णौन्गतान्हृदि । नवभिर्नवभिर्बाणैः सुरान्विव्याध दानवः १७१
जगै[16]द्धूरणसंभूतैः शल्यैरिव पुरःसरैः । ततोऽच्छिन्नं शरव्रातं सङ्ग्रामे मुमुचुः सुराः ॥ १७२
अनन्तरं च कान्तानामश्रुपातमिवानिशम् । तदप्राप्तं वियत्येव नाशयामास दानवः ॥ १७३
[17]शरैर्यथा कुचरितैः प्र[18]ख्यातं परमागतम् । सुनिर्मलं क्रमायातं कुपुत्रः स्वं महाकुलम् ॥ १७४

* एतदर्धं नास्ति ग. ङ. पुस्तकयोः ।

१ ङ. जम्भान्दानवेन्द्रांस्तु शरै° । २ ग. वेन्द्रस्तु सुरेन्द्रेण रणे ह° । ३ ङ. हतान् । ४ ग. °ङ्गं गत्वैरावणद° । ५ ग. °त्रभवनो° । ६ ग °म्पन्त वाहनाः । ए° । ङ. °म्पन्त वाहवः । ए° । ७ ग. °त्तुनाद° । ८ ग. विभीतक° । ९ ग. °र्यं शोभाव° । ङ. °र्यं शोभाफलं । १० ङ. वीरपराक्रमथ । सर्वौज° । ११ ग. °क्रमं च । सर्वौज° । १२ ङ. °न्निकपो व° । १३ ग. ङ. °पसा ब° । १४ ङ. °बाणक्षतो हृदि । १५ ग. °णान्क्षता° । १६ ङ. च. °गद्धार° । १७ ग. ङ. °रं स्वका° । १८ ङ. °ख्यातां परमां गतिम् । सु° ।

ततो निवार्य तद्बाणजालं सुरभुजेरितम् । बाणैर्व्योम दिशः पृथ्वीं पूरयामास दानवः ॥१७५
चिच्छेद पुङ्खदेशेषु स्वके स्थाने च लाघवात् । बाणजालैः सुतीक्ष्णाग्रैः कङ्कबर्हिणवाजितैः
कर्णान्तकृष्टैर्विमलैः सुवर्णरजतोज्ज्वलैः । शास्त्रार्थैः संशयप्राप्तान्यथार्थान्वै विकल्पितैः ॥
ततः शतेन बाणानां शक्रं विव्याध दानवः । नारायणं च सप्तत्या नवत्या च हुताशनम् ॥
दशभिर्मारुतं मूर्ध्नि यमं दशभिरेव च । धनदं चैव सप्तत्या वरुणं च तथाऽष्टभिः ॥ १७९
विंशत्या निर्ऋतिं दैत्यः पुनश्चाष्टाभिरेव च । विव्याध पुनरेकैकं दशभिर्दशभिः शरैः ॥१८०
तथा च मातलिं दैत्यो विव्याध त्रिभिराशुगैः । गरुडं दशभिश्चैव स विव्याध पतत्रिभिः ॥
पुनश्च दैत्यो देवानां तिलशो नतपर्वभिः । चकार वर्मजातानि चिच्छेद च धनूंषि तु ॥
ततो विकवचा देवा विधनुष्काः शरैः कृताः ॥ १८२

अथान्यानि चापानि तस्मिन्सरोषा रणे लोकपाला गृहीत्वा समन्तात् ।
शरैरक्षयैर्दानवेन्द्रं ततक्षुस्तदा दानवोऽमर्षसंरक्तनेत्रः ॥ १८३
शरानग्निकल्पान्ववर्षामराणां ततो बाणमादाय कल्पानलाभम् ।
जघानोरसि क्षिप्रमिन्द्रं सुबाहुं महेन्द्रोऽव्यकम्पद्रथोपस्थ एव ॥ १८४
त्रिलोक्यान्तरिक्षे सहस्रार्कबिम्बं पुनर्दानवो विष्णुमुद्भूतवीर्यम् ।
[illegible]भ्यां जघानांसमूले सलीलं ततः केशवस्यापतच्छार्ङ्गमग्रे ॥ १८५
ततस्तारकः प्रेतनाथं पृषत्कैर्वसुं तस्य सव्ये स्मरन्क्षुद्रभावम् ।
शरैरग्निकल्पैर्जलेशस्य कायं रणेऽशोषयद्दुर्जयो दैत्यराजः ॥ १८६
शरैरग्निकल्पैश्चकाराऽऽशु दैत्यस्तथा राक्षसान्भीतभीतान्दिशासु ।
पृषत्कैश्च रूक्षैर्विकारप्रयुक्तं चकारानिलं लीलयैवासुरेशः ॥ १८७
क्षणाल्लब्धचित्ताः स्वयं विष्णुशक्रानलाद्याः सुसंहत्य तीक्ष्णैः पृषत्कैः ।
प्रचक्रुः प्रचण्डेन दैत्येन सार्धं महासंगरं संगरग्रासकल्पम् ॥ १८८
अथाऽऽनस्य चापं हरिस्तीक्ष्णबाणैर्हनत्सारथिं दैत्यराजस्य हृद्यम् ।
ध्वजं धूमकेतुः किरीटं महेन्द्रो धनेशो धनुः काञ्चनानद्धपृष्ठम् ॥
यमो बाहुदण्डं रथाङ्गानि वायुर्निशाचारिणामीश्वरस्यापि वर्म ॥ १८९

दृष्ट्वा तद्युद्धममरैरकृत्रिमपराक्रमम् । दैत्यनाथः कृतं संख्ये स्वबाहुयुगबान्धवः ॥ १९०
मुमोच मुद्गरं भीमं सहस्राक्षाय संगरे । दृष्ट्वा मुद्गरमायान्तमनिवार्यमथाम्बरे ॥ १९१
रथादाप्लुत्य धरणीमगमत्पाकशासनः । मुद्गरोऽपि रथोपस्थे पपात परुषस्वनः ॥ १९२
स रथं चूर्णयामास न ममार च मातलिः । गृहीत्वा पट्टिशं दैत्यो जघानोरसि केशवम् ॥
स्कन्धे गरुत्मतः सोऽपि निषसाद विचेतनः । खड्गेन राक्षसेन्द्रस्य निचकर्त च वाहनम् ॥
यमं च पातयामास भूमौ दैत्यो भुशुण्डिना । वह्निं च भिन्दिपालेन ताडयामास मूर्धनि १९५

---

१ ग. 'जातं गु' । २ क. 'र्हिण:श्वा' । ३ घ. 'डं दैत्यराजस्तु दशश्चैव आशुगैः । अरुणं दशभिश्चैव माहेयं दशभिस्तत. । पु' । ४ ङ. °व महेशं नवभिस्ततः । पु' । ५ ङ. 'णेऽज्ञातय° । ६ ग. क्षणं मृत्तचित्राः स्वयं । ७ ग. रं प्राप्य संकल्पासिद्धम् । अ' । ८ ग. 'णर्महासार' । ९ ग 'थनं तद्वदेन । य° । १० ग.घ ङ. °रश्चापि : ११ ङ सारथिः । १२ ङ. °तं सवाह° ।

वायुं च दोर्भ्यामुत्क्षिप्य पातयामास भूतले । धनेशं च धनुष्कोट्या कुट्टयामास कोपनः १९६
ततो देवनिकायानामेकैकं समरे ततः । जघानास्त्रैरसंख्येयैर्दैत्येन्द्रोऽमितविक्रमः ॥ १९७
लब्धसंज्ञः क्षणाद्विष्णुश्चक्रं जग्राह दुर्धरम् । दानवेन्द्रवसासिक्तं पिशिताशनकोन्मुखम् १९८
मुमोच दानवेन्द्रस्य हृढं वक्षसि केशवः । पपात चक्रं दैत्यस्य हृदये भास्करद्युति ॥ १९९
व्यशीर्यत ततः काये नीलोत्पलमिवाश्मनि । ततो वज्रं महेन्द्रस्तु प्रमुमोचार्चितं चिरम् ॥२००
यस्मिञ्जयाशा शक्रस्य दानवेन्द्ररणे त्वभूत् । तारकस्य समासाद्य शरीरं शौर्यशालिनः ॥
व्यशीर्यत विकीर्णार्चिः शतधा खण्डतां गतम् । विनाशमगमन्मुक्तं वायुनाऽसुरवक्षसि ॥
ज्वलितं ज्वलनाभासमङ्कुशं कुलिशं यथा । विनाशमागतं दृष्ट्वा वायुश्चाङ्कुशमाहवे ॥ २०३
रुष्टः शैलेन्द्रमुत्पाट्य पुष्पितद्रुमकन्दरम् । चिक्षेप दानवेन्द्राय पञ्चयोजनविस्तृतम् ॥२०४
महीधरं तमायान्तं दैत्यः स्मितमुखस्तदा । जग्राह वामहस्तेन बालकन्दुकलीलया ॥ २०५
ततो दण्डं समुद्यम्य कृतान्तः क्रोधमूर्छितः । दैत्येन्द्रं मूर्ध्नि चिक्षेप भ्राम्य वेगेन दुर्जयः ॥
सोऽसुरस्यापतन्मूर्ध्नि दैत्यस्तं च न बुद्धवान् । कल्पान्तदहनालोकामजय्यां ज्वलनस्ततः ॥
शक्तिं चिक्षेप दुर्धर्षां दानवेन्द्राय संयुगे । नवा शिरीषमालेव साऽस्य वक्षस्यराजत ॥ २०८
ततः खड्गं समाकृष्य कोपादाकाशनिर्मलम् । भासितासितदिग्भागं लोकपालोऽपि निर्ऋतिः ॥ २०९
चिक्षेप दानवेन्द्राय तस्य मूर्ध्नि पपात च । पतितश्चागमत्खड्गः स शीघ्रं शतखण्डताम् ॥२१०
जलेशस्तूग्रदुर्धर्षं विषपावकभैरवम् । मुमोच पाशं दैत्यस्य भुजबन्धाभिलाषुकः ॥ २११
स दैत्यभुजमासाद्य सर्पः सद्यो व्यपद्यत । स्फुटितक्रकचक्रूरदशनालिर्महाहनुः ॥ २१२
ततोऽश्विनौ समरुतःससाध्याः समहोरगाः । यक्षराक्षसगन्धर्वा दिव्यनानास्त्रपाणयः ॥
जघ्नुर्दैत्येश्वरं सर्वे संभूय सुमहाबलाः । न चास्त्राण्यस्य सज्जन्ति गात्रे वज्राचलोपमे ॥
ततो रथादवप्लुत्य तारको दानवाधिपः । जघान कोटिशो देवान्करपार्ष्णिभिरेव च ॥ २१५
हतशेषाणि सैन्यानि देवानां विप्रदुद्रुवुः । दिशो भीतानि संत्यज्य रणोपकरणानि तु ॥
लोकपालांस्ततो दैत्यो बबन्धेन्द्रमुखान्रणे । सकेशवान्दृढैः पाशैः पशुमारः पशूनिव ॥
स भूयो रथमास्थाय जगाम स्वकमालयम् । सिद्धगन्धर्वसंघुष्टविपुलाचलमस्तकम् ॥२१८
स्तूयमानो दितिसुतैरप्सरोभिर्विनोदितः । त्रैलोक्यलक्ष्मीस्तद्देशे प्राविशत्स्वपुरं यथा ॥
निषसादाऽऽसने पद्मरागरत्नविनिर्मिते । ततः किंनरगन्धर्वनागनारीविनोदितैः ॥
क्षणं विनोद्यमानस्तु प्रचलन्मणिकुण्डलः ॥ २२०

इति श्रीमात्स्ये महापुराणे देवासुरसङ्ग्रामे तारकजयलाभो नाम त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ७८०३ ॥

---

१ ङ. 'सारकं सितास्यं क्षुरिकामु' । २ घ. ङ. 'वः । तदाशु चक्रं दैत्यस्य पतितं भा' । ३ ग. ङ. °ण्डशो ग° । ४ ङ. कुशलेशवत् । वि° । ५ ग. °मू । चोदिता । ६ ग. °पानक्रू° । ७ ग. ङ. °सुपालः प° । ८ ङ. °ने चासौ पद्मर° । ९ ग. ङ. °नाकना° ।

अथ चतुष्पञ्चाशदधिकशततमोऽध्यायः ।

सूत उवाच—

प्रादुरासीत्प्रतीहारः शुभ्रनीलाम्बुजाम्बरः । स जानुभ्यां महीं गत्वा पिहितास्यः स्वपाणिना ॥
उवाचानाविलं वाक्यमल्पाक्षरपरिस्फुटम् । दैत्येन्द्रमर्कवृन्दानां बिभ्रतं भास्वरं वपुः ॥ २
कालनेमिः सुरान्बद्ध्वांश्चाऽऽदाय द्वारि तिष्ठति । स विज्ञापयति स्थेयं क्व बन्दिभिरिति प्रभो
तन्निशम्याब्रवीद्दैत्यः प्रतीहारस्य भाषितम् । यथेष्टं स्थीयतामेभिर्गृहं मे भुवनत्रयम् ॥ ४
केवलं पाशबन्धेन विमुक्तैरविलम्बितम् । एवं कृते ततो देवा दूयमानेन चेतसा ॥ ५
जग्मुर्जगद्गुरुं द्रष्टुं शरणं कमलोद्भवम् । निवेदितास्ते शक्राद्याः शिरोभिर्धरणिं गताः ॥
तुष्टुवुः स्पष्टवर्णार्थैर्वचोभिः कमलासनम् ॥

देवा ऊचुः—

त्वमोंकारोऽस्यङ्कुराय प्रसूतो विश्वस्याऽऽत्माऽनन्तभेदस्य पूर्वम् ।
संभूतस्यानन्तरं सत्त्वमूर्ते संहारेच्छोस्ते नमो रुद्रमूर्ते ॥ ७
व्यक्तिं नीत्वा त्वं वपुः स्वं महिम्ना तस्मादण्डात्स्वाभिधानादचिन्त्यः ।
द्यावापृथ्व्योरूर्ध्वखण्डावराभ्यां ह्यण्डादस्मात्त्वं विभागं करोषि ॥ ८
व्यक्तं मेरौ यज्जनायुस्तवाभूद्देवं विद्मस्त्वत्प्रणीतश्चकास्ति ।
व्यक्तं देवाजन्मनः शाश्वतस्य द्यौस्ते मूर्धा लोचने चन्द्रसूर्यौ ॥ ९
व्यालाः केशाः श्रोत्ररन्ध्रा दिशस्ते पादौ भूमिर्नाभिरन्ध्रे समुद्राः ।
मायाकारः कारणं त्वं प्रसिद्धो वेदैः शान्तो ज्योतिषा त्वं विमुक्तः ॥ १०
वेदार्थेषु त्वां विवृण्वन्ति बुद्ध्वा हृत्पद्मान्तःसंनिविष्टं पुराणम् ।
त्वामात्मानं लब्धयोगा गृणन्ति सांख्यैर्यास्ताः सप्त सूक्ष्माः प्रणीताः ॥ ११
तासां हेतुर्याऽष्टमी चापि गीता तस्यां तस्यां गीयसे वै त्वमन्तम् ।
दृष्ट्वा मूर्तिं स्थूलसूक्ष्मां चकार देवैर्भावाः कारणैः कैश्चिदुक्ताः ॥ १२
संभूतास्ते त्वत्त एवाऽऽदिसर्गे भूयस्तां तां वासनां तेऽभ्युपेयुः ।
त्वत्संकल्पेनान्तमायांसिगूढः कालो मेयो ध्वस्तसंख्याविकल्पः ॥ १३
भावाभावव्यक्तिसंहारहेतुस्त्वं सोऽनन्तस्तस्य कर्तासि चाऽऽत्मन् ।
येऽन्ये सूक्ष्माः सन्ति तेभ्योऽभिगीतः स्थूला भावाश्चाऽऽवृतारश्च तेषाम् ॥
तेभ्यः स्थूलैस्तैः पुराणैः प्रतीतो भूतं भव्यं चैवमुद्भूतिभाजाम् ।
भावे भावे भावितं त्वा युनक्ति युक्तं युक्तं व्यक्तिभावान्निरस्य ॥
इत्थं देवो भक्तिभाजां शरण्यस्त्राता गोप्ता नो भवानन्तमूर्तिः ॥ १५

विरेमुरमराः स्तुत्वा ब्रह्माणमविकारिणम् । तस्थुर्मनोभिरिष्टार्थसंप्राप्तिप्रार्थनास्ततः ॥ १६
एवं स्तुतो विरिञ्चिस्तु प्रसादं परमं गतः । अमरान्वरदेनाऽऽह वामहस्तेन निर्दिशन् ॥ १७

---

१ ङ. 'प्रचीनांशुकाम्ब°' । २ क. ख 'नीलांशुकाम्ब°' । ३ ग. ङ. साम्बरं । ४ ग. च. °न्बद्ध्वा चाऽऽद्य° । ५ ग. ङ. चकार । ६ ग. °या निगू° । ७ ङ. °या निरूढः । ८ क. ख. 'तिः । विरिञ्चिममराः ।

ब्रह्मोवाच—

नारी याऽभर्तृकाऽकस्मात्तनुस्ते त्यक्तभूषणा । न राजते तथा शक्र म्लानवक्त्रशिरोरुहा॥
हुताशनविमुक्तोऽपि न धूमेन विराजसे । भस्मनेव प्रतिच्छन्नो दग्धदावश्चिरोपितः॥ १९
यमाऽऽमयमये नैव शरीरे त्वं विराजसे । दण्डस्याऽऽलम्बनेनेव ह्यक्रुच्छ्रस्तु पदे पदे ॥ २०
रजनीचरनाथोऽपि किं भीत इव भाषसे । राक्षसेन्द्र क्षताराते त्वमरातिक्षतो यथा ॥ २१
तनुस्ते वरुणोच्छुष्का परीतस्येव वह्निना । विमुक्तरुधिरं पाशं फणिभिः प्रविलोकयन् ॥
वायो भवान्विचेतस्कस्त्वं स्निग्धैरिव निर्जितः। किं त्वं बिभेषि धनद संन्यस्यैव कुबेरताम्
रुद्राश्चिशूलिनः सन्तो वदध्वं बहुशूलताम्। भवन्तः केन तत्क्षिप्तं तेजस्तु भवतामपि॥ २४
अकिंचित्करतां यातः करस्ते न विभासते। अलं नीलोत्पलाभेन चक्रेण मधुसूदन ॥ २५
किं त्वयाऽनुदरालीनभुवनप्रविलोकनम्। क्रियते स्तिमिताक्षेण भवता विश्वतोमुख ॥ २६
एवमुक्ताः सुरास्तेन ब्रह्मणा ब्रह्ममूर्तिना । वाचां प्रधानभूतत्वान्मारुतं तमचोदयन् ॥ २७
अथ विष्णुमुखैर्देवैः श्वसनः प्रतिबोधितः। चतुर्मुखं तदा प्राह चराचरगुरुं विभुम् ॥ २८

न तु वेत्सि चराचरभूतगतं भवभावमतीव महानुच्छ्रितः प्रभवः ।
पुनरर्थिवचोऽभिविस्तृतश्रवणोपमकौतुकभावकृतः ॥ २९
त्वमनन्त करोपि जगद्भवतां सचराचरगर्भविभिन्नगुणाम् ।
अमरासुरमेतदशेषमपि त्वयि तुल्यमहो जनकोऽसि यतः ॥ ३०
पितुरस्ति तथाऽपि मनोविकृतिः सगुणो विगुणो बलवानबलः ।
भवतो वरलाभनिवृत्तभयः कुलिशाङ्कसुतो दितिजोऽतिबलः ॥ ३१
सचराचरनिर्मथने किमिति कितवस्तु कृतो विहितो भवता ।
किल देव त्वया स्थितये जगतां महदद्भुतचित्रविचित्रगुणाः ॥ ३२
अपि तुष्टिकृतः श्रुतकामफला विहिता द्विजनायक देवगणाः ।
अपि नाकमभूत्किल यज्ञभुजां भवतो विनियोगवशात्सततम् ॥ ३३
अपहृत्य विमानगणं स कृतो दितिजेन महामरुभूमिसमः ।
कृतवानसि सर्वगुणातिशयं यमशेषमहीधरराजतया ॥ ३४
सममिङ्गितभावविधिः स गिरिर्गगनेन सदोच्छ्रयतां हि गतः ।
अधिवासविहारविधावुचितो दितिजेन पविक्षतशृङ्गतटः ॥ ३५
परिलुण्ठितरत्नगुहानिवहो बहुदैत्यसमाश्रयतां गमितः ।
सुरराज स तस्य भयेन गतं व्यदधादशरीर इतोऽपि वृथा ॥ ३६
उपयोग्यतया विवृतं सुचिरं विमलद्युतिपूरितदिग्वदनम् ।
भवतैव विनिर्मितमादियुगे सुरहेतिसमूहमनुत्थमिदम् ॥ ३७
दितिजस्य शरीरमवाप्य गतं शतधा मतिभेदमिवाल्पमनाः ।

---

१ ग. °मुक्तेन तेजःपुञ्जेन र°। २ ग. शान्ता । ३ ग. °णाऽव्यक्तम्° । ४ ग. ङ. °त्वात्तेमारुतम° । ५ ग. ननुवं° । ६ ग. °वभव्यमतीतमहाशयितः । प्रभवः पुनरर्थव° . ७ ग. °बलम् । भ° । ८ ग. °जपतिम् । स° । ९ ग. °भकुण्टमि° । १० ङ. °वासविदः । आ° । ११ ग. °मनः । आ° । १२

आसारधूलिध्वस्ताङ्गा द्वारस्थाः स्मः कदर्थिनः। लब्धप्रवेशाः कृच्छ्रेण वयं तस्यामरद्विपः॥
सभायाममरा देव निकृष्टेऽप्युपवेशिताः। वेत्रहस्तैरजल्पन्तस्ततोऽपहसितास्तु तैः॥ ३९
महार्थाः सिद्धसर्वार्था भवन्तः स्वल्पभाषिणः। चाटुयुक्तमथो कर्म ह्यमरा बहु भाषत॥ ४०
सभयं दैत्यसिंहस्य सशक्रस्य तु संस्थिताः। वदतेति च दैत्यस्य प्रेष्यैर्विहसिता बहु॥ ४१
ऋतवो मूर्तिमन्तस्तमुपासन्ते ह्यहर्निशम्। कृतापराधसंत्रासं न त्यजन्ति कदाचन॥ ४२
तन्त्रीत्रयलयोपेतं सिद्धगन्धर्वकिंनरैः। सुरागमुपधा नित्यं गीयते तस्य वेश्मसु॥ ४३
हन्ताकृतोपकरणैर्मित्राणि गुरुलाघवैः। शरणागतसंत्यागी त्यक्तसत्यपरिश्रयः॥ ४४
इति निःशेषमथवा निःशेषं वै न शक्यते। तस्याविनयमाख्यातुं स्रष्टा तत्र परायणम्॥
इत्युक्तः स्वात्मभूर्देवः सुरैर्दैत्यविचेष्टितम्। सुरानुवाच भगवांस्ततः स्मितमुखाम्बुजः॥४६

ब्रह्मोवाच—

अवध्यस्तारको दैत्यः सर्वैरपि सुरासुरैः। यस्य वध्यः स नाद्यापि जातस्त्रिभुवने पुमान्॥
मया स वरदानेन च्छन्दयित्वा निवारितः। तपसः सांप्रतं राजा त्रैलोक्यदहनात्मकात्॥
स च वव्रे वधं दैत्यः शिशुतः सप्तवासरात्। स सप्तदिवसो बालः शंकराद्यो भविष्यति॥
तारकस्य निहन्ता स भास्कराभो भविष्यति। सांप्रतं चाप्यपत्नीकः शंकरो भगवान्प्रभुः॥
यच्चाहमुक्तवान्यस्या ह्युत्तानकरता सदा। उत्तानो वरदः पाणिरेष देव्याः सदैव तु॥ ५१
हिमाचलस्य दुहिता सा तु देवी भविष्यति। तस्याः सकाशाद्यः शर्वस्त्वरण्यां पावको यथा॥
जनयिष्यति तं प्राप्य तारकोऽभिभविष्यति। मयाऽप्युपायः स कृतो यथैवं हि भविष्यति॥५३
शेयश्चाप्यस्य विभवो विनश्येत्तदनन्तरम्। स्तोककालं प्रतीक्षध्वं निर्विशङ्केन चेतसा॥ ५४
इत्युक्तास्त्रिदशास्तेन साक्षात्कमलजन्मना। जग्मुस्तं प्रणिपत्येशं यथायोगं दिवौकसः॥ ५५
ततो गतेषु देवेषु ब्रह्मा लोकपितामहः। निशां सस्मार भगवान्स्वतनोः पूर्वसंभवाम्॥ ५६
ततो भगवती रात्रिरुपतस्थे पितामहम्। तां विविक्ते समालोक्य ब्रह्मोवाच विभावरीम्॥

ब्रह्मोवाच—

विभावरि महत्कार्यं विबुधानामुपस्थितम्। तत्कर्तव्यं त्वया देवि शृणु कार्यस्य निश्चयम्॥
तारको नाम दैत्येन्द्रः सुरकेतुरनिर्जितः। तस्याभावाय भगवाञ्जनयिष्यति चेश्वरः॥ ५९
सुतं स भविता तस्य तारकस्यान्तकारकः। शंकरस्याभवत्पत्नी सती दक्षसुता तु या॥ ६०
सा मृता कुपिता देवी कस्मिंश्चित्कारणान्तरे। भविता हिमशैलस्य दुहिता लोकभाविनी॥
विरहेण हरस्तस्या मत्वा शून्यं जगत्त्रयम्। तपस्यन्हिमशैलस्य कन्दरे सिद्धसेविते॥ ६२
प्रतीक्षमाणस्तज्जन्म कंचित्कालं निवत्स्यति। तयोः सुतस्तपसोर्भविता यो महाबलः॥ ६३
स भविष्यति दैत्यस्य तारकस्य विनाशकः। जातमात्रा तु सा देवी स्वल्पसंज्ञा च भामिनी॥

---

१ ङ. 'सिताः परे। म'। २ क ख. महार्थाः। ३ ग. ङ. सभेयं'। ४ ग. 'स्य न शक्रस्य विसंस्थला। व'। ङ. 'स्य न शक्रस्य विसंस्थुला। व°। ५ ग. 'श्रारिगु'। ६ क. ख. 'ष्ठिते। सु'। ७ ग. ङ. 'वान्स्वां तनुं पू'। ८ ग. ङ. 'णु चार्थस्य। ९ ग. च. 'रनिर्जर°। १० ङ. च. सा पितुः कु'। ११ ग. 'ह्यात्मजः। स। १२ ग. 'संज्ञेव भा'। ङ. संज्ञेच। १३ ग घ भाविनि ङ. भावनी।

विरहोत्कण्ठिता गाढं हरसंगमलालसा । तयोः सुतप्ततपसोः संयोगः स्याच्छुभानने ॥६५
ततस्ताभ्यां तु जनितः स्वल्पो वाक्कलहो भवेत् । ततोऽपि संशयो भूयस्तारकं प्रति दृश्यते ॥
तयोः संयुक्तयोस्तस्मात्सुरतासक्तिकारणे । विघ्नस्त्वया विधातव्यो यथा ताभ्यां तथा शृणु
गर्भस्थाने च तन्मातुः स्वेन रूपेण रञ्जय । ततो विहाय शर्वस्तां विश्रान्तो नर्मपूर्वकम् ॥
भर्त्सयिष्यति तां देवीं ततः सा कुपिता सती । प्रयास्यति तपश्चर्तुं तत्तस्मात्तपसे पुनः ६९
जनयिष्यति यं शर्वादमितद्युतिमण्डितम् । स भविष्यति हन्ता वै सुरारीणामसंशयम् ॥
त्वयाऽपि दानवा देवि हन्तव्या लोकदुर्जयाः । यावच्च न सती देहसंक्रान्तगुणसंचया ॥
तत्संगमेन तावत्त्वं दैत्यान्हन्तुं न शक्ष्यसे । एवं कृते तपस्तप्त्वा सृष्टिसंहारकारिणी ॥ ७२
समाप्तनियमा देवी यदा चोमा भविष्यति । तदा स्वमेव तद्रूपं शैलजा प्रतिपत्स्यते ॥ ७३
तनुस्तवापि सहजा सैकाऽनंशा भविष्यति । रूपांशेन तु संयुक्ता त्वमुमायां भविष्यसि ॥
एकाऽनंशेति लोकस्त्वां वरदे पूजयिष्यति । भेदैर्बहुविधाकारैः सर्वगा कामसाधिनी ॥७५
ओंकारवक्त्रा गायत्री त्वमिति ब्रह्मवादिभिः । आक्रान्तिरूर्जिताकारा राजभिश्च महाभुजैः
त्वं भूरिति विशां माता शूद्रैः शैवीति पूजिता । क्षान्तिर्मुनीनामक्षोभ्या दया नियमिनामिति
त्वं महोपायसंदोहा नीतिर्नयविसर्पिणाम् । परिच्छित्तिस्त्वमर्थानां त्वमीहा प्राणिहृच्छया
त्वं मुक्तिः सर्वभूतानां त्वं गतिः सर्वदेहिनाम् । त्वं च कीर्तिमतां कीर्तिस्त्वं मूर्तिः सर्वदेहिनाम्
रतिस्त्वं रक्तचित्तानां प्रीतिस्त्वं हृष्टदर्शिनाम् । त्वं कान्तिः कृतभूपाणां त्वं शान्तिर्दुःखकर्म-
णाम् ॥ ८०
त्वं भ्रान्तिः सर्वबोधानां त्वं गतिः क्रतुयाजिनाम् । जलधीनां महावेला त्वं च लीला विला-
सिनाम् ॥ ८१
संभूतिस्त्वं पदार्थानां स्थितिस्त्वं लोकपालिनी । त्वं कालरात्रिर्निःशेषभुवनावलिनाशिनी
प्रियकण्ठग्रहानन्ददायिनी त्वं विभावरी । इत्यनेकविधैर्देवि रूपैर्लोके त्वमर्चिता ॥ ८३
ये त्वां स्तोष्यन्ति वरदे पूजयिष्यन्ति वाऽपि ये । ते सर्वकामानाप्स्यन्ति नियता नात्र संशयः
इत्युक्ता तु निशा देवी तथेत्युक्त्वा कृताञ्जलिः । जगाम त्वरिता तूर्णं गृहं हिमगिरेः परम् ॥
तत्राऽऽसीनां महाहर्म्ये रत्नभित्तिसमाश्रयाम् । ददर्श मेनामापाण्डुच्छविवक्त्रसरोरुहाम् ॥
किंचिच्छ्यामसुखोदग्रस्तनभारावनामिताम् । महौषधिगणाबद्धमन्त्रराजनिषेविताम् ॥
उद्वहत्कनकोन्नद्धजीवरक्षामहोरगाम् । मणिदीपगणज्योतिर्महालोकप्रकाशिते ॥ ८८
प्रकीर्णबहुसिद्धार्थे मनोज्ञपरिवारके । शुचिन्यंशुकसंछन्नभूशय्यास्तरणोज्ज्वले ॥ ८९
धूपामोदमनोरम्ये सर्जगन्धोपयोगिके । ततः क्रमेण दिवसे गते दूरं विभावरी ॥ ९०
व्यजृम्भत सुखोदर्के ततो मेनामहागृहे । प्रसुप्तप्रायपुरुषे निद्राभूतोपचारिके ॥ ९१
स्फुटालोके शशभृति भ्रान्तिरात्रिविहंगमे । रजनीचरभूतानां संचैरावृतचत्वरे ॥ ९२

---

१ ग. °तिपत्स्यते । २ ग. ङ. च. विहस्य । ३ ङ. च. भर्त्सयिष्यति । ४ ग. ङ. च. °मण्डनम् । ५ ङ. °त्त्वा तया सात्मविभूषया । स° । च. °त्त्वात्वया सात्मविभूषया । स° । ६ ग. ङ. °साधनी । ७ ङ. च. °त्रीप्रयतैर्ब्रह्म° । °रः । ८ ङ. च. °र्भूतानां । ९ ग. ङ. नेत्स्यन्ति । १० ग. ङ. च. °गिरेर्महत् । त° । ११ ङ °म् । सुबद्धताटङ्कोमद्धांजी° । १२ ङ. शुभ्रवीतांशु° ।

४०

गाढकण्ठग्रहालग्नसुभगेष्टजने ततः । किंचिदाकुलतां प्राप्ते मेनानेत्राम्बुजद्वये ॥ ९३
आविवेश मुखे रात्रिः सुचिरस्फुटसंगमा । जन्मदाया जगन्मातुः क्रमेण जठरान्तरे॥ ९४
आविवेशान्तरं जन्म मन्यमाना क्षपा तु वै। अरञ्जयच्छविं देव्या गुहारण्ये विभावरी ॥
ततो जगत्पतिप्राणहेतुर्हिमगिरिप्रिया । ब्राह्मे मुहूर्ते सुभगे व्यसूयत गुहारणिम् ॥ ९३
तस्यां तु जायमानायां जन्तवः स्थाणुजङ्गमाः। अभवन्सुखिनः सर्वे सर्वलोकनिवासिनः
नारकाणामपि तदा सुखं स्वर्गसमं महत् । अभवत्क्रूरसत्त्वानां चेतः शान्तं च देहिनाम्॥
ज्योतिषामपि तेजस्त्वमभवत्सुरतोन्नता । वनाश्रिताश्चौषधयः स्वादुवन्ति फलानि च ॥
गन्धवन्ति च माल्यानि विमलं च नभोऽभवत्। मारुतश्च सुखस्पर्शो दिशश्च सुमनोहरा॥
तेन चोद्भूतफलितपरिपाकगुणोज्ज्वलाः । अभवत्पृथिवी देवी शालिमालाकुलाऽपि च
तपांसि दीर्घचीर्णानि मुनीनां भावितात्मनाम् । तस्मिन्गतानि साफल्यं काले निर्मलचेतसाम्
विस्मृतानि च शास्त्राणि प्रादुर्भावं प्रपेदिरे । प्रभावस्तीर्थमुख्यानां तदा पुण्यतमोऽभवत् ॥
अन्तरिक्षे सुराश्चाऽऽसन्विमानेषु सहस्रशः । समहेन्द्रहरिब्रह्मवायुवह्निपुरोगमाः ॥ १०४
पुष्पवृष्टिं प्रमुमुचुस्तस्मिंस्तु हिमभूधरे । जगुर्गन्धर्वमुख्याश्च ननृतुश्चाप्सरोगणाः ॥ १०५
मेरुप्रभृतयश्चापि मूर्तिमन्तो महाचलाः । तस्मिन्महोत्सवे प्राप्ते दिव्यप्रभृतपाणयः ॥ १०६
सरितः सागराश्चैव समाजग्मुश्च सर्वशः । हिमशैलोऽभवल्लोके तथा सर्वैश्चराचरैः ॥१०७
सेव्यश्चाप्यभिगम्यश्च स श्रेयांश्चाचलोत्तमः । अनुभूयोत्सवं देवा जग्मुः स्वानालयान्मुदा ॥
देवगन्धर्वनागेन्द्रशैलंशीलावनीगुणैः । हिमशैलसुता देवी स्वयंपूर्विकया ततः ॥ १०९
क्रमेण वृद्धिमानीता लक्ष्मीवानलसैर्बुधैः । क्रमेण रूपसौभाग्यप्रबोधैर्भुवनत्रयम् ॥ ११०
अजयद्भूषयच्चापि निःसाधारैर्नगात्मजा । एतस्मिन्नन्तरे शक्रो नारदं देवसंमतम् ॥ १११
देवर्षिमथ सस्मार कार्यसाधनसत्वरम् । स्मृतिं शक्रस्य विज्ञाय जातां तु भगवांस्तदा ॥
आजगाम मुदा युक्तो महेन्द्रस्य निवेशनम् । तं स दृष्ट्वा सहस्राक्षः ससुत्थाय महासनात्
यथार्हेण तु पाद्येन पूजयामास वासवः । शक्रप्रणीतां तां पूजां प्रतिगृह्य यथाविधि ॥
नारदः कुशलं देवमपृच्छत्पाकशासनम् । पृष्टे च कुशले शक्रः प्रोवाच वचनं प्रभुः॥१०५

इन्द्र उवाच—

कुशलस्याङ्कुरे तावत्संभूते भुवनत्रये । तत्फलोद्भवसंपत्तौ त्वं भवोतन्द्रितो मुने ॥ ११६
वेत्सि चैतत्समस्तं त्वं तथाऽपि परिचोदकः । निर्वृतिं परमां याति निवेद्यार्थं सुहृज्जने ॥
तद्यथा शैलजा देवी योगं यया पिनाकिना । शीघ्रं तदुद्यमः सर्वैरस्मत्पक्षैर्विधीयताम् ॥
अवगम्यार्थमखिलं तत आमन्त्र्य नारदः । शक्रं जगाम भगवान्हिमशैलनिवेशनम्॥ ११९
तत्र द्वारे स विप्रेन्द्रश्चित्रवेत्रलताकुले । वन्दितो हिम शैलेन निर्गतेन पुरो मुनिः॥ १२०
सह प्रविश्य भवनं भुवो भूषणतां गतम् । निवेदिते स्वयं हैमे हिमशैलेन विस्तृते॥ १२१
महासने मुनिवरो निषसादातुलद्युतिः । यथार्हं चार्घ्यपाद्यं च शैलस्तस्मै न्यवेदयत् ॥
मुनिस्तु प्रतिजग्राह तमर्घं विधिवत्तदा। गृहीतार्घं मुनिवरमपृच्छच्छ्लक्ष्णया गिरा॥१२३

---

१ ङ. 'स्परित्राण । २ ङ. दिव्यानृत्यन्ति मातरः । स' । ३ ङ. °ललीलाप्सरोगणैः । ग. 'ललीलावतीगु' । ४ ङ. 'वान्संस्मृतो । ५ ग. 'रैशुचिर्देवो वेत्रहस्तैश्च वन्दितः । गिरेः प्र° ।

कुशलं तपसः शैलः शनैः फुल्लाननाम्बुजः । मुनिरप्यद्रिराजानमपृच्छत्कुशलं तदा ॥१२४

नारद उवाच—

अहोऽवतारिताः सर्वे संनिवेशे महागिरे । पृथुत्वं मनसा तुल्यं कन्दराणां तथाऽचल ॥
गुरुत्वं ते गुणौघानां स्थावरादतिरिच्यते । प्रसन्नता च तोयस्य मनसोऽप्यधिका च ते ॥
न लक्षयामः शैलेन्द्रं शिष्यते कन्दरोदरात् । न च लक्ष्मीस्तथा स्वर्गे कुत्राधिकतया स्थिता ॥ १२७
नानातपोभिर्मुनिभिर्ज्वलनार्कसमप्रभैः । पावनैः पावितो नित्यं त्वत्कन्दरसमाश्रितैः ॥१२८
अवमत्य विमानानि स्वर्गवासविरागिणः । पितुर्गृह इवाऽऽसन्ना देवगन्धर्वकिंनराः ॥१२९
अहो धन्योऽसि शैलेन्द्र यस्य ते कन्दरं हरः । अध्यास्ते लोकनाथोऽपि समाधानपरायणः
इत्युक्तवति देवर्षौ नारदे सादरं गिरा । हिमशैलस्य महिषी मेना मुनिदिदृक्षया ॥ १३१
अनुयाता दुहित्रा तु स्वल्पालिपरिचारिका । लज्जाप्रणयनम्राङ्गी प्रविवेश निवेशनम् ॥
तत्र स्थितो मुनिवरः शैलेन सहितो वशी । दृष्ट्वा तु तेजसो राशिं मुनिं शैलप्रिया तदा ॥
ववन्दे गूढवदना पाणिपद्मकृताञ्जलिः । तां विलोक्य महाभागो महर्षिरमितद्युतिः ॥
आशीर्भिरमृतोद्गाररूपाभिस्तां व्यवर्धयत् । ततो विस्मितचित्ता तु हिमवद्गिरिपुत्रिका ॥
उदैक्षन्नारदं देवी मुनिमद्भुतरूपिणम् । एहि वत्सेति चाप्युक्ता ऋषिणा स्निग्धया गिरा ॥
कण्ठे गृहीत्वा पितरमुत्सङ्गे समुपाविशत् । उवाच माता तां देवीमभिवन्दय पुत्रिके ॥
भगवन्तं ततो धन्यं पतिमाप्स्यसि संमतम् । इत्युक्ता तु ततो मात्रा वस्त्रान्तपिहितानना
किंचित्कम्पितमूर्धा तु वाक्यं नोवाच किंचन । ततः पुनरुवाचेदं वाक्यं माता सुतां तदा ॥
वत्से वन्दय देवर्षिं ततो दास्यामि ते शुभम् । रत्नक्रीडनकं रम्यं स्थापितं यच्चिरं मया ॥
इत्युक्ता तु ततो वेगादुद्धृत्य चरणौ तदा । ववन्दे मूर्ध्नि संधाय करपङ्कजकुड्मलम् ॥१४१
कृते तु वन्दने तस्या माता सखीमुखेन तु । चोदयामास शनकैस्तस्याः सौभाग्यशंसिनाम्
शरीरलक्षणानां तु विज्ञानाय तु कौतुकात् । स्त्रीस्वभावाद्यद्दुहितुश्चिन्तां हृदि समुद्वहन् ॥
ज्ञात्वा तदिङ्गितं शैलो महिष्या हृदयेन तु । अनुद्वीर्णोऽक्षतिर्मेने रम्यमेतदुपस्थितम् ॥
चोदितः शैलमहिषीसख्या मुनिवरस्तदा । स्मिताननो महाभागो वाक्यं प्रोवाच नारदः ॥
न जातोऽस्याः पतिर्भद्रे लक्षणैश्च विवर्जिता । उत्तानहस्ता सततं चरणैर्व्यभिचारिभिः ॥
स्वच्छायया भविष्येयं किमन्यद्बहु भाष्यते ॥ १४६
श्रुत्वैतत्संभ्रमाविष्टो ध्वस्तधैर्यो महाबलः । नारदं प्रत्युवाचार्थं साश्रुकण्ठो महागिरिः ॥

हिमवानुवाच—

संसारस्यातिदोषस्य दुर्विज्ञेया गतिर्यतः । सृष्ट्यां चाऽऽवश्यभाविन्यां केनाप्यतिशयात्मना
कर्त्रा प्रणीता मर्यादा स्थिता संसारिणामियम् । यो जायते हि यद्बीजो जनितुः स ह्यसार्थकः ॥ १४९
जनिता चापि जातस्य न कश्चिदिति यत्स्फुटम् । स्वकर्मणैव जायन्ते विविधा भूतजातयः

१ ङ. 'वेशो महागिरेः । पृ° । च. 'वेशान्महा° । २ ङ. °णां महाबल । ३ ग. °न्द्रश्चिष्यते कन्दरोदरान् । न° । ४ ङ. वश्यं । ५ ग. °द्वीर्णाकृतिर्मेना र° । ६ ङ. हिमाचलः । ७ ङ. °थस्त्रिभद्र° । ८ ङ. कुत्र । ९ ग. °द्बीजाज्जनेतुः । १० ग. जनेतानच जा° ।

अण्डजो ह्यण्डजाज्जातः पुनर्जायेत मानवः । मानुषाच्च सरीसृप्यां मनुष्यत्वेन जायते ॥
तत्रापि जातौ श्रेष्ठायां धर्मस्योत्कर्षणेन तु । अपुत्रजन्मिनः शेषाः प्राणिनः समवस्थिताः
मनुजास्तत्र जायन्ते यतो न गृहधर्मिणः । क्रमेणाऽऽश्रमसंप्राप्तिर्ब्रह्मचारिव्रतादनु ॥ १५३
तस्य कर्तुर्नियोगेन संसारो येन वर्धितः । संसारस्य कुतो वृद्धिः सर्वे स्युर्यदतिग्रहाः ॥ १५४
अतः कर्त्रा तु शास्त्रेषु सुतलाभः प्रशंसितः । प्राणिनां मोहनार्थाय नरकत्राणसंश्रयात् ॥
स्त्रिया विरहिता सृष्टिर्जन्तूनां नोपपद्यते । स्त्रीजातिस्तु प्रकृत्यैव कृपणा दैन्यभाषिणी ॥
शास्त्रालोचनसामर्थ्यमुज्झितं तासु वेधसा ॥ १५६
शास्त्रेषूक्तमसंदिग्धं बहुवारं महाफलम् । दशपुत्रसमा कन्या या न स्याच्छीलवर्जिता ॥
वाक्यमेतत्फलभ्रष्टं पुंसि ग्लानिकरं परम् । कन्या हि कृपणा शोच्या पितुर्दुःखविवर्धिनी ॥
याऽपि स्यात्पूर्णसर्वाढ्या पतिपुत्रधनादिभिः । किं पुनर्दुर्भगा हीना पतिपुत्रधनादिभिः ॥
त्वं चोक्तवान्सुताया मे शरीरे दोषसंग्रहम् । अहो मुह्यामि शुष्यामि ग्लामि सीदामि नारद ॥
अयुक्तमथ वक्तव्यमप्राप्यमपि सांप्रतम् । अनुग्रहेण मे छिन्धि दुःखं कन्याश्रयं मुने ॥ १६१
परिच्छिन्नेऽप्यसंदिग्धे मनः परिभवाश्रयम् । तृष्णा मुष्णाति निष्णाता फललोभाश्रया शुभा
स्त्रीणां हि परमं जन्म कुलानामुभयात्मनाम् । इहामुत्र सुखायोक्तं सत्पतिप्राप्तिसंज्ञितम् ॥
दुर्लभः सत्पतिः स्त्रीणां विगुणोऽपि पतिः किल । न प्राप्यते विना पुण्यैः पतिर्नार्या कदाचन ॥
यतो निःसाधनो धर्मः परिमाणोज्झिता रतिः । धनं जीवितपर्याप्तं पत्यौ नार्याः प्रतिष्ठितम् ॥
निर्धनो दुर्भगो मूर्खः सर्वलक्षणवर्जितः । दैवतं परमं नार्याः पतिरुक्तः सदैव हि ॥ १६६
त्वया चोक्तं हि देवर्षे न जातोऽस्याः पतिः किल । एतद्दौर्भाग्यमतुलमसंख्यं गुरु दुःसहम् ॥
चराचरे भूतसर्गे यदद्यापि च नो मुने । न स जात इति ब्रूपे तेन मे व्याकुलं मनः ॥ १६८
मनुष्यदेवजातीनां शुभाशुभनिवेदकम् । लक्षणं हस्तपादादौ विहितैर्लक्षणैः किल ॥ १६९
सेयमुत्तानहस्तेति त्वयोक्ता मुनिपुंगव । उत्तानहस्तता प्रोक्ता याचतामेव नित्यदा ॥ १७०
शुभोदयानां धन्यानां न कदाचित्प्रयच्छताम् । स्वच्छायायाऽस्याश्चरणौ त्वयोक्तौ व्यभि-
चारिणौ ॥ १७१
तत्रापि श्रेयसां[10] ह्याशा मुने न प्रतिभाति नः । शरीरलक्षणाश्चान्ये पृथक्फलनिवेदिनः १७२
सौभाग्यधनपुत्रायुः पतिलाभानुशंसनम् । तैश्च सर्वैर्विहीनेयं त्वमात्थ मुनिपुंगव ॥ १७३
त्वं मे सर्वं विजानासि सत्यवागसि चाप्यतः । मुह्यामि मुनिशार्दूल हृदयं दीर्यतीव मे ॥ १७४
इत्युक्त्वा विरतः शैलो महादुःखविचारणात् । श्रुत्वैतदखिलं तस्माच्छैलराजमुखाम्बुजात् ॥
स्मितपूर्वमुवाचेदं नारदो देवचोदितः ॥ १७५

नारद उवाच—

हर्षस्थानेऽपि महति त्वया दुःखं निरूप्यते । अपरिच्छिन्नवाक्यार्थे मोहं यासि महागिरे ॥
इमां शृणु गिरं मत्तो रहस्यपरिनिष्ठिताम् । समाहितो महाशैल मयोक्तस्य विचारणे[13] ॥ १७७

१ ङ. मानवोऽपि स° । २ ग. घ °नुषांऽपि स° । ३ ग. घ. तो नाऽऽ° । ४ ग. घ. °स्याहि कोत्पत्तिः स° । ५ ग. 'पन्नायते । ६ ग. ङ. याऽपि स्या° । ७ ग. पुसां । ङ. पुंसा साम्राय कोपनम् । क° । ८ ग. पितुः शोकवि° । ९ क. ख. घ यावता° । १० ङ. श्रेयसी । ११ ग. 'सि वायतः । १२ ङ. 'बगूजितः । १३ ङ. 'रणात् । न ।

न जातोऽस्याः पतिर्देव्या यन्मयोक्तं हिमाचल । न स जातो महादेवो भूतभव्यभवोद्भवः ॥
शरण्यः शाश्वतः शास्ता शंकरः परमेश्वरः ॥ १७८
ब्रह्मविष्णिवन्द्रमुनयो जन्ममृत्युजरार्दिताः । तस्यैते परमेशस्य सर्वे क्रीडनका गिरे ॥ १७९
आस्ते ब्रह्मा तदिच्छातः संभूतो भुवनप्रभुः । विष्णुर्युगे युगे जातो नानाजातिर्महातनुः॥१८०
मन्यसे मायया जातं विष्णुं चापि युगे युगे । आत्मनो न विनाशोऽस्ति स्थावरान्तेऽपि भूधर
संसारे जायमानस्य म्रियमाणस्य देहिनः । नश्यते देह एवात्र नाऽऽत्मनो नाश उच्यते १८२
ब्रह्मादिस्थावरान्तोऽयं संसारो यः प्रकीर्तितः । स जन्ममृत्युदुःखार्तो ह्यवशः परिवर्तते१८३
महादेवोऽचलः स्थाणुर्न जातो जनकोऽजरः । भविष्यति पतिः सोऽस्या जगन्नाथो निरामयः
यदुक्तं च मया देवी लक्षणैर्वर्जिता तव । शृणु तस्यापि वाक्यस्य सम्यक्त्वेन विचारणम् ॥
लक्षणं दैविको ह्यङ्कः शरीरावयवाश्रयः । सर्वायुर्धनसौभाग्यपरिमाणप्रकाशकः ॥ १८६
अनन्तस्याप्रमेयस्य सौभाग्यस्यास्य भूधर । नैवाङ्को लक्षणाकारः शरीरे संविधीयते ॥१८७
अतोऽस्या लक्षणं गात्रे शैल नास्ति महामते । यथाऽहमुक्तवानस्या ह्युत्तानकरतां सदा१८८
उत्तानो वरदः पाणिरेष देव्याः सदैव तु । सुरासुरमुनिव्रातवरदेयं भविष्यति ॥ १८९
यथा प्रोक्तं तदा पादौ स्वच्छायाव्यभिचारिणौ।अस्याः शृणु ममात्रापि वाग्युक्तिं शैलसत्तम
चरणौ पद्मसंकाशावस्याः स्वच्छनखोज्ज्वलौ । सुरासुराणां नमतां किरीटमणिकान्तिभिः॥
विचित्रवर्णैर्भासन्तौ स्वच्छायाप्रतिबिम्बितौ । भार्या जगद्गुरोर्ह्येषा वृषाङ्कस्य महीधर ॥
जननी लोकधर्मस्य संभूता भूतभावनी । शिवेयं पावनायैव त्वत्क्षेत्रे पावकद्युतिः ॥ १९३
तद्यथा शीघ्रमेवैषा योगं यायात्पिनाकिना । तथा विधेयं विधिवत्त्वया शैलेन्द्रसत्तम ॥
अत्यन्तं हि महत्कार्यं देवानां हिमभूधर ॥ १९४

सूत उवाच—

एवं श्रुत्वा तु शैलेन्द्रो नारदात्सर्वमेव हि । आत्मानं स पुनर्जातं मेने मेनापतिस्तदा ॥ १९५
नमस्कृत्य वृषाङ्काय तदा देवाय धीमते । उवाच सोऽपि संहृष्टो नारदं तु हिमाचलः१९६

हिमवानुवाच—

दुस्तरान्नरकाद्घोरादुद्धृतोऽस्मि त्वया मुने । पातालादहमुद्धृत्य सप्तलोकाधिपः कृतः ॥
हिमाचलोऽस्मि विख्यातस्त्वया मुनिवराधुना । हिमाचलेऽचलगुणां प्रापितोऽस्मि समुन्नतिम् ॥ १९८
आनन्ददिवसाहारि हृदयं मेऽधुना मुने । नाध्यवस्यति कृत्यानां प्रविभागविचारणम् ॥१९९
यदि वाचामधीशः स्यां त्वद्गुणानां विचारणे ॥ २००
भवद्विधानां नियतममोघं दर्शनं मुने । तवास्मान्प्रति चापल्यं व्यक्तं मम महामुने ॥ २०१
भवद्भिरेव कृत्योऽहं निवासायाऽऽत्मरूपिणाम् । मुनीनां देवतानां च स्वयं कर्ताऽपि कल्मषम्
तथाऽपि वस्तुन्येकस्मिन्नाज्ञा मे संप्रदीयताम् । इत्युक्तवति शैलेन्द्रे स तदा हर्षनिर्भरे ॥२०३

---

१ ग. ङ च. 'रे । अण्ड ब्रह्मा । २ ङ. 'राश्रयः । ३ ङ. 'म्यग्बुद्धि वि' । ४ ग. सदाऽऽयु' । ५ ङ. 'रदोऽयं । ६ ग. यातु । घ. ङ. याति पिना' । ७ ग. 'चलाल्लक्षगु' । घ. 'चलाच्छतगु' । ७ ङ. 'न्दर्निर्भयाकारं हृ' । ९ ग. 'वसद्वार.दुद्धृतोऽस्मि त्वया ध' । १० ङ मे महामु' । ११ ग. 'य कृत्या च क । ङ. 'यं कृत्याऽऽत्मक' ।

तथा च नारदो वाक्यं कृतं सर्वमिति प्रभो। सुरकार्ये य एवार्थस्तवापि सुमहत्तरः ॥ २०४
इत्युक्त्वा नारदः शीघ्रं जगाम त्रिदिवं प्रति। स गत्वा शक्रभवनममरेशं ददर्श ह ॥ २०५
ततोऽभिरूपे स मुनिरुपविष्टो महासने। पृष्टः शक्रेण प्रोवाच हिमजासंश्रयां कथाम् ॥ २०६

नारद उवाच—

समूह्य यत्तु कर्तव्यं तन्मया कृतमेव हि। किं तु पञ्चशरस्यैव समयोऽयमुपस्थितः ॥ २०७
इत्युक्तो देवराजस्तु मुनिना कार्यदर्शिना। चूताङ्कुरास्त्रं सस्मार भगवान्पाकशासनः २०८
संस्मृतस्तु तदा क्षिप्रं सहस्राक्षेण धीमता। उपतस्थे रतियुतः सविलासो झषध्वजः ॥
प्रादुर्भूतं तु तं दृष्ट्वा शक्रः प्रोवाच सादरम् ॥ २०९

शक्र उवाच—

उपदेशेन बहुना किं त्वां प्रति वदे प्रियम्। मनोभवोऽसि तेन त्वं वेत्सि भूतमनोगतम् ॥
तद्यथार्थकमेव त्वं कुरु नाकसदां प्रियम्। शंकरं योजय क्षिप्रं गिरिपुत्र्या मनोभव ॥
संयुतो मधुना चैव ऋतुराजेन दुर्जय ॥ २११
इत्युक्तो मदनस्तेन शक्रेण स्वार्थसिद्धये। प्रोवाच पञ्चबाणोऽथ वाक्यं भीतः शतक्रतुम्

काम उवाच—

अनया देवसामग्र्या मुनिदानवभीमया। दुःसाध्यः शंकरो देवः किं न वेत्सि जगत्प्रभो
तस्य देवस्य वेत्थ त्वं कारणं तु यदव्ययम्। प्रायः प्रसादः कोपोऽपि सर्वो हि महतां महान्
सर्वोपभोगसारा हि सुन्दर्यः स्वर्गसंभवाः। अध्याश्रितं च यत्सौख्यं भवता नष्टचेष्टितम् ॥
प्रमादादथ विभ्रश्येदीशं प्रति विचिन्त्यताम्। प्रागेव चेह दृश्यन्ते भूतानां कार्यसंभवाः २१६
विशेषं काङ्क्षतां शक्र सामान्याद्भ्रंशनं फलम्। श्रुत्वैतद्वचनं शक्रस्तमुवाचामरैर्युतः २१७

शक्र उवाच—

वयं प्रमाणास्ते ह्यत्र रतिकान्त न संशयः। संदेशेन विना शक्तिरपकारस्य नेष्यते ॥
कस्यचिच्च क्वचिद्दृष्टं सामर्थ्यं न तु सर्वतः ॥ २१८
इत्युक्तः प्रययौ कामः सखाऽयं मधुमाश्रितः। रतियुक्तो जगामाऽऽशु प्रस्थं तु हिमभूभृतः ॥
स तु तत्राकरोच्चिन्तां कार्यस्योपायपूर्विकाम्। महार्था ये हि निष्कम्पा मनस्तेषां सुदुर्जयम्
तदादावेव संक्षोभ्य नियतं सुजयो भवेत्। संसिद्धिं प्राप्नुयुश्चैव पूर्वं संशोध्य मानसम् ॥
कथं च विविधैर्भावैर्द्वैपानुगमनं विना। क्रोधः क्रूरतरासङ्गाद्भीषणेर्ष्यां महासखीम् ॥
चापल्यमूर्ध्नि विध्वस्तधैर्याधारां महाबलाम्। तामस्य विनियोक्ष्यामि मनसो विकृतिं पराम्
पिधाय धैर्यद्वाराणि संतोषमपकृष्य च। अवगन्तुं हि मां तत्र न कश्चिदतिपण्डितः ॥ २२४
विकल्पमात्रावस्थाने वैरूप्यं मनसो भवेत्। पश्चान्मूलक्रियारम्भगम्भीरावर्तदुस्तरः ॥२२५

---

१ ङ. °क्रसदनं महेन्द्रं सं ददर्श। २ क. ख. 'मरं संददर्श। ३ ङ. 'रस्येह गोचरोऽय°। ४ ग. घ. 'ति रतिप्र°। ङ. ति रतिप्रिय। म'। ५ क. ख. करणं। ६ ङ. 'णं यदनव्य'। ७ ग. 'सारं हि सौन्दर्यं स्वर्गसंभवम्। य'। ८ ङ. संदर्शेन विनाशक्तिरयस्कार°। ९ क. ख. पूर्वं। १० च क. °भ्राद्रावणे°। ११ ङ. °पस्योत्तम्भविध्वस्तधैर्योद्धारां। १२ ग. °मानसं स्थानं विरूपमनसो भवद्। प°। ङ. 'मात्रसंस्थानमरूपं अ°। १३ ग. 'रतरम्। द्द°। १४ ङ. 'रः। भविष्यामिस्थिर°।

हरिष्यामि हरस्याहं तपस्तस्य स्थिरात्मनः । इन्द्रियग्राममावृत्य रम्यसाधनसंविधिः ॥ २२६
चिन्तयित्वेति मदनो भूतभर्तुस्तदाऽऽश्रमम् । जगाम जगतीसारं सरलद्रुमवेदिकम् ॥ २२७
शान्तसत्त्वसमाकीर्णमचलप्राणिसंकुलम् । नानापुष्पलताजालं गगनस्थगणेश्वरम् ॥ २२८
निर्व्यग्रवृषभाध्युष्टनीलशाद्वलसानुकम् । तत्रापश्यत्रिनेत्रस्य रम्यं कंचिद्द्वितियिकम् ॥ २२९
वीरकं लोकवीरेशमीशानसदृशद्युतिम् । यक्षकुङ्कुमकिञ्जल्कपुञ्जपिङ्गजटासटम् ॥ २३०
वेत्रपाणिनमव्यग्रमुग्रभोगीन्द्रभूषणम् । ततो निमीलितोन्निद्रपद्मपत्राभलोचनम् ॥ २३१
प्रेक्षमाणमृजुस्थानं नासिकाग्रं सुलोचनैः । *श्रवस्तरसिंहेन्द्रचर्मलम्बोत्तरीयकम् ॥ २३२
श्रवणाहिफलन्मुक्तनिःश्वासानलपिङ्गलम् । प्रेङ्खत्कपालपर्यन्ततुम्बिलम्बिजटाचयम् ॥
कृतवासुकिपर्यङ्कनाभिमूलनिवेशितम् । ब्रह्माञ्जलिस्थपुच्छाग्रनिबद्धोरगभूषणम् ॥ २३४
ददर्श शंकरं कामः क्रमप्राप्तान्तिकं शनैः । ततो भ्रमरझङ्कारमालम्बिद्रुमसानुकम् ॥ २३५
प्रविष्टः कर्णरन्ध्रेण भवस्य मदनो मनः । शंकरस्तमथाऽऽकर्ण्य मधुरं मदनाश्रयम् ॥ २३६
सस्मार दक्षदुहितां दयितां रक्तमानसः । ततः सा तस्य शनकैस्तिरोभूयातिनिर्मला ॥
समाधिभावना तस्थौ लक्ष्यप्रत्यक्षरूपिणी । ततस्तन्मयतां यातः प्रत्यूहपिहिताशयः ॥
वशित्वेन बुबोधेशो विकृतिं मदनात्मिकाम् । ईषत्कोपसमाविष्टो धैर्यमालम्ब्य धूर्जटिः ॥
निरासे मदनस्थित्या योगमायासमावृतः । स तया मायया ऽऽविष्टो जज्वाल मदनस्ततः ॥
इच्छाशरीरो दुर्ज्ञेयो रोपदोपमहाश्रयः । हृदयान्निर्गतः सोऽथ वासनाव्यसनात्मकः ॥
बहिःस्थलं समालम्ब्य ह्युपतस्थौ झषध्वजः । अनुयातोऽथ हृद्येन मित्रेण मधुना सह ॥
सहकारतरौ दृष्ट्वा मृदुमारुतनिर्धुतम् । स्तबकं मदनो रम्यं हरवक्षसि सत्त्वरम् ॥ २४३
मुमोच मोहनं नाम मार्गणं मकरध्वजः । शिवस्य हृदये शुद्धे नाशशाली महाशरः ॥
पपात परुषप्रांशुः पुष्पबाणो विमोहनः । ततः करणसंदेहो विद्धस्तु हृदये भवः ॥ २४५
बभूव भूधरौपम्यधैर्योऽपि मदनोन्मुखः । ततः प्रभुत्वाद्भावानां नाऽऽवेशं समपद्यत ॥
बाह्यं बहु समासाद्य प्रत्यूहप्रसवात्मकम् । ततः कोपानलोद्भूतघोरहुङ्कारभीषणे ॥ २४७
बभूव वदने नेत्रं तृतीयमनलाकुलम् । रुद्रस्य रौद्रवपुषो जगत्संहारभैरवम् ॥ २४८
तदन्तिकस्थे मदने व्यस्फारयत धूर्जटिः । तन्नेत्रविस्फुलिङ्गेन क्रोशतां नाकवासिनाम् ॥
गमितो भस्मसात्तूर्णं कन्दर्पः कामिदर्पकः । स तु तं भस्मसात्कृत्वा हरनेत्रोद्भवोऽनलः
व्यजृम्भत जगद्दग्धुं ज्वालाहुङ्कारघस्मरः । ततो भवो जगद्धेतोर्व्यभजज्जातवेदसम् ॥ २५१

---

* इत आरभ्य मूलनिवेशितमित्यन्तग्रन्थो ग. पुस्तके नास्ति ।

---

१ ग. मविष्यामि । २ ग. 'पस्थस्यास्थि° । ३ ग. °ममुद्धृत्यरम्यसंसाधनं वि° । ४ ङ. 'त्यतस्यसाधनसंनिधिः । ५ क. ख. °प्राणसं° । ६ ग. घ. °म्यं कश्चिद्वि° । ङ. °म्यं किंचि° । ७ ग. °म् । प्रग्रकु° । ङ. °म् । पक्वकु° । ८ क. ख. °स्थानास्थितनासाग्रलोचनम् । श्र° । ९ ङ. नासावंशाग्रगोचरे । श्र° । १० ङ. °यन्तना° । ११ ङ. निषेवित° । ग. °लिस्थिरां साग्र नि । १२ ङ. लिस्थिरांसाग्रेपिनद्धो° । १३ ङ लम्ब्याद्भुतसायक° । १४ ग. °करः स्वनमाक° । १५ ङ. रोधायाति° । १६ ङ. त्रिभवने तस्थौ लक्ष्मीः प्र° । १७ ग. घ. ङ. निरास । १८ ङ. °जः । स तस्य । १९ ङ. शुभ्रे ज्ञानशा° । २० ङ. °नां माध्यस्थं । स° । २१ ग. ङ. समपश्यत । २२ ङ. °लासंघातघ° ।

सहकारे मधौ चन्द्रे सुमनःसु परेष्वपि । भृङ्गेषु कोकिलास्येषु विभागेन स्मरानलम् ॥
स बाह्यान्तरविद्धेन हरेण स्मरमार्गणः । रागस्नेहसमिद्धान्तर्धांवंस्तीव्रहुताशनः ॥ २५३
विभक्तलोकसंक्षोभकरो दुर्वारजृम्भितः । संप्राप्य स्नेहसंपृक्तं कामिनां हृदयं किल ॥ २५४
ज्वलत्यहर्निशं भीमो दुश्चिकित्स्यमुखात्मकः । विलोक्य हग्हुङ्कारज्वालाभस्मकृतं स्मरम् ॥
विललाप रतिः क्रूरं बन्धुना मधुना सह । ततो विलप्य बहुशो मधुना परिसान्त्विता ॥
जगाम शरणं देवमिन्दुमौलिं त्रिलोचनम् । भृङ्गानुयातां संगृह्य पुष्पितां सहकारजाम् ॥
लतां पवित्रकस्थाने पाणौ परभृतां सखीम् । निर्बध्य तु जटाजूटं कुटिलैरलकै रतिः ॥
उद्धूल्य गात्रं शुभ्रेण हृद्येन स्मरभस्मना । जानुभ्यामवनीं गत्वा प्रोवाचेन्दुविभूषणम् ॥

रतिरुवाच—

नमः शिवायास्तु निरामयाय नमः शिवायास्तु मनोमयाय ।
नमः शिवायास्तु सुरार्चिताय तुभ्यं सदा भक्तकृपापराय ॥ २६०
नमो भवायास्तु भवोद्भवाय नमोऽस्तु ते ध्वस्तमनोभवाय ।
नमोऽस्तु ते गूढमहाव्रताय नमोऽस्तु मायागहनाश्रयाय ॥ २६१
नमोऽस्तु शर्वाय नमः शिवाय नमोऽस्तु सिद्धाय पुरातनाय ।
नमोऽस्तु कालाय नमः कलाय नमोऽस्तु ते ज्ञानवरप्रदाय ॥ २६२
नमोऽस्तु ते कालकलातिगाय नमो निसर्गामलभूषणाय ।
नमोऽस्त्वमेयान्धकमर्दकाय नमः शरण्याय नमोऽगुणाय ॥ २६३
नमोऽस्तु ते भीमगणानुगाय नमोऽस्तु नानाभुवनादिकर्त्रे ॥
नमोऽस्तु नानाजगतां विधात्रे नमोऽस्तु ते चित्रफलप्रयोक्त्रे ॥ २६४
सर्वावसाने ह्यविनाशनेत्रे नमोऽस्तु चित्राध्वरभागभोक्त्रे ।
नमोऽस्तु भक्ताभिमतप्रदात्रे नमः सदा ते भवसङ्गहर्त्रे ॥ २६५
अनन्तरूपाय सदैव तुभ्यमसह्यकोपाय नमोऽस्तु तुभ्यम् ।
शशाङ्कचिह्नाय सदैव तुभ्यममेयमानाय नमः स्तुताय ॥ २६६
वृषेन्द्रयानाय पुरान्तकाय नमः प्रसिद्धाय महौषधाय ।
नमोऽस्तु भक्त्याऽभिमतप्रदाय नमोऽस्तु सर्वार्तिहराय तुभ्यम् ॥ २६७
चराचराचारविचारवर्यमाचार्यमुत्प्रेक्षितभूतसर्गम् ।
त्वामिन्दुमौलिं शरणं प्रपन्ना प्रियाप्रमेयं महतां महेशम् ॥ २६८
प्रयच्छ मे कामयशःसमृद्धिं पुनः प्रभो जीवतु कामदेवः ।
प्रियं विना त्वां प्रियजीवितेषु त्वत्तोऽपरः को भुवनेष्विहास्ति ॥ २६९
प्रभुः प्रियायाः प्रसवः प्रियाणां प्रणीतपर्यायपरापरार्थः ।
त्वमेवमेको भुवनस्य नाथो दयालुरुन्मूलितभक्तभीतिः ॥ २७०

१ ङ. °गैणैः । रा° । २ ङ. मिद्धं तं वीक्ष्य तीव्रं शरानलम् । विभक्तं लो° । ३ ग. °शनम् । विभक्त लो° । ४ ग. घ. ङ. °करदुर्वारजृम्भितम् । सं° । ५ ङ. किस्स्यो मु । ६ ङ. °पाकरा° । ७ ग. °भक्ताभि° । ८ ग. घ. म हिमाम ।

सूत उवाच—

इत्थं स्तुतः शंकर ईड्य ईशो वृषाकपिर्मन्मथकान्तया तु ।
तुतोष दोषाकरखण्डधारी उवाच चैनां मधुरं निरीक्ष्य ॥ २७१ ॥

शंकर उवाच—

भवितेति च कामोऽयं कालात्कान्तोऽचिरादपि । अनङ्ग इति लोकेषु स विख्यातिं गमिष्यति ॥ २७२

इत्युक्ता शिरसाऽऽवन्द्य गिरिशं कामवल्लभा । जगामोपवनं रम्यं रतिस्तु हिमभूभृतः ॥ २७३
रुरोद चापि बहुशो दीना रम्ये स्थले तु सा । मरणव्यवसायात्तु निवृत्ता सा हराज्ञया ॥ २७४
अथ नारदवाक्येन चोदितो हिमभूधरः । कृताभरणसंस्कारां कृतकौतुकमङ्गलाम् ॥ २७५
स्वर्गपुष्पकृतापीडां शुभ्रचीनांशुकाम्बराम् । सखीभ्यां संयुतां शैलो गृहीत्वा स्वसुतां ततः ॥
जगाम शुभयोगेन तदा संपूर्णमानसः । सकाननान्युपाक्रम्य वनान्युपवनानि च ॥ २७७
ददर्श रुदतीं नारीमप्रतर्क्यमहौजसम् । रूपेणासदृशीं लोके रम्येषु वनसानुषु ॥ २७८
कौतुकेन परामृश्य तां दृष्ट्वा रुदतीं गिरिः । उपसर्प्य ततस्तस्या निकटे सोऽभ्यपृच्छत ॥

हिमवानुवाच—

काऽसि कस्यासि कल्याणि किमर्थं चापि रोदिषि । नैतदल्पमहं मन्ये कारणं लोकसुन्दरि ॥
सा तस्य वचनं श्रुत्वा उवाच मधुना सह । रुदती शोकजननं श्वसती दैन्यवर्धनम् ॥ २८१

रतिरुवाच—

कामस्य दयितां भार्यां रतिं मां विद्धि सुव्रत । गिरावस्मिन्महाभाग गिरिशस्तपसि स्थितः ॥
तेन प्रत्यूहरुष्टेन विस्फार्याऽऽलोक्य लोचनम् । दग्धोऽसौ झषकेतुस्तु मम कान्तोऽतिवल्लभः ॥
अहं तु शरणं याता तं देवं भयविह्वला । स्तुतवत्यथ संस्तुत्या ततो मां गिरिशोऽब्रवीत् ॥ २८४
तुष्टोऽहं कामदयिते कामोऽयं ते भविष्यति । त्वत्स्तुतिं चाप्यधीयानो नरो भक्त्या मदाश्रयः लप्स्यते काङ्क्षितं कामं निवर्त्य मरणादितः ॥ २८५
प्रतीक्षन्ती च तद्वाक्यमाशावेशादिभिर्ह्यहम् । शरीरं परिरक्षिष्ये कंचित्कालं महाद्युते ॥
इत्युक्तस्तु तदा रत्या शैलः संभ्रमभीपितः । पाणावादाय हि सुतां गन्तुमैच्छत्स्वकं पुरम् ॥
भाविनोऽवश्यभावित्वाद्भवित्री भूतभाविनी । लज्जमाना सखिमुखैरुवाच पितरं गिरिम् ॥

शैलदुहितोवाच—

दुर्भाग्येण शरीरेण किं ममानेन कारणम् । कथं च तादृशं प्राप्तं सुखं मे स पतिर्भवेत् ॥ २८९
तपोभिः प्राप्यतेऽभीष्टं नासाध्यं हि तपस्यतः । दुर्भगत्वं वृथा लोको वहते सति साधने॥२९०
जीविताद्दुर्भगाच्छ्रेयो मरणं ह्यतपस्यतः । भविष्यामि न संदेहो नियमैः शोषये तनुम् ॥२९१
तपसि भ्रष्टसंदेह उद्यमोऽर्थजिगीषया । साऽहं तपः करिष्यामि यदहं प्राप्य दुर्लभा ॥ २९२

---

१ ङ. °च । ते भविष्यति कामोऽयं कामकान्तेऽचि° । २ ङ. °षु भुवि ख्यातो भविष्य° । ३ ङ. °रोदाऽऽर्तातिबहुधा दी° । ४ ग. घ. °मण्डला° । ङ. °मण्डनाम् । स्व° । ५ ङ. °मग्रतः सुम° । ६ ग. °दल्पं महासत्त्वेऽका° । ङ. °दल्पं महासत्त्वं का° । ७ ग. वदती । ८ ग. निवृत्ते । ९ ङ. °न्तीव तद्वाक्यं वसामि मधुना सह । श° । १० ग. ङ. दुर्भगेण । ११ ङ. खं वा मे रतिर्भ° ।

इत्युक्तः शैलराजस्तु दुहित्रा स्नेहविक्लवः। उवाच वाचा शैलेन्द्रो स्नेहगद्गदवर्णया ॥ २९३

हिमवानुवाच—

उ मेति चपले पुत्रि न क्षमं तावकं वपुः* । [+सोढुं क्लेशस्वरूपस्य तपसः सौम्यदर्शने ॥ २९४
भावीन्यभिविचार्याणि पदार्थानि सदैव तु। भाविनोऽर्था भवन्त्येव हठेनानिच्छतोऽपि वा
तस्मान्न तपसा तेऽस्ति बाले किंचित्प्रयोजनम्। भवनायैव गच्छामश्चिन्तयिष्यामि तत्र वै ॥
इत्युक्ता तु यदा नैव गृहायाभ्येति शैलजा। ततः स चिन्तयाऽऽविष्टो दुहितां प्रशशंस च ॥
ततोऽन्तरिक्षे दिव्या वागभूद्भुवनभूतले। उ मेति चपले पुत्रि त्वयोक्ता तनया ततः]॥२९८
×उमेति नाम तेनास्या भुवनेषु भविष्यति। सिद्धिं च मूर्तिमत्येषा साधयिष्यति चिन्तिताम्
इति श्रुत्वा तु वचनमाकाशात्काशपाण्डुरः। अनुज्ञाय सुतां शैलो जगामाऽऽशु स्वमन्दिरम्

सूत उवाच—

शैलजाऽपि ययौ शैलमगम्यमपि दैवतैः। सखीभ्यामनुयाता तु नियता नगराजजा ॥ ३०१
शृङ्गं हिमवतः पुण्यं नानाधातुविभूषितम्। दिव्यपुष्पलताकीर्णं सिद्धगन्धर्वसेवितम् ॥३०२
नानामृगगणाकीर्णं भ्रमरोद्घुष्टपादपम्। दिव्यप्रस्रवणोपेतं दीर्घिकाभिरलंकृतम् ॥ ३०३
नानापक्षिगणाकीर्णं चक्रवाकोपशोभितम्। जलजस्थलजैः पुष्पैः प्रोत्फुल्लैरुपशोभितम् ॥
चित्रकन्दरसंस्थानं गुहागृहमनोहरम्। विहङ्गसंघसंजुष्टं कल्पपादपसंकटम् ॥ ३०५
तत्रापश्यन्महाशाखं शाखिनं हरितच्छदम्। सर्वर्तुकुसुमोपेतं मनोरथशतोज्ज्वलम् ॥३०६
नानापुष्पसमाकीर्णं नानाविधफलान्वितम्। नतं सूर्यस्य रुचिभिर्भिन्नसंहृतपल्लवम् ॥ ३०७
तत्राम्बराणि संत्यज्य भूषणानि च शैलजा। संवीता वल्कलैर्दिव्यैर्दर्भनिर्मितमेखला ॥
त्रिःस्नाता पाटलाहारा बभूव शरदां शतम्। शतमेकेन शीर्णेन पर्णेनावर्तयत्तदा ॥ ३०९
निराहारा शतं साऽभूत्समानां तपसां निधिः। तत उद्वेजिताः सर्वे प्राणिनस्तत्तपोग्निना ॥
ततः सस्मार भगवान्मुनीन्सप्त शतक्रतुः। ते समागम्य मुनयः सर्वे समुदितास्ततः ॥ ३११
पूजिताश्च महेन्द्रेण पप्रच्छुस्तं प्रयोजनम्। किमर्थं तु सुरश्रेष्ठ संस्मृतास्तु वयं त्वया ॥ ३१२
शक्रः प्रोवाच शृण्वन्तु भगवन्तः प्रयोजनम्। हिमाचले तपो घोरं तप्यते भूधरात्मजा ॥
तस्याँ ह्यभिमतं कामं भवन्तः कर्तुमर्हथ ॥ ३१३
ततः समापतन्देव्या जगदर्थं त्वरान्विताः। तथेत्युक्त्वा तु शैलेन्द्रं सिद्धसंघातसेवितम् ॥३१४
ऊचुरागत्य मुनयस्तामथो मधुराक्षरम्। पुत्रि किं ते व्यवसितः कामः कमललोचने ॥

---

* इतः परमेतदर्धं ग. पुस्तके ततः सा चिन्तया देवी जोषमेवावतिष्ठत। इति। + धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके नास्ति। × एतदर्धस्थानेऽयंपाठः ग. पुस्तके—आकाशवाणी चाभूत तपोयोग्या भविष्यति।

---

१ ग. ङ. 'न्सो गद्गदस्वरं'। २ ङ क्लेशात्मरू'। ३ ङ. भाविना विनिवार्याः'। ४ ङ. मि चिन्तितम्। इ'। ५ घ. सपत्नी। ६ ङ. 'तिमन्त्राप्य प्रभावं पतिचिन्तिता। एतच्छ्रुत्वा। ७ ग. न्तितम्। इ०। ८ ङ. 'ता तपसे दृढम्। गृ'। ९ ख. ग. 'संघुष्टं। १० ग. संकुलम्। ११ ग. ङ. °संहृत°। १२ क. ख घ. °ज्ञातपा°। १३ ङ. °न जीर्णे°। १४ ङ. [illegible]। १५ ग. 'ममन्त्रयन्मुनयस्तदा। किं°। १६ ग. 'स्याभिमतयोगं तु भ'। घ. ङ. °स्याभिमतयोगेन भ°। १७ ङ. [illegible] ज्ञानं देव्या'। १८ ङ. 'म। पुर आग'। १९ ङ. °स्तामृतमधु°।

तानुवाच ततो देवी सलज्जा गौरवान्मुनीन् । तपस्यतो महाभागाः प्राप्य मौनं भवादृशान् ॥
वन्दनाय नियुक्ता धीः पावयत्यविकल्पितम् । प्रश्नोन्मुखत्वाद्भवतां युक्तमासनमादितः ॥
उपविष्टाः प्रश्नोन्मुक्तास्ततः प्रक्ष्यथ मामतः । इत्युक्त्वा सा ततश्चक्रे कृतासनपरिग्रहान् ॥
सा तु तान्विधिवत्पूज्यान्पूजयित्वा विधानतः । उवाचाऽऽदित्यसंकाशान्मुनीन्सप्त सती शनैः ॥ ३१९
त्यक्त्वा धृतात्मकं मौनं मौनं जग्राह ह्रीमयम् । भावं तस्यास्तु मौनान्तं तस्याः सप्तर्षयो यथा ॥ ३२०
गौरवाधीनतां प्राप्ताः पप्रच्छुस्तां पुनस्तथा । साऽपि गौरवगर्भेण मनसा चारुहासिनी ॥ ३२१
मुनीञ्छान्तकथालापान्प्रेक्ष्य प्रोवाच वाग्यमम् । भगवन्तो विजानन्ति प्राणिनां मानसं हितम् ॥ ३२२
मनोगतीभिरत्यर्थं कदर्थ्यन्ते हि देहिनः । केचित्तु निपुणास्तत्र घटन्ते विबुधोद्यमैः ॥ ३२३
उपायैर्दुर्लभान्भावान्प्राप्नुवन्ति ह्यतन्द्रिताः । अपरे तु परिच्छिन्ना नानाकाराभ्युपक्रमाः ॥
देहान्तरार्थमारम्भमाश्रयन्ति हितप्रदम् । मम त्वाकाशसंभूतपुष्पदामविभूषितम् ॥ ३२५
वन्ध्या * सुतं माप्नुकामा मनः प्रसरते मुहुः । अहं किल भवं देवं पतिं प्राप्तुं समुद्यता ॥ ३२६
प्रकृत्यैव दुराधर्षं तपस्यन्तं तु संप्रति । सुरासुरैरनिर्णीतं परमार्थक्रियाश्रयम् ॥ ३२७
सांप्रतं चापि निर्दग्धमदनं वीतरागिणम् । कथमाराधयेदीशं मादृशी तादृशं शिवम् ॥ ३२८
इत्युक्ता मुनयस्ते तु स्थिरतां मनसस्ततः । ज्ञातुमस्या वचः प्रोचुः प्रक्रमात्पक्कतार्थकम् ॥ ३२९

मुनय ऊचुः—

द्विविधं तु सुखं तावत्पुत्रि लोकेषु भाव्यते । शरीरस्यास्य संभोगैश्चेतसश्चापि निर्वृतिः ॥
प्रकृत्या स तु दिग्वासा भीमः पितृवनेशयः । कपाली भिक्षुको नग्नो विरूपाक्षः स्थिरक्रियः
प्रमत्तोन्मत्तकाकारो बीभत्सकृतसंग्रहः । यतिना तेन कस्तेऽर्थो मूर्तानर्थेन काङ्क्षितः ॥ ३३२
यदि ह्यस्य शरीरस्य भोगमिच्छसि सांप्रतम् । तत्कथं ते महादेवाद्भयमाप्तो जुगुप्सितात् ॥
स्रवद्रक्तवसाभ्यक्तकपालकृतभूषणात् । श्वसदुग्रभुजंगेन्द्रकृतभूषणभीषणात् ॥ ३३४
श्मशानवासिनो रौद्रप्रमथानुगतात्सति । सुरेन्द्रमुकुटव्रातनिघृष्टचरणोऽरिहा ॥ ३३५
हरिरस्ति जगद्धाता श्रीकान्तोऽनन्तमूर्तिमान् । नाथो यज्ञभुजामस्ति तथेन्द्रः पाकशासनः
देवतानां निधिश्चास्ति ज्वलनः सर्वकामकृत् । वायुरस्ति जगद्धाता यः प्राणः सर्वदेहिनाम्

* सुतप्राप्तुकामेति भवितुं युक्तम् ।

१ च सव्रीडा गौरवोन्मुखी त° । २ ग. 'ज्जाचाप्यवाङ्मुखी । त° । ङ. 'ज्जाऽवाङ्मुखी ततः । त° । ३ ङ. 'श्नोत्सुकत्वा' । ४ ङ. °स्ततो मामनुपृच्छत । इ° । ५ ग. घ. च. °त्युक्तास्ते ततश्चकुस्तत्राऽऽसनपरिग्रहान् । सा । ङ. त्युक्तास्ते ततश्चक्रुः कृतासनपरिग्रहम् । सा' । ६ क °नीन्कान्तकथा लोके प्रेक्ष्य । ७ च. 'पान्प्रोवाचप्रे क्ष्य यावताम् । भ° । ८ ङ. भवन्त एव जा° । ९ ङ. °नायःसंमीहि° । १० क. ख. °नोबागभि° । ११ ख. कन्दर्प्यन्ते । १२ ग. °दर्थ्यन्ते । १३ ङ. यतन्ते । १४ ङ. 'च्छिद्य नानाकारानुपक्रमान् । दे° । १५ ग. घ. °मापतन्ति । १६ ङ. °तकुसुमस्र° विभू' । १७ ग. घ. ङ. हृस्तः । १८ ग. °निर्दिष्टप° । क °र्णीतप° । १९ ग. 'वाश्चिषु लो' । २० ख. घ. 'न कः स्वार्थो । २१ क. मूर्तो नाश्लिल्का° । २२ ङ. 'स्य सुखभि° । २३ ग. °भूषितात् । श्म° । २४ ङ. श्रीकण्ठोऽन' ।

तथा वैश्रवणो राजा सर्वार्थमतिमान्विभुः। एभ्य एकतमं कस्मान्न त्वं संप्राप्तुमिच्छसि॥३३८
उतान्यदेहसंप्राप्त्या सुखं ते मनसेप्सितम्। एवमेतत्तवाप्यत्र प्रभवो नाकसंपदाम् ॥
अस्मिन्नेव पराः सर्वाः कल्याणप्राप्तयस्तव ॥ ३३९
पितुरेवास्ति तत्सर्वं सुरेभ्यो यन्न विद्यते। अतस्तत्प्राप्तये क्लेशः स वाऽप्यत्राफलस्तव॥३४०
प्रायेण प्रार्थितो भद्रे सुस्वल्पो ह्यतिदुर्लभः। *अस्य ते विधियोगस्य धाता कर्ताऽत्र चैव हि

सूत उवाच—

इत्युक्ता सा तु कुपिता मुनिवर्येषु शैलजा। उवाच कोपरक्ताक्षी स्फुरद्भिर्दशनच्छदैः ॥

देव्युवाच—

असद्ग्रहस्य का प्रीतिर्व्यसनस्य क्व यन्त्रणा। विपरीतार्थबोद्धारः सत्पथे केन योजिताः ॥
एवं मां वेत्थ दुष्प्रज्ञां ह्यस्थानासद्ग्रहप्रियाम्। न मां प्रति विचारोऽस्ति यत्रेहासद्ग्रहावितौ ॥
प्रजापतिसमाः सर्वे भवन्तः सर्वदर्शिनः। नूनं न वेत्थ तं देवं शाश्वतं जगतः प्रभुम्॥ ३४५
अजमीशानमव्यक्तममेयमहिमोदयम् ॥ ३४६
*आस्तां तद्धर्मसद्भावसंबोधस्तावदद्भुतः। विदुर्यं न हरिब्रह्मप्रमुखा हि सुरेश्वराः ॥३४७
यत्तस्य विभवात्स्वोत्थं भुवनेषु विजृम्भितम्। प्रकटं सर्वभूतानां तदप्यत्र न वेत्थ किम् ॥
कस्यैतद्गगनं मूर्तिः कस्याग्निः कस्य मारुतः। कस्यभूः कस्य वरुणः कश्चन्द्रार्कविलोचनः ॥
कस्यार्चयन्ति लोकेषु लिङ्गं भक्त्या सुरासुराः। यं ब्रुवन्तीश्वरं देवा विधीन्द्राद्या महर्षयः॥
प्रभावं प्रभवं चैव तेषामपि न वेत्थ किम्। अदितिः कस्य मातेयं कस्माज्जातो जनार्दनः ॥
अदितेः कश्यपाज्जाता देवा नारायणादयः। मरीचेः कश्यपः पुत्रो ह्यदितिर्दक्षपुत्रिका ॥
मरीचिश्चापि दक्षश्च पुत्रौ तौ ब्रह्मणः किल।ब्रह्मा हिरण्मयात्त्वण्डाद्दिव्यसिद्धिविभूतिकम्
कस्य प्रादुरभूद्ध्यानात्प्रक्षुब्धाः प्राकृतांशकाः। प्रकृतौ तु तृतीयायां मधुद्विड्जननक्रिया ॥
जाता ससर्ज षड्वर्गान्बुद्धिपूर्वान्स्वकर्मजान्। अजातकोऽभवद्वेधा ब्रह्मणोऽव्यक्तजन्मनः ॥
यः स्वयोगेन संक्षोभ्य प्रकृतिं कृतवानिदम्। ब्रह्मणः सिद्धसर्वार्थमैश्वर्यं लोककर्तृताम् ॥
विदुर्विष्ण्वादयो यच्च स्वमहिम्ना सदैव हि। कृत्वाऽन्यं देहमन्याद्दक्ताद्दक्कृत्वा पुनर्हरिः ॥
कुरुते जगतः कृत्यमुत्तमाधममध्यमम्। एवमेव हि संसारो यो जन्ममरणात्मकः॥ ३५८

---

* एतदर्धस्यानेऽयं पाठो ङ. पुस्तके—अस्थानविनियोगत्वाद्वाच्यता तत एव हि इति । * एतदर्धस्थानेऽयं पाठो ग. पुस्तके तस्मादेतन्मुधावाक्यं संबोधात्तावदद्भुतमिति ।

---

१ ङ. °नसि स्थित° । २ घ. ङ. 'तथाऽप्यत्र प्रभावो । ३ ङ °स्मिन्देहे प° । ४ क. ख. 'मेह परत्रा पिक° । ५ ङ. °ल्पोऽप्यति' । ६ ग. अस्थानविनियोगित्वात्त्वद्वाच्यं तत्र एव । ७ ङ. च क्रोधताम्राक्षी । ८ ग. ङ. का नीतिं । ९ ङ. इत्थं । १० ङ. °ष्प्रज्ञामसत्परिग्रह° । ११ क. °स्ति ततोऽहंकारमानिनी । प्र° । ङ.°स्तिशक्ताऽहं संग्रहे विभो । प्र° । १२ ङ. °त्थ देहेशं शा° । १३ ग. °मप्रमेयपराक्रमम् । १४ ग. °भवत्वोत्थं । १५ ग. ग. सर्वे । १६ ग. °राः । यच्च भूतेश्वरा देवा विष्विन्द्रा° । ङ. °राः । यथा भूतेश्वरं देवा विष्विन्द्रा° । १७ क. °भूपितात् । क° । ख. °भूतिकात् । क° । १८ ग. घ. °नात्प्राकृतैः प्रक्ष° । १९ ग. °शकात् । प्र° । २० ग. °यायामम्बुजाज्जननक्रि° । २१ क. ख. प्राकृतं । २२ ग. °तृणः । यच्च विष्ण्वादयोवेत्थ स्व° । ङ तृगः । यत्र विष्ण्वादयोवेत्थ स्व° ।

कर्मणश्च फलं ह्येतन्नानारूपसमुद्भवम् । अथ नारायणो देवः स्वकां छायां समाश्रयत् ॥
तत्प्रेरितः प्रकुरुते जन्म नानाप्रकारकम् । साऽपि कर्मण एवोक्ता प्रेरणा विवशात्मनाम् ॥
यथोन्मादादिजुष्टस्य मतिरेव हि सा भवेत् । इष्टान्येव यथार्थानि विपरीतानि मन्यते॥३६१
लोकस्य व्यवहारेषु सृष्टेषु सहते सदा । धर्माधर्मफलावाप्तौ विष्णुरेव निबोधितः ३६२
अथालादित्वमस्यास्ति सामान्याच्च तदात्मना । न ह्यस्य जीवितं दीर्घं दृष्टं देहे तु कुत्रचित् ॥
भवद्भिर्यस्य नो दृष्टमन्तरग्रमथापि वा । देहिनां धर्म एवैष क्वचिज्जायेत्क्वचिन्म्रियेत्*॥३६४
क्वचिद्गर्भगतो नश्येत्क्वचिज्जीवेज्जरामयः । क्वचित्समाः शतं जीवेत्क्वचिद्बाल्ये विपद्यते॥३६५
शतायुः पुरुषो यस्तु सोऽनन्तः स्वल्पजन्मनः । जीवितो न म्रियत्यग्रे तस्मात्सोऽमर उच्यते ॥
अदृष्टजन्मनिधना ह्येवं विष्ण्वादयो मताः । एतत्संशुद्धमैश्वर्यं संसारे को लभेदिह ॥ ३६७
तत्र क्षयादियोगात्तु नानाश्चर्यस्वरूपिणि । तस्माद्विश्वराज्सर्वान्मलिनान्स्वल्पभूतिकान् ॥
नाहं भद्राः किलेच्छामि ऋते शर्वात्पिनाकिनः । स्थितं च तारतम्येन प्राणिनां परमं त्विदम्॥
धीबलैश्वर्यकार्यादिप्रमाणं महतां महत् । यस्मान्न किंचिदपरं सर्वं यस्मात्प्रवर्तते ॥ ३७०
यस्यैश्वर्यमनाद्यन्तं तमहं शरणं गता । एष मे व्यवसायश्च दीर्घोऽतिविपरीतकः ॥ ३७१
यात वा तिष्ठतैवाथ मुनयो मद्विधायकाः । एवं निशम्य वचनं देव्या मुनिवरास्तदा ॥३७२
आनन्दाश्रुपरीताक्षाः सस्वजुस्तां तपस्विनीम् । ऊचुश्च परमप्रीताः शैलजां मधुरं वचः ॥

ऋषय ऊचुः—

अत्यद्भुताऽस्यहो पुत्रि ज्ञानमूर्तिरिवामला । प्रसादयंति नो भावं भवभावप्रतिश्रयात् ॥
ननु विद्मो वयं तस्य देवस्यैश्वर्यमद्भुतम् । त्वन्निश्चयस्य दृढतां वेत्तुं वयमिहाऽऽगताः ॥
अचिरादेव तन्वङ्गि कामस्तेऽयं भविष्यति । क्वाऽऽदित्यस्य प्रभा याति रत्नेभ्यः क्वै द्युतिः पृथक् ॥ ३७६
कोऽर्थो वर्णालिकाव्यक्तः कथं त्वं गिरिशं विना । यामो नैकाभ्युपायेन तमभ्यर्थयितुं वयम्॥
अस्माकमपि वै सोऽर्थः सुतरां हृदि वर्तते । अतस्त्वमेव सा बुद्धिर्यतो नीतिस्त्वमेव हि ॥
अतो निःसंशयं कार्यं शंकरोऽपि विधास्यति । इत्युक्त्वा पूजिता याता मुनयो गिरिकन्यया ॥
प्रययुर्गिरिशं द्रष्टुं प्रस्थं हिमवतो महत् । गङ्गाम्बुप्लावितात्मानं पिङ्गबद्धजटासटम् ॥३८०
भृङ्गानुयातपाणिस्थमन्दारकुसुमस्रजम् । गिरेः संप्राप्य ते प्रस्थं ददृशुः शंकराश्रमम् ॥३८१
प्रशान्ताशेषसत्त्वौघं नवस्तिमितकाननम् । निःशब्दाक्षोभसलिलप्रपातं सर्वतोदिशम् ॥
तत्रापश्यंस्ततो द्वारि वीरकं वेत्रपाणिनम् । सप्त ते मुनयः पूज्या विनीताः कार्यगौरवात् ॥
ऊचुर्मधुरभाषिण्या वाचा ते वाग्मिनां वराः । द्रष्टुं वयमिहाऽऽयाताः शरण्यं गणनायकम् ॥
त्रिलोचनं विजानीहि सुरकार्यप्रचोदिताः । त्वमेव नो गतिस्तत्त्वं यथा कालानतिक्रमः ॥
सा प्रार्थनैषा प्रायेण प्रतीहारमयः प्रभुः । इत्युक्तो मुनिभिः सोऽथ गौरवात्तानुवाच सः॥

* अत्र परस्मैपदमार्षं म्रियतेर्लुङ्लिङोश्चेतिसूत्रात् ।

१ ङ. °र्मणः स्त्रं फ° । २ ङ. तद्दिव्यं नानानुरूपकम् । अ° । ३ ग. °देवश्चित्रां छा° । ४, क. ख. प्रेरणी । ५ ङ. कालस्य । ६ ग. घ. °षु स्पष्टेषु हवते । ७ ङ. °मान्येन त° । ८ क. ख. ग. °न्तमग्र° । ९ ग. घ. °मरः । क्व° । १० ङ. यमीश्वरम° । ११ ग. °वात्र मु । १२ ग. °तिरपाम° । १३ ग. ङ. °यसि नो । १४ घ. ङ. का । १५ ग. °क्रू । कार्यो । १६ ग. घ. °मोऽनेका° ।

सवनस्यापरां संध्यां स्नातुं मन्दाकिनीजले। क्षणेन भविता विप्रास्तत्र द्रक्ष्यथ शूलिनम् ॥
इत्युक्ता मुनयस्तस्थुस्ते तत्कालप्रतीक्षिणः। गम्भीराम्बुधरं प्रावृट्तृषिताश्चातका यथा ॥
ततः क्षणेन निष्पन्नसमाधानक्रियाविधिः। वीरासनं विभेदेशो मृगचर्मनिवासितम्॥ ३८९
ततो विनीतो जानुभ्यामवलम्ब्य महीस्थितिम्। उवाच वीरको देवं प्रणामैकसमाश्रयः ॥
संप्राप्ता मुनयः सप्त त्वां द्रष्टुं दीप्ततेजसः। विभो समादिश ब्रह्मुमवगन्तुमिहार्हसि ॥
ते*ऽप्युवन्देवकार्येण तव दर्शनलालसाः ॥ ३९१
इत्युक्तो धूर्जटिस्तेन वीरकेण महात्मना। भ्रूभङ्गसंज्ञया तेषां प्रवेशाज्ञां ददौ तदा॥३९२
मूर्ध्नः कम्पेन तान्सर्वान्वीरकोऽपि महामुनीन्। आजुहावाविदूरस्थान्दर्शनाय पिनाकिनः॥
त्वराबद्धार्धचूडास्ते लम्बमानाजिनाम्बराः+। वि=विशुर्वेदिकां सिन्द्धां गिरिशस्य विभूतिभिः ॥ ३९४
बद्धपाणिपुटाक्षिप्तनाकपुष्पोत्करास्ततः। पिनाकिपादयुगलं वन्द्यं नाकनिवासिनाम् ॥
ततः स्निग्धेक्षिताः शान्ता मुनयः शूलपाणिना। मन्मथारिं ततो हृष्टाः सम्यक् तुष्टुवुरादृताः ॥

मुनय ऊचुः—

अहो कृतार्था वयमेव सांप्रतं सुरेश्वरोऽप्यत्र वरो भविष्यति।
भवत्प्रसादामलवारिसेकतः फलेन काचित्तपसा नियुज्यते ॥ ३९७
जयत्यसौ धन्यतरो हिमाचलस्तदाश्रयं यस्य सुता तपस्यति।
स दैत्यराजोऽपि महाफलोदयो विमूलिताशेषसुरो हि तारकः ॥ ३९८
त्वदीयमंशं प्रविलोक्य कल्मषात्स्वकं शरीरं परिमोक्ष्यते हि यः।
स धन्यधीर्लोकपिता चतुर्मुखो हरिश्च यत्संभ्रमवह्निदीपितः ॥ ३९९
त्वदङ्घ्रियुग्मं हृदयेन बिभ्रतो महाभितापप्रशमैकहेतुकम्।
त्वमेव चैको विविधाकृतक्रियः किलेति वाचा विधुरैर्विभाव्यते ॥ ४००
अ×थाऽऽद्य एकस्त्वमेवादि नान्यथा जगत्तथा निर्घृणतां तव स्पृशेत्।
न वेत्सि वा दुःखमिदं प्रजात्मकं विहन्यते ते खलु सर्वतः क्रिया ॥ ४०१
उपेक्षसे चेज्जगतामुपद्रवं दयामयत्वं तव केन कथ्यते।
स्वयंगमायामहिमागुहाश्रयं न विद्यते निर्मलभूतिगौरवम् ॥ ४०२

* एतदर्धं नास्ति खादिसंज्ञकपुस्तकेषु। + इत उत्तरमेतदर्धं ग. पुस्तके—ददृशुः शूलपाणिं ते प्रणेमुश्च समंतदेति। = इत आरभ्य शूलपाणिनेत्यन्तग्रन्थो ग. पुस्तके न विद्यते। × एतदर्धस्थानेऽयंपाठो ङ. पुस्तके—अथान्य एकत्वमनादिजोऽन्यथा जगत्तदा निर्विकृतं तथाऽस्पृशेत् इति।

१ क. ख. समन्वास्या॰। २ ङ. महीं तदा। उ॰। ३ ग. प्रणम्यैक॰। ङ. प्रणयैकसमाश्रयम्। सं॰। ४ ग. वचः। ५ ग. घ. ङ. ॰मंनन्तरमि॰। ६ ङ. पां जवेनाज्ञां। ७ क. ख. घ. ॰ऽं यथा नाकनिवासिनः। त ८ क. ख. सम्यक्तुष्टु॰। ९ ङ. रोयत्र वचो वदिष्य॰। १० क ख. पुरो। ११ ङ ॰रिसिक्ता फ॰। १२ ग घ. ॰चित्तु वरा नि॰। १३ ङ. ॰पसो न बुध्यते। १४ ग. ॰लस्त्वदा॰। १५ ग. स देवरा॰। १६ ङ. रोऽतिकातरः। त्व॰। १७ ङ. ॰विधुन्य॰। १८ क ख ॰भवैपि ना॰। १९ क. ख. भवात्मकं। २०. ग. दयोदय॰। २१ ङ. ॰चापरत्वात्तव।

वयं च ते धन्यतेराः शरीरिणां यदीदृशं त्वां प्रविलोकयामहे ।
अदर्शनं तेन मनोरथो यथा प्रयाति साफल्यतया मनोगतम् ॥ ४०३
जगद्विधानैकविधौ जगन्मुखे करिष्यसेऽतो बलभिच्चरा वयम् ।
विनेमुरित्थं मुनयो विसृज्य तां गिरं गिरीशश्रुतिभूमिसंनिधौ ॥
उत्कृष्टकेदार इवावनीतले सुबीजमुष्टिं सुफलाय कर्षकाः ॥ ४०४
तेषां श्रुत्वा तु तां रम्यां प्रक्रमोपक्रमक्रियाम् । वाचं वाचस्पतिस्तुष्टः प्रोवाच स्मितसुन्दरीम्

शर्व उवाच—

जाने लोकविधानस्य कन्या सत्कार्यमुत्तमम् । जाता प्रालेयशैलस्य संकेतकनिरूपणाः ॥
सत्यमुत्कण्ठिताः सर्वे देवकार्यार्थमुद्यताः । तेषां त्वरन्ति चेतांसि किंतु कार्यं विवक्षितम् ॥
लोकयात्राऽनुगन्तव्या विशेषेण विचक्षणैः । सेवन्ते ते यतो धर्मं तत्प्रामाण्यात्परे स्थिताः ॥
इत्युक्ता मुनयो जग्मुस्त्वरितास्तु हिमाचलम् । तत्र ते पूजितास्तेन हिमशैलेन सादरम् ॥
ऊचुर्मुनिवराः प्रीताः स्वल्पवर्णं त्वरान्विताः ॥ ४०९

मुनय ऊचुः—

देवो दुहितरं साक्षात्पिनाकी तव मार्गते । तच्छीघ्रं पावयाऽऽत्मानमाहुत्येवानलार्पणात् ॥
कार्यमेतच्च देवानां सुचिरं परिवर्तते । जगदुद्धरणायैष क्रियतां वै समुद्यमः ॥ ४११
इत्युक्तस्तैस्तदा शैलो हर्षाविष्टोऽवदन्मुनीन् । असमर्थोऽभवद्वक्तुमुत्तरं प्रार्थयञ्छिवम् ॥
ततो मेना मुनीन्वीक्ष्य प्रोवाच स्नेहविक्लवा । दुहितुस्तान्मुनींश्चैव चरणाश्रयमर्थवित् ॥

मेनोवाच—

यदर्थं दुहितुर्जन्म नेच्छन्त्यपि महाफलम् । तदेवोपस्थितं सर्वं प्रक्रमेणैव सांप्रतम् ॥४१४
कुलजन्मवयोरूपविभूत्यृद्धियुतोऽपि यः । वरस्तस्यापि चाऽऽहूय सुता देया ह्ययाचतः ॥
तैस्तैर्मैस्ततपोघोरं कथं पुत्री प्रयास्यति । पुत्रीवाक्याद्यदत्रास्ति विधेयं तद्विधीयताम् ॥
इत्युक्ता मुनयस्ते तु प्रियया हिमभूभृतः । ऊचुः पुनरुदारार्थं नारीचित्तप्रसादकम् ॥ ४१७

मुनय ऊचुः—

ऐश्वर्यमवगच्छस्व शंकरस्य सुरासुरैः । आराध्यमानपादाब्जयुगलत्वात्सुनिर्वृतैः ॥ ४१८
यस्योपयोगि यद्रूपं सा च तत्प्राप्तये चिरम् । घोरं तपस्यते बाला तेन रूपेण निर्वृतिः ॥
यस्तद्व्रतानि दिव्यानि नयिष्यति समापनम् । तत्र साऽवहिता तावत्तस्यात्सेव भविष्यति ॥
इत्युक्त्वा गिरिणा सार्धं ते ययुर्यत्र शैलजा । जितार्कज्वलनज्वाला तपस्तेजोमयी शुभा ॥

---

१ ङ. °तमाः श° । २ ग. °हे । न दर्शनात्तेन मनोरथापथं प्र° । ङ. °हे । न दर्शनं तेन मनोरथास्पदं प्र° । ३ ङ. °गतिः । ज° । ४ ङ °खे भविष्यतोऽकेवलानिर्धनाव° । ५ ग. घ. संकेवलमित्त्वरा । ६ ग. विसर्पता ध्रुवं गिरी° । ७ क. ख. °त्वा ततो र° । ८ ङ म्यां संक्रमो° ९ क ख. °तिरिव प्रो° । १० °न्दरः । श° । ङ. °न्दरम् । श° । ११ ग. °स्य सत्यं कार्यमुपस्थितम् । जाने प्रालेयशैलस्य संकेतं दुहितागतम् । लो° । ङ. °स्य सत्यं स° । १२ क. ख. ग. वन्द्य । १३ ङ. अर्थवत् । १४ ङ. तत्संसिद्धं त° । १५ ग. °महतं तथा घो° । १६ ङ. °चिन्ताविशोधक° । १७ घ. °निर्वृताः । त्र° । १८ ग. भवत्विति ।

प्रोचुस्तां मुनयः स्निग्धं संमान्यपथमागतम् । रम्यं प्रियं मनोहारि मा रूपं तपसा दह ॥
प्रातस्ते शंकरः पाणिमेष पुत्रि ग्रहीष्यति । वयमर्थितवन्तस्ते पितरं पूर्वमागताः ॥ ४२३
पित्रा सह गृहं गच्छ वयं यामः स्वमन्दिरम् ॥ ४२४
इत्युक्ता तपसः सत्यं फलमस्तीति चिन्त्य सा । त्वरमाणा ययौ वेश्म पितुर्दिव्यार्थशोभितम्
सा तत्र रजनीं मेने वर्षायुतसमां सती । हरदर्शनसंजातमहोत्कण्ठा हिमाद्रिजा ॥ ४२६
ततो मुहूर्ते ब्राह्मे तु तस्याश्चक्रुः सुरस्त्रियः । नानामङ्गलसंदोहान्यथावत्क्रमपूर्वकम् ॥
दिव्यमण्डनमङ्गानां मन्दिरे बहुमङ्गले । उपासत गिरिं मूर्ता ऋतवः सार्वकामिकाः ॥
वायवो वारिदाश्चाऽऽसन्संमार्जनविधौ गिरेः । हर्म्येषु श्रीः स्वयं देवी कृतनानाप्रसाधना
कान्तिः सर्वेषु भावेषु ऋद्धिश्चाभवदाकुला । चिन्तामणिप्रभृतयो रत्नाः शैलं समन्ततः
उपतस्थुर्नगाश्चापि कल्पकाममहाद्रुमाः । ओषध्यो मूर्तिमत्यश्च दिव्यौषधिसमन्विताः ॥
रसाश्च धातवश्चैव सर्वे शैलस्य किंकराः । किंकरास्तस्य शैलस्य व्यग्राश्चाऽऽज्ञानुवर्तिनः
नद्यः समुद्रा निखिलाः स्थावरं जङ्गमं च यत् । तत्सर्वं हिमशैलस्य महिमानमवर्धयत् ॥
अभवन्मुनयो नागा यक्षगन्धर्वकिंनराः । शंकरस्यापि विबुधा गन्धमादनपर्वते ॥ ४३४
सर्वे मण्डनसंभारास्तस्थुर्निर्मलमूर्तयः । शर्वस्यापि जटाजूटे चन्द्रखण्डं पितामहः ॥ ४३५
बबन्ध प्रणयोदारविस्फारितविलोचनः । कपालमालां विपुलां चामुण्डा मूर्ध्न्यबन्धयत्
उवाच चापि वचनं पुत्रं जनय शंकर । यो दैत्येन्द्रकुलं हत्वा मां रक्तैस्तर्पयिष्यति ॥
सौरिर्ज्वलच्छिरोरत्नमुकुटंचानलोल्बणम् । भुजगाभरणं गृह्य सज्जं शंभोः पुरोऽभवत् ॥
शक्रो गजाजिनं तस्य वसाभ्यक्ताग्रपल्लवम् । दध्रे सरभसं स्विद्यद्विस्तीर्णमुखपङ्कजम् ॥
वायुश्च विपुलं तीक्ष्णशृङ्गं हिमगिरिप्रभम् । वृषं विभूषयामास हरयानं महौजसम् ॥
वितेनुर्नयनान्तःस्थाः शम्भोः सूर्यानलेन्दवः । स्वां द्युतिं लोकनाथस्य जगतः कर्मसाक्षिणः
चिताभस्म समाधाय कपाले रजतप्रभम् । मनुजास्थिमयीं मालामाबबन्ध च पाणिना ॥
प्रेताधिपः पुरो द्वारे सगदः समवर्तत । नानाकारमहारत्नभूषणं धनदाहृतम् ॥ ४४३
विहायोदग्रसर्पेन्द्रकटकेन स्वपाणिना । कर्णोत्तंसं चकारेशो वासुकिं तक्षकं स्वयम् ॥
जलाधीशाहृतां स्थाणुप्रसूनावेष्टितां पृथक् । ततस्तु ते गणाधीशा विनयात्तत्र वीरकम् ॥
प्रोचुर्व्यग्राकृते त्वं गां समावेदय शूलिने । निष्पन्नाभरणं देवं प्रसाध्येशं प्रसाधनैः ॥ ४४६
सप्त वारिधयस्तस्थुः कर्तुं दर्पणविभ्रमम् । ततो विलोकितात्मानं महाम्बुधिजलोदरे ॥ ४४७
धरामालिङ्ग्य जानुभ्यां स्थाणुं प्रोवाच केशवः । शोभसे देव रूपेण जगदानन्ददायिना

---

१ ख. °र्धंसन्मान्य° । ग. र्धं समापितसमाधिकम् । र° । २ घ 'नताश्चा° ३ ग. विद्रवराः । ङ किंनराः । ४ ङ. 'त्' वसवो मुन° । ५ ङ. सन्नम° । ६ ग. 'स्याविकटे चूडे च' । ७ क. ख °न्ग्रत । उ° । ८ ग. घ. ङ. गिरिशं । ९ ग. चिछखा रत्नं कष्टश्वासान' । ङ. °च्छिखारत्नं कण्ठश्वासानिलो' । १० ग. घ 'ध्रे संरम्भसं स्वि° । ११ ग. घ. °ङ्गजः । वा° । १२ ग. घ. ङ. 'प्रभे । म° । १३ ङ. मालां सबबन्ध । १४ ग. ङ. °रोऽद्रूरे । १५ ङ. सभयं । १६ ग. घ. ङ. वामनस्तक्षकः स्व° । १७ 'हतान्स्थाणून्प्रभूतांश्चेष्टितान्पृथ' । १८ ग. घ. स्थाणुप्रभूतां वे' । १९ च. सकृत् । २० ङ. °कृतिं वीरं नानावेदितशूलिनम् । निं । २१ क. ख. नो । २२ क. ख. प्रसाधनः । २३ ङ. °मालम्ब्य जा° ।

*मातरः प्रेरयन्कामवधूं वैधव्यचिह्निताम् । कालेऽयमिति चाऽऽलक्ष्य प्रकारेङ्गितसंज्ञया ततस्ताश्चोदिता देवमूचुः प्रहसिताननाः । रतिः पुरस्तव प्राप्ता नाऽऽभाति मदनोज्झितां ततस्तां संनिर्वायाऽऽह वामहस्ताग्रसंज्ञया । प्रैयाणं गिरिजावक्त्रदर्शनोत्सुकमानसः ॥

ततो हरो हिमगिरिकन्दराकृतिं सितं कशामृदुहतिभिः +प्रचोदयंत् ।
महावृषं गणतुमुलाहितेक्षणं स भूधरानशनिरिव प्रकम्पयन् ॥ ४५२

ततो हरिर्द्रुतपवपद्धतिः पुरः पुरःसरान्द्रुमनिकरेषु संश्रितान् ।
धरारजःशबलितभूषणोऽब्रवीत्प्रयात मा कुरुत पथोऽस्य संकटम् ॥ ४५३

प्रभोः पुनः प्रथमनियोगमूर्जयन्सुतोऽब्रवीद्भ्रुकुटिमुखोऽपि वीरकः ।
वियच्चरा वियति किमास्ति कान्तकं प्रयांतं नो धरणिधरांविदूरतः ॥ ४५४

महार्णवाः कुरुत शिलोपमं पयः सुरद्विषागमनमहार्तिकर्दमम् ।
गणेश्वराश्चपलतया नं गम्यतां सुरेश्वरैः स्थिरमतिभिर्निरीक्ष्यते ॥ ४५५

न भृङ्गिणा स्वतनुमवेक्ष्य नीयते पिनाकिमः पृथुमुखमण्डमग्रतः ।
वृथा यमः प्रकटितदन्तकोटरं त्वमायुधं वहसि विहाय संभ्रमम् ॥ ४५६

पदं न यद्रथतुरगैः पुरद्विषः प्रमुच्यते बहुतरमातृसंकुलम् ।
अमी सुराः पृथगनुयायिभिर्वृताः पदातयो द्विगुणपथान्हरप्रियाः ॥ ४५७

स्ववाहनैः पवनविधूतचामरैश्चलध्वजैर्व्रजत विहारशालिभिः ।
सुराः स्वकं किमिति सरागमूर्जितं विचार्यते नियतलयत्रयानुगम् ॥ ४५८

न किंनरैरभिभवितुं हि शक्यते विभूषणप्रचयसमुद्भवो ध्वनिः ।
अजातिजाः किमिति न पङ्कजमध्यमपृथुस्वरं बहुतरमत्र वंक्ष्यते ॥ ४५९

नतोनताननततानतां गताः पृथक्तया समयकृता विभिन्नताम् ।
विशङ्किता भवदतिभेदशीलिनः प्रयान्त्यमी द्रुतपदमेव गौडकाः ॥ ४६०

विसंहताः किमिति न पाङ्गवादयः स्वगीतकैर्ललितपदप्रयोगजैः ।
प्रभोः पुरो भवति हि यस्य चाक्षतं समुद्धतार्थकमिति तत्प्रतीयते ॥ ४६१

---

* अत्र प्रेर्याश्च मातरः कामेति पाठो भवितुं युक्तः । + अडभाव आर्षः ।

---

१ ग. घ. °वधूर्वैधव्यचिह्नितैः । का° । ङ. °वधूर्वैधव्यचिह्निता । का° २ ग. °ननम् । र° । ३ ङ. °ता । शिवो हास्यं विधायाथ वा° । ४ क. ख. प्रयाणे । ५ क. ख. घ. °तिसमुन्नतं मृदुगति° । ६ क. ख. घ. °यन् । म° । ७ ग. °क्षगःस । ८ ङ. °धरं गतिनिवहैः । प्र° । ९ ग. °रान्यलनिवहैः प्र° । १० क. ख. °रः सरःश्रमाद्द्रुमनिकरेषु विश्रमन् । ध° । ङ. °रः सरामरोत्तमनिकरेण मिश्रितः । ध° । ११ ङ. °म् । पुरःसरांस्तान्शिनियोगपूर्वकं तत्रां° । १२ ग. घ °ःस्ति नान्तरं प्र° । १३ ङ. °तभोध° । १४ ग. °णिचरा । १५ ङ. °राद्विदू° । १६ ग. न राजतामरे° । १७ ग. °रगतिभिश्च गम्यताम् । न १८ ङ. °भिर्न वीक्ष्य° । १९ घ. ङ. मीतये । २० ङ. °थुगुरुमण्डलाग्र° । २१ ग. °तः । यमत्वमप्रकुपित° । २२ ङ. °मायतं व° । २३ क. ख. पञ्जरम् । ङ. गर्जितम् । २४ क. ख. पुरद्विपा । २५ ग. ङ. °णयथावृत्तिक्रियाः । २६ ग. °थावृत्तिप्रि° । २७ क. ख. ङ. °तिनरा° । २८ ग. घ. विसार्य तं नि° । २९ क. ख. °निःस्वजातिकाः कि° । ३० ग. घ. वर्ण्यते । ३१ ग. घ. °तास्तनुतनुतां । ३२ ग. °थक्पृथक्तया । ३३ ग. घ. ङ. °शीलतां- प्र° । ३४ ग. ङ. गण्डकाभिः । ङ. गौडजाः । ङ. °काः । विजृम्भते किमिति न चारुवादिभिः स्व° । ३५ ङ. योजकैः । ३६ ङ. मुग्धनीतिर्नियतं प्रगीय° ।

अमी पृथग्विरचितरम्यरासकं विलासिनो बहुगमकस्वभावकम् ।
प्रयुञ्जते गिरिशयशोविसारिणं प्रकीर्णकं बहुतरनागजातयः ॥ ४६२

अमी कथं ककुभि कथाः प्रतिक्षणं ध्वनन्ति ते विविधवधूविमिश्रिताः ।
न जातयो ध्वनिमुरजासमीरिता न मूर्छिताः किमिति च मूर्छनात्मकाः ॥

श्रुतिप्रियक्रमगतिभेदसाधनं ततादिकं किमिति न तुम्बरेरितम् ।
न हन्यते बहुविधवाद्यडम्बरं प्रकीर्णवीणामुरजादि नाम यत् ॥ ४६४

इतीरिते गिरिमवधानशालिनः सुरासुराः सपदि तु वीरकाज्ञया ।
नियामिताः प्रययुरतीव हर्षिताश्चराचरं जगदखिलं ह्यपूरयन् ॥ ४६५

इति स्तनत्ककुभि रसन्महार्णवे स्तनद्घने विदलितशैलकंदरे ।
जगत्यभूत्तुमुल इवाऽऽकुलीकृतः पिनाकिना त्वरितगतेन भूधरः ॥ ४६६

परिज्वलत्कनकसहस्रतोरणं क्वचिन्मिलन्मरकतवेश्मवेदिकम् ।
क्वचित्क्वचिद्विमलविदूरवेदिकं क्वचिद्गलज्जलधररम्यनिर्झरम् ॥ ४६७

चलद्ध्वजप्रवरसहस्रमण्डितं सुरद्रुमस्तबकविकीर्णचत्वरम् ।
सितासितारुणरुचिधातुवर्णिकं श्रियोज्ज्वलं प्रविततमार्गगोपुरम् ॥ ४६८

विजृम्भिताप्रतिमध्वनिवारिदं सुगन्धिभिः पुरपवनैर्मनोहरम् ।
हरो महागिरिनगरं समासदत्क्षणादिव प्रवरसुरासुरस्तुतः ॥ ४६९

तं प्रविशन्तमगात्प्रविलोक्य व्याकुलतां नगरं गिरिभर्तुः ।
व्यग्रपुरन्ध्रिजनं जययुक्त धावितमार्गजनाकुलरथ्यम् ॥ ४७०

हर्म्यगवाक्षगतामरनारीलोचननीलसरोरुहमालम् ।
सुभ्रकटो समदृश्यत काचित्स्वाभरणांशुवितानविगूढा ॥ ४७१

काऽप्यखिलीकृतमण्डनभूषा त्यक्तसखीप्रणया हरमैक्षत् ।
काचिदुवाच कलं गतमाना कातरतां सखि मा कुरु मूढे ॥ ४७२

दग्धमनोभव एव पिनाकी कामयते स्वयमेव विहर्तुम् ।
काचिदपि स्वयमेव पतन्ती प्राह परां विरहस्खलिताङ्गीम् ॥ ४७३

मा चपले मदनव्यतिषङ्गं शंकरजं स्खलनेन वद त्वम् ।
काऽपि कृतव्यवधानमदृष्ट्वा युक्तिवशाद्गिरिशो ह्ययमूचे ॥ ४७४

एष स यत्र सहस्रमखाद्या नाकसदामधिपाः स्वयमुक्तेः ।
नामभिरिन्दुजटं निजसेवाप्राप्तफलाय नतास्तु घटन्ते ॥ ४७५

---

* अत्र परस्मैपदमार्षम् ।

---

१ क. ख. °नात्मिकाः । २ ङ. °तिक्रमप्रकटितभे° । ३ ग. घ. ङ. ततोऽधिकं । ४ ङ. °रितां गिरमवधार्य शालिनीं सुरा° । ५ क. ख. ग. °दूर्यभूमिकं । ६ क. ख. °वर्णकं । ७ ग. ङ. °तिसमधूमवा° । ८ क. ख. जवियानं । ९ ग. ङ. °टाऽपि नद° । १० ग. °रणा श्चितमाननगू° । ११ ग. ङ. °मैच्छत् । का । १२ ङ. °च विलम्बितमालाका° । १३ ङ. °तां ननु मा कुरुमुग्धे । द° । १४ ग. घ. परावि° । १५ ग. घ. °ताङ्गी । मा । १६ ङ. °षर्णे शं° । १७ ग. घ. °न विजित्वा । का° । १८ ग. घ. कृताव्य° । १९ ख. घ. °दृष्ट्वा यु° । २० ग. घ. °मूढे । ए° । २१ क. ख. °प्राप्तिफ° ।

एष न चैष स एष यदग्रे[1] चर्मपरीततनुः शशिमौली ।
धावति वज्रधरोऽमरराजो मार्गममुं विवृतीकरणाय ॥ ४७६
एष स पद्मभवोऽयमुपेत्य प्रांशुजटामृगचर्मनिगूढः ।
सप्रणयं करघट्टितवक्त्रः किंचिदुवाच मितं श्रुतिमूले ॥ ४७७
एवमभूत्सुरनारिकुलानां चित्तविसंष्ठुलता गुरुरागात् ।
शंकरसंश्रयणाद्गिरिजायाजन्मफलं परमं त्विति चोचुः ॥ ४७८

ततो हिमगिरेर्वेश्म विश्वकर्मनिवेदितम् । महानीलमयस्तम्भं ज्वलत्काञ्चनकुट्टिमम् ॥ ४७९
मुक्ताजालपरिष्कारं ज्वलितौषधिदीपितम् । क्रीडोद्यानसहस्राढ्य काञ्चनाम्बुजदीर्घिकम् ॥
महेन्द्रप्रमुखाः सर्वे सुरा दृष्ट्वा तदद्भुतम् । नेत्राणि सफलान्यद्य मनोभिरिति ते दधुः ४८१
विमर्दक्षीणकेयूरा हरिणा द्वारि रोधिताः । कथंचित्प्रमुखास्तत्र विविशुर्नाकवासिनः ४८२
प्रणतेनाचलेन्द्रेण पूजितोऽथ चतुर्मुखः । चकार विधिना सर्वं विधिमन्त्रपुरःसरम् ॥ ४८३
शर्वस्य पाणिग्रहणमग्निसाक्षिकमक्षतम् । दाता महीभृतां नाथो होता देवश्चतुर्मुखः ॥४८४
वरः पशुपतिः साक्षात्कन्या विश्वारणिस्तथा । चराचराणि भूतानि सुरासुरवराणि च ४८५
तत्राप्येते नियमतो ह्यभवन्व्यग्रमूर्तयः । मुमोचाभिनवान्सर्वान्सस्यशालीन्रसौषधीः ॥४८६
व्यग्रा तु पृथिवी देवी सर्वभावमनोरमा । गृहीत्वा वरुणः सर्वरत्नान्याभरणानि च ॥ ४८७
पुण्यानि च पवित्राणि नानारत्नमयानि तु । तस्थौ साभरणो देवो हर्षदः सर्वदेहिनाम् ४८८
धनदश्चापि दिव्यानि हैमान्याभरणानि च । जातरूपविचित्राणि[11] प्रयतः समुपस्थितः ॥४८९
वायुर्ववौ सुसुरभिः सुखसंस्पर्शनो विभुः । छत्रमिन्दुकरोद्भासि सुसितं च शतक्रतुः ॥ ४९०
जग्राह मुदितः स्रग्वी बाहुभिर्बहुभूषणैः । जगुर्गन्धर्वमुख्याश्च ननृतुश्चाप्सरोगणाः ॥ ४९१
वादयन्तोऽतिमधुरं जगुर्गन्धर्वकिंनराः । मूर्ताश्च ऋतवस्तत्र जगुश्च ननृतुश्च वै ॥ ४९२
चपलाश्च गणास्तस्थुर्लो[12]लयन्तो हिमाचलम् । उत्तिष्ठन्क्रमशश्चात्र विश्वभुग्[13]भगनेत्रहा ४९३
चकारौद्वाहिकं कृत्यं पत्न्या सह यथोचितम् । दत्तार्घो गिरिराजेन सुरवृन्दैर्विनोदितः ॥४९४
अवसत्तां क्षपां तत्र पत्न्या सह पुरान्तकः । ततो गन्धर्वगीतेन नृत्येनाप्सरसामपि ॥ ४९५
स्तुतिभिर्देवदैत्यानां विबुद्धो विबुधाधिपः । आमन्त्र्य हिमशैलेन्द्रं प्रभाते चोमया सह ॥
जगाम मन्दरगिरिं वायुवेगेन शृङ्गिणा ॥ ४९६

ततो गते भगवति नीललोहिते सहोमया[15] रतिमलभन्न भूधरः ।
सबान्धवो भवति च कस्य नो मनो विह्वलं च जगति हि कन्यकापितुः ॥
[*ज्वलन्मणिस्फटिकहाटकोत्कटं स्फुटद्युति स्फटिकगोपुरं पुरम् ।
हरो गिरौ चिरमनुकल्पितं तदा विसर्जितामरनिवहोऽविशत्स्वकम् ॥ ४९८

* न विद्यतेऽयं ग्रन्थो ग. पुस्तके ।

१ क. ख. ङ. °ग्रे घर्म° । २ क. ख. °तचक्रं किं । ३ ङ. °संस्थुल° । ४ क. ख. ग. °नावद्धदी° । ५ क. ख. °र्दकीर्णके° । ६ क. ख. शर्वेण । ७ ङ. तत्र प्रेष्या नि° । ८ ग. घ. °लीन्द्रुमौष° । ९ ङ. °णः साक्षाद्रत्नानि विविधानि° । १० ग. ङ. °म् । ज्वलनश्चा° । ११ क. ख °रोद्गारं सु° । १२ ङ. °लोडय° । १३ ङ. °र्वियोजितः । १४ ग. घ. ङ. °बुधो वि° । १५ ङ. विसंस्थुलं । १६ ङ. °कनवाक्षगोपुरम् । पुरं हरो गिरिचरसानु° ।

तदोमासहितो देवो विजहार भगाक्षिहा । पुरोद्यानेषु रम्येषु विविक्तेषु वनेषु च ॥४९९
सुरक्तहृदयो देव्या मकराङ्कपुरःसरः । ततो बहुतिथे काले सुतकामा गिरेः सुता ॥ ५००
सखीभिः सहिता क्रीडां चक्रे कृत्रिमपुत्रकैः । कदाचिद्गन्धतैलेन गात्रमभ्यज्य शैलजा ॥
चूर्णैरुद्वर्तयामास मलिनान्तरितां तनुम् । तदुद्वर्तनकं गृह्य नरं चक्रे गजाननम् ॥ ५०२
पुत्रकं *क्रीडती देवी तं चाप्यर्पयदम्भसि । जाह्नव्यास्तु शिवासख्यास्ततः सोऽभूद्बृहद्वपुः
कायेनातिविशालेन जगदापूरयत्तदा । पुत्रेत्युवाच तं देवी पुत्रेत्यूचे च जाह्नवी ॥ ५०४
गाङ्गेय इति देवैस्तु पूजितोऽभूद्गजाननः । विनायकाधिपत्यं च ददावस्य पितामहः ॥ ५०५
पुनः सा क्रीडनं चक्रे पुत्रार्थं वरवर्णिनी । मनोज्ञमङ्कुरं रूढमशोकस्य शुभानना ॥ ५०६
वर्धयामास तं चापि कृतसंस्कारमङ्गला । बृहस्पतिमुखैर्विप्रैर्दिवस्पतिपुरोगमैः ॥ ५०७
ततो देवैश्च मुनिभिः प्रोक्ता देवी त्विदं वचः । भवानि भवती भव्या संभूता लोकभूतये ५०८
प्रायः सुतफलो लोकः पुत्रपौत्रैश्च लभ्यते । अपुत्राश्च प्रजाः प्रायो दृश्यन्ते दैवहेतवः ॥५०९
अधुना दर्शिते मार्गे मर्यादां कर्तुमर्हसि । फलं किं भविता देवि कल्पितैस्तरुपुत्रकैः ॥
इत्युक्ता हर्षपूर्णाङ्गी प्रोवाचोमा शुभां गिरम् ॥ ५१०

देव्युवाच—

एवं निरुदके देशे यः कूपं कारयेद्बुधः । बिन्दौ बिन्दौ च तोयस्य वसेत्संवत्सरं दिवि ॥ ५११
दशकूपसमा वापी दशवापीसमो ह्रदः । दशह्रदसमः पुत्रो दशपुत्रसमो द्रुमः ॥
एषैव मम मर्यादा नियता लोकभाविनी ॥ ५१२
इत्युक्तास्तु ततो विप्रा बृहस्पतिपुरोगमाः । जग्मुः स्वमन्दिराण्येव भवानीं वन्द्य सादरम् ॥
गतेषु तेषु देवोऽपि शंकरः पर्वतात्मजाम् । पाणिनाऽऽलम्ब्य वामेन शनैः प्रावेशयच्छुभाम् ॥
चित्तप्रसादजननं प्रासादमनुगोपुरम् । लम्बमौक्तिकदामानं मालिकाकुलवेदिकम् ॥ ५१५
निर्धौतकलधौतं च क्रीडागृहमनोरमम् । प्रकीर्णकुसुमामोदमत्तालिकुलकूजितम् ॥ ५१६
किंनरोद्गीतसंगीतगृहान्तरितभित्तिकम् । सुगन्धिधूपसंघातमनःप्राप्यमलक्षितम् ॥ ५१७
क्रीडन्मयूरनारीभिर्वृतं वै ततवादिभिः । हंससंघातसंघुष्टं स्फटिकस्तम्भवेदिकम् ॥ ५१८
अनोविलमसंभ्रान्त्या बहुशः किंनराकुलम् । शुकैर्यत्राभिहन्यन्ते पद्मरागविनिर्मिताः ५१९
भित्तयो दाडिमभ्रान्त्या प्रतिबिम्बितमौक्तिकाः । तत्राक्षक्रीडया देवी विहर्तुमुपचक्रमे ५२०
स्वच्छेन्द्रनीलभूभागे क्रीडने यत्र धिष्ठितौ । वपुःसहायतां प्राप्तौ विनोदरसनिर्वृतौ ॥ ५२१

* अत्र नुमभाव आर्षः शप्श्यनोर्नित्यमिति नुम्विधानात् ।

१ ङ. मलेनाऽऽवृरि° । २ ङ. °म् । सा तदुद्वर्तनं गृ° । ३ घ. पुत्रं । ङ. पुत्रं तं क्री° । ४ क. ख. चाक्षिपय° । ५ ङ. °वी । गणेश इति तैर्देवैः पू° । ६ घ. ङ. °त्रार्थं वर° । ७ ङ पुत्रि पुण्यैश्च । ८ ङ. हेतुतः । अ° । ९ ङ. एकं । १० घ. ङ. प्रामे । ११ ङ. जग्मुस्ते मन्दिरायैव । १२ क. ख. °ना लम्बमानेन । १३ ङ. °न विवेश शुभमन्दिरम् । चि° । १४ ङ. °सादं रत्नगो° । १५ ङ. °मालिविमानाकु° १६ ङ. °धौता च गुहा यत्र गृहं चैव म° । १७ क. ख. °सुमोदाममत्ता° । १८ ङ. °घातं मनःप्रापम° । १९ ङ °भिर्विरुतं रमसादाति । हं । २० घ. ङ. °म्भतोरणम् । अ° । २१ क. ख. °नारतमतिप्रीत्या व° । २२ घ. ङ. °त्राक्षै. क्रीडया देवो त्रि° । २३ ङ. °लकृलके क्रीडतोयैत्र बिम्बतम् । व° ।

एवं प्रक्रीडतोस्तत्र देवीशंकरयोस्तदा । प्रादुर्भवन्महाशब्दस्तद् गुहोदरगोचरः ॥ ५२२
तच्छ्रुत्वा कौतुकाद्देवी किमेतदिति शंकरम् । पप्रच्छ तं शुभतनुर्हरं विस्मयपूर्वकम् ॥ ५२३
उवाच देवीं नैतत्ते दृष्टपूर्वं सुविस्मिते । एते गणेशाः क्रीडन्ते शैलेऽस्मिन्मत्प्रियाः सदा॥५२४
तपसा ब्रह्मचर्येण नियमैः क्षेत्रसेवनैः । यैरहं तोषितः पूर्वं त एते मनुजोत्तमाः ॥ ५२५
मत्समीपमनुप्राप्ता मम हृद्याः शुभानने । कामरूपा महोत्साहा महारूपगुणान्विताः ॥ ५२६
कर्मभिर्विस्मयं तेषां प्रयामि बलशालिनाम् । चराचरस्य जगतः सृष्टिसंहरणक्षमाः ॥ ५२७
ब्रह्माविष्णिवन्द्रगन्धर्वैः सकिंनरमहोरगैः । समावृतोऽप्यहं नित्यं नैभिर्विरहितो रमे ॥ ५२८
हृद्या मे चारुसर्वाङ्गि त एते क्रीडिता गिरौ ] । इत्युक्ता तु ततो देवी त्यक्त्वा तद्विस्मयाकुला
गवाक्षान्तरमासाद्य प्रेक्षते विस्मितानना । यावन्तस्ते कृशा दीर्घा ह्रस्वाः स्थूला महोदराः ॥
व्याघ्रेभवदनाः केचित्केचिन्मेपाजरूपिणः । अनेकप्राणिरूपाश्च ज्वालास्याः कृष्णपिङ्गलाः
सौम्या भीमाः स्मितमुखाः कृष्णपिङ्गजटासटाः । नानाविहङ्गवदना नानाविधमृगाननाः ॥
कौशेयचर्मवसना नग्नाश्चान्ये विरूपिणः । गोकर्णा गजकर्णाश्च बहुवक्त्रेक्षणोदराः ॥ ५३३
बहुपादा बहुभुजा दिव्यनानास्त्रपाणयः । अनेककुसुमापीडा नानाव्यालविभूषणाः ॥ ५३४
वृकाननायुधधरा नानाकवचभूषणाः । विचित्रवाहनारूढा दिव्यरूपा वियच्चराः ॥ ५३५
वीणावाद्यमुखोद्घुष्टा नानास्थानकनर्तकाः । गणेशांस्तांस्तथा दृष्ट्वा देवी प्रोवाच शंकरम्

देव्युवाच—

गणेशाः कतिसंख्याताः किंनामानः किमात्मकाः । एकैकशो मम ब्रूहि धिष्ठिता ये पृथक्पृथक्

शंकर उवाच—

कोटिसंख्या ह्यसंख्याता नानाविख्यातपौरुषाः । जगदापूरितं सर्वैरेभिर्भीमैर्महाबलैः ॥५३८
सिद्धक्षेत्रेषु रथ्यासु जीर्णोद्यानेषु वेश्मसु । दानवानां शरीरेषु बालेषून्मत्तकेषु च ॥
एते विशन्ति मुदिता नानाहारविहारिणः ॥
ऊष्मपाः फेनपाश्चैव धूमपा मधुपायिनः । *रक्तपाः सर्वभक्षाश्च वायुपा ह्यम्बुभोजनाः ॥
गेयनृत्योपहाराश्च नानावाद्यरवप्रियाः । न ह्येषां वै अनन्तत्वाद्गुणान्वक्तुं हि शक्यते॥५४१

देव्युवाच—

मार्गत्वगुत्तरासङ्गशुद्धाङ्गो मुञ्जमेखली । मानशिलेन कल्केन चपलो रञ्जिताननः॥ ५४२
पिनद्धोत्पलस्रग्दामा सुकान्तो मधुराकृतिः । पाषाणशकलोत्तानकांस्यतालप्रवर्तकः॥ ५४३
असौ गणेश्वरो देवः किंनामा किंनरानुगः । य एष गणगीतेषु दत्तकर्णो मुहुर्मुहुः॥ ५४४

* एतदर्धस्थानेऽर्थं पाठो ग. घ. पुस्तकयोः—मेदाहार रुधिरपाः सर्वभक्षाश्चभोजना इति ।

१ घ. °न्महच्छब्दः पतितासुर° । २ ङ. शब्दः स्थगिताम्बर° । ३ ङ. पर्यपृच्छच्छुभ° । ४ घ. नामभिः । ५ क. ख. घ. °म् । सामरस्यास्य । ६ क. ख. घ. °गैः । विवर्जितो । ७ क. ख. °वाङ्गस्त ए° । ८ ङ. कृतपि° । ९ ग. घ. °धसुरा न° । १० ग. घ. ङ. °व्याकुलमीष° । ११ ङ. °णाः । धृतनानायुधकरा । १२ क. ख. वृत्तान° । १३ क. °द्यमुखोध्दु° । १४ घ. ङ. °रवा घुष्टा । १५ ग. धूमाज्यमधु° । १६ ग. घ. °नाः । देवसूतोप° । १७ ग. घ. °रतिप्रि° । १८ ग. च. । नागत्व° । घ. °च । नानात्व° । १९ क. ख. °ली । वामस्थेन च शिक्येन च° । २० ग. घ. °नः । भृङ्गदंष्ट्रो-पजानां च स्रग्दामो म° ।

शर्व उवाच—

स एष वीरको देवि सदा मद्धृदयप्रियः। नानाश्चर्यगुणाधारो गणेश्वरगणार्चितः॥ ५४५

देव्युवाच—

ईदृशस्य सुतस्यास्ति ममोत्कण्ठा पुरान्तक। कदाऽहमीदृशं पुत्रं द्रक्ष्याम्यानन्ददायिनम्॥

शर्व उवाच—

एष एव सुतस्तेऽस्तु नयनानन्दहेतुकः। त्वया मात्रा कृतार्थोऽस्तु वीरकोऽपि सुमध्यमे॥

इत्युक्ता प्रेषयामास विजयां हर्षणोत्सुका। वीरकानयनायाऽऽशु दुहिता हिमभूभृतः॥५४८

साऽवरुह्य त्वरायुक्ता प्रासादादम्बरस्पृशः। विजयोवाच गणपं गणमध्ये प्रवर्तिता॥ ५४९

विजयोवाच—

एहि वीरक चापल्यात्त्वया देवः प्रकोपितः। किमुत्तरं वदत्यर्थे नृत्यरङ्गे तु शैलजा॥ ५५०

इत्युक्तस्त्यक्तपाषाणशकलो मार्जिताननः। आहूतस्तु तयोद्भूतमूलप्रस्तावशंसकः॥५५१

देव्याः समीपमागच्छद्विजयानुगतः शनैः। प्रासादशिखरात्फुल्लरक्ताम्बुजनिभद्युतिः॥५५२

तं दृष्ट्वा प्रस्नुतानल्पस्वादुक्षीरपयोधरा। गिरिजोवाच सस्नेहं गिरा मधुरवर्णया॥ ५५३

उमोवाच—

एह्येहि[15] [16] यातोऽसि[18] मे पुत्रतां देवदेवेन[17] दत्तोऽधुना वीरक॥ ५५४

इत्येवमङ्के निधायाथ तं पर्यचुम्बत्कपोले कलवादिनम्॥ ५५५

मूर्ध्न्युपाघ्राय संमार्ज्य गात्राणि भूषयामास दिव्यैः स्वयं भूषणैः किंकिणीमेखलानूपुरैर्माणिक्यकेयूरहारोरुमूलगुणैः॥ ५५६

कोमलैः पल्लवैश्चित्रितैश्चारुभिर्दिमव्यन्त्रोद्भवैस्तस्य शुभैस्ततो भूरिभिश्चाकरोन्मिश्रसिद्धार्थकैरङ्गरक्षाविधिम्॥ ५५७

एवमादाय चोवाच कृत्वा स्रजं मूर्ध्नि गोरोचनापत्रभङ्गोज्ज्वलम्॥ ५५८

गच्छ गच्छाधुना क्रीड सार्धं गणैरप्रमत्तो नगे श्वभ्रवर्जं शनैर्व्यालमालाकुलाः शैलसानुद्रुमदन्तिभिर्भिन्नसाराः परे सङ्गिनः॥ ५५९

जाह्नवीयं जलं क्षुब्धतोयाकुलं कूलं मा विशेथा बहुव्याघ्रदुष्टे वने॥ ५६०

वत्सासंख्येषु दुर्गा गणेशेष्वेतस्मिन्वीरके पुत्रभावोपतुष्टान्तःकरणा तिष्ठतु॥ ५६१

स्वस्य पितृजनप्रार्थितं भव्यमायातिभाविन्यसौ भव्यता॥ ५६२

---

१ ग. ङ. 'दा मे हृद°। २ ङ. 'णेशश्च गुणान्वितः। ३ ङ. °दायकम्। ४ ङ पुत्रः। ५ ङ र्शितो°। ६ ङ. °यने सुभ्रूस्तनया हि°। ७ ग. °तिनम्। वि°। ८ ङ. प्रतोपितः। ९ घ. °तः। किमत्वर°। १० ङ. च. ददाम्यन्यद.तिरागेण शै°। ११ ग. °र्थे त्वंतरागेण शै°। १२ घ. नृत्तरङ्गेण शै°। १३ ग. °क्तस्तु तया वाण°। १४ ग. घ ङ. °खरोत्फु°। १५ ङ. °ह्येहीह माता तवाहं पुत्रोऽसि मे देवद°। १६ ग. °हि जातोऽसि सद्यो मे पुत्रतां भृशम्। देव°। १७ ग. °त्तो मेऽधुना त्वं वीरवीरक। १८ ग. °ङ्के विनिधाय तं पर्यष्वजतूत्क°। १९ ग. सुतं। २० क. ख. घ. °ज्ज्वलैः। गच्छ। ङ. ज्ज्वलैः। वत्सग°। २१ क. °त्तो वसश्वभ्रवर्जांश°। ख. घ. °त्तो वसञ्श्वभ्रवर्जांश°। ग °त्तोऽवसःश्वभ्रवर्जांश°। २२ ङ. °प्रजुष्टे। २३ ग. घ. ङ. वत्सस°। २४ ग °शेष्वलं वी°। २५ ग. भावाद्य तुष्टा करोत्। ति°। २६ ग. घ. स्वच्छचित्तोजनोऽप्रास्थ। ङ. स्व.थचित्तोजन. प्रा°।

सोऽपि निर्वर्त्य सर्वान्गणान्सस्मयमाह बालत्वलीलारसाविष्टधीः ॥ ५६३

एष मात्रा स्वयं मे कृतभूषणोऽत्र एष पटः पाटलैर्बिन्दुभिः सिन्दुवारस्य पुष्पैरियं मालतीमिश्रिता मालिका मे शिरस्याहिता ॥ ५६४

कोऽयमातोद्यधारी गणस्तस्य दास्यामि हस्तादिदं क्रीडनम् ॥ ५६५

दक्षिणात्पश्चिमं पश्चिमादुत्तरमुत्तरात्पूर्वमभ्येत्य सख्या युता प्रेक्षती तं गवाक्षान्तराद्वीरकं शैलपुत्री बहिः क्रीडनं यज्जगन्मातुरप्येष चित्तभ्रमः ॥ ५६६

पुत्रलुब्धो जनस्तत्र को मोहमायाति न स्वल्पचेता जडो मांसविण्मूत्रसंघातदेहः ॥ ५६७

द्रष्टुमभ्यन्तरं नाकवासेश्वरैरिन्दुमौलिं प्रविष्टेषु कक्षान्तरम् ॥ ५६८

वाहनात्यावरोहा गणास्तैर्युतो लोकपालाश्रमूर्तौ ह्ययं खड्गो विखड्गकरो निर्ममः कृतान्तः कस्य केनाहतो ब्रूत मुने भवन्तोऽस्त्रदण्डेन किं दुःस्पृहाः ॥

*भीममूर्त्याननेनास्ति कृत्यं गिरौ य एषोऽस्त्रज्ञेन किं वध्यते ॥ ५७०

मा वृथा लोकपालानुगाचित्तता, एवमेवैतदित्यूचुरस्मै तदा देवताः ॥ ५७१

देवदेवानुगं वीरकं लक्षणा प्राह देवी वनं पर्वता निर्झराण्यग्निदेव्यान्यथो भूतपा निर्झराम्भोनिपातेषु निमज्जत ॥ ५७२

पुष्पजालावनद्धेषु धामस्वपि प्रोत्तुङ्गनानाद्रिकुञ्जेष्वनुगर्जन्तु हेमारुतास्फोटसंक्षेपणात्कामतः ॥ ५७३

काञ्चनोत्तुङ्गशृङ्गावरोहक्षितौ हेमरेणूत्करासङ्गद्युतिं खेचराणां वनाधायिनि रम्ये बहुरूपसंपत्प्रकरे गणान्वासितं मन्दरकन्दरे सुन्दरमन्दारपुष्पप्रवालाम्बुजे सिद्धनारीभिरापीतरूपामृतं विस्तृतैर्नेत्रपात्रैरनुन्मेषिभिर्वीरकं शैलपुत्री निमेषान्तरादस्मरत्पुत्रगृध्नी विनोदार्थिनी ॥ ५७४

सोऽपि तादृक्क्षणावाप्तपुण्योदयो योऽपि जन्मान्तरस्याऽऽत्मजत्वं गतः क्रीडतस्तस्य तृप्तिः कथं जायते योऽपि भाविजगद्वेधसा तेजसः कल्पितः प्रतिक्षणं दिव्यगीतक्षणो नृत्यलोलो गणेशैः प्रणतः ॥ ५७५

---

* अत्र गद्यग्रन्थे केषांचित्पदानामसंबन्धो ग्रन्थविसंगतिश्च दृश्यते, । आदर्शपुस्तकेषु सम्यक्तया पाठा नोपलभ्यन्ते ।

---

१ क ख. निवृत्य सर्वगणैः स° । २ ङ. यं चित्रितो भूषणैश्चैष दत्तः पटः पाटलो बि° । ३ ङ. 'तीमाल्लिकामि' । ४ ग. घ. ङ. क्रीडितं । ५ ङ. कोऽन्यः किल मोदमाया' । ६ ङ. तदेहं वहन्द्र° । ७ ङ. 'मौलिप्रदिष्टे' । ८ ग. °नान्याव' । ९ ग. ङ. 'स्त्रपूगं मूहूर्तोदयं । १० घ. 'तोंदयं । ११ ग. ङ. निर्मलः । १२ ग. 'तान्तस्य केनाहतो । १३ ग. घ. °रांपास एषोऽस्त्रनेनात्र को व° । १४ ग. घ.°नुगा चित्रता । ङ. नुगाविम्यत । १५ ङ. 'चुस्तमस्मै । १६ ग. कं रणा । ङ. °कं रक्षणात्प्राह । १७ घ. °देवान्य' । ङ. देवान्पथो भूतपान्गच्छतो निकुञ्जाम्भो' । १८ ग. निर्मार्गतः । घ. निमज्जतः । १९ क. ख. 'पि शेत प्रो' । २० ङ. प्रोवाच नाद्रिकुञ्जेतिकुञ्जे रुहुर्मारु' । २१ ग. 'सङ्के क्षगाकाम' । घ. संघेक्षणा काम° । ङ. °सङ्क्षेक्षगकाम° । २२ ग. 'द्युतिः खे° । घ. द्युति खे' । ङ. द्युतिवानरा' । २३ ग. घ. °त्प्रकारो गणे वासितुं म° । ङ. 'त्प्रकारा गणे, वासितुर्मन्द° । २४ ग. घ. °म्बुजः । सि' । २५ ग. 'क्षमावा' । २६ ग. घ. ततः । २७ग. °क्षणं नृ° । २८ ङ. प्रनृत्यन्क्षणं ।

क्षणं सिंहनादाकुले गण्डशैले सृजद्रत्नजाले बृहत्सालताले ।
क्षणं फुल्लनानातमालालिकाले क्षणं वृक्षमूले विलोलो मराले ॥ ५७६ ॥
क्षणे स्वल्पपङ्के जले पङ्कजाढ्ये क्षणं मातुरङ्के शुभे निष्कलङ्के ।
परिक्रीडते बाललीलाविहारी गणेशाधिपो देवतानन्दकारी ॥
निकुञ्जेषु विद्याधरैर्गीतशीलः पिनाकीव लीलाविलासैः सलीलः ॥५७७॥

प्रकाश्य भुवनाभोगी ततो दिनकरे गते । देशान्तरं तदा पश्चाद्दूरमस्तावनीधरम्॥ ५७८
उदयास्ते पुरोभावी यो हि चाऽऽस्तेऽवनीधरः । मित्रत्वमस्य सुदृढं हृदये परिचिन्त्यताम् ॥
नित्यमाराधितः श्रीमान्पृथुमूलः समुन्नतः । नाकरौत्सेवितुं मेरुरुपहारं पतिष्यतः ॥ ५८०
*जलेऽप्येषा व्यवस्थेति संशयेताखिलं बुधः । दिनान्तानुगतो भानुः स्वजनत्वमपूरयत् ॥
संध्याबद्धाञ्जलिपुटा मुनयोऽभिमुखा रविम् । याचन्त्यागमनं शीघ्रं निर्वार्याऽऽत्मनि भाविताम् ॥५८२
व्यजृम्भेत तथा लोके क्रमाद्वैभावरं तमः । कुटिलस्येव हृदये कालुष्यं दूषयन्मनः ॥५८३
ज्वलत्फणिफणारत्नदीपोद्योतितभित्तिके । शयनं शशिसंघातशुभ्रवस्त्रोत्तरच्छदम्॥ ५८४
नानारत्नद्युतिलसच्छक्रचापविडम्बकम् । रत्नकिङ्किणिकाजालं लम्बमुक्ताकलापकम् ॥
कमनीयचलल्लोलवितानाच्छादिताम्बरम् । मन्दिरे मन्दसंचारः शनैर्गिरिसुतायुतः॥ ५८६
तस्थौ गिरिसुताबाहुलतामीलितकंधरः । शशिमौलिसितज्योत्स्ना शुचिपूरितगोचरः ॥
गिरिजाऽप्यसितापाङ्गी नीलोत्पलदलच्छविः । विभावर्या च संपृक्ता बभूवातितमोमयी ॥
तमुवाच ततो देवः क्रीडाकेलिकलायुतम् ॥ ५८८ ॥

इति श्रीमात्स्ये महापुराणे कुमारसंभवे चतुष्पञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८३९१

---

अथ पञ्चपञ्चाशदधिकशततमोऽध्यायः ।

---

शर्व उवाच—

शरीरे मम तन्वङ्गि सिते भास्यसितद्युतिः । भुजङ्गीवासिता शुद्धा संश्लिष्टा चन्दने तरौ ॥
चन्द्रातपेन संपृक्ता रुचिराम्बरया तथा । रजनीवासिते पक्षे दृष्टिदोषं ददासि मे ॥ २
इत्युक्ता गिरिजा तेन मुक्तकण्ठा पिनाकिना । उवाच कोपरक्ताक्षी भ्रुकुटीकुटिलानना॥

---

* एतदर्धस्थानेऽय पाठो ङ. पुस्तके–जातदोषं व्यवस्थेनि संश्रयेन्न खलं बुध इति ।

---

१ ग. ङ. 'तारेक्षणः । फु' । २ ङ. प्रभास्य भुवनाभोगं त° । ३ ङ. 'ते । दशान्तरं तदाऽऽमन्त्र्य दूरं चास्ता' । ४ ग. घ. पुरा । ५ ग. घ. वील्याहेवास्ते° । ६ ग. घ. °रिनिन्ध तु । नि° । ङ. रिचिन्तयन् । नि° । ७ ङ. 'रोत्सवितुर्मेरुरुपकारं प° । ८ ख °तः । यतिष्ये माव्य' । ग. घ. जनिष्ये याव्य' । ९ ख. ग. घ. 'येणाखि' । १० ग. ङ. दिनेनानु' । ११ ङ. 'नुः सुज' । १२ ङ. °पूजयन् । सं° । १३ ङ. रवेः । १४ ग. °वार्योम्लानिमागता । व्य° । घ. 'वार्योम्ज्ञानिभाविता । व्य° । ङ वार्योष्णातिभाविता । व्य° । १५ क. ख. °म्भदथ लोकेऽस्मिन्क्रमा' । १६ ग. हृदयं । १७ ङ. त्तिकम् । श° । १८ ग. शयने । १९ ङ. 'लं वरमुं । ० ग. °म् । शृङ्गारम° । २१ घ. मन्दरे । ङ. मन्दारमन्दसंचारैः । श' । २२ ङ. 'तावलित' । २३ 'सत्स्नस्फारपूरितगोपुरः । २४ 'युताम् । २५ ग. ङ. च. शुभ्रे । घ. शुभ्रौ ।

देव्युवाच—

स्वकृतेन जनः सर्वो जाड्येन परिभूयते । अवश्यमर्थी प्राप्नोति खण्डनां जनमण्डले ॥ ४

तपोभिर्दीर्घचरितैर्यच्च प्रार्थितवत्यहम् । तस्या मे नियतस्त्वेष ह्यवमानः पदे पदे ॥ ५

नैवास्मि कुटिला शर्व विषमा नैव धूर्जटे । सविषयस्त्वं गतः ख्यातिं व्यक्तदोषाकराश्रयः

नाहं पूष्णोऽपि दशना नेत्रे चास्मि भगस्य हि । आदित्यश्च विजानाति भगवान्द्वा-
दशात्मकः ॥ ७

मूर्ध्नि शूलं जनयसि स्वैर्दोषैर्मामधिक्षिपन् । यस्त्वं मामाह कृष्णेति महाकालेति विश्रुतः॥

यास्याम्यहं परित्यक्त्वा चाऽऽत्मानं तपसा गिरिम् । जीवन्त्या नास्ति मे कृत्यं धूर्तेन
परिभूतया ॥ ९

निशम्य तस्या वचनं कोपतीक्ष्णाक्षरं भवः । उवाचाऽऽविष्टसंभ्रान्तिप्रणयोन्मिश्रया गिरा॥

शर्व उवाच—

अनात्मज्ञासि गिरिजे नाहं निन्दापरस्तव । त्वद्भक्तिबुद्ध्या कृतवांस्तवाहं नामसंश्रयम् ॥

विकल्पः स्वस्थचित्तेऽपि गिरिजे नैव कल्पना । यद्येवं कुपिता भीरु त्वं तवाहं न वै पुनः॥

नर्मवादी भविष्यामि जहि कोपं शुचिस्मिते । शिरसा प्रणतश्चाहं रचितस्ते मयाऽञ्जलिः॥

स्नेहेनाप्यवमानेन निन्दितेनैति विक्रियाम् । तस्माच्च जातु रुष्टस्य नर्मस्पृष्टो जनः किल॥

अनेकैश्चाटुभिर्देवी देवेन प्रतिबोधिता । कोपं तीव्रं न तत्याज सती मर्मणि घट्टिता ॥ १५

अयत्नधमर्थोऽऽस्फाल्य वासः शंकरपाणिना । विपर्यस्तालका वेगाद्यातुमैच्छत शैलजा ॥

तस्या व्रजन्त्याः कोपेन पुनराह पुरान्तकः । सत्यं सर्वैरवयवैः सुताऽसि सदृशी पितुः॥ १७

हिमाचलस्य शृङ्गैस्तैर्मेघजालाकुलैर्नभः । तथा दुरवगाह्येभ्यो हृदयेभ्यस्तवाऽऽशयः ॥ १८

काठिन्यात्कुस्त्वमस्मभ्यं वनेभ्यो बहुधा गता । कुटिलत्वं च वर्त्मभ्यो दुःसेव्यत्वं हिमादपि ॥

*संक्रान्तं सर्वदेवेति तस्माद्धि हिमशैलराट् ॥ १९

इत्युक्ता सा पुनः प्राह गिरिशं शैलजा तदा । कोपकम्पितमूर्धा च प्रस्फुरद्दशनच्छदा॥ २०

उमोवाच—

मा सर्वान्दोषदानेन निन्दान्यान्गुणिनो जनान् । तवापि दुष्टसंपर्कात्संक्रान्तं सर्वमेव हि ॥

---

* एतदर्धस्थानेऽयं पाठो ङ. पुस्तके–संक्रान्तं सर्वमेवैतत्तन्धाशि हिमभूधरात् । इति ।

---

१ क. ख. ग 'भर्गात्प्राप्तो' । घ. मर्गान्प्राप्तो' । २ क. ख. °वदनं शशिमण्डन । त° । ३ ङ. 'दीप्तचरितै-र्या त्वां प्रा° । ४ क. ख. व्यक्तं दो° । ५ क ख. 'श्रयात् । ना° । ६ ङ. दोषं । ७ ङ कालोऽसि वि' । ८ ग. घ. 'ज्ञकना' । ङ. त्वमनुमात्मा' । ९ ङ निरम् । १० क. ख. °चाधिकसंभ्रान्तः प्रणयेनेन्दुमौलिना । श° । ११ ग. घ. °संभ्रान्तप्रणयेनेन्दुमौलिना श° १२ क. ख. घ. अगात्म' । १३ ग. 'व । चाटूक्तिबुद्धिं कृ° । ङ. °व । वाचं बुध्या तु कृ° । १४ ङ. 'श्रयाम् । वि' । १५ ग. घ. °कल्पस्त्वच्छचित्तेति गिरिजेपावधिकमात् । य° । १६ ङ. सेतिगिरिजैषा मतिभ्र-मात् । य° । १७ ङ. ततोऽहं न ते पु° । १८ ग. °लिः । हीने नाप्य° । घ. °लिः । हानेनाथवमा° । ङ. °लिः हानेनाप्यु-पमा° । १९ ङ. न्दितो नै' । २० ग. स्मान्ना जातुरुष्टः स्यान्नमा स्पृ° । घ. °स्मान्नाजा° । २१ ङ. रुष्टः स्यान्नर्म° । २२ ङ. पीडिता । २३ ग. °थास्योय या' । घ. °थाऽऽस्फोटय वा° । २४ ग. घ. ङ. °लैर्मनः । त° । २५ ग. 'ठिन्यं कस्त-मस्मभ्यो व° । घ. °ठिन्यकुत्स्वमस्मभ्यो व° । ङ. 'ठिन्यं दृढमस्मभ्यो व° । च. ठिन्यं कर्मकर्मभ्यो धनेशाद्बहु° । २६ च. °पद्मरक्तनयना प्र° । २७ ग. °र्धानं प्र° । २८ ग. च. । स्यात्सर्वात्मोपमाने° । २९ ङ. निन्दत्वं गुणि° ।

व्यालेभ्योऽनेकजिह्वत्वं भस्मना स्नेहबन्धनम् । हृत्कालुष्यं शशाङ्कात्तु दुर्बोधित्वं वृषादपि ॥
तथा बहु किमुक्तेन अलं वाचा श्रमेण ते[3] । श्मशानवासान्निर्भीस्त्वं नग्नत्वान्न तव त्रपा
निर्घृणत्वं कपालित्वाद्दया ते विगता चिरम् ।

सूत उवाच—

इत्युक्त्वा मन्दिरात्तस्मान्निर्जगाम हिमाद्रिजा ॥ २४
तस्यां व्रजन्त्यां देवेशगणैः किलकिलो ध्वनिः । क्व मातर्गच्छसि त्यक्त्वा रुदन्तो धाविताः पुनः ॥ २५
विष्टभ्य चरणौ देव्या वीरको बाष्पगद्गदम् । प्रोवाच मातः किंत्वेतत्क्व यासि कुपितान्तरा
अहं त्वामनुयास्यामि व्रजन्तीं स्नेहवर्जिताम् । नो चेत्पतिष्ये शिखरात्तपोनिष्ठे त्वयोज्झितः
उन्नाम्य वदनं देवी दक्षिणेन तु पाणिना । उवाच वीरकं माता शोकं पुत्रक मा कृथाः ॥
शैलाग्रात्पतितुं नैव नं चाऽऽगन्तुं मया सह । युक्तं ते पुत्र वक्ष्यामि येन कार्येण तच्छृणु ॥ २९
कृष्णेत्युक्त्वा हरेणाहं निन्दिता चाप्यनिन्दिता । साऽहं तपः करिष्यामि येन गौरीत्वमाप्नुयाम् ॥ ३०
एष स्त्रीलम्पटो देवो यातायां मय्यनन्तरम् । द्वाररक्षा त्वया कार्या नित्यं रन्ध्रान्ववेक्षिणा ॥
यथा न काचित्प्रविशेद्योषिदत्र हरान्तिकम् । दृष्ट्वा परां स्त्रियं चात्र वदेथा मम पुत्रक ॥ ३२
शीघ्रमेव करिष्यामि यथायुक्तमनन्तरम् । एवमस्त्विति देवीं स वीरकः प्राह सांप्रतम् ॥ ३३
मातुराज्ञामृताह्लादप्लाविताङ्गो गतज्वरः । जगाम कक्षां संद्रष्टुं प्रणिपत्य च मातरम् ॥ ३४

इति श्रीमात्स्ये महापुराणे कुमारसंभवे देव्यास्तपोऽनुगमनं नाम पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

आदितः श्लोकानां समष्ट्यङ्काः—८४२५

---

अथ षट्पञ्चाशदधिकशततमोऽध्यायः ।

---

सूत उवाच—

देवीं साऽपश्यदायान्तीं सखीं मातुर्विभूषिताम् । कुसुमामोदिनीं नाम तस्य शैलस्य देवताम् ॥
साऽपि दृष्ट्वा गिरिसुतां स्नेहविक्लवमानसा । क्व पुत्रि गच्छसीत्युच्चैरालिङ्ग्योवाच देवता ॥ २
सा चास्यै सर्वमाचख्यौ शंकरात्कोपकारणम् । पुनश्चोवाच गिरिजा देवतां मातृसंमताम् ॥

उमोवाच—

नित्यं शैलाधिराजस्य देवता त्वमनिन्दिते । सर्वतः संनिधानं ते मम चातीव वत्सला ॥ ४

---

१ क. ख. ॰भ्योऽधिकजिह्मत्वं । २ ङ. ॰ङ्कते दुर्बोधत्वं । ३ ग ङ. मे । ४ ग. ङ. ॰च्छसीत्युक्त्वा । ५ ग. ङ. द्रदः । प्रो॰ । ६ ग. घ. ङ. ॰ता त्वरा । ७ ग. घ ॰म् । नाहं सहिष्ये । ङ. ॰म् । नाहं सहिष्ये पुरुषं गिरिशस्य त्वयो॰ जितः॰ । ८ ग राम्निपातिष्येत्व॰ । ङ. राद्रिरेरस्य स्त्र॰ । ९ ग. घ. ॰ता मा शोकं पुत्र भावय । शै॰ । १० ग. घ. नचग॰ । ११ ङ. ॰सा शरणं गता! । १२ ङ. ॰वेक्षणात् । य॰ । १३ क. ख. परास्त्रियश्चात्र । १४ ङ. ॰ह सत्वरम् । मा॰ । १५ ग. ॰दमाविता॰ । ङ. दरेचिता॰ । १६ ग. ॰म शंकरं द्र॰ । १७ क. ख. कक्ष्यां । १८ ङ. देवीमपश्यच्चाऽऽयान्ती सतीं मातावि॰ । १९ ग. सुतां । घ. सतीं । २० ङ. ॰भूषणाम् । कु॰ । २१ ग. घ. ॰दिनी ना॰ । २२ ग. घ. ता । सा । २३ ङ. पुनर्गच्छ॰ । २४ ग. ॰करोत्कोप॰ । २५ ङ. ॰देवीं तां । २६ ग. ॰संगता॰ ।

अतस्तु[1] ते प्रवक्ष्यामि यद्विधेयं[2] तदा धिया । अन्यस्त्रीसंप्रवेशस्तु त्वया[3] रक्ष्यः प्रयत्नतः ॥ ५
रहस्यत्र[4] प्रयत्नेन चेतसा सततं गिरौ । पिनाकिनः प्रविष्टायां वक्तव्यं मे त्वयाऽनघे ॥ ६
ततोऽहं संविधास्यामि यत्कृत्यं[5] तदनन्तरम् । इत्युक्त्वा सा तथेत्युक्त्वा जगाम स्वगिरिं शुभम्॥
[* उमाऽपि पितुरुद्यानं जगामाद्रिसुता द्रुतम् । अन्तरिक्षं समाविश्य मेघमालामिव[6] प्रभा॥
ततो विभूषणान्यस्य वृक्षवल्कलधारिणी । ग्रीष्मे पञ्चाग्निसंतप्ता वर्षासु च जलोषिता[7] ॥ ९
शैशिरासु च रात्रीषु शुष्कस्थण्डिलशायिनी । एवं साधयती(न्ती) तत्र तपसा संव्यवस्थिता
ज्ञात्वा तु तां गिरिसुतां दैत्यस्तत्रान्तरे[8] वशी । अन्धकस्य सुतो दृप्तः पितुर्वधमनुस्मरन् ॥ ११
देवान्सर्वान्विजित्याऽऽजौ बकभ्राता[9] रणोत्कटः । आडिर्नामाऽन्तरप्रेक्षी सततं चन्द्रमौलिनः
आजगामामररिपुः पुरं त्रिपुरघातिनः । स तत्राऽऽगत्य ददृशे वीरकं द्वार्यवस्थितम् ॥ १३
विचिन्त्याऽऽसीद्वरं दत्तं स पुरा पद्मजन्मना । हते तदाऽन्धके[11] दैत्ये गिरिशेनामरद्विषि ॥ १४
आडिश्चकार विपुलं तपः परमदारुणम् । तमागत्याब्रवीद्ब्रह्मा तपसा परितोषितः ॥ १५
किमाडे दानवश्रेष्ठ तपसा प्राप्तुमिच्छसि । ब्रह्माणमाह दैत्यस्तु निर्मृत्युत्वमहं वृणे ॥ १६

ब्रह्मोवाच—

न काश्चिच्च विना मृत्युं नरो दानव विद्यते । यतस्ततोऽपि दैत्येन्द्र मृत्युः प्राप्यः शरीरिणा॥ १७
इत्युक्तो दैत्यसिंहस्तु प्रोवाचाम्बुजसंभवम् । रूपस्य परिवर्तो मे यदा स्यात्पद्मसंभव ॥ १८
तदा मृत्युर्मम भवेदन्यथा त्वमरो ह्यहम् । इत्युक्तस्तु तदोवाच तुष्टः कमलसंभवः ॥ १९
यदा द्वितीयो रूपस्य विवर्तस्ते भविष्यति । तदा ते भाविता मृत्युरन्यथा न भविष्यति ॥ २०
इत्युक्तोऽमरतां मेने दैत्यसूनुर्महाबलः । तस्मिन्काले तु संस्मृत्य तद्वधोपायमात्मनः ॥ २१
परिहर्तुं दृष्टिपथं वीरकस्याभवत्तदा । भुजंगरूपी रन्ध्रेण प्रविवेश दृशः+ पथम् ॥ २२
परिहृत्य गणेशस्य दानवोऽसौ सुदुर्जयः । अलक्षितो गणेशेन प्रविष्टोऽथ पुरान्तकम्[12] ॥ २३
भुजंगरूपं संत्यज्य बभूवाथ महासुरः । उमारूपी छलयितुं गिरिशं मूढचेतनः ॥ २४
कृत्वा मायां ततो रूपमप्रतर्क्यमनोहरम् । सर्वावयवसंपूर्णं सर्वाभिज्ञानसंवृतम् ॥ २५
कृत्वा मुखान्तरे दन्तान्दैत्यो वज्रोपमान्दृढान् । तीक्ष्णाग्रान्बुद्धिमोहेन गिरिशं हन्तुमुद्यतः॥
कृत्वोमारूपसंस्थानं गतो दैत्यो हरान्तिकम् । पापो रम्याकृतिश्चित्रभूषणाम्बरभूषितः ॥
तं दृष्ट्वा गिरिशस्तुष्टस्तदाऽऽलिङ्ग्य महासुरम् । मन्यमानो गिरिसुतां सर्वैरवयवान्तरैः ॥२८
अपृच्छत्साधु ते भावो गिरिपुत्रि न कृत्रिमः । या त्वं मदाशयं ज्ञात्वा प्राप्तेह वरवर्णिनी॥ २९
त्वया विरहितं शून्यं मन्यमानो जगत्त्रयम् । प्राप्ता प्रसन्नवदना युक्तमेवंविधं त्वयि ॥ ३०
इत्युक्तो दानवेन्द्रस्तु[13] तदाऽभाषत्स्मयञ्छनैः ] । न चाबुध्यदभिज्ञानं प्रायस्त्रिपुरघातिनः॥ ३१

---

* धनुश्चिह्नान्तर्गतग्रन्थो क. पुस्तके नास्ति । + अत्र प्रविवेश च दृक्पथमितियुक्तम् ।

---

१ ङ. °स्तु संप्र° । २ ङ यद्यत्कार्यंत्वयावि° । ३ ग. त्वया । ४ ग. °हस्यं तु प्र° । क. °हस्यस्याप्रमत्तेन । ५ ग. यत्क्षमंत° । ङ. यत्कमंत° । ६ ग. °लाविलप्रभम् । त° । ७ क. ख. °ता । वन्याहारा निराहारा शुष्का स्थ° । ८ क. यली । ९ क ग. °कन्नाता । १० घ पृथक् । ११ ग. घ. क्के । १२ ग. घ. भगान्तरे । १३ ग. °स्तु समभाषत्तदा शनैः ।

देव्युवाच—

याताऽस्म्यहं तपश्चर्तुं वाल्लभ्याय तवातुलम् । रतिश्च तत्र मे नाभूत्ततः प्राप्ता त्वदन्तिकम् ॥
इत्युक्तः शंकरः शङ्कां[1] कांचित्प्राप्यावधारयत्[2] । हृदयेन समाधाय देवः प्रहसिताननः ॥ ३३
कुपिता मयि तन्वङ्गी प्रकृत्या च दृढव्रता । अप्राप्तकामा संप्राप्ता किमेतत्संशयो मम ॥ ३४
इति चिन्त्य हरस्तस्या अभिज्ञानं विधारयन् । नापश्यद्वामपार्श्वे तु तदङ्गे[3] पद्मलक्षणम् ॥ ३५
लोमावर्तं तु रचितं ततो देवः पिनाकधृक् । अबुध्यद्दानवीं मायामाकारं गूहयंस्ततः ॥ ३६
मेढ्रे वज्रास्त्रमादाय दानवं तमसूदयत्[4] । अबुध्यद्वीरको नैव दानवेन्द्रं निषूदितम्[5] ॥ ३७
हरेण सूदितं दृष्ट्वा स्त्रीरूपं दानवेश्वरम् । अपरिच्छिन्नतत्त्वार्था[6] शैलपुत्र्यै न्यवेदयत् ॥ ३८
दूतेन मारुतेनाऽऽशुगामिना नगदेवता[7] । श्रुत्वा वायुमुखाद्देवी क्रोधरक्तविलोचना ॥
अशपद्वीरकं पुत्रं हृदयेन विदूयता ॥

इति श्रीमात्स्ये महापुराणे कुमारसंभव आडिवधो नाम षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

आदितः श्लोकानां समष्टचङ्काः ॥ ८४६४ ॥

---

अथ सप्तपञ्चाशदधिकशततमोऽध्यायः ।

---

देव्युवाच—

मातरं मां परित्यज्य यस्मात्त्वं स्नेहविक्लवाम्[8] । विहितावसरः स्त्रीणां शंकरस्य रहोविधौ ॥ १
तस्मात्ते परुषा रूक्षा जडा हृदयवर्जिता । गणेश क्षारसदृशी[9] शिला माता भविष्यति ॥ २
निर्मित्तमेतद्विख्यातं[10] वीरकस्य शिलोदये । सोऽभवत्प्रक्रमेणैव विचित्राख्यानसंश्रयः ॥ ३
एवमुत्सृष्टशापाया गिरिपुत्र्यास्त्वनन्तरम् । निर्जगाम मुखात्क्रोधः सिंहरूपी महाबलः[11] ॥ ४
स तु सिंहः करालास्यो[12] जटाजटिलकंधरः । प्रोद्धूतलम्बलाङ्गूलो दंष्ट्रोत्कटमुखातटः ॥ ५
व्यादितास्यो[13] ललज्जिह्वः क्षामकुक्षिश्चिखादिपुः[14] । तस्याऽऽशु वर्तितुं देवी व्यवस्यत सती तदा
ज्ञात्वा मनोगतं तस्या भगवांश्चतुराननः । आजगामाऽऽश्रमपदं संपदामाश्रयं तदा ॥
आगम्योवाच देवेशो गिरिजां स्पष्टया गिरा ॥ ७

ब्रह्मोवाच—

किं पुत्रि प्राप्तुकामाऽसि किमलभ्यं ददामि ते । विरम्यतामतिक्लेशात्तपसोऽस्मान्मदाज्ञया ॥
तच्छ्रुत्वोवाच गिरिजा गुरोर्गौरवगर्भितम्[15] । वाक्यं वाचा चिरोद्गीर्णवर्णनिर्णीतवाञ्छितम्[16] ॥

देव्युवाच—

तपसा दुष्करेणाऽऽप्तः पतित्वे शंकरो मया । स मां श्यामलवर्णेति बहुशः प्रोक्तवान्भवः[17] ॥ १०

---

१ ङ. °श्ङ्कां कंचि° । २ ग. विचारयत् । ३ ग. घ ङ. तस्याङ्क प° । ४ ग. घ. ङ. °मशातय° । ५ ङ. नैत· द्दानवेद्रनिपूदनम् । कुसुमाभेदिनी ह° । ६ ङ. °त्त्वार्थं शै° । ७ ङ. वनदेवता । ८ क. ख. ग. °क्लवात् । वि° । ९ ङ. °णेशाक्षरसंयुक्ता शि° । १० ङ. °त्तएव व्याख्यातो वीरकस्य सुतादरात् । शंभवेऽपक्रमेणैव विचित्राख्यो न संशयः । ११ ग. घ. °लः । सुव्रः सिं° । १२ ङ. °लाक्षो ज° । १३ क ख. व्यावृत्ता° । १४ क. ख. °कुक्षिः शिरादिपु । त° । ग. घ. °कुक्षिः शिखा° । १५ क. ख. गुरुं गौर° । १६ ङ. °र्णं निर्णीतं चित्तवाञ्छया । १७ ङ. °वान्हरः । श्यामाहं ।

स्यामहं काञ्चनाकारा वाल्लभ्येन च संयुता । भर्तुर्भूतपतेरङ्गमेकतो निर्विशेऽङ्गवत् ॥ ११
तस्यास्तद्भाषितं श्रुत्वा प्रोवाच कमलासनः । एवं भव त्वं भूयश्च भर्तृदेहार्धधारिणी ॥ १२
ततस्तत्याज भृङ्गाङ्गं फुल्लनीलोत्पलत्वचम् ॥ १३
त्वचा सा चाभवद्दीप्ता घण्टाहस्ता त्रिलोचना । नानाभरणपूर्णाङ्गी पीतकौशेयधारिणी ॥
तामब्रवीत्ततो ब्रह्मा देवीं नीलाम्बुजत्विषम् । निशे भूधरजादेहसंपर्कात्त्वं ममाऽऽज्ञया ॥ १५
संप्राप्ता कृतकृत्यत्वमेकाऽनंशा पुरा ह्यसि । य एष सिंहः प्रोद्भूतो देव्याः क्रोधाद्वरानने ॥ १६
स तेऽस्तु वाहनं देवि केतौ चास्तु महाबलः । गच्छ विन्ध्याचलं तत्र सुरकार्यं करिष्यसि ॥ १७
पञ्चालो नाम यक्षोऽयं यक्षलक्षपदानुगः । दत्तस्ते किंकरो देवि मया मायाशतैर्युतः ॥ १८
इत्युक्ता कौशिकी देवी विन्ध्यशैलं जगाम ह । उमाऽपि प्राप्तसंकल्पा जगाम गिरिशान्तिकम्
प्रविशन्तीं तु तां द्वारादपकृष्य समाहितः । रुरोध वीरको देवीं हेमवेत्रलताधरः ॥ २०
तामुवाच स कोपेन रूपात्तु व्यभिचारिणीम् । प्रयोजनं न तेऽस्तीह गच्छ यावन्न भेत्स्यसे २१
देव्या रूपधरो दैत्यो देवं वञ्चयितुं त्विह । प्रविष्टो न च दृष्टोऽसौ स वै देवेन घातितः ॥ २२
घातिते चाहमाज्ञप्तो नीलकण्ठेन कोपिना । द्वारेषु नावधानं ते यस्मात्पश्यामि वै ततः ॥ २३
भविष्यसि न मद्द्वाःस्थो वर्षपूगान्यनेकशः । अतस्तेऽत्र न दास्यामि प्रवेशं गम्यतां द्रुतम् २४

इति श्रीमात्स्ये कुमारसंभवे वीरकशापो नाम सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ८४८८ ॥

अथाष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

वीरक उवाच(?)—

एवमुक्त्वा गिरिसुता माता मे स्नेहवत्सला(?) । प्रवेशं लभते नान्या नारी कमललोचने ॥ १
इत्युक्ता तु तदा देवी चिन्तयामास चेतसा । न सा नारीति दैत्योऽसौ वायुर्मे यामभाषत ॥ २
वृथैव वीरकः शप्तो मया क्रोधपरीतया । अकार्यं क्रियते मूढैः प्रायः क्रोधसमीरितैः ॥ ३
क्रोधेन नश्यते कीर्तिः क्रोधो हन्ति स्थिरां श्रियम् । अपरिच्छिन्नतत्त्वार्था पुत्रं शापितवत्यहम्
विपरीतार्थबुद्धीनां सुलभो विपदोदयः ॥ ४
संचिन्त्यैवमुवाचेदं वीरकं प्रति शैलजा । लज्जासज्जविकारेण वदनेनाम्बुजत्विषा ॥ ५

देव्युवाच—

अहं वीरक ते माता मा तेऽस्तु मनसो भ्रमः । शंकरस्यास्मि दयिता सुता तुहिनभूभृतः ॥ ६
मम गात्रच्छविभ्रान्त्या मा शङ्कां पुत्र भावय । तुष्टेन गौरता दत्ता ममेयं पद्मजन्मना ॥ ७
मया शप्तोऽस्यविदिते वृत्तान्ते दैत्यनिर्मिते । ज्ञात्वा नारीप्रवेशं तु शंकरे रहसि स्थिते ॥ ८

---

१ ङ. 'कारवर्णवल्लभ्रसं' । २ ङ. निशिताभवम् । त° । ३ ङ. 'वतु भू° । ४ ग. घ. वद्धीमा घ° । ५ ग. घ. निशि । ६ ङ. 'देहे संक्रान्ता त्वं मदाज्ञ° । ७ ङ. संभूतो । ८ ङ. 'यामांसाशनैर्यु° । ९ क. ख. ग. द्वारि लप' । १० ङ. °पारत्रव्य° । ११ ग. घ. °णी । प्र° । १२ क. ख. घ. 'त्स्यसि । दे' । १३ ङ. न मे द्वाःस्थो । १४ ङ °सुतां मातरं स्नेहवल्लभाम् । प्र° । १५ ङ. अहार्यं । १६ ङ. °र्थतो नृणां सु' । १७ ङ. 'आलज्जाधिसारे' । १८ ङ. 'निर्वृते ।

न निवर्तयितुं शक्यः शापः किं तु ब्रवीमि ते। शीघ्रमेष्यसि मानुष्यात्त्वं कामसमन्वितः

– सूत उवाच—

शिरसा तु ततो वन्द्य मातरं पूर्णमानसः। उवाचोदितपूर्णेन्दुद्युतिं च हिमशैलजाम् ॥ १०

वीरक उवाच—

नतसुरासुरमौलिमिलन्मणिप्रचयकान्तिकरालनखाङ्किते।
नगसुते शरणागतवत्सले तव नतोऽस्मि नतार्तिविनाशिनि ॥ ११
तपनमण्डलमण्डितकंधरे पृथुसुवर्णसुवर्णनगद्युते।
विषभुजंगनिषङ्गविभूषिते गिरिसुते भवतीमहमाश्रये ॥ १२
जगति कः प्रणताभिमतं ददौ झटिति सिद्धनुते भवती यथा।
जगति कां च न वाञ्छति शंकरो भुवनधृत्तनये भवतीं यथा ॥ १३
विमलयोगविनिर्मितदुर्जयस्वतनुतुल्यमहेश्वरमण्डले।
विदलितान्धकबान्धवसंहतिः सुरवरैः प्रथमं त्वमभिष्टुता ॥ १४
सितसटापटलोद्धतकंधराभरमहामृगराजरथस्थिता।
विमलशक्तिमुखानलपिङ्गलायतभुजौघविपिष्टमहासुरा ॥ १५
निगदिता भुवनैरिति चण्डिका जननि शुम्भनिशुम्भनिषूदनी।
प्रणतचिन्तितदानवदानवप्रमथनैकरतिस्तरसा भुवि ॥ १६
वियति वायुपथे ज्वलनोज्ज्वलेऽवनितले तव देवि च यद्वपुः।
तदजितेऽप्रतिमे प्रणमाम्यहं भुवनभाविनि ते भववल्लभे ॥ १७
जलधयो ललितोद्धतवीचयो हुतवहद्युतयश्च चराचरम्।
फणसहस्रभृतश्च भुजंगमास्त्वदभिधास्यति मेऽप्यभयंकराः ॥ १८
भगवति स्थिरभक्तजनाश्रये प्रतिगतो भवतीचरणाश्रयम्।
करणजातमिहास्तु ममाचलं नुतिलवाप्तिफलाशयहेतुतः ॥
प्रशममेहि ममाऽऽत्मजवत्सले तव नमोऽस्तु जगत्त्रयसंश्रये ॥ १९
*त्वयि ममास्तु मतिः सततं शिवे शरणगोऽस्मि नतोऽस्मि नमोऽस्तु ते ॥

सूत उवाच—

प्रसन्ना तु ततो देवी वीरकस्येति संस्तुता। प्रविवेश शुभं भर्तुर्भवनं भूधरात्मजा ॥ २०
[+अथ रुद्रो महागौरीं गौरीं दृष्ट्वा तु सुन्दरीम्। चित्तव्यामोहनाकारां करीन्द्रोन्मत्तगामिनीम्

* एतदर्धं न विद्यते क. ख. ग. घ. पुस्तकेषु। + धनुश्चिह्नान्तर्गतग्रन्थो ङ. पुस्तके वर्तते।

१ ङ. °ष्यति मे तुष्ट्या सर्वकाम°। २ क ख. ग. °वाचार्चित°। ३ ङ. °तिं तुहिनशै°। ४ ग. घ. °णैसव° ५ ङ. °ते प्रणतोऽस्मि महाश्र°। ६ ङ °तिकाभिमनामतार्थदा ह्य°। ७ घ. का। ८ ङ. °द्रमुनौ भ°। ९ ग. °ति कंचनभिच्छसि शेखरो भवनं भक्तनयो भवती य°। ङ. °ति सामनमघशशिशेखरो भुवनभृन्मुनयो भवती य°। १० ग. घ. ङ. °ण्डली। वि°। ११ ङ. °दलपाधक°। १२ ङ. °तपदाप°। १३ क. ख. °रथास्थि°। १४ ङ. °गमिता। १५ ङ. निमूदिनी। १६ ग. °षूदिनी। १७ ङ. °सा तनुम्। चलति। १८ ङ. वयद्वपुरास्थिके। त°। १९ ङ. °युतिदग्धचराचरे। फणिस°। २० ङ. °दधिगम्यत देवि भ°। २१ ग. °तिनानम°। २२ ग. घ. ङ. °लाश्रयलेशतः। प्र°। २३ क. ख. ग. °ले नमोऽस्तु ते देवि जगत्त्रयाश्र°।

पूर्णचन्द्राननां तन्वीं नितम्बोरुघनस्तनीम् । मध्ये क्षामां तथाऽक्षीणलावण्यामृतवर्षिणीम्॥
सर्वाभरणपूर्वाङ्गीं मदो मन्देन कारिणीम्(?)। सकामः शङ्कितो दीनो रौद्रो वीरो भयानकः॥
करुणाहास्यबीभत्सकिंचित्किंचिद्भरोऽभवत(?)। जिघांसुर्दैववाक्येन भैरवं कृतवान्वपुः ॥
सा चापि भैरवी जाता देवस्य प्रतिरूपिणी । तस्या रूपसहस्राणि ददर्श गिरिगोचरः ॥ २५
ग्रस्ते सहस्ररूपाणां तारारूपे प्रदर्शिते । पार्वत्या चाथ निःशङ्कः शंकरो वाऽभवत्ततः ॥ २६
दृष्ट्वा जगन्मयीं तां तु *रराम सुरतप्रियः । विरहोत्कण्ठितां मायां प्राप्य भूयो हिमात्मजाम्२७
यावद्वर्षसहस्रान्तमुभयो रहसिस्थयोः । नानाकरणबद्धोत्था क्रीडाऽऽसीत्संतता तयोः ॥]२८
द्वारस्थो वीरको देवान्हरदर्शनकाङ्क्षिणः । व्यसर्जयत्स्वकान्येव गृहाण्यादरपूर्वकम् ॥ २९
नास्त्यत्रावसरो देवा देव्या सह वृषाकपिः । निभृतः क्रीडतीत्युक्ता ययुस्ते च यथागतम्३०
गते वर्षसहस्रे तु देवास्त्वरितमानसाः । ज्वलनं चोदयामासुर्ज्ञातुं शंकरचेष्टितम् ॥ ३१
प्रविश्य जालरन्ध्रेण शुकरूपी हुताशनः । ददृशे शयने शर्वं रतं गिरिजया सह ॥ ३२
ददृशे तं च देवेशो हुताशं शुकरूपिणम् । तमुवाच महादेवः किंचित्कोपसमन्वितः ॥ ३३

शर्व उवाच—

+निषिक्तमर्धं देव्यां मे शुक्रस्य शुकविग्रह । लज्जया विरतिस्थायां त्वमर्धं पिब पावक ॥३४
यस्मात्तु त्वत्कृतो विघ्नस्तस्मात्त्वय्युपपद्यते । इत्युक्तः प्राञ्जलिर्वह्निरपिबद्वीर्यमाहितम् ॥ ३५
तेनापूर्यत तान्देवांस्तत्कायविभेदतः । विपाट्य जठरं तेषां वीर्यं माहेश्वरं ततः ॥ ३६
निष्क्रान्तं तप्तहेमाभं विततं शंकराश्रमे । तस्मिन्सरो महज्जातं विमलं बहुयोजनम् ॥ ३७
प्रोत्फुल्लहेमकमलं नानाविहगनादितम् । तच्छ्रुत्वा तु ततो देवी हेमद्रुममहाजलम् ॥ ३८
जगाम कौतुकाविष्टा तत्सरः कनकाम्बुजम् । तत्र कृत्वा जलक्रीडां तदब्जकृतशेखरा ॥ ३९
उपविष्टा ततस्तस्य तीरे देवी सखीयुता । पातुकामा च तत्तोयं स्वादु निर्मलपङ्कजम् ॥४०
अपश्यत्कृत्तिकाः स्नाताः षड्कंद्युतिसंनिभाः । पद्मपत्रे तु तद्वारि गृहीत्वोपस्थिता गृहम्॥
हर्षादुवाच पश्यामि पद्मपत्रे स्थितं पयः । ततस्ता ऊचुरखिलं कृत्तिका हिमशैलजाम् ॥

कृत्तिका ऊचुः—

दास्यामो यदि ते गर्भः संभूतो यो भविष्यति । सोऽस्माकमपि पुत्रः स्यादस्मन्नाम्ना च वर्तताम् ॥
भवेल्लोकेषु विख्यातः सर्वेष्वपि शुभानने ॥ ४३
इत्युक्तोवाच गिरिजा कथं मद्गात्रसंभवः । सर्वैरवयवैर्युक्तो भवतीभ्यः सुतो भवेत् ॥ ४४
ततस्तां कृत्तिका ऊचुर्विधास्यामोऽस्य वै वयम् । उत्तमान्युत्तमाङ्गानि यद्येवं तु भविष्यति
उक्ता वै शैलजा प्राह भवत्वेवमनिन्दिताः । ततस्ता हर्षसंपूर्णाः पद्मपत्रास्थितं पयः॥४६
तस्यै ददुस्तया चापि तत्पीतं क्रमशो जलम् । पीते तु सलिले तस्मिंस्ततस्तस्मिन्सरोवरे ॥

* रेमे च सुरतप्रिय इति भवितुं युक्तम् । + न विद्यतेऽयं श्लोकः क. ख. ग. पुस्तकेषु ।

१ क. ख. ग. °वंकः । ना° । २ ग. ङ. °स्य पक्षिर° । ३ ग. °ततो देवः स तरका° । ङ. ततो देवा आस° फायविभेदिनः । वि° । ४ क. ख. वितते । ५ ङ. °तं स्मरकानने । त° । ६ ङ. °त्वा च सरो देवी द्रुतहेममहा° । ७ ङ. तीरोद्देशे तृषातुरा । पा°। ८ क ख. निभम् । ष° । ९ ग घ. वर्तते । ङ. कीर्तिमान् । १० ग. ङ. °स्तस्मात्सरोत्तरात् । वि°।

विपाट्य देव्याश्च ततो दक्षिणां कुक्षिमुद्गतः । निश्चक्रामाद्भुतो बालः सर्वलोकविभास्करः॥
प्रभाकरप्रभाकारः प्रकाशकनकप्रभः । गृहीतनिर्मलोदग्रशक्तिशूलः षडाननः ॥ ४०
दीप्तो मारयितुं दैत्यान्कुत्सितान्कनकच्छविः । एतस्मात्कारणाद्देवः कुमारश्चापि सोऽभवत्

इति श्रीमात्स्ये महापुराणे तारकोपाख्याने कुमारसंभवो नामाष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ८५३८ ॥

---

अथ नवपञ्चाशदधिकशततमोऽध्यायः ।

---

सूत उवाच—

वामं विदार्य निष्क्रान्तः सुतो देव्याः पुनः शिशुः । स्कन्दाच्च वदने वह्नेः शुक्रात्सुमनोऽरिहा ॥ १
कृत्तिकामेलनादेव शाखाभिः सविशेषतः । शाखाभिधाः समाख्याताः षट्सु वक्त्रेषु विस्तृताः ॥ २
यतस्ततो विशाखोऽसौ ख्यातो लोकेषु षण्मुखः । स्कन्दो विशाखः षड्वक्त्रः कार्तिकेयश्च विश्रुतः ॥ ३
चैत्रस्य बहुले पक्षे पञ्चदश्यां महाबली । संभूतावर्कसदृशौ विशाले शरकानने ॥ ४
चैत्रस्यैव सिते पक्षे पञ्चम्यां पाकशासनः । बालकाभ्यां चकारैकं मत्वा चामरभूतये ॥५
तस्यामेव ततः षष्ठ्यामभिषिक्तो गुहः प्रभुः । सर्वैरमरसंघातैर्ब्रह्मेन्द्रोपेन्द्रभास्करैः ॥ ६
गन्धमाल्यैः शुभैर्धूपैस्तथा क्रीडनकैरपि । छत्रैश्चामरजालैश्च भूषणैश्च विलेपनैः ॥ ७
अभिषिक्तो विधानेन यथावत्षण्मुखः प्रभुः । सुतामस्मै ददौ शक्रो देवसेनेति विश्रुताम्॥
पत्न्यर्थं देवदेवस्य ददौ विष्णुस्तदाऽऽयुधम् । यक्षाणां दशलक्षाणि ददावस्मै धनाधिपः॥
ददौ हुताशनस्तेजो ददौ वायुश्च वाहनम् । ददौ क्रीडनकं त्वष्टा कुक्कुटं कामरूपिणम् ॥
एवं सुरास्तु ते सर्वे परिवारमनुत्तमम् ॥ १०
ददुर्मुदितचेतस्काः स्कन्दायाऽऽदित्यवर्चसे ॥ ११
जानुभ्यामवनौ स्थित्वा सुरसंघास्तमस्तुवन् । स्तोत्रेणानेन वरदं षण्मुखं मुख्यशः सुराः

देवा ऊचुः—

नमः कुमाराय महाप्रभाय स्कन्दाय च स्कन्दितदानवाय ।
*नवार्कविद्युद्द्युतये नमोऽस्तु ते नमोऽस्तु ते षण्मुख कामरूप ॥ १२

---

* एतदर्धस्थानेऽयंपाठो ङ. पुस्तके—नवार्कबिम्बद्युतये नमस्ते नमोऽस्त्वमोघालयशक्तिपाल । नमो विशाखाय विचारणाय नमोऽस्तु ते षण्मुखकामरूपिन् । इति ।

---

१ ङ. बालो लोकशोकविनाशकः । २ ग. °तविमलोदग्रशक्तिः क्रोधाकुलान° । ३ ङ. °शूलाङ्कुशानलः । दी° । ४ ग. °ष्क्रान्तस्ततो देव्यां उर. शि° । ५ ग. घ. ङ. °कासलिलादे° । ६ ङ. शाखाः शिराः स° । ७ ग. घ. °भिरास° । ८ ङ. वलः । संभूतश्चार्कसदृशो वि° । ९ ङ. °कं संध्याश्चायास्यवेततः । बाल एव । १० क. ख. ग. घ. °स्तदायुधाग् । य° । ११ ङ. मुखराः । १२ ङ. °य चाऽऽस्क° ।

पिनद्धनानाभरणाय भर्त्रे नमो रणे दारुणदारुणाय ।
नमोऽस्तु तेऽर्कप्रतिमप्रभाय नमोऽस्तु गुह्याय गुहाय तुभ्यम् ॥ १४
नमोऽस्तु त्रैलोक्यभयापहाय नमोऽस्तु ते बाल कृपापराय ।
नमो विशालामललोचनाय नमो विशाखाय महाव्रताय ॥ १५
नमो नमस्तेऽस्तु मनोहराय नमो नमस्तेऽस्तु रणोत्कटाय ।
नमो मयूरोज्ज्वलवाहनाय नमोऽस्तु केयूरधराय तुभ्यम् ॥ १६
नमो धृतोदग्रपताकिने नमो नमः प्रभावप्रणताय तेऽस्तु ।
नमो नमस्ते वरवीर्यशालिने कृपापरो नो भव भव्यमूर्ते ॥ १७
क्रियापरा यज्ञपतिं च स्तुत्वा विरेमुरेवं त्वमराधिपाद्याः ।
एवं तदा षड्वदनस्तु सेन्द्रानुवाच तुष्टश्च गुहस्ततस्तान् ॥
निरीक्ष्य नेत्रैरमलैः सुरेशाञ्छत्रून्हनिष्यामि गतज्वराः स्थ ॥ १८

कुमार उवाच—

कं वः कामं प्रयच्छामि देवता ब्रूत निर्वृताः । यद्यप्यसाध्यं हृद्यं वो हृदये चिन्तितं परम् ॥
इत्युक्तास्तु सुरास्तेन प्रोचुः प्रणतमौलयः । सर्व एव महात्मानं गुहं तद्गतमानसाः ॥ २०
दैत्येन्द्रस्तारको नाम सर्वामरकुलान्तकृत् । बलवान्दुर्जयो दुष्टो दुराचारोऽतिकोपनः ॥
तमेव जहि हृद्योऽर्थ एषोऽस्माकं भयापह ॥ २१
एवमुक्तस्तथेत्युक्त्वा सर्वामरपदानुगः । जगाम जगतां नाथः स्तूयमानोऽमरेश्वरैः ॥ २२
तारकस्य वधार्थाय जगतः कण्टकस्य वै । ततश्च प्रेषयामास शक्रो लब्धसमाश्रयः ॥ २३
दूतं दानवसिंहस्य परुषाक्षरवादिनम् । स तु गत्वाऽब्रवीद्दैत्यं निर्भयो भीमदर्शनः ॥ २४

दूत उवाच—

शक्रस्त्वामाह देवेशो दैत्यकेतो दिवस्पतिः । तारकासुर तच्छ्रुत्वा घट शक्त्या यथेच्छया ॥
यज्जगद्बाधनादाप्तं किल्बिषं दानव त्वया । तस्याहं शासकस्तेऽद्य राजाऽस्मि भुवनत्रये ॥
श्रुत्वैतद्दूतवचनं कोपसंरक्तलोचनः । उवाच दूतं दुष्टात्मा नष्टप्रायविभूतिकः ॥ २७

तारक उवाच—

दृष्टं ते पौरुषं शक्र रणेषु शतशो मया । निस्त्रपत्वान्न ते लज्जा विद्यते शक्र दुर्मते ॥ २८
एवमुक्ते गते दूते चिन्तयामास दानवः । नालब्धसंश्रयः शक्रो वक्तुमेवं हि चार्हति ॥ २९
जितः स शक्रो नाकस्माज्जायते संश्रयाश्रयः । निमित्तानि च दुष्टानि सोऽपश्यद्दुष्टचेष्टितः ॥
पंशुवर्षमसृक्पातं गगनादवनीतले । भुजनेत्रप्रकम्पं च वक्त्रशोषमनोभ्रमम् ॥ ३१

---

१ क ख. दारुणदारुणा° । ग. दारुणदा॑ । २ क. ख. °रवरा° । ३ ङ. °मो प्रतो । ४ ग. ङ. ते । ५ ङ. °ऽस्तु कण्ठाधर° । ६ क ख. °मे क्रियापराणां भवभङ्गमूर्तये । क्रि° । ७ ङ. °यामयो यश इवामलस्त्वं । ८ ग. °परो य इवामलस्त्वं वि° । ९ क. ख. विरेमु॑ । १० ङ. °पास्ते । ए° । ११ ङ. °वं स्तुतः ष° । १२ क. ख. °दनं तु सन्द्रा सु सुतु° । १३ ङ. °ष्टस्तु तदाशुसंस्थान् । नि॑ । १४ क ख. ग. स्तुत्वा । १५ ग. °गतो नम्यस्तु° । १६ ग. घ ङ. °तुर्दिव° । १७ ङ. तच्छक्त्या घटय स्वय° । १८ ग °ग गद्यसना° । १९ ग. घ. °हि नार्ह॑ । २० क. ख. नो । २ ग. घ ङ. स्यन्नाशवेदिनः । पां° । २१ क. ख. °शोषं म॑ । ङ. °शोषं मनोभ्रमः । स्व° ।

स्वकान्तावक्त्रपद्मानां म्लानतां च व्यलोकयत् । दुष्टांश्च प्राणिनो रौद्रान्सोऽपश्यद्दुष्टवेदिनः ॥ ३३

तद्विचिन्त्यैव दितिजो न्यस्तचिन्तोऽभवत्क्षणात् । यावद्गजघटाघण्टारणत्काररवोत्कटाम्[१] ॥
तद्वत्तुरगसंघातं क्षुण्णभूरेणुपिञ्जराम्[२] । चञ्चलस्यन्दनोदग्रध्वजराजिविराजिताम् ॥ ३४
विमानैश्चाद्भुताकारैश्चलितामरचामरैः । तां भूपणनिबद्धां च किंनरोद्गीतनादिताम् ॥ ३५
नानानाकतरूत्फुल्लकुसुमापीडधारिणीम् । विकोशास्त्रपरिष्कारां वर्मनिर्मलदर्शनाम् ॥ ३६
बन्द्युद्घुष्टस्तुतिरवां नानावाद्यनिनादिताम् । सेनां नाकसदां दैत्यः प्रासादस्थो व्यलोकयत्
चिन्तयामास स तदा किंचिदुद्भ्रान्तमानसः । अपूर्वः को भवेद्योद्धा यो मया न विनिर्जितः ॥
ततश्चिन्ताकुलो दैत्यः शुश्राव कटुकाक्षरम् । सिद्धबन्दिभिरुद्घुष्टमिदं हृदयदारणम् ॥ ३९

अथ गाथा ॥

जयातुलशक्तिदीधितिपिञ्जर भुजदण्डचण्डरणरभस । सुरवदन कुमुदकाननविकासनेन्दो कुमार जय दितिजकुलमहोदधिवडवानल ॥ ४०

षण्मुख मधुररवमयूररथ सुरमुकुटकोटिघट्टितचरणनखाङ्कुरमहासन ॥
जय ललितचूडाकलापनवविमलदलकमलकान्त दैत्यवंशदुःसहदावानल ॥ ४१
जय विशाख विभो जय सकललोकतारक जय देवसेनानायक ।
स्कन्द जय गौरीनन्दन घण्टाप्रिय प्रिय विशाख विभो धृतपताकप्रकीर्णपटल ॥
कनकभूषण भासुरदिनकरच्छाय ॥ ४२
जय जनितसंभ्रम लीलालूनाखिलाराते जय सकललोकतारक दितिजासुरवरतारकान्तक[१३] ।
स्कन्द जय बाल सप्तवासर जय भुवनावलिशोकविनाशन ॥ ४३

इति श्रीमात्स्ये महापुराणे देवासुरसङ्ग्रामे रणोद्योगो नामैकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ८५८१ ॥

---

अथ षष्ट्यधिकशततमोऽध्यायः ।

---

सूत उवाच—

श्रुत्वैतत्तारकः सर्वमुद्घुष्टं देवबन्दिभिः । सस्मार ब्रह्मणो वाक्यं वधं बालादुपस्थितम् ॥ १
स्मृत्वा घर्मार्द्रसर्वाङ्गः पदातिरपदानुगः । मन्दिरान्निर्जगामाऽऽशु शोकग्रस्तेन चेतसा ॥ २
[ * कालनेमिमुखा दैत्याः संरम्भाक्रान्तचेतसः । + स्वेस्वे स्वनीकेषु तदा त्वराविस्मितचेतसः । योधा धावत गृह्णीत योजयध्वं वरूथिनीम् ॥ ३
कुमारं तारको दृष्ट्वा बभाषे भीषणाकृतिः । किं बाल योद्धुकामोऽसि क्रीड कन्दुकलीलया ॥ ४

---

* धनुश्चिह्नान्तर्गतग्रन्थो ग. घ. पुस्तकयोर्न विद्यते । + एतदर्धं न क. ख. पुस्तकयोः ।

---

१ ङ. °मू । वल्गंतुर° । २ ङ. °तकृतां वीरे° । ३ ग. ङ. °मू । सैन्यैः सेनाबलोद° । ४ ग. विशाकान्त° ५ ङ °पिसंजि° । ६ ङ °चरगरस° । ७ क. ख. सुखदकु° । ८ ग. °टिकुट्टि° । ९ क. ख. °नवाङ्कु° । १० ग. °य चरितल° । ११ ङ. °य विधृतपाटलपताकप्रविस्तीर्णकन° । १२ ग. °पटलपताकप्रकीर्णकटकभू° । १३ ङ. °तिसु तता° १४ क. ख. °त्वा धर्म द्रवपाङ्गः । १५ ङ. °कच्यापृतचे° ।

त्वया न दानवा दृष्टा यत्सङ्गरविभीषकाः । बालत्वादथ ते बुद्धिरेवं स्वल्पार्थदर्शिनी ॥ ५
कुमारोऽपि तमग्रस्थं बभाषे हर्षयन्सुरान् । शृणु तारक शास्त्रार्थस्तव चैव निरूप्यते ॥ ६
शास्त्रैरर्था न दृश्यन्ते समरे निर्भयैर्भटैः । शिशुत्वं माऽवमंस्था मे शिशुः कालभुजंगमः ॥ ७
दुष्प्रेक्ष्यो भास्करो बालस्तथाऽहं दुर्जयः शिशुः] अल्पाक्षरो न मन्त्रः किं सुस्फुरो दैत्य दृश्यते
कुमारे प्रोक्तवत्येवं दैत्यश्चिक्षेप मुद्गरम् । कुमारस्तं निरस्याथ वज्रेणामोघवर्चसा ॥ ९
ततश्चिक्षेप दैत्येन्द्रो भिन्दिपालमयोमयम् । करेण तच्च जग्राह कार्तिकेयोऽमरारिहा ॥ १०
गदां मुमोच दैत्याय षण्मुखः परमस्वनाम् । तया हतस्ततो दैत्यश्चकम्पेऽचलराडिव ॥ ११
मेने च दुर्जयं दैत्यस्तदा षड्वदनं रणे । चिन्तयामास बुद्ध्या वै प्राप्तः कालो न संशयः ॥ १२
कुपितं तु तमालोक्य कालनेमिपुरोगमाः । सर्वे दैत्येश्वरा जघ्नुः कुमारं रणदारुणम् ॥ १३
स तैः प्रहारैरस्पृष्टो वृथाक्लेशैर्महाद्युतिः । रणशौण्डास्तु दैत्येन्द्राः पुनः प्रासैः शिलीमुखैः॥१४
कुमारं समरं जघ्नुर्बलिनो देवकण्टकाः । कुमारस्य व्यथा नाभूद्दैत्यास्त्रनिहतस्य तु ॥ १५
प्राणान्तकरणो जातो देवानां दानवाहवः । देवान्निपीडितान्दृष्ट्वा कुमारः कोपमाविशत् ॥
ततोऽस्त्रैर्वारयामास दानवानामनीकिनीम् । ततस्तैर्विष्प्रतीकरैस्ताडिताः सुरकण्टकाः॥१७
कालनेमिमुखाः सर्वे रणादासन्पराङ्मुखाः । विद्रुतेष्वथ दैत्येषु हतेषु च समन्ततः ॥ १८
ततः क्रुद्धो महादैत्यस्तारकोऽसुरनायकः । जग्राह च गदां दिव्यां हेमजालपरिष्कृताम्॥१९
जघ्ने कुमारं गदया निष्टप्तकनकाङ्गदः । शरैर्मयूरपत्रैश्च चकार विमुखान्सुरान् ॥ २०
तथा परैर्महाभल्लैर्मयूरं गुहवाहनम् । बिभेद तारकः क्रुद्धः स सैन्येऽसुरनायकः ॥ २१
दृष्ट्वा पराङ्मुखान्देवान्मुक्तरक्तं स्ववाहनम् । जग्राह शक्तिं विमलां रणे कनकभूषणाम्॥
बाहुना हेमकेयूररुचिरेण षडाननः । ततो जवान्महासेनस्तारकं दानवाधिपम् ॥ २३
तिष्ठ तिष्ठ सुदुर्बुद्धे जीवलोकं विलोकय । हतोऽस्यद्य मया शक्त्या स्मर शस्त्रं सुशिक्षितम्॥
इत्युक्त्वा च ततः शक्तिं मुमोच दितिजं प्रति । सा कुमारभुजोत्सृष्टा तत्केयूररवानुगा ॥
बिभेद दैत्यहृदयं वज्रशैलेन्द्रकर्कशम् ॥ २५
गतासुः स पपातोर्व्यां प्रलये भूधरो यथा । विकीर्णमुकुटोष्णीषो विस्रस्ताखिलभूषणः ॥
तस्मिन्विनिहते दैत्ये त्रिदशानां महोत्सवे । नाभूत्कश्चित्तदा दुःखी नरकेष्वपि पापकृत्॥
स्तुवन्तः षण्मुखं देवाः क्रीडन्तश्चाङ्गनायुताः । जग्मुः स्वानेव भवनान्भूरिधामान उत्सुकाः
ददुश्चापि वरं सर्वे देवाः स्कन्दमुखं प्रति । तुष्टाः संप्राप्तसर्वेच्छाः सह सिद्धैस्तपोधनैः ॥

देवा ऊचुः—

यः पठेत्स्कन्दसंबद्धां कथां मर्त्यो महामतिः । शृणुयाच्छ्रावयेद्वाऽपि स भवेत्कीर्तिमान्नरः
बह्वायुः सुभगः श्रीमान्कान्तिमाञ्छुभदर्शनः । भूतेभ्यो निर्भयश्चापि सर्वदुःखविवर्जितः॥
संध्यामुपास्य यः पूर्वां स्कन्दस्य चरितं पठेत् । स मुक्तः किल्बिषैः सर्वैर्महाधनपतिर्भवेत्॥

---

१ ङ. तमुप्रार्थे व° । २ ङ. 'स्त्रार्यं भवतैव । ३ क. ख. °मये निर्भये भटैः । ४ ङ. 'शुः कष्टं भु° । ५ ङ. °स्तवाहं । ६ ग. घ. सस्फुरो । ङ. सस्फुटो । ७ ङ. °थ चक्रेणा° । ८ क. ख. °ण्मुखोऽभिखरस्व° । ९ क. ख. °क्लेशो म° । १० ङ. शातैः । ११ ङ. समरे । १२ ङ. °दां गुर्वीं महाशनिसमप्रभाम् । ज° । १३ क. ख. ग. °यूरं चित्रैश्च चकार °मुखं रणे । दृष्ट्वा पराङ्मुखं देवो मुक्त° । १४ ङ. °तोऽब्रवीन्म° । १५ ङ. धामाः समुत्सु° । १६ ङ. °मान्कीर्तिम°

बालानां व्याधिजुष्टानां राजद्वारं च सेवताम्। इदं तत्परमं दिव्यं सर्वदा सर्वकामदम् ॥
तत्क्षये च सायुज्यं षण्मुखस्य व्रजेन्नरः ॥ ३३

इति श्रीमात्स्ये महापुराणे तारकवधो नाम षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ८६१४ ॥

---

अथैकषष्ट्यधिकशततमोऽध्यायः ।

---

ऋषय ऊचुः—

इदानीं श्रोतुमिच्छामो हिरण्यकशिपोर्वधम्। नरसिंहस्य माहात्म्यं तथा पापविनाशनम्॥

सूत उवाच—

पुरा कृतयुगे विप्रा हिरण्यकशिपुः प्रभुः। दैत्यानामादिपुरुषश्चकार स महत्तपः॥ २
दश वर्षसहस्राणि दश वर्षशतानि च। जलवासी समभवत्स्नानमौनधृतव्रतः॥ ३
ततः शमदमाभ्यां च ब्रह्मचर्येण चैव हि। ब्रह्मा प्रीतोऽभवत्तस्य तपसा नियमेन च ॥ ४
ततः स्वयंभूर्भगवान्स्वयमागम्य तत्र ह। विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥ ५
आदित्यैर्वसुभिः साध्यैर्मरुद्भिर्दैवतैस्तथा। रुद्रैर्विश्वसहायैश्च यक्षराक्षसपन्नगैः ॥ ६
दिग्भिश्चैव विदिग्भिश्च नदीभिः सागरैस्तथा। नक्षत्रैश्च मुहूर्तैश्च खेचरैश्च महाग्रहैः ॥ ७
देवैर्ब्रह्मर्षिभिः सार्धं सिद्धैः सप्तर्षिभिस्तथा। राजर्षिभिः पुण्यकृद्भिर्गन्धर्वाप्सरसां गणैः॥
चराचरगुरुः श्रीमान्वृतः सर्वैर्दिवौकसैः। ब्रह्मा ब्रह्मविदां श्रेष्ठो दैत्यं वचनमब्रवीत् ॥ ९
प्रीतोऽस्मि तव भक्तस्य तपसाऽनेन सुव्रत। वरं वरय भद्रं ते यथेष्टं काममाप्नुहि॥ १०

हिरण्यकशिपुरुवाच—

न देवासुरगन्धर्वा न यक्षोरगराक्षसाः। न मानुषाः पिशाचा वा हन्युर्मां देवसत्तम ॥११
ऋषयो वा न मां शापैः शपेयुः प्रपितामह। यदि मे भगवान्प्रीतो वर एष वृतो मया॥
न चास्त्रेण न शस्त्रेण गिरिणा पादपेन च। न शुष्केण न चाऽऽर्द्रेण न दिवा न निशाथ वा
भवेयमहमेवार्कः सोमो वायुर्हुताशनः। सलिलं चान्तरिक्षं च नक्षत्राणि दिशो दश ॥ १४
अहं क्रोधश्च कामश्च वरुणो वासवो यमः। धनदश्च धनाध्यक्षो यक्षः किंपुरुषाधिपः ॥ १५

ब्रह्मोवाच—

एते दिव्या वरास्तात मया दत्तास्तवाद्भुताः। सर्वान्कामान्सदा वत्स प्राप्स्यसि त्वं न संशयः
एवमुक्त्वा स भगवाञ्जगामाऽऽकाश एव हि। वैराजं ब्रह्मसदनं ब्रह्मर्षिगणसेवितम् ॥ १७
ततो देवाश्च नागाश्च गन्धर्वा ऋषिभिः सह। वरप्रदानं श्रुत्वैव पितामहमुपस्थिताः ॥ १८

देवा ऊचुः—

वरप्रदानाद्भगवन्वधिष्यति स नोऽसुरः। तत्प्रसीदाऽऽशु भगवन्वधोऽप्यस्य विचिन्त्यताम्॥
भगवन्सर्वभूतानामादिकर्ता स्वयं प्रभुः। स्रष्टा त्वं हव्यकव्यानामव्यक्तप्रकृतिर्बुधः ॥ २०
सर्वलोकहितं वाक्यं श्रुत्वा देवः प्रजापतिः। आश्वासयामास सुरान्सुशीतैर्वचनाम्बुभिः ॥

---

१ ङ 'द्वारोपसेविनाम्। इ'। २ ङ. °नदद्य°। ३ ग. 'शाऽपिशा। ङ. °शातथा। भ°।

अवश्यं त्रिदशास्तेन प्राप्तव्यं तपसः फलम्। तपसोऽन्तेऽस्य भगवान्वधं विष्णुः करिष्यति॥
तच्छ्रुत्वा विबुधा वाक्यं सर्वे पङ्कजजन्मनः। स्वानि स्थानानि दिव्यानि विप्रजग्मुर्मुदाऽ-
न्विताः॥ २३
लब्धमात्रे वरे चाथ सर्वाः सोऽबाधत प्रजाः। हिरण्यकशिपुर्दैत्यो वरदानेन दर्पितः॥ २४
आश्रमेषु महाभागान्स मुनीञ्शंसितव्रतान्। सत्यधर्मपरान्दान्तान्धर्षयामास दानवः॥
देवांस्त्रिभुवनस्थांश्च पराजित्य महासुरः। त्रैलोक्यं वशमानीय स्वर्गे वसति दानवः॥ २६
यदा वरमदोत्सिक्तश्चोदितः कालधर्मतः। यज्ञियानकरोद्दैत्यानयज्ञियाश्च देवताः॥ २७
तदाऽऽदित्याश्च साध्याश्च विश्वे च वसवस्तथा। सेन्द्रा देवगणा यक्षाः सिद्धद्विजमहर्षयः॥
शरण्यं शरणं विष्णुमुपतस्थुर्महाबलम्। देवदेवं यज्ञमयं वासुदेवं सनातनम्॥ २९

देवा ऊचुः—

नारायण महाभाग देवास्त्वां शरणं गताः। त्रायस्व जहि दैत्येन्द्रं हिरण्यकशिपुं प्रभो॥
त्वं हि नः परमो धाता त्वं हि नः परमो गुरुः। त्वं हि नः परमो देवो ब्रह्मादीनां सुरोत्तम॥

विष्णुरुवाच—

भयं त्यजध्वममरा अभयं वो ददाम्यहम्। तथैव त्रिदिवं देवाः प्रतिपद्यत मा चिरम्॥ ३२
एषोऽहं सगणं दैत्यं वरदानेन दर्पितम्। अवध्यममरेन्द्राणां दानवेन्द्रं निहन्म्यहम्॥ ३३
एवमुक्त्वा तु भगवान्विसृज्य त्रिदशेश्वरान्। वधं संकल्पयामास हिरण्यकशिपोः प्रभुः॥
साहाय्यं च महाबाहुरोंकारं गृह्य सत्वरम्। अथोंकारसहायस्तु भगवान्विष्णुरव्ययः॥ ३५
हिरण्यकशिपुस्थानं जगाम हरिरीश्वरः। तेजसा भास्कराकारः शशी कान्त्येव चापरः॥
नरस्य कृत्वाऽर्धतनुं सिंहस्यार्धतनुं तथा। नारसिंहेन वपुषा पाणिं संस्पृश्य पाणिना॥
ततोऽपश्यत विस्तीर्णां दिव्यां रम्यां मनोरमाम्। सर्वकामयुतां शुभ्रां हिरण्यकशिपोः सभाम्
विस्तीर्णां योजनशतं शतमध्यर्धमायताम्। वैहायसीं कामगमां पञ्चयोजनविस्तृताम्॥
जराशोकक्लमापेतां निष्प्रकम्पां शिवां सुखाम्। वेश्महर्म्यवतीं रम्यां ज्वलन्तीमिव तेजसा॥
अन्तःसलिलसंयुक्तां विहितां विश्वकर्मणा। दिव्यरत्नमयैर्वृक्षैः फलपुष्पप्रदैर्युताम्॥ ४१
नीलपीतसितश्यामैः कृष्णैर्लोहितकैरपि। अवतानैस्तथा गुल्मैर्मञ्जरीशतधारिभिः॥ ४२
सिताभ्रघनसंकाशा प्लवन्तीव व्यदृश्यत। रश्मिवती भास्वरा च दिव्यगन्धमनोरमा॥ ४३
सुसुखा न च दुःखा सा न शीता न च घर्मदा। न क्षुत्पिपासे ग्लानिं वा प्राप्य तां प्राप्नुवन्ति ते
नानारूपैरुपकृतां विचित्रैरतिभास्वरैः। स्तम्भैर्न विभृता सा वै शाश्वती चाक्षपा सदा॥
अति चन्द्रं च सूर्यं च शिखिनं च स्वयंप्रभा। दीप्यते नाकपृष्ठस्था भासयन्तीव भास्करम्॥
सर्वे च कामाः प्रचुरा ये दिव्या ये च मानुषाः। रसैर्युक्तं प्रभूतं च भक्ष्यभोज्यमनन्तकम्॥
पुण्यगन्धस्रजश्चात्र नित्यपुष्पफलद्रुमाः। उष्णे शीतानि तोयानि शीते चोष्णानि सन्ति च

---

१ ङ. 'नि जग्मुस्तेवैमु'। २ ङ. 'मात्रवरः सोऽथ सर्वा वै बा'। ३ ग. 'दाचसम°। ४ ङ. °लकर्मणा। य'। ५ ग. घ. यदा। ६ ङ. प्रीतयास्यत। ७ ङ. °मधार्धं°। ८ ङ. °लैमे रत्नमञ्जरिधा°। ९ ग. °पैरुक्षक'। १० ग. घ. °नंच वृता। ११ ग. घ. °ती न च साक्षरा। अ°। १२ क. 'स्करान्। स°। ङ. भास्वरम्। १३ ग. °स्रवन्तं प्र°। ङ. °स्रवत्यः प्रसूताश्च भ°।

पुष्पिताग्रा महाशाखाः प्रवालाङ्कुरधारिणः । लतावितानसंछन्ना नदीषु च सरःसु च ॥४९
वृक्षान्बहुविधांस्तत्र मृगेन्द्रो ददृशे प्रभुः । गन्धवन्ति च पुष्पाणि रसवन्ति फलानि च ॥
नातिशीतानि नोष्णानि तत्र तत्र सरांसि च । अपश्यत्सर्वतीर्थानि सभायां तस्य स प्रभुः ॥
नलिनैः पुण्डरीकैश्च शतपत्रैः सुगन्धिभिः । रक्तैः कुवलयैर्नीलैः कुमुदैः संवृतानि च ॥ ५२
सुकान्तैर्धार्तराष्ट्रैश्च राजहंसैश्च सुप्रियैः । कारण्डवैश्चक्रवाकैः सारसैः कुररैरपि ॥ ५३
विमलैः स्फाटिकाभैश्च पाण्डुरच्छदनैर्द्विजैः । बहुहंसोपगीतानि सारसैभिरुतानि च ॥ ५४
गन्धवत्यः शुभास्तत्र पुष्पमञ्जरिधारिणीः । दृष्टवान्पर्वताग्रेषु नानापुष्पधरा लताः ॥ ५५
केतक्यशोकसरलाः पुंनागतिलकार्जुनाः । चूता नीपाः प्रस्थपुष्पाः कदम्बा बकुला धवाः ॥
प्रियङ्गुपाटलावृक्षाः शाल्मल्यः सहरिद्रकाः । सालास्तालास्तमालाश्च चम्पकाश्च मनोरमाः
तथैवान्ये व्यराजन्त सभायां पुष्पिता द्रुमाः । विद्रुमाश्च द्रुमाश्चैव ज्वलिताग्निसमप्रभाः ॥ ५८
स्कन्धवन्तः सुशाखाश्च बहुतालसमुच्छ्रयाः । अञ्जनाशोकवर्णाश्च बहवश्चित्रका द्रुमाः॥ ५९
वरुणो वत्सनाभश्च पनसाः सह चन्दनैः । नीपाः सुमनसश्चैव निम्बा अश्वत्थतिन्दुकाः ॥ ६०
पारिजाताश्च लोध्राश्च मल्लिका भद्रदारवः । आमलक्यस्तथा जम्बूलकुचाः शैलवालुकाः ॥
खर्जूर्यो नारिकेलाश्च हरीतकविभीतकाः । कालीयका दुकालाश्च हिङ्गवः पारियात्रकाः ॥
मन्दारकुन्दलताश्च पतङ्गाः कुटजास्तथा । रक्ताः कुरण्टकाश्चैव नीलाश्चागरुभिः सह ॥६३
कदम्बाश्चैव भव्याश्च दाडिमा बीजपूरकाः । सप्तपर्णाश्च बिल्वाश्च मधुपैरावृतास्तथा ॥ ६४
अशोकाश्च तमालाश्च नानागुल्मलतावृताः । मधूकाः सप्तपर्णाश्च बहवः क्षीरका द्रुमाः ॥६५
लताश्च विविधाकाराः पत्रपुष्पफलोपगाः । एते चान्ये च बहवस्तत्र काननजा द्रुमाः ॥ ६६
* नानापुष्पफलोपेता व्यराजन्त समन्ततः । चकोराः शतपत्राश्च मत्तकोकिलसारिकाः ॥
पुष्पिताः पुष्पिताग्रैश्च संपतन्ति महाद्रुमाः । रक्तपीतारुणास्तत्र पादपाग्रगताः खगाः॥६८
परस्परमवेक्षन्ते प्रहृष्टा जीवजीवकाः । तस्यां सभायां दैत्येन्द्रो हिरण्यकशिपुस्तदा ॥ ६९
स्त्रीसहस्रैः परिवृतो विचित्राभरणाम्बरः । अनर्घ्यमणिवज्रार्चिःशिखाज्वलितकुण्डलः ७०
आसीनश्चाऽऽसने चित्रे दशनल्वप्रमाणतः । दिवाकरनिभे दिव्ये दिव्यास्तरणसंस्तृते ॥ ७१
दिव्यगन्धवहस्तत्र मारुतः सुसुखो ववौ । हिरण्यकशिपुर्दैत्य आस्ते ज्वलितकुण्डलः ॥ ७२
उपचेरुर्महादैत्यं हिरण्यकशिपुं तदा । दिव्यतानेन गीतानि जगुर्गन्धर्वसत्तमाः ॥ ७३
विश्वाची सहजन्या च प्रम्लोचेत्यभिविश्रुता । दिव्याऽथ सौरभेयी च समीची पुञ्जिकस्थली
मिश्रकेशी च रम्भा च चित्रलेखा शुचिस्मिता । चारुकेशी घृताची च मेनका चोर्वशी तथा
एताः सहस्रशश्चान्या नृत्यगीतविशारदाः । उपतिष्ठन्ति राजानं हिरण्यकशिपुं प्रभुम् ॥ ७६
+तत्राऽऽसीनं महाबाहुं हिरण्यकशिपुं प्रभुम् । उपासते दितेः पुत्राः सर्वे लब्धवरास्तथा ७७
तमप्रतिमकर्माणं शतशोऽथ सहस्रशः । बलिर्विरोचनस्तत्र नरकः पृथिवीसुतः ॥ ७८
प्रह्लादो विप्रचित्तिश्च गविष्ठश्च महासुरः । सुरहन्ता सुनामा च प्रमतिः सुमतिर्वरः ॥ ७९

---

* न विद्यतेऽयं श्लोको ग. पुस्तके । + एतदर्धं नास्ति प. ङ. पुस्तकयोः ।

---

१ ङ. च । न शीतानि न चोष्णा° । २ ङ °सानां र° । ३ ङ. नीपा नागवृक्षाः क° । ४ ङ. वरणो । ५ ङ. कवस्तैलवर्णिकाः । ६ ग. नागवल्लील° । ७ क. ख. °हवस्तीरगा द्रु° । ८ ङ. च. °क्षन्त प्र° । ९ ङ. °रु नेत्रा घृ° । १० क. ख. °न्ता दुःखहन्ता सुनामा सु° ।

घटोदरो महापार्श्वः क्रथनः पिठरस्तथा । विश्वरूपः सुरूपश्च स्वबलश्च महाबलः ॥ ८०
दशग्रीवश्च वाली च मेघवासा महासुरः । घटास्योऽकम्पनश्चैव प्रजनश्चेन्द्रतापनः ॥ ८१
दैत्यदानवसंघास्ते सर्वे ज्वलितकुण्डलाः । स्रग्विणो वाग्मिनः सर्वे सदैव चरितव्रताः ॥ ८२
सर्वे लब्धवराः शूराः सर्वे विगतमृत्यवः । एते चान्ये च बहवो हिरण्यकशिपुं प्रभुम् ॥ ८३
उपासन्ति महात्मानं सर्वे दिव्यपरिच्छदाः । विमानैर्विविधाकारैर्भ्राजमानैरिवाग्निभिः ॥ ८४
महेन्द्रवपुषः सर्वे विचित्राङ्गदबाहवः । भूपिताङ्गा दितेः पुत्रास्तमुपासन्त सर्वशः ॥ ८५
तस्यां सभायां दिव्यायामसुराः पर्वतोपमाः । हिरण्यवपुषः सर्वे दिवाकरसमप्रभाः ॥ ८६
न श्रुतं नैव दृष्टं हि हिरण्यकशिपोर्यथा । ऐश्वर्यं दैत्यसिंहस्य यथा तस्य महात्मनः ॥ ८७

कनकरजतचित्रवेदिकायां परिहृतरत्नविचित्रवीथिकायाम् ।
स ददर्श मृगाधिपः सभायां सुरचितरत्नगवाक्षशोभितायाम् ॥ ८८
कनकविमलहारभूपिताङ्गं दितितनयं स मृगाधिपो ददर्श ।
दिवसकरमहाप्रभोज्ज्वलन्तं दितिजसहस्रशतैर्निषेव्यमाणम् ॥ ८९

इति श्रीमात्स्ये महापुराणे नारसिंहप्रादुर्भावे एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ८७०३ ॥

---

अथ द्विषष्ट्यधिकशततमोऽध्यायः ।

---

सूत उवाच—

ततो दृष्ट्वा महात्मानं कालचक्रमिवाऽऽगतम् । नरसिंहवपुश्छन्नं भस्मच्छन्नमिवानलम् ॥ १
हिरण्यकशिपोः पुत्रः प्रह्लादो नाम वीर्यवान् । दिव्येन चक्षुषा सिंहमपश्यद्देवमागतम् ॥ २
तं दृष्ट्वा रुक्मशैलाभमपूर्वां तनुमाश्रितम् । विस्मिता दानवाः सर्वे हिरण्यकशिपुश्च सः ॥ ३

प्रह्लाद उवाच—

महाबाहो महाराज दैत्यानामादिसंभव । न श्रुतं न च नो दृष्टं नारसिंहमिदं वपुः ॥ ४
अव्यक्तप्रभवं दिव्यं किमिदं रूपमागतम् । दैत्यान्तकरणं घोरं संशतीव मनो मम ॥ ५
अस्य देवाः शरीरस्थाः सागराः सरितश्च याः । हिमवान्पारियात्रश्च ये चान्ये कुलपर्वताः ॥ ६
चन्द्रमाश्च सनक्षत्रैरादित्यैर्वसुभिः सह । धनदो वरुणश्चैव यमः शक्रः शचीपतिः ॥ ७
मरुतो देवगन्धर्वा ऋषयश्च तपोधनाः । नागा यक्षाः पिशाचाश्च राक्षसा भीमविक्रमाः ॥ ८
ब्रह्मा देवः पशुपतिर्ललाटस्था भ्रमन्ति वै । स्थावराणि च सर्वाणि जङ्गमानि तथैव च ॥ ९
भवांश्च सहितोऽस्माभिः सर्वैर्दैत्यगणैर्वृतः । विमानशतसंकीर्णा तथैव भवतः सभा ॥ १०
सर्वं त्रिभुवनं राजँल्लोकधर्माश्च शाश्वताः । दृश्यन्ते नारसिंहेऽस्मिंस्तथेदमखिलं जगत् ॥ ११

प्रजापतिश्चात्र मनुर्महात्मा ग्रहाश्च योगाश्च महीरुहाश्च ।
उत्पातकालश्च धृतिर्मतिश्च रतिश्च सत्यं च तपो दमश्च ॥ १२

---

१ ङ. विहित । २ ग. °तमन्यवः । ३ ङ. °ण्यकशिपुं स° । ४ क. °प्रभञ्ज° । ५ क. ग. °भालसन्तं ।
६ ग. ङ. वपुषा । ७ ङ. °क्रमजरं दि° । ८ ङ. दित्याश्चाश्विभिः ।

सनत्कुमारश्च महानुभावो विश्वे च देवा ऋषयश्च सर्वे ।
क्रोधश्च कामश्च तथैव हर्षो धर्मश्च मोहः पितरश्च सर्वे ॥ १३

प्रह्लादस्य वचः श्रुत्वा हिरण्यकशिपुः प्रभुः । उवाच दानवान्सर्वान्गणांश्च स गणाधिपः॥
मृगेन्द्रो गृह्यतामेष अपूर्वां तनुमास्थितः । यदि वा संशयः कश्चिद्वध्यतां वनगोचरः ॥१५
ते दानवगणाः सर्वे मृगेन्द्रं भीमविक्रमम् । परिक्षिपन्तो मुदितास्त्रासयामासुरोजसा॥ १६
सिंहनादं विमुच्याथ नरसिंहो महाबलः । बभञ्ज तां सभां दिव्यां व्यादितास्य इवान्तकः
सभायां भज्यमानायां हिरण्यकशिपुः स्वयम् । चिक्षेपास्त्राणि सिंहस्य रोषाद्व्याकुललोचनः
सर्वास्त्राणामथ ज्येष्ठं दण्डमन्त्रं सुदारुणम् । कालचक्रं तथाऽघोरं विष्णुचक्रं तथा परम्॥
पैतामहं तथाऽत्युग्रं त्रैलोक्यदहनं महत् । विचित्रामशनीं चैव शुष्कार्द्रं चाशनिद्वयम्॥२०
रौद्रं तथोग्रं शूलं च कङ्कालं मुसलं तथा । मोहनं शोषणं चैव संतापनविलापनम् ॥ २१
वायव्यं मथनं चैव कापालमथ कैंकरम् । तथाऽप्रतिहतां शक्तिं क्रौञ्चमस्त्रं तथैव च ॥ ५२
अस्त्रं ब्रह्मशिरश्चैव सोमास्त्रं शिशिरं तथा । कम्पनं शातनं चैव त्वाष्ट्रं चैव सुभैरवम् ॥ २३
कालमुद्गरमक्षोभ्यं तपनं च महाबलम् । संवर्तनं मोहनं च तथा मायाधरं परम् ॥ २४
गान्धर्वमस्त्रं दयितमसिरत्नं च नन्दकम् । प्रस्वापनं प्रमथनं वारुणं चास्त्रमुत्तमम् ॥
अस्त्रं पाशुपतं चैव यस्याप्रतिहता गतिः ॥ २५
*अस्त्रं हयशिरश्चैव ब्राह्ममस्त्रं तथैव च । नारायणास्त्रमैन्द्रं च सार्पमस्त्रं तथाद्भुतम्॥२६
पैशाचमस्त्रमजितं शोषदं शामनं तथा । महाबलं भावनं च प्रस्थापनविकम्पने ॥ २७
एतान्यस्त्राणि दिव्यानि हिरण्यकशिपुस्तदा । असृजन्नरसिंहस्य दीप्तस्याग्नेरिवाऽऽहुतिम्
अस्त्रैः प्रज्वलितैः सिंहमावृणोदसुरोत्तमः । विवस्वान्घर्मसमये हिमवन्तमिवांशुभिः ॥ २९
स ह्यमर्षानिलोद्भूतो दैत्यानां सैन्यसागरः । क्षणेन प्लावयामास मैनाकमिव सागरः ॥
प्रासैः पाशैश्च खड्गैश्च गदाभिर्मुसलैस्तथा । वज्रैरशनिभिश्चैव साग्निभिश्च महाद्रुमैः ॥३१
मुद्गरैर्भिन्दिपालैश्च शिलोलूखलपर्वतैः । शतघ्नीभिश्च दीप्ताभिर्दण्डैरपि सुदारुणैः ॥ ३२

ते दानवाः पाशगृहीतहस्ता महेन्द्रतुल्याशनिवज्रवेगाः ।
समन्ततोऽभ्युद्यतबाहुकायाः स्थितास्त्रिशीर्षा इव नागपाशाः ॥ ३३
सुवर्णमालाकुलभूषिताङ्गाः पीतांशुकाभोगविभाविताङ्गाः ।
मुक्तावलीदामसनाथकक्षा हंसा इवाऽऽभान्ति विशालपक्षाः ॥ ३४
तेषां तु वायुप्रतिमौजसां वै केयूरमौलीवलयोत्कटानाम् ।
तान्युत्तमाङ्गान्यभितो विभान्ति प्रभातसूर्यांशुसमप्रभाणि ॥ ३५
क्षिपद्भिरुग्रैर्ज्वलितैर्महाबलैर्महास्त्रपूगैः सुसमावृतो बभौ ।
गिरिर्यथा संततवर्षिभिर्घनैः कृतान्धकारान्तरकंदरो द्रुमैः ॥ ३६

* इत आरभ्य प्रस्थापनविकम्पन इत्यन्तग्रन्थो ग. ङ. पुस्तकयोर्न विद्यते ।

१ ङ. 'र्यो दर्पश्च मो । २ ग. 'पूर्व सत्त्वमा' । ३ क. ख. ग. सर्वा । ४ ग ङ. भाग्नं । ५ क. मादनं । ६ ग. ङ. 'द्युतिः । अ° । ७ ग. 'णेनाऽऽप्लावयन्सिंहं मे' । ८ च. °न्द्रवज्राशनितुल्यवे° । ९ ङ. 'नियर्त्ते° । १० ङ. °ताङ्गाश्चीनांशु° । ११ ग. 'ङ्गाः सकिंशु° । १२ ङ. विबोधिता° । १३ ङ. 'ङ्गानि विभान्ति सम्यक्प्रभा' । १४ ग. °कारो त्तरकन्दरद्रु° । १५ ङ. 'न्तककन्दरद्रु° ।

तैर्हन्यमानोऽपि महास्त्रजालैर्महाबलैर्दैत्यगणैः समेतैः ।
नाकम्पताऽऽजौ भगवान्प्रतापस्थितः प्रकृत्या हिमवानिवाचलः ॥ ३७
संत्रासितास्तेन नृसिंहरूपिणा दितेः सुताः पावकतुल्यतेजसा ।
भयाद्विचेलुः पवनोद्धुताङ्गा यथोर्मयः सागरवारिसंभवाः ॥ ३८

इति श्रीमात्स्ये महापुराणे नारसिंहप्रादुर्भावो नाम द्विपष्ठ्यधिकशततमोऽध्यायः ॥ १६२ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ८७४१ ॥

---

अथ त्रिपष्ठ्यधिकशततमोऽध्यायः ।

---

सूत उवाच—

खेराः खरमुखाश्चैव मकराशीविषाननाः । ईहामृगमुखाश्चान्ये वराहमुखसंस्थिताः ॥ १
बालसूर्यमुखाश्चान्ये धूमकेतुमुखास्तथा । अर्धचन्द्रार्धवक्त्राश्च अग्निदीप्तमुखास्तथा ॥
हंसकुक्कुटवक्त्राश्च व्यादितास्या भयावहाः । सिंहास्या लेलिहानाश्च काकगृध्रमुखास्तथा
द्विजिह्वका वक्रशीर्षास्तथोल्कामुखसंस्थिताः । महाग्राहमुखाश्चान्ये दानवा बलदर्पिताः ॥
शैलसंवर्ष्मणस्तस्य शरीरे शरवृष्टिभिः । अवध्यस्य मृगेन्द्रस्य न व्यथां चक्रुराहवे ॥ ५
एवं भूयोऽपरान्घोरानसृजन्दानवेश्वराः । मृगेन्द्रस्योपरि क्रुद्धा निःश्वसन्त इवोरगाः ॥
ते दानवशरा घोरा दानवेन्द्रसमीरिताः । विलयं जग्मुराकाशे खद्योता इव पर्वते ॥ ७
ततश्चक्राणि दिव्यानि दैत्याः क्रोधसमन्विताः । मृगेन्द्रायासृजन्नाशु ज्वलितानि समन्ततः
तैरासीद्गगनं चक्रैः संपतद्भिरितस्ततः । युगान्ते संप्रकाशद्भिश्चन्द्रादित्यग्रहैरिव ॥ ९
तानि सर्वाणि चक्राणि मृगेन्द्रेण महात्मना । ग्रस्तान्युदीर्णानि तदा पावकार्चिःसमानि वै
तानि चक्राणि वदने विशमानानि भान्ति वै । मेघोदरदरीष्वेव चन्द्रसूर्यग्रहा इव* ॥ ११
हिरण्यकशिपुर्दैत्यो भूयः प्रासृजदूर्जिताम् । शक्तिं प्रज्वलितां घोरां धौतशस्त्रतडित्प्रभाम्
तामापतन्तीं संप्रेक्ष्य मृगेन्द्रः शक्तिमुज्ज्वलाम् । हुंकारेणैव रौद्रेण बभञ्ज भगवांस्तदा ॥
रराज भग्ना सा शक्तिर्मृगेन्द्रेण महीतले । सविस्फुलिङ्गा ज्वलिता महोल्केव दिवश्च्युता +

---

* इतः परमेते श्लोका अधिका उपलभ्यन्ते ङ. पुस्तके—ततो नृसिंहो घोराणि प्रसह्य चक्राणि नान्यथा । दैत्यान्शूलप्रहारेण प्रयुतान्समपोथयात् ॥ गर्जितेनातिघोरेण दैत्येन्द्राणां तदाऽयुतम् । हुंकारेणातिरौद्रेण प्रेषयामास मृत्यवे ॥ नृहर्यक्षरूपी सहस्रार्कतुल्यप्रकाशः प्रतापैः प्रभाभिरतुल्यैः । पुनर्दानवानां सदैत्येश्वराणां समग्रायुधानां विसर्जे जघान ॥ ततश्चासुराणामभूदार्तनादः पतद्भिश्च संख्ये हताहेतिवादैः । अयं कालकल्पस्त्वमर्त्यो न विप्रोऽप्यचेष्टामसौ कोपि कर्ता ॥
ततो दैत्यराजः स्वसैन्यं निरीक्ष्याऽऽहवे ज्योतितं नारसिंहारवेण ।
प्रजज्वाल गोपात्समादाय शूलं मुमोचाऽऽशु चोग्रं हराब्जभूलम् ॥
ततो नृकेसरीरणे त्रिशूलमग्रसत्तथाऽसुरायुतत्रयं ददार दारुणैर्नखैः ॥
यथा स दैत्यनायको निगीर्णमात्मनः परां त्रिशूलमिक्ष्वपट्टिशं मुमोच पावकार्चिषम् ॥
ततस्तु पट्टिशं पुनर्नभस्तलान्नृकेसरी समाददे करेण वै जघान तद्बलं पुनः ॥

\+ इतःपरमयं श्लोको ङ. पुस्तके—ततो हिरण्यकश्यपुः प्रतप्तकनकप्रभः । ववर्षाम्बरगैर्घोरैर्नाराचैरभिवर्चसैरिति ।

---

१ ङ. 'पवाङ्भि' । २ ङ. खराश्वानमु° । ३ ग. °रां नृत° । ४ ङ. धौतां चक्रत° ।

नाराचपङ्क्तिः सिंहस्य प्राप्ता रेजेऽविदूरतः । नीलोत्पलपलाशानां मालेवोज्ज्वलदर्शना ॥
स गर्जित्वा यथान्यायं विक्रम्य च यथासुखम् । तत्सैन्यमुत्सारितवांस्तृणाग्राणीव मारुतः॥
ततोऽश्मवर्षं दैत्येन्द्रा व्यसृजन्त नभोगताः । नगमात्रैः शिलाखण्डैर्गिरिशृङ्गैर्महाप्रभैः ॥१७
तदश्मवर्षं सिंहस्य महन्मूर्धनि पातितम् । दिशो दश विकीर्णा वै खद्योतप्रकरा इव॥१८
तदाऽश्मौघैर्दैत्यगणाः पुनः सिंहमरिंदमम् । छादयांचक्रिरे मेघा धाराभिरिव पर्वतम् ॥ १९
न च तं चालयामासुर्दैत्यौघा देवसत्तमम् । भीमवेगोऽचलश्रेष्ठं समुद्र इव मन्दरम् ॥ २०
ततोऽश्मवर्षे विहते जलवर्षमनन्तरम् । धाराभिरक्षमात्राभिः प्रादुरासीत्समन्ततः ॥ २१
नभसः प्रच्युता धारास्तिग्मवेगाः समन्ततः । आवृत्य सर्वतो व्योम दिशश्चोपदिशस्तथा
धारा दिवि च सर्वत्र वसुधायां च सर्वशः । न स्पृशन्ति च ता देवं निपतन्त्योऽनिशं भुवि
बाह्यतो ववृषुर्वर्षं नोपरिष्टाच्च ववृषुः । मृगेन्द्रप्रतिरूपस्य स्थितस्य युधि मायया ॥ २४
हतेऽश्मवर्षे तुमुले जलवर्षे च शोषिते * । सोऽसृजद्दानवो मायामग्निवायुसमीरिताम् ॥
महेन्द्रस्तोयदैः सार्धं सहस्राक्षो महाद्युतिः । महता तोयवर्षेण शमयामास पावकम्॥ २६
तस्यां प्रतिहतायां तु मायायां युधि दानवः । असृजद्घोरसंकाशं तमस्तीव्रं समन्ततः॥२७
तमसा संवृते लोके दैत्येष्वात्तायुधेषु च । स्वतेजसा परिवृतो दिवाकर इवाऽऽबभौ ॥ २८
त्रिशिखां भ्रुकुटीं चास्य ददृशुर्दानवा रणे । ललाटस्थां त्रिशूलाङ्कां गङ्गां त्रिपथगामिव
ततः सर्वासु मायासु हतासु दितिनन्दनाः । हिरण्यकशिपुं दैत्यं विवर्णाः शरणं ययुः ॥
ततः प्रज्वलितः क्रोधात्प्रदहन्निव तेजसा । तस्मिन्क्रुद्धे तु दैत्येन्द्रे तमोभूतमभूज्जगत्॥३१
आवहः प्रवहश्चैव विवहोऽथ ह्युदावहः । परावहः संवहश्च महाबलपराक्रमाः ॥ ३२
तथा परिवहः श्रीमानुत्पातभयशंसिनः । इत्येवं क्षुभिताः सप्त मरुतो गगनेचराः ॥ ३३
ये ग्रहाः सर्वलोकस्य क्षये प्रादुर्भवन्ति वै । ते सर्वे गगने दृष्टा व्यचरन्त यथासुखम् ॥३४
अयोगतश्चाप्यचरन्मार्गं निशि निशाचरः । सग्रहः सह नक्षत्रैराकापतिररिंदमः ॥ ३५
विवर्णतां च भगवान्गतो दिवि दिवाकरः । कृष्णं कबन्धं च तथा लक्ष्यते सुमहद्दिवि॥३६
अमुञ्चच्चार्चिषां पुञ्जं भूमिवृत्तिर्विभावसुः । गगनस्थश्च भगवानभीक्ष्णं परिदृश्यते ॥ ३७
सप्त धूम्रनिभा घोरा सूर्या दिवि समुत्थिताः । सोमस्य गगनस्थस्य ग्रहास्तिष्ठन्ति शृङ्गगाः[12]॥
वामे तु दक्षिणे चैव स्थितौ शुक्रबृहस्पती । शनैश्चरो लोहिताङ्गो ज्वलनाङ्गसमद्युतिः[13] ॥
सर्वे समधिरोहन्तः सर्वे ते गगनेचराः । शृङ्गाणि शनकैर्घोरा युगान्तावर्तिनो ग्रहाः ॥ ४०
चन्द्रमाश्च सनक्षत्रैर्ग्रहैः सह तमोनुदः । चराचरविनाशाय रोहिणीं नाभ्यनन्दत ॥ ४१
गृहीतो राहुणा चन्द्र उल्काभिरभिहन्यते । + उल्काः प्रज्वलिताश्चन्द्रे विचरन्ति यथासुखम् ॥ ४२

---

* अत्रायं श्लोकोऽधिको ङ. पुस्तके—दानवेन्द्रास्तदा भीताः समन्तात्प्रेजिरे दिशः । ततः पुनरुपेत्यैनं हिरण्यकशिपुं प्रभुम् । इति । + एतदर्धस्थानेऽयं पाठो ङ. पुस्तके—उल्काःप्रज्वलिताः सूर्यमाहत्य निपतन्ति गामिति ।

---

१ ङ. वीर्यवान् । २ ङ. °म् । तामिन्द्र° । ६ ङ. °नवाः । पुनरीयुर्नृहर्यक्षां मायां दैत्येन्द्रचोदिताः । अ° । ४ ग. ङ. विवाहोऽथ समीरणः । प° । ५ ङ. वहश्च वाहश्च उद्वहश्च महाबलः । त° । ६ °म् । प्रयोगतश्चाप्यचरद्योगं । ७ क. ख. अन्यं गते चाप्य° । ८ ग. रश्योगं । ९ ग. ङ. शाकरः । १० ग. °पां सूर्यो धूमवर्तिर्हुताशनः । गग° । ११ ङ. दानेन द° । १२ ग. °क्तो लोहितात्रान° । १३ क. ख. द्युती । स° । १४ क. ख. गृह्यते ।

देवानामपि यो देवः सोऽप्यवर्षत शोणितम् । अपतन्गगनादुल्का विद्युद्रूपा महास्वनाः ॥
अकाले च द्रुमाः सर्वे पुष्पन्ति च फलन्ति च । लताश्च सफलाः सर्वा ये चाऽऽहुर्दैत्यनाशनम्
फलैः फलान्यजायन्त पुष्पैः पुष्पं तथैव च । उन्मीलन्ति निमीलन्ति हसन्ति च रुदन्ति च ॥
विक्रोशन्ति च गम्भीरा धूमयन्ति ज्वलन्ति च । प्रतिमाः सर्वदेवानां वेदयन्ति महद्भयम् ॥
आरण्यैः सह संसृष्टा ग्राम्याश्च मृगपक्षिणः । चक्रुः सुभैरवं तत्र महायुद्धमुपस्थितम् ॥ ४७
नद्यश्च प्रतिकूलानि वहन्ति कलुषोदकाः । न प्रकाशन्ति च दिशो रक्तरेणुसमाकुलाः ॥ ४८
वानस्पत्यो न पूज्यन्ते पूजनार्हाः कथं चन । वायुवेगेन हन्यन्ते भज्यन्ते प्रणमन्ति च ॥ ४९
यदा च सर्वभूतानां छाया न परिवर्तते । अपराह्णगते सूर्ये लोकानां युगसंक्षये ॥ ५०
तद्वा हिरण्यकशिपोर्दैत्यस्योपरि वेश्मनः । भाण्डागारायुधागारे निविष्टमभवन्मधु ॥ ५१
असुराणां विनाशाय सुराणां विजयाय च । दृश्यन्ते विविधोत्पाता घोरा घोरनिदर्शनाः ॥
एते चान्ये च बहवो घोरोत्पाताः समुत्थिताः । दैत्येन्द्रस्य विनाशाय दृश्यन्ते कालनिर्मिताः ॥
मेदिन्यां कम्पमानायां दैत्येन्द्रेण महात्मना । महीधरा नागगणा निपेतुरमितौजसः ॥ ५४
विषज्वालाकुलैर्वक्त्रैर्विमुञ्चन्तो हुताशनम् । चतुःशीर्षाः पञ्चशीर्षाः सप्तशीर्षाश्च पन्नगाः ॥
वासुकिस्तक्षकश्चैव कर्कोटकधनंजयौ । एलामुखः कालियश्च महापद्मश्च वीर्यवान् ॥ ५६
सहस्रशीर्षो नागो वै हेमतालध्वजः प्रभुः । + शेषोऽनन्तो महाभागो दुष्प्रकम्प्यः प्रकम्पितः
दीप्तान्यन्तर्जलस्थानि पृथिवीधरणानि च । तदा क्रुद्धेन महता कम्पितानि समन्ततः ॥ ५८
नागास्तेजोधराश्चापि पातालतलचारिणः । हिरण्यकशिपुर्दैत्यस्तदा संस्पृष्टवान्महीम् ॥ ५९
संदष्टौष्ठपुटः क्रोधाद्वाराह इव पूर्वजः । नदी भागीरथी चैव शरयूः कौशिकी तथा ॥ ६०
यमुना त्वथ कावेरी कृष्णवेणा च निम्नगा । सुवेणा च महाभागा नदी गोदावरी तथा ॥ ६१
चर्मण्वती च सिन्धुश्च तथा नदनदीपतिः । कमलप्रभवश्चैव शोणो मणिनिभोदकः ॥ ६२
नर्मदा शुभतोया च तथा वेत्रवती नदी । गोमती गोकुलाकीर्णा तथा पूर्वसरस्वती ॥ ६३
मही कालमही चैव तमसा पुष्पवाहिनी । जम्बूद्वीपं रत्नवटं सर्वरत्नोपशोभितम् ॥ ६४
सुवर्णप्रकटं चैव सुवर्णाकरमण्डितम् । महानदं च लौहित्यं शैलकाननशोभितम् ॥ ६५
पत्तनं कोशकरणमृषिवीरजनाकरम् । मागधाश्च महाग्रामा मुण्डाः शुङ्गास्तथैव च ॥ ६६
सुह्मा मल्ला विदेहाश्च मालवाः काशिकोसलाः । भवनं वैनतेयस्य दैत्येन्द्रेणाभिकम्पितम् ॥
कैलासशिखराकारं यत्कृतं विश्वकर्मणा । रक्ततोयो महाभीमो लौहित्यो नाम सागरः ॥
उदयश्च महाशैल उच्छ्रितः शतयोजनम् । सुवर्णवेदिकः श्रीमान्मेघपङ्क्तिनिषेवितः ॥ ६९
भ्राजमानोऽर्कसदृशैर्जातरूपमयैर्द्रुमैः । शालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः ॥ ७०
अयोमुखश्च विख्यातः पर्वतो धातुमण्डितः । तमालवनगन्धश्च पर्वतो मलयः शुभः ॥ ७१

+ इत आरभ्य तलचारिण इत्यन्तग्रन्थो न ङ. पुस्तके ।

१ ङ धूमायन्ति । २ ङ.कथयन्त्यो । ३ ङ संक्लिष्य । ४ ग. °त्र मृगायु° । ङ. °त्र मृगा युद्ध उपस्थिते । न° । ५ ग. ङ. °परेण ग° । ६ ग. °शीर्षाःशृङ्गाक्षो हेमतालश्च वीर्यवान् । शे° । ७ ग. °वीचार° । ८ ग. घ. च । सप्तदैत्येन्द्रकुद्धेन क° । ९ ग.°लवासिनः । पाताले सहसा क्षुब्धे दुष्प्रकम्प्याः प्रकम्पिताः । हि° । १० ङ. °तिः । मेकल° । ग. °तिः । प्रकलं प्र° । ११ ग. घ. रत्नवन्तं । १२ ग. घ. °शक्रागामृषि° ।

सुराष्ट्राश्च सबाह्लीकाः शूराभीरास्तथैव च । भोजाः पाण्ड्याश्च वङ्गाश्च कलिङ्गास्ताम्र-
लिप्तकाः ॥ ७२
तथैवोण्ड्राश्च पौण्ड्राश्च वामचूडाः सकेरलाः । क्षोभितास्तेन दैत्येन सदेवाश्चाप्सरोगणाः॥
अगस्त्यभवनं चैव यदगम्यं कृतं पुरा । सिद्धचारणसंघश्च विप्रकीर्णं मनोहरम् ॥ ७४
विचित्रनानाविहगं सुपुष्पितमहाद्रुमम् । जातरूपमयैः शृङ्गैरप्सरोगणनादितम् ॥ ७५
गिरिपुष्पितकश्चैव लक्ष्मीवान्प्रियदर्शनः । उत्थितः सागरं भित्त्वा विश्रामश्चन्द्रसूर्ययोः ॥
रराज सुमहाशृङ्गैर्गगनं विलिखन्निव ॥ ७६
चन्द्रसूर्यांशुसंकाशैः सागराम्बुसमावृतैः । विद्युत्वान्सर्वतः श्रीमानायतः शतयोजनम् ॥ ७७
विद्युतां यत्र संघाता निपात्यन्ते नगोत्तमे । ऋषभः पर्वतश्चैव श्रीमान्वृषभसंज्ञितः ॥ ७८
कुञ्जरः पर्वतः श्रीमान्यत्रागस्त्यगृहं शुभम् । विशालाक्षश्च दुर्धर्षः सर्पाणामालयः पुरी ॥
तथा भोगवती चापि दैत्येन्द्रेणाभिकम्पिता । महासेनो गिरिश्चैव पारियात्रश्च पर्वतः ॥८०
चक्रवांश्च गिरिश्रेष्ठो वाराहश्चैव पर्वतः । प्राग्ज्यौतिषपुरं चापि जातरूपमयं शुभम् ॥ ८१
यस्मिँन्वसति दुष्टात्मा नरको नाम दानवः । मेघश्च पर्वतश्रेष्ठो मेघगम्भीरनिःस्वनः ॥ ८२
षष्टिस्तत्र सहस्राणि पर्वतानां द्विजोत्तमाः । तरुणादित्यसंकाशो मेरुस्तत्र महागिरिः ॥८३
यक्षराक्षसगन्धर्वैर्नित्यं सेवितकंदरः । हेमगर्भो महाशैलस्तथा हेमसखो गिरिः ॥ ८४
कैलासश्चैव शैलेन्द्रो दानवेन्द्रेण कम्पितः । हेमपुष्करसंछन्नं तेन वैखानसं सरः ॥ ८५
कम्पितं मानसं चैव हंसकारण्डवाकुलम् । त्रिशृङ्गपर्वतश्चैव कुमारी च सरिद्वरा ॥ ८६
तुषारचयसंछन्नो मन्दरश्चापि पर्वतः । उशीरबिन्दुश्च गिरिश्चन्द्रप्रस्थस्तथाऽद्रिराट् ॥ ८७
प्रजापतिगिरिश्चैव तथा पुष्करपर्वतः । देवाभ्रपर्वतश्चैव तथा वै रेणुको गिरिः ॥ ८८
क्रौञ्चः सप्तर्षिशैलश्च धूम्रवर्णश्च पर्वतः । एते चान्ये च गिरयो देशा जनपदास्तथा ॥ ८९
नद्यः ससागराः सर्वाः सोऽकम्पयत दानवः । कपिलश्च महीपुत्रो व्याघ्रवांश्चैव कम्पितः ॥
खेचराश्च सतीपुत्राः पातालतलवासिनः । गणस्तथा परो रौद्रो मेघनामाऽङ्कुशायुधः ॥
ऊर्ध्वगो भीमवेगश्च सर्व एवाभिकम्पिताः * । गदी शूली करालश्च हिरण्यकशिपुस्तदा ॥
जीमूतघनसंकाशो जीमूतघननिःस्वनः । जीमूतघननिर्घोषो जीमूत इव वेगवान् ॥ ९३
देवारिर्दितिजो वीरो नृसिंहं समुपाद्रवत् । समुत्पत्य ततस्तीक्ष्णैर्मृगेन्द्रेण महानखैः ॥
तदोंकारसहायेन विदार्य निहतो युधि ॥ ९४

महीं च कालश्च शशी नभश्च ग्रहाश्च सूर्यश्च दिशश्च सर्वाः ॥
नद्यश्च शैलाश्च महार्णवाश्च गताः प्रसादं दितिपुत्रनाशात् ॥ ९५

ततः प्रमुदिता देवा ऋषयश्च तपोधनाः । तुष्टुवुर्नामभिर्दिव्यैरादिदेवं सनातनम् ॥ ९६

---

* इतःपरमयं ग्रन्थो ङ पुस्तके—ततो हिरण्यकशिपुः शतबाहुः प्रतापवान् । सर्वायुधधरो दैत्यः सर्वानलसम-द्युतिः । प्रासी पाशी महासी च चक्री वज्री च लाङ्गली । सशुण्ठी च भुशुण्डी च पट्टिशी मुशली हली । अङ्कुशी गण्डशैली च भिण्डिमाली परश्वधी । परिघी मुद्गरी यष्टी चक्रपाणी कची तथा ॥ इति ।

---

१ ग. °दगन्त्यकृ° । २ ङ. 'णगन्धर्वोर्दिप्र' । ३ क. ख. 'श्रृंगैग । ४ ङ. °त्वान्पर्व° । ५ ङ. °शाकक्षदु° । ६ ग. °र्पाणां मल° । ७ ङ. 'स्मिन्नुवास दु' । ८ ङ. 'मसुश्रो । ९ ङ. °तगणवे° ।

यत्त्वया विहितं देव नारसिंहमिदं वपुः । एतदेवार्चयिष्यन्ति परावरविदो जनाः ॥ ९७

*देवा ऊचुः—

भवान्ब्रह्मा च रुद्रश्च महेन्द्रो देवसत्तमः । भवान्कर्ता विकर्ता च लोकानां प्रभवोऽव्ययः ॥

+परां च सिद्धिं च परं च देवं परं च मन्त्रं परमं हविश्च ।
परं च धर्मं परमं च विश्वं त्वामाहुरग्र्यं पुरुषं पुराणम् ॥ ९९
परं शरीरं परमं च ब्रह्म परं च योगं परमां च वाणीम् ।
परं रहस्यं परमां गतिं च त्वामाहुरग्र्यं पुरुषं पुराणम् ॥ १००
एवं परस्यापि परं पदं यत्परं परस्यापि परं च देवम् ।
परं परस्यापि परं च भूतं त्वामाहुरग्र्यं पुरुषं पुराणम् ॥ १०१
परं परस्यापि परं रहस्यं परं परस्यापि परं महत्त्वम् ।
परं परस्यापि परं महद्यत्त्वामाहुरग्र्यं पुरुषं पुराणम् ॥ १०२
परं परस्यापि परं निधानं परं परस्यापि परं पवित्रम् ।
परं परस्यापि परं च दान्तं त्वामाहुरग्र्यं पुरुषं पुराणम् ॥ १०३

एवमुक्त्वा तु भगवान्सर्वलोकपितामहः । स्तुत्वा नारायणं देवं ब्रह्मलोकं गतः प्रभुः ॥

ततो नदत्सु तूर्येषु नृत्यन्तीष्वप्सरःसु च । क्षीरोदस्योत्तरं कूलं जगाम हरिरीश्वरः ॥१०५

नारसिंहं वपुर्देवः स्थापयित्वा सुदीप्तिमत् । पौराणं रूपमास्थाय प्रययौ गरुडध्वजः ॥

अष्टचक्रेण यानेन भूतयुक्तेन भास्वता । अव्यक्तप्रकृतिर्देवः स्वस्थानं गतवान्प्रभुः ॥

इति श्रीमात्स्ये महापुराणे हिरण्यकशिपुवधो नाम त्रिपष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ८८४८ ॥

---

अथ चतुःषष्ट्यधिकशततमोऽध्यायः ।

---

ऋषय ऊचुः—

कथितं नरसिंहस्य माहात्म्यं विस्तरेण च । पुनस्तस्यैव माहात्म्यमन्यद्विस्तरतो वद ॥ १

पद्मरूपमभूदेतत्कथं हेममयं जगत् । कथं च वैष्णवी सृष्टिः पद्ममध्येऽभवत्पुरा ॥ २

सूत उवाच—

श्रुत्वा च नरसिंहस्य माहात्म्यं रविनन्दनः । विस्मयोत्फुल्लनयनः पुनः पप्रच्छ केशवम् ॥

मनुरुवाच—

कथं पाद्मे महाकल्पे तव पद्ममयं जगत् । जलार्णवगतस्येह नाभौ जातं जनार्दन ॥ ४

---

* अत्र क. ख. ग. पुस्तकेषु ब्रह्मोवाचेति । वर्तते। + इत आरभ्य पुरुषं पुराणमित्यन्तग्रन्थस्थानेऽयं ग्रन्थो ङ. पुस्तके—परं च सत्यं परमं तपश्च परं पवित्रं परमं च मार्गम् । परं च यज्ञं परमं च होत्रं त्वामाहुरग्र्यं पुरुषं पुराणम् । परं परस्यापि परं च धन्यं परं परस्यापि परं तमीशम् । परं परस्यापि परां च शान्तिं त्वामाहुरग्र्यं पुरुषं पुराणमिति ।

---

१ ग. °हितो धर्मश्चतुष्पाद्धर्मविग्रहः । स्वधर्मनिरताः शान्ता यान्तो यत्र मानवः । क्रियास्थिताधर्मदेव° ।
२ ङ. भवेत् । ३ ङ. कथं ।

प्रभावात्पद्मनामस्य स्वपतः सागराम्भसि । पुष्करे च कथं भूता देवाः सर्षिगणाः पुरा
एतदाख्याहि निखिलं योगं योगविदां पते । शृण्वतस्तस्य मे कीर्तिं न तृप्तिरुपजायते ॥
कियता चैव कालेन शेते वै पुरुषोत्तमः । कियन्तं वा स्वपिति च कोऽस्य कालस्य संभवः
कियता वाऽथ कालेन ह्युत्तिष्ठति महायशाः । कथं चोत्थाय भगवान्सृजते निखिलं जगत्
के प्रजापतयस्तावदासन्पूर्वं महामुने । कथं निर्मितवांश्चैव चित्रं लोकं सनातनम् ॥ ९
कथमेकार्णवे शून्ये नष्टस्थावरजङ्गमे । दग्धे देवासुरनरे प्रनष्टोरगराक्षसे ॥ १०
नष्टानिलानले लोके नष्टाकाशमहीतले । केवलं गह्वरीभूते महाभूतविपर्यये ॥ ११
विभुर्महाभूतपतिर्महातेजा महाकृतिः । आस्ते सुरवरश्रेष्ठो विधिमास्थाय योगवित् ॥ १२
शृणुयां परया भक्त्या ब्रह्मन्नेतदशेषतः । वक्तुमर्हसि धर्मिष्ठ यशो नारायणात्मकम् ॥ १३
श्रद्धया चोपविष्टानां भगवन्वक्तुमर्हसि ॥ १४

मत्स्य उवाच—

नारायणस्य यशसः श्रवणे या तव स्पृहा । तद्वंश्यान्वयभूतस्य न्याय्यं रविकुलर्षभ ॥ १५
शृणुष्वाऽऽदिपुराणेषु वेदेभ्यश्च यथा श्रुतम् । ब्राह्मणानां च वदतां श्रुत्वा वै सुमहात्मनाम्
यथा च तपसा दृष्ट्वा बृहस्पतिसमद्युतिः । पराशरसुतः श्रीमान्गुरुर्द्वैपायनोऽब्रवीत् ॥ १७
तत्तेऽहं कथयिष्यामि यथाशक्ति यथाश्रुति । यद्विज्ञातुं मया शक्यमृषिमात्रेण सत्तमाः ॥
कः समुत्सहते ज्ञातुं परं नारायणात्मकम् । विश्वायनश्च यद्ब्रह्मा न वेदयति तत्त्वतः ॥
तत्कर्म विश्ववेदानां तद्रहस्यं महर्षिणाम् । तमीशं सर्वयज्ञानां तत्तत्त्वं सर्वदर्शिनाम् ॥
तदध्यात्मविदां चिन्त्यं नरकं च विकर्मिणाम् ॥ २०
+अधिदैवं च यद्दैवमधियज्ञं सुसंज्ञितम् । तद्भूतमधिभूतं च तत्परं परमर्षिणाम् ॥ २१
स यज्ञो वेदनिर्दिष्टस्तत्तपः कवयो विदुः । यः कर्ता कारको बुद्धिर्मनः क्षेत्रज्ञ एव च ॥
प्रणवः पुरुषः शास्ता एकश्चेति विभाव्यते । प्राणः पञ्चविधश्चैव ध्रुव अक्षर एव च ॥
कालः पाकश्च पक्ता च द्रष्टा स्वाध्याय एव च । उच्यते विविधैर्देवैः स एवायं न तत्परम्
स एव भगवान्सर्वं करोति विकरोति च । सोऽस्मान्कारयते सर्वान्सोऽत्येति व्याकुलीकृतान्
यजामहे तमेवाऽऽद्यं तमेवेच्छाम निर्वृताः । यो वक्ता यच्च वक्तव्यं यच्चाहं तद्ब्रवीमि वः ॥
श्रूयते यच्च वै श्राव्यं यच्चान्यत्परिजल्प्यते । याः कथाश्चैव वर्तन्ते श्रुतयो वाऽथ तत्पराः ॥
विश्वं विश्वपतिर्यश्च स तु नारायणः स्मृतः ॥ २७

यत्सत्यं यदमृतमक्षरं परं यद्यद्भूतं परममिदं च यद्भविष्यत् ।
यत्किंचिच्चरमचरं यदस्ति चान्यत्तत्सर्वं पुरुषवरः प्रभुः पुराणः ॥ २८

इति श्रीमात्स्ये महापुराणे पद्मोद्भवप्रादुर्भावे चतुःषष्ट्यधिकशततमोऽध्यायः ।

आदितः श्लोकानां समष्ट्यङ्काः ॥ ८८७६ ॥

---

+ एतदर्धस्थानेऽयं पाठो ङ. पुस्तके—आधिदैवं तु तद्दैवं यदैवामिति संज्ञितम् । इति ।

१ ङ. शुभाः । २ ङ. °ले । लोके च ग° । ३ ङ. °द्भुतामुप° । ४ ङ. देवेभ्यश्च° । ५ ग. श्रुतं च. सु । ६ ग. °यनं च य° । ङ. °यनोऽपि य° । ७ ङ. °श्वदेवानां । ८ ङ. °मू । यमीड्यं स° । ९ क. तमिज्यं स° । १० ग ङ. स्वाधीन ए° । ११ ङ °धैर्भावै° । १२ क. ख दैवः । स । १३ ग. घ. यतामहे ।

अथ पञ्चषष्ट्यधिकशततमोऽध्यायः ।

---

मत्स्य उवाच—

चत्वार्याहुः सहस्राणि वर्षाणां तु कृतं युगम् । तस्य तावच्छती संध्या द्विगुणा रविनन्दन
यत्र धर्मश्चतुष्पादस्त्वधर्मः पादविग्रहः । स्वधर्मनिरताः सन्तो जायन्ते यत्र मानवाः ॥ २
विप्राः स्थिता धर्मपरा राजवृत्तौ स्थिता नृपाः । कृष्यामभिरता वैश्याः शूद्राः शुश्रूषवः स्थिताः
तदा सत्यं च शौचं च धर्मश्चैव विवर्धते । सद्भिराचरितं कर्म क्रियते ख्यायते च वै ॥ ४
एतत्कार्तयुगं वृत्तं सर्वेषामपि पार्थिव । प्राणिनां धर्मसङ्गानामपि वै नीचजन्मनाम् ॥ ५
त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते । तस्य तावच्छती संध्या द्विगुणा परिकीर्त्यते ॥
द्वाभ्यामधर्मः पादाभ्यां त्रिभिर्धर्मो व्यवस्थितः । यत्र सत्यं च सत्त्वं च त्रेताधर्मो विधीयते
त्रेतायां विकृतिं यान्ति वर्णास्त्वेते न संशयः । चातुर्वर्ण्यस्य वैकृत्याद्यान्ति दौर्बल्यमाश्रमाः
एषा त्रेतायुगगतिर्विचित्रा देवनिर्मिता । द्वापरस्य तु या चेष्टा तामपि श्रोतुमर्हसि ॥ ९
द्वापरं द्वे सहस्रे तु वर्षाणां रविनन्दन । तस्य तावच्छती संध्या द्विगुणा युगमुच्यते ॥ १०
तत्र चार्थपराः सर्वे प्राणिनो रजसा हताः । सर्वे नैष्कृतिकाः क्षुद्रा जायन्ते रविनन्दन ॥ ११
द्वाभ्यां धर्मः स्थितः पद्भ्यामधर्मस्त्रिभिरुत्थितः । विपर्ययाच्छनैर्धर्मः क्षयमेति कलौ युगे १२
ब्राह्मण्यभावस्य ततस्तथौत्सुक्यं विशीर्यते । व्रतोपवासास्त्यज्यन्ते द्वापरे युगपर्यये ॥ १३
तथा वर्षसहस्रं तु वर्षाणां द्वे शते अपि । संध्यया सह संख्यातं क्रूरं कलियुगं स्मृतम् ॥ १४
यत्राधर्मश्चतुष्पादः स्याद्धर्मः पादविग्रहः । कामिनस्तपसा हीना जायन्ते तत्र मानवाः ॥ १५
नैर्वातिसात्त्विकः कश्चिन्न साधुर्न च सत्यवाक् । नास्तिका ब्रह्मभक्ता वा जायन्ते तत्र मानवाः
अहंकारगृहीताश्च प्रक्षीणस्नेहबन्धनाः । विप्राः शूद्रसमाचाराः सन्ति सर्वे कलौ युगे ॥ १७
आश्रमाणां विपर्यासः कलौ संपरिवर्तते । वर्णानां चैव संदेहो युगान्ते रविनन्दन ॥ १८
विद्याद्द्वादशसाहस्रीं युगाख्यां पूर्वनिर्मिताम् । एवं सहस्रपर्यन्तं तदहर्ब्राह्ममुच्यते ॥ १९
ततोऽहनि गते तस्मिन्सर्वेषामेव जीविनाम् । शरीरनिर्वृतिं दृष्ट्वा लोकसंहारबुद्धितः ॥ २०
देवतानां च सर्वासां ब्रह्मादीनां महीपते । दैत्यानां दानवानां च यक्षराक्षसपक्षिणाम् ॥ २१
गन्धर्वाणामप्सरसां भुजंगानां च पार्थिव । पर्वतानां नदीनां च पशूनां चैव सत्तम ॥
तिर्यग्योनिगतानां च सत्त्वानां कृमिणां तथा ॥ २२
महाभूतपतिः पञ्च हत्वा भूतानि भूतकृत् । जगत्संहरणार्थाय कुरुते वैशसं महत् ॥ २३

भूत्वा सूर्यश्चक्षुषी चाऽऽददानो भूत्वा वायुः प्राणिनां प्राणजालम् ।
भूत्वा वह्निर्निर्दहन्सर्वलोकान्भूत्वा मेघो भूय उग्रोऽप्यवर्षत् ॥ २४

इति श्रीमात्स्ये महापुराणे पद्मोद्भवप्रादुर्भावे पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ८९०० ॥

---

१ ङ. °पस्तथा । त° । २ ङ. सत्त्वं च सत्यं च धर्मश्चैवातिवर्तते । ३ ङ. च त्रिधा ध° । ४ ग. °यंयशतैर्ध° । ५ ग. °ह्मण्यं क्षत्रधर्मश्च तथौ° । ६ ङ. °स्तमसाऽऽच्छन्ना जा° । ७ क. ख. °साच्छन्ना जा° । ८ ग. ङ. °वावसायिकः । घ. °वावसानिकः । ९ ङ. °ह्मत्यक्ताश्च जा° । १० ग. घ. ङ. °द्विना । दे° । ११ ग. घ. ङ. भूत्वा ।

अथ षट्पष्ट्यधिकशततमोऽध्यायः ।

मत्स्य उवाच—

भूत्वा नारायणो योगी सत्त्वमूर्तिर्विभावसुः । गभस्तिभिः प्रदीप्ताभिः संशोषयति सागरान् ॥
ततः पीत्वाऽर्णवान्सर्वान्नदीः कूपांश्च सर्वशः । पर्वतानां च सलिलं सर्वमादाय रश्मिभिः ॥२
भित्त्वा गभस्तिभिश्चैव महीं गत्वा रसातलात् । पातालजलमादाय पिबते रसमुत्तमम् ॥ ३
मूत्रासृक्क्लेदमन्यच्च यदस्ति प्राणिषु ध्रुवम् । तत्सर्वमरविन्दाक्ष आदत्ते पुरुषोत्तमः ॥ ४
वायुश्च बलवान्भूत्वा विधुन्वानोऽखिलं जगत् । प्राणापानसमानाद्यान्वायूनाकर्षते हरिः॥५
ततो देवगणाः सर्वे भूतान्येव च यानि तु । गन्धो घ्राणं शरीरं च पृथिवीं संश्रिता गुणाः ॥ ६
जिह्वा रसश्च स्नेहश्च संश्रिताः सलिले गुणाः । रूपं चक्षुर्विपाकश्च ज्योतिरेवाऽऽश्रिता गुणाः॥
स्पर्शः प्राणश्च चेष्टा च पवने संश्रिता गुणाः । शब्दः श्रोत्रं च खान्येव गगने संश्रिता गुणाः॥८
लोकमाया भगवता मुहूर्तेन विनाशिता । मनो बुद्धिश्च सर्वेषां क्षेत्रज्ञश्चेति यः श्रुतः ॥ ९
तं वरेण्यं परमेष्ठी हृषीकेशमुपाश्रितः । ततो भगवतस्तस्य रश्मिभिः परिधारितः ॥ १०
*वायुनाऽऽक्रम्यमाणासु द्रुमशाखासु चाऽऽश्रितः । तेषां संघर्षणोद्भूतः पावकः शतधा ज्वलन् ॥ ११
अदहच्च तदा सर्वं वृतः संवर्तकोऽनलः । सपर्वतद्रुमान्गुल्माँल्लतावल्लीस्तृणानि च ॥ १२
विमानानि च दिव्यानि पुराणि विविधानि च । यानि चाऽऽश्रयणीयानि तानि सर्वाणि सोऽदहत् ॥ १३
भस्मीकृत्य ततः सर्वाँल्लोकाँल्लोकगुरुर्हरिः । भूयो निर्वापयामास युगान्तेन च कर्मणा ॥ १४
सहस्रवृष्टिः शतधा भूत्वा कृष्णो महाबलः । दिव्यतोयेन हविषा तर्पयामास मेदिनीम् ॥ १५
ततः क्षीरनिकायेन स्वादुना परमाम्भसा । शिवेन पुण्येन मही निर्वाणमगमत्परम् ॥ १६
तेन रोधेन संछन्ना पयसां वर्षतो धरा । एकार्णवजलीभूता सर्वसत्त्वविवर्जिता ॥ १७
महासत्त्वान्यपि विभुं प्रविष्टान्यमितौजसम् । नष्टार्कपवनाकाशे सूक्ष्मे जगति संवृते ॥ १८
संशोषमात्मना कृत्वा समुद्रानपि देहिनः । दग्ध्वा संप्लाव्य च तथा स्वपित्येकः सनातनः ॥
पौराणं रूपमास्थाय स्वपित्यमितविक्रमः । एकार्णवजलव्यापी योगी योगमुपाश्रितः ॥ २०
अनेकानि सहस्राणि युगान्येकार्णवाम्भसि । न चैनं कश्चिदव्यक्तं व्यक्तं वेदितुमर्हति ॥ २१
कश्चैव पुरुषो नाम किंयोगः कश्च योगवान् । असौ कियन्तं कालं च एकार्णवविधिं प्रभुः ॥
करिष्यतीति भगवानिति कश्चिन्न बुध्यते ॥ २२
न द्रष्टा नैव गमिता न ज्ञाता नैव पार्श्वगः । तस्य न ज्ञायते किंचित्तमृते देवसत्तमम् ॥ २३

* अत्रार्धेऽयं पाठो ग. पुस्तके—वायुनाऽऽक्रम्यमाणाश्च द्रुमशाखासमाश्रिता इति ।

१ ग. ङ. दग्ध्वा । घ. दष्ट्वा । २ ङ. °तले । पा° । ३ क. ख. °श्च भगवा° । ४ ग. °गणानां च सर्वेषां चैव देहिनां । पञ्चेन्द्रियगणानां च भू° । ङ. °गणानां च सर्वेषां चैव देहिनाम् । पञ्चेन्द्रियगणाः सर्वे भूतान्येवानुयान्ति च । घ्रेयं घ्रा° । ५ घ. ङ. °शिताः । म° । ६ ग. °ति विश्रुतः । ङ. °ति संस्मृताः । तं° । ७ ग. घ. ङ. °द्राणि च दे° । ८ ङ. °य स ह्येको मि° । ९ ग. घ. ङ. °णि शतान्ये° ।

नमः क्षितिं पवनमपः प्रकाशकं प्रजापतिं भुवनधरं सुरेश्वरम् ।
पितामहं श्रुतिनिलयं महामुनिं प्रशाम्य भूयः शयनं ह्यरोचयत् ॥ २४

इति श्रीमात्स्ये महापुराणे पद्मोद्भवप्रादुर्भावे षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

आदित श्लोकानां समष्ट्यङ्काः ॥ ८९२४ ॥

---

अथ सप्तषष्ट्यधिकशततमोऽध्यायः ।

---

मत्स्य उवाच—

एवमेकार्णवीभूते शेते लोके महाद्युतिः । प्रच्छाद्य सलिलेनोर्वीं हंसो नारायणस्तदा ॥ १
महतो रजसो मध्ये महार्णवसरःसु वै । विरजस्कं महाबाहुमक्षयं ब्रह्म यद्विदुः ॥ २
आत्मरूपप्रकाशेन तमसा संवृतः प्रभुः । मनः सात्त्विकमाधाय यत्र तत्सत्यमासत ॥ ३
याथातथ्यं परं ज्ञानं भूतं तद्ब्रह्मणा पुरा । रहस्यारण्यकोद्दिष्टं यच्चौपनिषदं स्मृतम् ॥ ४
पुरुषो यज्ञ इत्येतद्यत्परं परिकीर्तितम् । यश्चान्यः पुरुषाख्यः स्यात्स एष पुरुषोत्तमः ॥ ५
ये च यज्ञकरा विप्रा ये चर्त्विज इति स्मृताः । अस्मादेव पुरा भूता यज्ञेभ्यः श्रूयतां तथा ॥ ६
ब्रह्माणं प्रथमं वक्त्रादुद्गातारं च सामगम् । होतारमपि चाध्वर्युं बाहुभ्यामसृजत्प्रभुः ॥ ७
ब्रह्मणो ब्राह्मणाच्छंसि प्रस्तोतारं च सर्वशः । तौ मित्रावरुणौ पृष्ठात्प्रतिप्रस्तारमेव च(?)
उदरात्प्रतिहर्तारं पोतारं चैव पार्थिव । अच्छावाकमथोरुभ्यां नेष्टारं चैव पार्थिव ॥ ९
पाणिभ्यामथ चाऽऽग्नीध्रं सुब्रह्मण्यं च जानुतः । ग्रावस्तुतं तु पादाभ्यामुन्नेतारं च याजुषम् ॥
एवमेवैष भगवान्षोडशैव जगत्पतिः । प्रवक्तॄन्सर्वयज्ञानामृत्विजोऽसृजदुत्तमान् ॥ ११
तदेष वै वेदमयः पुरुषो यज्ञसंज्ञितः । वेदाश्चैतन्मयाः सर्वे साङ्गोपनिषदक्रियाः ॥ १२
स्वपित्येकार्णवे चैव यदाश्चर्यमभूत्पुरा । श्रूयतां तद्यथा विप्रा मार्कण्डेयकुतूहलम् ॥ १३
गीर्णो भगवतस्तस्य कुक्षावेव महामुनिः । बहुवर्षसहस्रायुस्तस्यैव वरतेजसा ॥ १४
अटंस्तीर्थप्रसङ्गेन पृथिवीं तीर्थगोचराम् । आश्रमाणि च पुण्यानि देवतायतनानि च ॥ १५
देशान्राष्ट्राणि चित्राणि पुराणि विविधानि च । जपहोमपरः शान्तस्तपो घोरं समास्थितः ॥
मार्कण्डेयस्ततस्तस्य शनैर्वक्त्राद्विनिःसृतः । स निष्क्रामन्न चाऽऽत्मानं जानीते देवमायया ॥
निष्क्रम्याप्यस्य वदनादेकार्णवमथो जगत् । सर्वतस्तमसाऽऽच्छन्नं मार्कण्डेयोऽन्ववैक्षत ॥
तस्योत्पन्नं भयं तीव्रं संशयश्चाऽऽत्मजीविते । देवदर्शनसंहृष्टो विस्मयं परमं गतः ॥ १९
चिन्तयञ्जलमध्यस्थो मार्कण्डेयो विशङ्कितः । किं नु स्यां‌न्मम चिन्तेयं मोहः स्वप्नोऽनुभूयते

---

१ क. ख. °काशं प्र° । २ ग. °शयन्प्रजा° । ३ ग. °पतिर्भुवनसुरासुरे° । ४ ङ. °यणोऽरिहा । म° । ५ क. ख. °क्षयं विदुः । ६ ङ. °ह्मणो मतम् । र° । ७ क. ख. घ °संस्थितः । ८ ग. घ. ङ. च. °हलात् । जीर्णो । ९ ङ. °हाद्युतिः । य° । १० क. ख. °थिवीतीर्थगोचरान् । आ° । घ. °थिवीतीर्थगोचरम् । आ° । ङ. °थिवीतीर्थगोचरः । आ° । ११ ङ. °पोरतिमयः श्रुतः । १२ ग. घ. च. °तः । निष्क्रामन्तं स आत्म° । ङ. °तः । निष्क्रम्यमाण आत्मा° । १३ घ. °भ्रं व्यथयन्स्वात्म° । ङ. °भ्रं कथयन्स्वात्मजीवितम् । १४ क. ख. °योऽन्ववैक्षत । किं । १५ ङ. स्यादात्मचि° ।

व्यक्तमन्यतमो भावस्तेषां संभावितो मम । न हीदृशं जगत्क्लेशमयुक्तं सत्यमर्हति ॥ २१
नष्टचन्द्रार्कपवने नष्टपर्वतभूतले । कतमः स्यादयं लोक इति चिन्तामवस्थितः ॥ २२
ददर्श चापि पुरुषं स्वपन्तं पर्वतोपमम् । सलिलेऽर्धमथो मग्नं जीमूतमिव सागरे ॥ २३
ज्वलन्तमिव तेजोभिर्गोयुक्तमिव भास्करम् । शर्वर्यां जाग्रतमिव भासन्तं स्वेन तेजसा ॥
देवं द्रष्टुमिहाऽऽयातः को भवानिति विस्मयात् । तथैव स मुनिः कुक्षिं पुनरेव प्रवेशितः ॥
संप्रविष्टः पुनः कुक्षिं मार्कण्डेयोऽतिविस्मयः । तथैव तु पुनर्भूयो विजानन्स्वप्नदर्शनम् ॥
स तथैव यथापूर्वं यो धरामटते पुरा । पुण्यतीर्थजलोपेतां विविधान्याश्रमाणि च ॥ २७
क्रतुभिर्यजमानाश्च समाप्तवरदक्षिणान् । अपश्यद्देवकुक्षिस्थान्याजकाञ्छतशो द्विजान् ॥
सद्वृत्तमास्थिताः सर्वे वर्णा ब्राह्मणपूर्वकाः । चत्वारश्चाऽऽश्रमाः सम्यग्यथोद्दिष्टा मया तव
एवं वर्षशतं साग्रं मार्कण्डेयस्य धीमतः । चरतः पृथिवीं सर्वां न कुक्ष्यन्तः समीक्षितः॥३०
ततः कदाचिदथ वै पुनर्वक्त्राद्विनिःसृतः । सुप्तं न्यग्रोधशाखायां बालमेकं निरैक्षत ॥ ३१
तथैवैकार्णवजले नीहारेणाऽऽवृतांम्बरे । अव्यग्रः क्रीडते लोके सर्वभूतविवर्जिते ॥ ३२
स मुनिर्विस्मयाविष्टः कौतूहलसमन्वितः । बालमादित्यसंकाशं नाशक्नोदभिवीक्षितुम् ॥
स चिन्तयंस्तथैकान्ते स्थित्वा सलिलसंनिधौ । पूर्वदृष्टमिदं मेने शङ्कितो देवमायया ॥३४
अगाधसलिले तस्मिन्मार्कण्डेयः संविस्मयः । प्लवंस्तथाऽऽर्तिमगमद्भयात्संत्रस्तलोचनः ॥
स तस्मै भगवानाह स्वागतं बालयोगवान् । बभाषे मेघतुल्येन स्वरेण पुरुषोत्तमः ॥ ३६
मा भैर्वत्स न भेतव्यमिहैवाऽऽयाहि मेऽन्तिकम् । मार्कण्डेयो मुनिस्त्वाह बालं तं श्रमपीडितः

मार्कण्डेय उवाच—

*को मां नाम्ना कीर्तयति तपः परिभवन्मम । दिव्यं वर्षसहस्राख्यं धर्षयन्निव मे वयः ॥
न ह्येष वः समाचारो देवेष्वपि ममोचितः । मां ब्रह्माऽपि हि देवेशो दीर्घायुरिति भाषते॥
कस्तमो घोरमासाद्य मामद्य त्यक्तजीवितः । मार्कण्डेयेति मामुक्त्वा मृत्युमीक्षितुमर्हति

सूत उवाच—

एव+मां भाष्य तं क्रोधान्मार्कण्डेयो महामुनिः । तथैव भगवान्भूयो बभाषे मधुसूदनः ॥ ४१

श्रीभगवानुवाच—

अहं ते जनको वत्स हृषीकेशः पिता गुरुः । आयुष्प्रदाता पौराणः किं मां त्वं नोपसर्पसि
मां पुत्रकामः प्रथमं पिता तेऽङ्गिरसो मुनिः । पूर्वमाराधयामास तपस्तीव्रं समाश्रितः ॥ ४३
× ततस्त्वां घोरतपसा प्रावृणोदमितौजसम् । उक्तवानहमात्मस्थं महर्षिममितौजसम् ॥

---

* एतदर्धस्थानेऽयं पाठो ङ. पुस्तके—को मां कीर्तयते भीतं शीतवर्षातपःसहम् । इति । + अत्राभापतेत्येवं भवितुं युक्तम् । × एतदर्धस्थानेऽयं पाठो ङ. पुस्तके—स तप्त्वा घोरतपसा प्रावृणोत्त्वां सुतेजसमिति ।

---

१ ङ. °व एतेषां भाविता मम । २ ध °षां भाविततां मम । ३ च. °दृशमसंक्ले° । ४ ग. घ. ङ. °सयन्स्वेन । ५ क. °ण्डेयस्य वि° । ग. ङ. °ण्डेयः सवि° । ६ ग. च. °क्षिणीः । अ° । ७ ग. घ. ङ. °तान्तरे । अव्यक्तः क्री° । ८ क. ख. ग. °दं मन्येश । ९ क. ख. घ. °यः सुवि° । १० ङ. सविस्मितः । ११ ग. ङ °मित आया° । १२ ग. तेजः । १३ ग. घ. ङ. °ख्यं वर्षयंश्चैव । १४ ङ. सदाचारो देवेष्वपि समो मतः । १५ क. ख. ग. °स्तपोघो° । १६ ङ. °भाषते को° ।

कः समुत्सहते चान्यो यो न भूतात्मकात्मजः । द्रष्टुमेकार्णवगतं क्रीडन्तं योगवर्त्मना ॥४५
ततः प्रहृष्टवदनो विस्मयोत्फुल्ललोचनः । मूर्ध्नि बद्ध्वाञ्जलिपुटो मार्कण्डेयो महातपाः ॥
नामगोत्रे ततः प्रोच्य दीर्घायुर्लोकपूजितः । तस्मै भगवते भक्त्या नमस्कारमथाकरोत् ॥

मार्कण्डेय उवाच—

इच्छेयं तत्त्वतो मायामिमां ज्ञातुं तवानघ । यदेकार्णवमध्यस्थः शेषे त्वं बालरूपवान् ॥
किंसंज्ञश्चैव भगवाँल्लोके विज्ञायसे प्रभो । तर्कये त्वां महात्मानं को ह्यन्यः स्थातुमर्हति ॥४९

श्रीभगवानुवाच—

अहं नारायणो ब्रह्मन्सर्वभूतविनाशनः । अहं सहस्रशीर्षाख्यो यः पदैरभिसंज्ञितः ॥ ५०
आदित्यवर्णः पुरुषो मखे ब्रह्ममयो मखः । अहमग्निर्हव्यवाहो यादसां पतिरव्ययः ॥ ५१
अहमिन्द्रपदे शक्रो वर्षाणां परिवत्सरः । अहं योगी युगाख्यस्य युगान्तावर्त एव च ॥ ५२
अहं सर्वाणि सत्त्वानि दैवतान्यखिलानि तु । भुजंगानामहं शेषस्तार्क्ष्यो वै सर्वपक्षिणाम् ॥
कृतान्तः सर्वभूतानां विश्वेषां कालसंज्ञितः । अहं धर्मस्तपश्चाहं सर्वाश्रमनिवासिनाम् ॥
अहं चैव सरिद्दिव्या क्षीरोदश्च महार्णवः । यत्तत्सत्यं च परममहमेकः प्रजापतिः ॥ ५५
अहं सांख्यमहं योगोऽप्यहं तत्परमं पदम् । अहमिज्या क्रिया चाहमहं विद्याधिपः स्मृतः ॥
अहं ज्योतिरहं वायुरहं भूमिरहं नभः । अहमापः समुद्राश्च नक्षत्राणि दिशो दश ॥ ५७
अहं वर्षमहं सोमः पर्जन्योऽहमहं रविः । क्षीरोदसागरे चाहं समुद्रे वडवामुखः ॥ ५८
वह्निः संवर्तको भूत्वा पिबंस्तोयमयं हविः । अहं पुराणः परमं तथैवाहं परायणम् ॥ ५९
अहं भूतस्य भव्यस्य वर्तमानस्य संभवः । यत्किंचित्पश्यसे विप्र यच्छृणोषि च किंचन ॥६०
यल्लोके चानुभवसि तत्सर्वं मामनुस्मर । विश्वं सृष्टं मया पूर्वं सृज्यं चाद्यापि पश्य माम् ॥ ६१
युगे युगे च स्रक्ष्यामि मार्कण्डेयाखिलं जगत् । तदेतदखिलं सर्वं मार्कण्डेयावधारय ॥ ६२
शुश्रूषुर्मम धर्मांश्च कुक्षौ चर सुखं मम । मम ब्रह्मा शरीरस्थो देवैश्च ऋषिभिः सह ॥ ६३
व्यक्तमव्यक्तयोगं मामवगच्छासुरद्विषम् । अहमेकाक्षरो मन्त्रस्त्र्यक्षरश्चैव तारकः ॥ ६४
परस्त्रिवर्गादोंकारस्त्रिवर्गार्थनिदर्शनः । एवमादिपुराणेशो वदन्नेव महामतिः ॥ ६५
*वक्त्रमाहृतवानाशु मार्कण्डेयं महामुनिम् । ततो भगवतः कुक्षिं प्रविष्टो मुनिसत्तमः ॥
स तस्मिन्सुखमेकान्ते शुश्रूषुर्हंसमव्ययम् । ६६

योऽहमेव विविधतनुं परिश्रितो महार्णवे व्यपगतचन्द्रभास्करे ।
शनैश्चरन्प्रभुरपि हंससंज्ञितोऽसृजज्जगद्विहरति कालपर्यये ॥ ६७

इति श्रीमात्स्ये महापुराणे पद्मोद्भवप्रादुर्भावे सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ८९९१ ॥

---

* एतदर्धस्थानेऽयं पाठो ङ पुस्तके—वक्त्रं व्यावृत्तवानाशु मार्कण्डेयो महामुनिरिति ।

१ ग. घ. °त्मकः । द्र° । २ क ख. °र्वभूः सर्वना° । ३ क. ख. °पाख्यैर्यः प° । ४ ग. घ. °वो मुखे । ङ. °षो मुख्यो ब्र° । ५ ग. घ ङ. °वाहः सदसत्पतिरच्युतः । अ° । ६ ग. घ. ङ. शक्रः क्रतूनां प° । ७ ग. ङ. °म् । भविष्ये वारि सर्वत्र भविष्यत्सर्वसं° । ८ ग. घ. °स्रु । तदक्षयो विविधमयाश्रितां तनुं म° । ९ क. ख. ग. °रयहंससंज्ञितेऽसृजज्जगद्विरहितक्रा° ।

अथाष्टषष्ट्यधिकशततमोऽध्यायः ।

मत्स्य उवाच—

आर्पवः स विभुर्भूत्वा चारयामास वै तपः । छादयित्वाऽऽत्मनो देहं[3] यादसां कुलसंभवम् ॥ १
ततो महात्माऽतिबलो मतिं लोकस्य सर्जने । महतां पञ्चभूतानां विश्वो विश्वममचिन्तयत्
तस्य चिन्तयमानस्य निर्वाते संस्थितेऽर्णवे । निराकाशे तोयमये सूक्ष्मे जगति गह्वरे ॥ ३
ईषत्संक्षोभयामास सोऽर्णवं सलिलाश्रयः । अनन्तरोर्मिभिः सूक्ष्ममथ च्छिद्रमभूत्पुरा ॥ ४
शब्दं प्रति तदोद्भूतो मारुतश्छिद्रसंभवः । स लब्ध्वाऽन्तरमक्षोभ्यो व्यवर्धत समीरणः ॥५
विवर्धता बलवता वेगाद्विक्षोभितोऽर्णवः । तस्यार्णवस्य क्षुब्धस्य तस्मिन्नम्भसि मन्थिते
कृष्णवर्त्मा समभवत्प्रभुर्वैश्वानरो महान् ॥ ६
ततः संशोषयामास पावकः सलिलं बहु । क्षयाज्जलनिधेश्छिद्रमभवद्विस्तृतं नभः ॥ ७
आत्मतेजोद्भवाः पुण्या आपोऽमृतरसोपमाः । आकाशं छिद्रसंभूतं वायुराकाशसंभवः ॥ ८
आभ्यां संघर्षणोद्भूतं पावकं वायुसंभवम् । दृष्ट्वा प्रीतो महादेवो महाभूतविभावनः ॥ ९
दृष्ट्वा भूतानि भगवाँल्लोकसृष्ट्यर्थमुत्तमम् । ब्रह्मणो जन्मसहितं बहुरूपो व्यचिन्तयत् ॥ १०
चतुर्युगाभिसंख्याते सहस्रयुगपर्यये । बहुर्जन्मा हि विश्वात्मा ब्रह्मणो हविरुच्यते ॥ ११
यत्पृथिव्यां द्विजेन्द्राणां तपसा भावितात्मनाम् । ज्ञानं दृष्टं तु विश्वार्थे योगिनां याति मुख्य-
ताम् ॥ १२
तं योगवन्तं विज्ञाय संपूर्णैश्वर्यमुत्तमम् । पदे ब्रह्माणि विश्वेशं[10] न्ययोजयत योगवित् ॥ १३
ततस्तस्मिन्महातोये महीशो हरिरच्युतः । जले क्रीडंश्च विधिवन्मोदते सर्वलोककृत् ॥
पद्मं नाभ्युद्भवं चैकं समुत्पादितवांस्तदा । सहस्रपर्णं विरजं भास्कराभं हिरण्मयम् ॥ १५

हुताशनज्वलितशिखोज्ज्वलत्प्रभमुपस्थितं शरदमलार्कतेजसम् ।
विराजते कमलमुदारवर्चसं महात्मनस्तनुरुहचारुदर्शनम् ॥ १६

इति श्रीमात्स्ये महापुराणे पद्मोद्भवप्रादुर्भावो नामाष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ९००७ ॥

---

अथैकोनसप्तत्यधिकशततमोऽध्यायः ।

मत्स्य उवाच—

अथ योगवतां श्रेष्ठमसृजद्भूरितेजसम् । स्रष्टारं सर्वलोकानां ब्रह्माणं सर्वतोमुखम्[13] ॥ १
यस्मिन्हिरण्मये पद्मे बहुयोजनविस्तृते । सर्वतेजोगुणमयं पार्थिवैर्लक्षणैर्वृतम् ॥ २

---

१ ग घ. ङ. च. °प एव वि° । २ ग. च. 'त्वा चर° । घ °त्वा वरया' । ङ. °त्वा तापया' । ३ ग. °हं तपसा कुशसंभवः । त° । घ. ङ. च. °हं पयसा कुशसंभवः । त° । ४ ङ. च. °लाश्रितः । ५ ग. °श्रयम् । अ° । ६ ङ. °णो रूपस° । ७ ग. °हशाने स° । ८ क. ख. °जन्मविशुद्धात्मब्रह्मणेह निरु° । ग. घ. जन्मविशुद्धात्मा । ९ ग. ज्ञातं द्रष्टुं तु । घ. ज्ञातु द° । १० ग. घ. ङ °शं न्ययो° । ११ क. ख. स्वयं । १२ ग. घ. ङ. °रुशैलवत् । इ° । १३ ङ. °म् । तस्मि° ।

तच्च पद्मं पुराणज्ञाः पृथिवीरूपमुत्तमम् । नारायणसमुद्भूतं प्रवदन्ति महर्षयः ॥ ३
या पद्मा सा रसा देवी पृथिवी परिचक्ष्यते । ये पद्मसारगुरवस्तान्दिव्यान्पर्वतान्विदुः ॥ ४
हिमवन्तं च मेरुं च नीलं निषधमेव च । कैलासं मुञ्जवन्तं च तथाऽन्यं गन्धमादनम् ॥ ५
पुण्यं त्रिशिखरं चैव कान्तं मन्दरमेव च । उदयं पिञ्जरं चैव विन्ध्यवन्तं च पर्वतम् ॥ ६
एते देवगणानां च सिद्धानां च महात्मनाम् । आश्रयाः पुण्यशीलानां सर्वकामफलप्रदाः ॥
एतेषामन्तरे देशो जम्बूद्वीप इति स्मृतः । जम्बूद्वीपस्य संस्थानं यज्ञिया यत्र वै क्रियाः ॥
एभ्यो यत्स्रवते तोयं दिव्यामृतरसोपमम् । दिव्यास्तीर्थशताधाराः सुरम्याः सरितः स्मृताः
स्मृतानि यानि पद्मस्य केसराणि समन्ततः । असंख्येयाः पृथिव्यास्ते विश्वे वै धातुपर्वताः
यानि पद्मस्य पर्णानि भूरीणि तु नराधिप । ते दुर्गमाः शैलचिता म्लेच्छदेशा विकल्पिताः
यान्यधोभागपर्णानि ते निवासास्तु भागशः । दैत्यानामुरगाणां च पतङ्गानां च पार्थिव ॥१२
तेषां महार्णवो यत्र तद्रसेत्यभिसंज्ञितम् । महापातककर्माणो मज्जन्ते यत्र मानवाः ॥ १३
पद्मस्यान्तरतो यत्तदेकार्णवगता मही । प्रोक्ताऽथ दिक्षु सर्वासु चत्वारः सलिलाकराः ॥
एवं नारायणस्यार्थे मही पुष्करसंभवा । प्रादुर्भावोऽप्ययं तस्मान्नाम्ना पुष्करसंज्ञितः ॥ १५
एतस्मात्कारणात्तज्ज्ञैः पुराणैः परमर्षिभिः । याज्ञिकैर्वेददृष्टान्तैर्यज्ञे पद्मविधिः स्मृतः ॥ १६
एवं भगवता तेन विश्वेषां धारणाविधिः । पर्वतानां नदीनां च ह्रदानां चैव निर्मितः ॥ १७
विभुस्तथैवाप्रतिमप्रभावः प्रभाकराभो वरुणः सितद्युतिः ।
*शनैः स्वयंभूः शयनं सृजत्तदा जगन्मयं पद्मविधिं महार्णवे ॥ १८

इति श्रीमात्स्ये महापुराणे पद्मोद्भवप्रादुर्भाव एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ९०२५ ॥

---

अथ सप्तत्यधिकशततमोऽध्यायः ।

---

मत्स्य उवाच—

विघ्नस्तपसि संभूतो मधुर्नाम महासुरः । तेनैव च सहोद्भूतो ह्यसुरो नाम कैटभः ॥ १
तौ रजस्तमसौ विष्णोः संभूतौ तामसौ गणौ । एकार्णवे जगत्सर्वं क्षोभयन्तौ महाबलौ ॥
दिव्यरक्ताम्बरधरौ श्वेतदीप्ताग्रदंष्ट्रिणौ । किरीटकुण्डलोदग्रौ केयूरवलयोज्ज्वलौ ॥ ३
महाविवृतताम्राक्षौ पीनोरस्कौ महाभुजौ । महागिरेः संहननौ जङ्गमाविव पर्वतौ ॥ ४

---

* एतदर्धस्थानेऽयं पाठो ग. घ. पुस्तकयोः । शनैःस्वयंभूः श्रयते सृजन्नगज्जगन्मयः पद्मनिधिर्महार्णवे । इति ।

---

१ ङ मंनीषिणः । २ ङ. 'लासमृक्षव' । ३ ङ °व्यतीर्थानां । ४ ङ. 'र्थसिता । ५ ग. घ. ङ. 'ताः । यान्ये- तानि च प° । ६ ग. घ. ङ. भूरिपूर्वं न° । ७ ग. घ. °न्यष्टौ भा' । ८ ङ. नामसुराणां । ९ ग. घ. 'भिः । यज्ञियैर्वे' । १० ग. °र्यज्ञैः पूर्वचितिः कृता ए° । घ. °र्यज्ञैः सूपचितिःकृता । ए° । ११ ङ. ज्ञेषूपचितिः कृता । ए° । १२ ग. घ. विश्वया धरया वि° । १३ क. ख. 'रणासि' । ङ. °रुणोऽमरद्यु' । १४ ङ. विष्णौ स्वपिति सं° । १५ क. ख. 'तो रजसा कैटभस्ततः। तौ । १६ क. ख. विघ्नसं° । ग. घ. विघ्नौ सं° । १७ क. ख. घ. °दीप्ताग्र° । १८ ग. ङ. 'टमुकुटोद' । १९ क. ख °विक्रमता' । ग. घं. विकृतता' ।

क्षिप्यमाणोऽसुरेन्द्रेण न चुकोप गदाधरः । क्षमाबलेन महता सस्मितं चेदमब्रवीत् ॥ २३
अल्पं दर्पबलं दैत्य स्थिरमक्रोधजं बलम् । हतस्त्वं दर्पजैर्दोषैर्हित्वा यद्भापसे क्षमाम् ॥ २४
अधीरस्त्वं मम मतो धिगेतत्तव वाग्बलम् । न यत्र पुरुषाः सन्ति तत्र गर्जन्ति योषितः ॥
अहं त्वां दैत्य पश्यामि पूर्वेषां मार्गगामिणम् । प्रजापतिकृतं सेतुं भित्त्वा कः स्वस्ति-
मान्व्रजेत् ॥ २६
अद्य त्वां नाशयिष्यामि देवव्यापारघातकम् । स्वेषु स्वेषु च स्थानेषु स्थापयिष्यामि देवताः
एवं ब्रुवति वाक्यं तु मृधे श्रीवत्सधारिणि । जहास दानवः क्रोधाद्धस्तांश्चक्रे सहायुधान् ॥
स बाहुशतमुद्यम्य सर्वास्त्रग्रहणं रणे । क्रोधाद्द्विगुणरक्ताक्षो विष्णुं वक्षस्यताडयत् ॥ २९
दानवाश्चापि समरे मयतारपुरोगमाः । उद्यतायुधनिस्त्रिंशा विष्णुमभ्यद्रवन्रणे ॥ ३०
स ताड्यमानोऽतिबलैर्दैत्यैः सर्वोद्यतायुधैः । न चचाल ततो युद्धेऽकम्पमान इवाचलः ॥
संसक्तश्च सुपर्णेन कालनेमी महासुरः । सर्वप्राणेन महतीं गदामुद्यम्य बाहुभिः ॥ ३२
घोरां ज्वलन्तीं मुमुचे संरब्धो गरुडोपरि । कर्मणा तेन दैत्यस्य विष्णुर्विस्मयमाविशत् ॥
यदा तेन सुपर्णस्य पातिता मूर्ध्नि सा गदा । सुपर्णं व्यथितं दृष्ट्वा क्षतं च वपुरात्मनः ॥
क्रोधसंरक्तनयनो वैकुण्ठश्चक्रमाददे । व्यवर्धत स वेगेन सुपर्णेन समं विभुः ॥ ३५
भुजाश्चास्य व्यवर्धन्त व्याप्नुवन्तो दिशो दश । प्रदिशश्चैव खं गां वै पूरयामास केशवः ॥
ववृधे च पुनर्लोकान्क्रान्तुकाम इवौजसा । तर्जनायासुरेन्द्राणां वर्धमानं नभस्तले ॥ ३८
ऋषयश्चैव गन्धर्वास्तुष्टुवुर्मधुसूदनम् । सर्वान्किरीटेन लिहन्साभ्रमम्बरमम्बरैः ॥ ३९
पद्भ्यामाक्रम्य वसुधां दिशः प्रच्छाद्य बाहुभिः । स सूर्यकरतुल्याभं सहस्रारमरिक्षयम् ॥ ४०
दीप्ताग्निसदृशं घोरं दर्शनेन सुदर्शनम् । सुवर्णरेणुपर्यन्तं वज्रनाभं भयावहम् ॥ ४१
मेदोस्थिमज्जारुधिरैः सिक्तं दानवसंभवैः । अद्वितीयप्रहरणं क्षुरपर्यन्तमण्डलम् ॥ ४२
स्रग्दाममालावितितं कामगं कामरूपिणम् । स्वयं स्वयंभुवा सृष्टं भयदं सर्वविद्विषाम् ॥
महर्षिरोषैराविष्टं नित्यमाहवदर्पितम् । क्षेपणाद्यस्य मुह्यन्ति लोकाः सस्थाणुजङ्गमाः ॥
क्रव्यादानि च भूतानि तृप्तिं यान्ति महामृधे । तदप्रतिमकर्मोग्रं समानं सूर्यवर्चसा ॥ ४५
चक्रमुद्यम्य समरे क्रोधदीप्तो गदाधरः । स मुष्णन्दानवं तेजः समरे स्वेन तेजसा ॥ ४६
चिच्छेद बाहुं चक्रेण श्रीधरः कालनेमिनः । तच्च वक्त्रशतं घोरं साग्निपूर्णाट्टहासि वै ॥
तस्य दैत्यस्य चक्रेण प्रममाथ बलाद्धरिः । स च्छिन्नबाहुर्विशिरा न प्राकम्पत दानवः ॥
कबन्धोऽवस्थितः संख्ये विशाख इव पादपः । संवितत्य महापक्षौ वायोः कृत्वा समं जवम्
उरसा पातयामास गरुडः कालनेमिनम् । स तस्य देहो विमुखो विबाहुः खात्परिभ्रमन्
निपपात दिवं त्यक्त्वा क्षोभयन्धरणीतलम् । तस्मिन्निपतिते दैत्ये देवाः सर्षिगणास्तदा
साधु साध्विति वैकुण्ठं समेताः प्रत्यपूजयन् । अपरे ये तु दैत्याश्च युद्धे दृष्टपराक्रमाः ॥

१ क. ख. क्षमम् । २ ग. ङ. अधर्मस्त्वं । ३ ग. °व्यापत्तिदायिनम् । स्वे° । ४ ग. °स्त्रशरणं । ५ ङ. सर्वा° युधोद्यतैः । न । ६ ग. °मागमत् । य° । ङ. °मागतः । य° । ७ क. ख. घ. कृतं । ८ ङ. °सा । तं जयार्य सु° । ९ ग. पयः सहगन्धर्वैस्तु° । ङ. पयः सिद्धग° । १० ग. °पैर्गविष्टं नित्यमाहवजृम्भित° । ११ ङ. °काः स्थावरज° । १२ ग. ङ. °कर्माणं स° । १३ ग. °ग्निचूर्णावहा° । ङ. °ग्निकृत्वाऽट्ट° । १४ ङ. °रा निपपात च दा° ।

ते सर्वे बाहुभिर्व्याप्ता न शेकुश्चलितुं रणे । कांश्चित्केशेषु जग्राह कांश्चित्कण्ठेषु पीडयन्
चकर्ष कस्यचिद्वक्त्रं मध्येऽगृह्लादथापरम् । ते गदा चक्रनिर्दग्धा गतसत्त्वा गतासवः ॥५३
गगनाद्भ्रष्टसर्वाङ्गा निपेतुर्धरणीतले । तेषु दैत्येषु सर्वेषु हतेषु पुरुषोत्तमः ॥ ५४
तस्थौ शक्रप्रियं कृत्वा कृतकर्मा गदाधरः । तस्मिन्विमर्दे सङ्ग्रामे निवृत्ते तारकामये ॥५५
तं देशमाजगामाऽऽशु ब्रह्मा लोकपितामहः । सर्वैर्ब्रह्मर्षिभिः सार्धं गन्धर्वाप्सरसां गणैः ॥
देवदेवो हरिं देवं पूजयन्वाक्यमब्रवीत् । कृतं देव महत्कर्म सुराणां शल्यमुद्धृतम् ॥
वधेनानेन दैत्यानां वयं च परितोषिताः ॥ ५७
योऽयं त्वया हतो विष्णो कालनेमिर्महासुरः । त्वमेकोऽस्य मृधे हन्ता नान्यः कश्चन विद्यते
एष देवान्परिभवँल्लोकांश्च सचराचरान् । ऋषीणां कदनं कृत्वा मामपि प्रति गर्जति ॥
तदनेन तवाग्र्येण परितुष्टोऽस्मि कर्मणा । यदयं कालकल्पस्तु कालनेमिर्निपातितः ॥६०
तदागच्छ स्वभवनं गच्छामि दिवमुत्तमम् । ब्रह्मर्षयस्त्वां तत्रस्थाः प्रतीक्षन्ते सदोगताः
कं चाहं तव दास्यामि वरं वरवतां वर । सुरेष्वथ च दैत्येषु वराणां वरदो भवान् ॥ ६२
निर्यातयैतत्त्रैलोक्यं स्फीतं निहतकण्टकम् । अस्मिन्नेव मृधे विष्णो शक्राय सुमहात्मने
एवमुक्तो भगवता ब्रह्मणा हरिरव्ययः । देवाञ्छक्रमुखान्सर्वानुवाच शुभया गिरा ॥ ६४

विष्णुरुवाच—

शृण्वन्तु त्रिदशाः सर्वे यावन्तोऽत्र समागताः । श्रवणावहितैः श्रोत्रैः पुरस्कृत्य पुरंदरम्
अस्माभिः समरे सर्वे कालनेमिमुखा हताः । दानवा विक्रमोपेताः शक्रादपि महत्तराः ॥
अस्मिन्महति सङ्ग्रामे दैतेयौ द्वौ विनिःसृतौ । विरोचनश्च दैत्येन्द्रः स्वर्भानुश्च महाग्रहः ॥
स्वां दिशं भजतां शक्रो दिशं वरुण एव च । याम्यां यमः पालयितामुत्तरां च धनाधिपः
ऋक्षैः सह यथायोगं गच्छतां चैव चन्द्रमाः । अब्दमृतुमुखे सूर्यो भजतामयनैः सह ॥ ६९
आज्यभागाः प्रवर्तन्तां सदस्यैरभिपूजिताः । हूयन्तामग्नयो विप्रैर्वेददृष्टेन कर्मणा ॥ ७०
देवाश्चाप्यग्निहोमेन स्वाध्यायेन महर्षयः । श्राद्धेन पितरश्चैव तृप्तिं यान्तु यथासुखम् ॥७१
वायुश्चरतु मार्गस्थस्त्रिधा दीप्यतु पावकः । त्रींस्तु+वर्णांश्च लोकांस्त्रींस्तर्पयंश्चाऽऽत्मजैर्गुणैः
क्रतवः संप्रवर्तन्तां दीक्षणीयैर्द्विजातिभिः । दक्षिणाश्चोपपाद्यन्तां याज्ञिकेभ्यः पृथक्पृथक्
गां तु सूर्यो रसान्सोमो वायुः प्राणांश्च प्राणिषु । तर्पयन्तः प्रवर्तन्तां सर्व एव स्वकर्मभिः ॥
यथावदानुपूर्व्येण महेन्द्रमलयोद्भवाः । त्रैलोक्यमातरः सर्वाः समुद्रं यान्तु सिन्धवः ॥
दैत्येभ्यस्त्यज्यतां भीश्च शान्तिं व्रजत देवताः । स्वस्ति वोऽस्तु गमिष्यामि ब्रह्मलोकं सनातनम् ॥ ७६
स्वगृहे स्वर्गलोके वा सङ्ग्रामे वा विशेषतः । विश्रम्भो वो न मन्तव्यो नित्यं क्षुद्रा हि दानवाः

---

+ एतदर्धस्थानेऽयं पाठो ग. पुस्तके—त्रयो वर्णाश्च लोकांस्त्रींस्तर्पयन्त्वात्मजैर्गुणैरिति ।

---

१ ग. घ. ङ. °कर्तं क° । २ ग. °वः । क्षणेनोद्ध° । ३ क. ख. घ. ससुरासुरान् । ४ ङ. मामेव प्र° । ५ ग. °मिविधानि° । ६ क. ख. घ. °च्छस्व भद्रं ते गच्छामदि° । ७ घ. ङ. रभृतां । ८ ग निर्वापयित्वा त्रैलो° । ९ ग. °मे द्वावेतौ तु विनिर्गतौ । १० ग. अयं क्रतुगणं मू° । घ. अब्दं क्रतुमुखः सू° । ११ ग. °र्यो गच्छता° । १२ ग. °क्षणा-यैर्द्वि° । ङ. °क्षणायै द्विजा° । १३ ग ङ. कृपाश्च सू° ।

४९

छिद्रेषु प्रहरन्त्येते न तेषां संस्थितिर्ध्रुवा । सौम्यानामृजुभावानां भवतामार्जवं धनम् ॥
एवमुक्त्वा सुरगणान्विष्णुः सत्यपराक्रमः । जगाम ब्रह्मणा सार्धं स्वलोकं तु महायशाः ॥
एतदाश्चर्यमभवत्सङ्ग्रामे तारकामये । दानवानां च विष्णोश्च यन्मां त्वं परिपृष्टवान् ॥ ८०

इति श्रीमात्स्ये महापुराणे पद्मोद्भवप्रादुर्भावसंग्रहो नामाष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ९५३७ ॥

---

अथ नवसप्तत्यधिकशततमोऽध्यायः ।

---

ऋषय ऊचुः—

श्रुतः पद्मोद्भवस्तात विस्तरेण त्वयेरितः । समासाद्भवमाहात्म्यं भैरवस्याभिधीयताम् ॥ १

सूत उवाच—

तस्यापि देवदेवस्य शृणुध्वं कर्म चोत्तमम् । आसीद्दैत्योऽन्धको नाम भिन्नाञ्जनचयोपमः
तपसा महता युक्तो ह्यवध्यस्त्रिदिवौकसाम् । स कदाचिन्महादेवं पार्वत्या सहितं प्रभुम् ॥
क्रीडमानं तदा दृष्ट्वा हर्तुं देवीं प्रचक्रमे । तस्य युद्धं तदा घोरमभवत्सह शंभुना ॥ ४
अवन्तिविषये घोरे महाकालवनं प्रति । तस्मिन्युद्धे तदा रुद्रश्चान्धकेनातिपीडितः ॥ ५
मुमुच बाणमत्युग्रं नाम्ना पाशुपतं हि तत् । रुद्रबाणविनिर्भेदाद्रुधिरादन्धकस्य तु ॥ ६
अन्धकाश्च समुत्पन्नाः शतशोऽथ सहस्रशः । तेषां विदार्यमाणानां रुधिरादपरे पुनः ॥ ७
बभूवुरन्धका घोरा यैर्व्याप्तमखिलं जगत् । एवं मायाविनं दृष्ट्वा तं च देवस्तदाऽन्धकम् ॥
पानार्थमन्धकास्रस्य सोऽसृजन्मात*रस्तदा । +माहेश्वरी तथा ब्राह्मी कौमारी मालिनी तथा ॥ ९
सौपर्णी ह्यथ वायव्या शाक्री वै नैर्ऋती तथा । सौरी सौम्या शिवा दूती चामुण्डा चाथ वारुणी ॥ १०
वाराही नारसिंही च वैष्णवी च चलच्छिखा । शतानन्दा भगानन्दा पिच्छिला भगमालिनी ॥ ११
बला चातिबला रक्ता सुरभी मुखमण्डिका । मातृनन्दा सुनन्दा च बिडाली शकुनी तथा ॥
रेवती च महारक्ता तथैव पिलपिच्छिका । जया च विजया चैव जयन्ती चापराजिता ॥ १३
काली चैव महाकाली दूती चैव तथैव च । सुभगा दुर्भगा चैव कराली नन्दिनी तथा ॥
अदितिश्च दितिश्चैव मारी वै मृत्युरेव च । कर्णमोटी तथा ग्राम्या उलूकी च घटोदरी ॥
कपाली वज्रहस्ता च पिशाची राक्षसी तथा । भुशुण्डी शांकरी चण्डा लाङ्गली कुटमी तथा ॥ १६

---

* अत्र द्वितीयार्थे प्रथमाऽवगन्तव्या : + मातृनामसु सर्वत्र द्वितीयन्तपाठो वर्तते ग. ङ. घ. पुस्तकेषु ।

१ ग. मतम् । ङ. मनः । २ ग. ङ. °र्धं ब्रह्मलोकं म° । घ. र्धं विष्णुलोकम्° । ३ ग. घ. ङ. °पृच्छसि । इ° । ४ क. ख. °यस्य विधौ° । ५ क. ख. °ना । आवन्त्ये त्रि° । ६ क. ख. घ. सुपुवे । ७ ङ. च °स्य समृजे मात° । ८ ङ. °री चानलां त° । ९ ङ. °र्ऋति त° ।

खेटा सुलोचना धूम्रा[1] एकवीरा करालिनी। विशालदंष्ट्रिणी श्यामा त्रिजटी कुक्कुटी तथा
वैनायकी च वैताली उन्मत्तोदुम्बरी तथा। सिद्धिश्च लेलिहाना च केकरी[2] गर्दभी तथा ॥
भ्रुकुटी बहुपुत्री[3] च प्रेतयाना विडम्बिनी । क्रौञ्चा शैलमुखी चैव विनता सुरसा दनुः ॥
उषा रम्भा मेनका च सलिला चित्ररूपिणी। स्वाहा स्वधा वषट्कारा धृतिर्ज्येष्ठा कपर्दिनी
माया विचित्ररूपा च कामरूपा च संगमा। मुखेविला मङ्गला च महानासा महामुखी ॥
कुमारी रोचना भीमा सदाहा सा मदोद्धता। अलम्बाक्षी कालपर्णी कुम्भकर्णी महासुरी
केशिनी शङ्खिनी लम्बा पिङ्गला लोहितामुखी । घण्टारवाऽथ दंष्ट्राला रोचना कौंकज[4]-
ङ्घिका ॥ २३

गोकर्णिका[5]ऽजमुखिका महाग्रीवा महामुखी। उल्कामुखी धूमशिखा कम्पिनी[6] परिकम्पिनी
मोहना कल्पना क्ष्वेला निर्भया बाहुशालिनी। सर्पकर्णी तथैकाक्षी विशोका नन्दिनी तथा
ज्योत्स्नामुखी च रभसा निकुम्भा रक्तकम्पना। अविकारा महाचित्रा चन्द्रसेना मनोरमा ॥
अदर्शना हरत्पापा मातङ्गी लम्बमेखला । अबाला वञ्चना काली प्रमोदा लाङ्गलावती ॥
चित्ता चित्तजला कोणा शान्तिका[7]ऽघविनाशिनी। लम्बस्तनी लम्बसटा विसटा वास-
चूर्णिनी ॥ २८

स्खलन्ती दीर्घकेशी च सुचिरा[8] सुन्दरी शुभा। अयोमुखी कटुमुखी क्रोधनी च तथाऽशनी ॥
कुटुम्बिका मुक्तिका च चन्द्रिका बलमोहिनी । सामान्या हासिनी लम्बा कोविदारी समा-
सवी[9] ॥ ३०

शङ्कुकर्णी महानादा महादेवी महोदरी । हुंकारी रुद्रसुसटा रुद्रेशी भूतडामरी ॥ ३१
पिण्डजिह्वा चलज्ज्वाला शिवा ज्वालामुखी तथा । एताश्चान्याश्च देवेशः सोऽसृज-
न्मातरस्तदा ॥ ३२

अन्धकानां[10] महाघोराः पपुस्तद्रुधिरं तदा । ततोऽन्धकासृजः[11] सर्वाः परां तृप्तिमुपागताः ॥
तासु तृप्तासु संभूता भूय एवान्धकप्रजाः । अर्दितस्तैर्महादेवः शूलमुद्गरपाणिभिः ॥ ३४
ततः स शंकरो देवस्त्वन्धकैर्व्याकुलीकृतः । जगाम शरणं देवं वासुदेवमजं विभुम् ॥३५
ततस्तु भगवान्विष्णुः सृष्टवाञ्छुष्करेवतीम् । या पपौ सकलं तेषा[12]मन्धकानामसृक्क्षणात्
यथा यथा च रुधिरं पिबन्त्यन्धकसंभवम् । तथा तथाऽधिकं देवी संशुष्यति जनाधिप॥
पीयमाने तया तेषामन्धकानां तथा[13]ऽसृजि । अन्धकास्तु क्षयं नीताः सर्वे ते त्रिपुरारिणा
मूलान्धकं तु विक्रम्य तदा शर्वस्त्रिलोकधृक्। चकार वेगाच्छूलाग्रे स च तुष्टाव शंकरम्॥
अन्धकस्तु महावीर्यस्तस्य तुष्टोऽभवद्भवः। सामीप्यं प्रददौ नित्यं गणेशत्वं तथैव च॥ ४०
ततो मातृगणाः[14] सर्वे शंकरं वाक्यमब्रुवन् । भगवन्भक्षयिष्यामः सदेवासुरमानुषान् ॥
त्वत्प्रसादाज्जगत्सर्वं तदनुज्ञातुमर्हसि ॥ ४१

---

१ ग. °म्रा करालीं च क° । २ ग. केकरां । ३ ग. °पुत्रां च । ४ ग. कारुज° । ङ. कालज° । ५ ङ. °र्णिकां मूषिकां च ग° । ६ ग. कम्पनां परिकम्पनाम् । मो° । ७ ङ. °काक्षमितशि° । ८ ग. सुवीरा । ९ ङ. सवासवी । १० ङ. °कान्ता म° । ११ ग. °सृजं पीत्वा प° । १२ ङ. °वी तं शु° । १३ ग. °त्रिशूलधृ° । १४ ग. °गणः सर्वः शंकरं वाक्यमब्रवीत् । भ° ।

शंकर उवाच

भवतीभिः प्रजा सर्वा रक्षणीया न संशयः। तस्माद्घोराद्भिप्रायान्मनशीघ्रं निवर्त्यताम्॥
इत्येवं शंकरेणोक्तमनादृत्य वचस्तदा। भक्षयामासुरत्युग्रास्त्रैलोक्यं सचराचरम्॥ ४३
त्रैलोक्ये भक्ष्यमाणे तु तदा मातृगणेन वै। नृसिंहमूर्तिं देवेशं प्रदध्यौ भगवाञ्छिवः॥४४
अनादिनिधनं देवं सर्वलोकभवोद्भवम्। दैत्येन्द्रवक्षोरुधिरचर्चिताग्रमहानखम्॥ ४५
विद्युज्जिह्वं महादंष्ट्रं स्फुरत्केसरकण्टकम्। कल्पान्तमारुतक्षुब्धं सप्तार्णवसमस्वनम्॥ ४६
वज्रतीक्ष्णनखं घोरमाकर्णव्यादिताननम्। मेरुशैलप्रतीकाशमुदयार्कसमेक्षणम्॥ ४७
हिमाद्रिशिखराकारं चारुदंष्ट्रोज्ज्वलाननम्। नखनिःसृतरोपाग्निज्वालाकेसरमालिनम्॥
बद्धाङ्गदं सुमुकुटं हारकेयूरभूषणम्। श्रोणीसूत्रेण महता काञ्चनेन विराजितम्॥ ४९
नीलोत्पलदलश्यामं वासोयुगविभूषणम्। तेजसाऽऽक्रान्तसकलब्रह्माण्डागारसंकुलम्॥५०
पवनभ्राम्यमाणानां हुतहव्यवहार्चिषाम्। आवर्तसदृशाकारैः संयुक्तं देहलोमजैः॥ ५१
सर्वपुष्पविचित्रां च धारयन्तं महास्रजम्। स ध्यातमात्रो भगवान्प्रददौ तस्य दर्शनम्॥
यादृशेनैव रूपेण ध्यातो रुद्रेण धीमता। तादृशेनैव रूपेण दुर्निरीक्ष्येण दैवतैः॥ ५३
प्रणिपत्य तु देवेशं तदा तुष्टाव शंकरः॥ ५४

शंकर उवाच—

नमस्तेऽस्तु जगन्नाथ नरसिंहवपुर्धर। दैत्यनाथासृजापूर्णनखशुक्तिविराजित॥ ५५
ततः सकलसंलग्न हेमपिङ्गलविग्रह। नतोऽस्मि पद्मनाभ त्वां सुरशक्रजगद्गुरो॥ ५६
कल्पान्ताम्भोदनिर्घोष सूर्यकोटिसमप्रभ। सहस्रयमसंक्रोध सहस्रेन्द्रपराक्रम॥ ५७
सहस्रधनदस्फीत सहस्रवरुणात्मक। सहस्रकालरचित सहस्रनियतेन्द्रिय॥ ५८
सहस्रभूर्महाधैर्य सहस्रानन्तमूर्तिमन्। सहस्रचन्द्रप्रतिम सहस्रग्रहविक्रम॥ ५९
सहस्ररुद्रतेजस्क सहस्रब्रह्मसंस्तुत। सहस्रबाहुवेगोग्र सहस्रास्यनिरीक्षण॥
सहस्रयन्त्रमथन सहस्रवधमोचन॥ ६०
अन्धकस्य विनाशाय याः सृष्टा मातरो मया। अनादृत्य तु मद्वाक्यं भक्षयन्त्युद्यताः प्रजाः
कृत्वा ताश्च न शक्तोऽहं संहर्तुमपराजित। स्वयं कृत्वा कथं तासां विनाशमभिकारये॥६२
एवमुक्तः स रुद्रेण नरसिंहवपुर्धरः। ससर्ज देवो जिह्वायास्तदा वागीश्वरीं हरिः॥ ६३
हृदयाच्च तथा मायां गुह्याच्च भवमालिनी। अस्थिभ्यश्च तथा काली सृष्टा पूर्वं महात्मना॥
यया तद्रुधिरं पीतमन्धकानां दुरात्मनाम्। या चास्मिन्कथिता लोके नामतः शुष्करेवती॥
द्वात्रिंशन्मातरः सृष्टा गात्रेभ्यश्चक्रिणा ततः। तासां नामानि वक्ष्यामि तानि मे गदतः शृणु॥
सर्वास्तास्तु महाभागा घण्टाकर्णी तथैव च। त्रैलोक्यमोहिनी पुण्या सर्वसत्त्ववशंकरी॥
तथा च चक्रहृदया पञ्चमी व्योमचारिणी। शङ्खिनी लेखिनी चैव कालसंकर्षणी तथा॥

१ ङ. °ताद्रम° । २ ग. °वमहास्व° । ३ क. ख. °मू । वज्राङ्ग° । ४ ङ. °ण्डान्तरमण्डपम् । प° । ५ ग. °रमण्डल° । ६ ङ. वैरत्न वि° । ७ क. ख. °खशारि° । ८ ङ. च. °स्रवदनस्फो° । ९ घ. ङ. चं. °स्रवरणा° । १० घ. च. °भूमिसंधै° । ११ घ. °स्रावर्तमू° । १२ ग. ङ. च. °भिरोचये । १३ ङ. °पुर्हरिः । स° । १४ ग. ङ. मायां । १५ ग. घ. ङ. °लिनीम् । अ° । १६ क. ग. °नां महात्म° । १७ ख. °त्मना । या । १८ ङ. °मी काम° ।

इत्येताः पृष्ठगा राजन्वागीशानुचराः स्मृताः । संकर्षणी तथाऽश्वत्था बीजभावाऽपराजिता
कल्याणी मधुदंष्ट्री च कमलोत्पलहस्तिका । इति देव्यष्टकं राजन्मायानुचरमुच्यते ॥ ७०
अजिता सूक्ष्महृदया वृद्धावेशाश्मदंशना । नृसिंहभैरवा बिल्वा गरुत्मद्धृदया जया ॥ ७१
भवमालिन्यनुचरा इत्यष्टौ नृप मातरः । आकर्णनी संभटा च तथैवोत्तरमालिका ॥ ७२
ज्वालामुखी भीषणिका कामधेनुश्च बालिका । तथा पद्मकरा राजन्रेवत्यनुचराः स्मृताः ॥
अष्टौ महाबलाः सर्वा देवगात्रसमुद्भवाः । त्रैलोक्यसृष्टिसंहारसमर्थाः सर्वदेवताः ॥ ७४
ताः सृष्टमात्रा देवेन क्रुद्धा मातृगणस्य तु । प्रधाविता महाराज क्रोधविस्फारितेक्षणाः ॥
अविषह्यतमं तासां दृष्टितेजः सुदारुणम् । तमेव शरणं प्राप्ता नृसिंहो वाक्यमब्रवीत् ॥७६
यथा मनुष्याः पशवः पालयन्ति चिरात्सुतान् । जयन्ति ते तथैवाऽऽशु यथा वै देवतागणाः ॥
भवन्त्यस्तु तथा लोकान्पालयन्तु मयेरिताः । मनुजैश्च तथा देवैर्यजध्वं त्रिपुरान्तकम् ॥ ७८
न च बाधा प्रकर्तव्या ये भक्तास्त्रिपुरान्तके । ये च मां संस्मरन्तीह ते च रक्ष्याः सदा नराः ॥
बलिकर्म करिष्यन्ति युष्माकं ये सदा नराः । सर्वकामप्रदास्तेषां भविष्यध्वं तथैव च ॥८०
उच्छासनादिकं ये च कथयन्ति मयेरितम् । ते च रक्ष्याः सदा लोका रक्षितव्यं च शासनम्
रौद्रीं चैव परां मूर्तिं महादेवः प्रदास्यति । युष्मन्मुख्या महादेव्यस्तदुक्तं परिरक्षथ ॥ ८२
मया मातृगणः सृष्टो योऽयं विगतसाध्वसः । एष नित्यं विशालाक्षो मयैव सह रंस्यते ॥८३
मया सार्धं तथा पूजां नरेभ्यश्चैव लप्स्यथ । पृथक्सुपूजिता लोकैः सर्वान्कामान्प्रदास्यथ ॥
शुष्कां संपूजयिष्यन्ति ये च पुत्रार्थिनो जनाः । तेषां पुत्रप्रदा देवी भविष्यति न संशयः ॥
एवमुक्त्वा तु भगवान्सह मातृगणेन तु । ज्वालामालाकुलवपुस्तत्रैवान्तरधीयत ॥ ८६
तत्र तीर्थं समुत्पन्नं कृतशौचेति यज्जगुः । तत्रापि पूर्वजो देवो जगदार्तिहरो हरः ॥ ८७
रौद्रस्य मातृवर्गस्यै दत्त्वा रुद्रस्तु पार्थिव । रौद्रीं दिव्यां तनुं तत्र मातृमध्ये व्यवस्थितः ॥
सप्त ता मातरो देव्यः सार्धनारीश्वरः शिवः । निवेश्य रौद्रं तत्स्थानं तत्रैवान्तरधीयत ॥
समातृवर्गस्य हरस्य मूर्तिर्यदा यदा याति च तत्समीपे ।
देवेश्वरस्यापि नृसिंहमूर्तेः पूजां विधत्ते त्रिपुरान्धकारिः ॥ ९०

इति श्रीमात्स्ये महापुराणेऽन्धकवधो नामैकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ९६२७ ॥

---

अथाशीत्यधिकशततमोऽध्यायः ।

---

ऋषय ऊचुः—

श्रुतोऽन्धकवधः सूत यथावत्त्वदुदीरितः । वाराणस्यास्तु माहात्म्यं श्रोतुमिच्छाम सांप्रतम्
भगवान्पिङ्गलः केन गणत्वं समुपागतः । अन्नदत्वं च संप्राप्तो वाराणस्यां महाद्युतिः ॥

---

१ ग. वृक्षकेशा° । २ ग. भीरा । ३ ङ. °जन्वर्धन्यनु° । ४ ङ. °न्ति विराजनम् । ज° । ५ ग. ङ. °जैश्चैव गन्धर्वैर्य° । ६ ङ. च । तच्छा° । ७ ङ. च हरिष्यन्ति हरेरि° । ८ ङ. ते न र° । ९ क. ख. °ध्वं मदांस° । १० ग. शुष्कि । ११ ङ. °गणानु । ज्वा° । १२ ग. ङ. तस्यापि । १३ ङ. °र्धैतो दे° । १४ ग. °स्य रुषा रु° । १५ क. ख. °रीनरः ।

क्षेत्रपालः कथं जातः प्रियत्वं च कथं गतः । एतदिच्छाम कथितं श्रोतुं ब्रह्मसुत त्वया ॥

सूत उवाच—

शृणुध्वं वै यथा लेभे गणेशत्वं स पिङ्गलः । अन्नदत्वं च लोकानां स्थानं वाराणसी त्विह
पूर्णभद्रसुतः श्रीमानासीद्यक्षः प्रतापवान् । हरिकेश इति ख्यातो ब्रह्मण्यो धार्मिकश्च ह
तस्य जन्मप्रभृत्येव शर्वे भक्तिरनुत्तमा । तदासीत्तन्नमस्कारस्तन्निष्ठस्तत्परायणः ॥ ६
आसीनश्च शयानश्च गच्छंस्तिष्ठन्ननुव्रजन् । भुञ्जानोऽथ पिबन्वाऽपि रुद्रमेवान्वचिन्तयत्
तमेवं युक्तमनसं पूर्णभद्रः पिताऽब्रवीत् । न त्वां पुत्रमहं मन्ये दुर्जातो यस्त्वमन्यथा ॥ ८
न हि यक्षकुलीनानामेतद्वृत्तं भवेत्सुत । गुह्यका बत यूयं वै स्वभावात्क्रूरचेतसः ॥ ९
क्रव्यादाश्चैव किंभक्षा हिंसाशीलाश्च पुत्रक । मैवं कार्षीर्न ते वृत्तिरेवं दृष्टा महात्मना ॥
स्वयंभुवा यथाऽऽदिष्टा त्यक्तव्या यदि नो भवेत् । आश्रमान्तरजं कर्म न कुर्युर्गृहिणस्तु तत्
हित्वा मनुष्यभावं च कर्मभिर्विविधैश्चरं । यत्त्वमेवं विमार्गस्थो मनुष्याज्जात एव च ॥
यथावद्विविधं तेषां कर्म तज्जातिसंश्रयम् । मयाऽपि विहितं पश्य कर्मैतन्नात्र संशयः ॥

सूत उवाच—

एवमुक्त्वा स तं पुत्रं पूर्णभद्रः प्रतापवान् । उवाच निष्ठुरं क्षिप्रं गच्छ पुत्र यथेच्छसि ॥
ततः स निर्गतस्त्यक्त्वा गृहं संबन्धिनस्तथा । वाराणसीं समासाद्य तपस्तेपे सुदुश्चरम् ॥ १५
स्थाणुभूतो ह्यनिमिषः शुष्ककाष्ठोपलोपमः । संनियम्येन्द्रियग्राममवातिष्ठत निश्चलः ॥
अथ तस्यैवं तपसि संस्थितस्य महात्मनः । सहस्रमेकं वर्षाणां दिव्यमप्यभ्यवर्तत ॥ १७
वल्मीकेन समाक्रान्तो भक्ष्यमाणः पिपीलिकैः । वज्रसूचिमुखैस्तीक्ष्णैर्विध्यमानस्तथैव च
निर्मांसरुधिरत्वक्च कुन्दशङ्खेन्दुसप्रभः । अस्थिशेषोऽभवच्छर्वं देवं वै चिन्तयन्नपि ॥ १९
एतस्मिन्नन्तरे देवी व्यज्ञापयत शंकरम् ॥ २०

देव्युवाच—

उद्यानं पुनरेवेदं द्रष्टुमिच्छामि सर्वदा । क्षेत्रस्य देव माहात्म्यं श्रोतुं कौतूहलं हि मे ॥
यतश्च प्रियंभतत्ते तथाऽस्य फलमुत्तमम् । २१
इति विज्ञापितो देवः शर्वाण्या परमेश्वरः । सर्वं पृष्टं यथातथ्यमाख्यातुमुपचक्रमे ॥ २२
निर्जगाम च देवेशः पार्वत्या सह शंकरः । उद्यानं दर्शयामास देव्या देवः पिनाकधृक् ॥

देवदेव उवाच—

प्रोत्फुल्लनानाविधगुल्मशोभितं लताप्रतानावनतं मनोहरम् ।
विरूढपुष्पैः परितः प्रियङ्गुभिः सुपुष्पितैः कण्टकितैश्च केतकैः ॥ २४
तमालगुल्मैर्निचितं सुगन्धिभिः सकर्णिकारैर्वकुलैश्च सर्वशः ।
अशोकपुंनागवरैः सुपुष्पितैर्द्विरेफमालाकुलपुष्पसंचयैः ॥ २५

---

१ ङ. °नं च गणतां चाहि । २ ग. °वत्पुरा । गु° । ङ. °वत्पुनः । गु° । ३ ग. कार्यो न ते । ४ ग. °था सृष्टा । ५ ङ. कुर्याद्गुणवान्सुतः । °हि° । ६ ङ. °र । देवत्वं नो विमार्गेषु मनुष्याजातिमेव । ७ ग. °नुष्यां जातिमेव । ८ ङ. च । अथ चेद्वि° । ८ ग. ङ तत्प्राप्य सं° । १० क. ख. ङ. निष्क्रम क्षि° । ११ क. ख. °वमानिशं तत्परस्य तदाशिषः । स° । १२ ग. धिरः शुष्कः कु° । १३ ग. °वः पार्वत्या स पिनाकधृक् । स° । १४ क ख. °रः । शर्वः पृष्टो य° । १५ क. °तानं सफलं म° । १६ ग ङ. °लपुष्पैर्नि° ।

क्वचित्प्रफुल्लाम्बुजरेणुरूषितैर्विहङ्गमैश्चारुकलप्रणादिभिः ।
विनादितं सारसमण्डनादिभिः प्रमत्तदात्यूहरुतैश्च वल्गुभिः ॥ २६
क्वचिच्च चक्राह्वरवोपनादितं क्वचिच्च कादम्बकदम्बकैर्युतम् ।
क्वचिच्च कारण्डवनादनादितं क्वचिच्च मत्तालिकुलाकुलीकृतम् ॥ २७
मदाकुलाभिस्त्वमराङ्गनादिभिर्निषेवितं चारुसुगन्धिपुष्पम् ।
क्वचित्सुपुष्पैः सहकारवृक्षैर्लतोपगूढैस्तिलकद्रुमैश्च ॥ २८
प्रगीतविद्याधरसिद्धचारणं प्रवृत्तनृत्याप्सरसां गणाकुलम् ।
प्रहृष्टनानाविधपक्षिसेवितं प्रमत्तहारीतकुलोपनादितम् ॥ २९
मृगेन्द्रनादाकुलसत्त्वमानसैः क्वचित्क्वचिद्द्वंद्वकदम्बकैर्मृगैः ।
प्रफुल्लनानाविधचारुपङ्कजैः सरस्तडागैरुपशोभितं क्वचित् ॥ ३०
निविडनिचुलनीलं नीलकण्ठाभिरामं मदमुदितविहङ्गव्रातनादाभिरामम् ।
कुसुमिततरुशाखालीनमत्तद्विरेफं नवकिसलयशोभाशोभितप्रान्तशाखम् ॥ ३१
क्वचिच्च दन्तिक्षतचारुवीरुधं क्वचिल्लतालिङ्गितचारुवृक्षकम् ।
क्वचिद्विलासालसगामिबर्हिणं निषेवितं किंपुरुषव्रजैः क्वचित् ॥ ३२
पारावतध्वनिविकूजितचारुशृङ्गैरभ्रंकषैः सितमनोहरचारुरूपैः ।
आकीर्णपुष्पनिकुरम्बविमुक्तहासैर्विभ्राजितं त्रिदशदेवकुलैरनेकैः ॥ ३३
फुल्लोत्पलागुरुसहस्रवितानयुक्तैस्तोयाशयैः समनुशोभितदेवमार्गम् ।
मार्गान्तरागलितपुष्पविचित्रभक्तिसंबद्धगुल्मविटपैर्विहगैरुपेतम् । ३४
तुङ्गाग्रैर्नीलपुष्पस्तवकभरनतप्रान्तशाखैरशोकै-
र्मत्तालिव्रातगीतश्रुतिसुखजननैर्भासितान्तर्मनोज्ञैः ।
रात्रौ चन्द्रस्य भासा कुसुमिततिलकैरेकतां संप्रयातं
छायासुप्तप्रबुद्धस्थितहरिणकुलालुप्तदर्भाङ्कुराग्रम् ॥ ३५
हंसानां पक्षपातप्रचलितकमलस्वच्छविस्तीर्णतोयं
तोयानां तीरजातप्रविकचकदलीवाटनृत्यन्मयूरम् ।
मायूरैः पक्षचन्द्रैः क्वचिदपि पतितै रञ्जितक्ष्माप्रदेशं
देशे देशे विकीर्णप्रमुदितविलसन्मत्तहारीतवृक्षम् ॥ ३६
सारङ्गैः क्वचिदपि सेवितप्रदेशं संछन्नं कुसुमचयैः क्वचिद्विचित्रैः ।
हृष्टाभिः क्वचिदपि किंनराङ्गनाभिः क्षीवाभिः समधुरगीतवृक्षखण्डम् ॥ ३७
संसृष्टैः क्वचिदुपलिप्तकीर्णपुष्पैरावासैः परिवृतपादपं मुनीनाम् ।
आमूलात्फलनिचितैः क्वचिद्विशालैरुत्तुङ्गैः पनसमहीरुहैरुपेतम् ॥ ३८

---

१ ग. ङ. °णुभूषि° । २ ङ. °मदचकोरकै° । ३ ग. ङ. 'भिर्भ्रम' । ४ घ. च. 'सभ्रमा' । ५ क. ख. °स्तटाकैरु° । ६ ग. ङ. च. नीडं । ७ ङ. °हृष्टं भृङ्गना° । ८ ङ. मिनीभिर्निषे । ९ ङ. °रुगाङ्गनाभिः । पा° । १० ग. °ताक्षैर्मे° । ११ ग. °थुन्दरम् । सा° । १२ ङ. चिदुपशोभित° । १३ ङ. °वाभिर्मधुरसुगीतवृक्षखण्डैः । सं° । १४ ग. °धुपगी° । १५ ग. च. संमृष्टैः । १६ ङ. °महाद्रुमैरु° ।

फुल्लातिमुक्तकलतागृहसिद्धलीलं सिद्धाङ्गनाकनकनूपुरनादरम्यम् ।
रम्यप्रियङ्गुतरुमञ्जरिसक्तभृङ्गं भृङ्गावलीस्खलितचारुकदम्बपुष्पम् ॥ ३९
पुष्पोत्करानिलविघूर्णितपादपाग्रमग्रेसरैर्भुवि निपातितवंशगुल्मम् ।
गुल्मान्तरप्रसृतभीतमृगीसमूहं संमुह्यतां तनुभृतामपवर्गदातृ ॥ ४०
चन्द्रांशुजालधवलैस्तिलकैर्मनोज्ञैः सिन्दूरकुङ्कुमकुसुम्भनिभैरशोकैः ।
चामीकरप्रतिसमैरथ कर्णिकारैः फुल्लारविन्दरचितं सुविशालशाखैः ॥ ४१
क्वचिद्रजतपर्णाभैः क्वचिद्विद्रुमसंनिभैः । क्वचित्काञ्चनसंकाशैः पुष्पैराचितभूतलम् ॥ ४२
पुन्नागेषु द्विजगणविरुतं रक्ताशोकस्तबकभरनमितम् ।
रम्योपान्तश्रमहरपवनं फुल्लाब्जेषु भ्रमरविलसितम् ॥ ४३
सकलभुवनभर्ता लोकनाथस्तदानीं तुहिनशिखरिपुत्र्याः सार्धमिष्टैर्गणेशैः ।
विविधतरुविशालं मत्तहृष्टान्यपुष्टमुपवनतरुरम्यं दर्शयामास देव्याः ॥ ४४

देव्युवाच—

उद्यानं दर्शितं देव शोभया परया युतम् । क्षेत्रस्य तु गुणान्सर्वान्पुनर्वक्तुमिहार्हसि ॥ ४५
अस्य क्षेत्रस्य माहात्म्यमविमुक्तस्य तत्तथा । श्रुत्वाऽपि हि न मे तृप्तिरतो भूयो वदस्व मे ॥

देवदेव उवाच—

इदं गुह्यतमं क्षेत्रं सदा वाराणसी मम । सर्वेषामेव भूतानां हेतुर्मोक्षस्य सर्वदा ॥ ४७
अस्मिन्सिद्धाः सदा देवि मदीयं व्रतमास्थिताः । नानालिङ्गधरा नित्यं मम लोकाभिकाङ्क्षिणः ॥ ४८
अभ्यस्यन्ति परं योगं मुक्तात्मानो जितेन्द्रियाः । नानावृक्षसमाकीर्णे नानाविहगकूजिते ॥ ४९
कमलोत्पलपुष्पाढ्यैः सरोभिः समलंकृते । अप्सरोगणगन्धर्वैः सदा संसेविते शुभे ॥ ५०
रोचते मे सदा वासो येन कार्येण तच्छृणु । मन्मना मम भक्तश्च मयि सर्वार्पितक्रियः ॥ ५१
यथा मोक्षमिहाऽऽप्नोति ह्यन्यत्र न तथा क्वचित् । एतन्मम पुरं दिव्यं गुह्याद्गुह्यतरं महत् ५२
ब्रह्मादयस्तु जानन्ति येऽपि सिद्धा मुमुक्षवः । अतः प्रियतमं क्षेत्रं तस्माच्चेह रतिर्मम ॥ ५३
विमुक्तं न मया यस्मान्मोक्ष्यते वा कदा च न । महत्क्षेत्रमिदं तस्मादविमुक्तमिदं स्मृतम् ॥ ५४
नैमिषेऽथ कुरुक्षेत्रे गङ्गाद्वारे च पुष्करे । स्नानात्संसेविताद्वाऽपि न मोक्षः प्राप्यते यतः ॥ ५५
इह संप्राप्यते येन तत एतद्विशिष्यते । प्रयागे च भवेन्मोक्ष इह वा मत्परिग्रहात् ॥ ५६
प्रयागादपि तीर्थाग्र्यादिदमेव महत्स्मृतम् । जैगीषव्यः परां सिद्धिं योगतः स महातपाः ५७
अस्य क्षेत्रस्य माहात्म्याद्भक्त्या च मम भावनात् । जैगीषव्यो महाश्रेष्ठो योगिनां स्थानमिष्यते ॥ ५८
ध्यायतस्तत्र मां नित्यं योगाग्निर्दीप्यते भृशम् । कैवल्यं परमं याति देवानामपि दुर्लभम् ॥ ५९

---

१ क. ख. °लीपु स्खलित.म्बुक° । ङ. °लीसवलितम्बुक° । २ क. ख. °सरो भुवि । ३ क. ख. °प्रभृतिलीनमृ° । ४ क. ख. ग. घ. °कराभानिचयैर° । ५ ग. °चिदञ्जनपूर्णा° । ६ ग. °रावृत° । ७ ग. अत्र सिद्धाः सगन्धर्वाः पितरश्च समाश्रिताः । ८ ग. °नाव्रतध° । ९ ङ. °दयो न जा° । १० ग. °नात्सुसेवनाद्वा° । ११ घ. °र्थाग्र्यमिद° । १२ ग. पुरा ।

अव्यक्तलिङ्गैर्मुनिभिः सर्वसिद्धान्तवेदिभिः । इह संप्राप्यते मोक्षो दुर्लभो देवदानवैः ॥ ६०
तेभ्यश्चाहं प्रयच्छामि भोगैश्वर्यमनुत्तमम् । आत्मनश्चैव सायुज्यमीप्सितं स्थानमेव च ॥ ६१
कुबेरस्तु महायक्षस्तथा सर्वार्पितक्रियः । क्षेत्रसंवसनादेव गणेशत्वमवाप ह ॥ ६२
संवर्तो भविता यश्च सोऽपि भक्तो ममैव तु । इहैवाऽऽराध्य मां देवि सिद्धिं यास्यत्यनुत्तमाम्
पराशरसुतो योगी ऋषिर्व्यासो महातपाः । धर्मकर्ता भविष्यश्च वेदसंस्थाप्रवर्तकः ॥ ६४
रंस्यते सोऽपि पद्माक्षि क्षेत्रेऽस्मिन्मुनिपुंगवः । ब्रह्मा देवर्षिभिः सार्धं विष्णुर्वायुर्दिवाकरः ॥
देवराजस्तथा शक्रो येऽपि चान्ये दिवौकसः । उपासते महात्मानः सर्वे मामेव सुव्रते ॥ ६६
अन्येऽपि योगिनः सिद्धाश्छन्नरूपा महाव्रताः । अनन्यमनसो भूत्वा मामिहोपासते सदा ॥ ६७
अलर्कश्च पुरीमेतां मत्प्रसादादवाप्स्यति । स चैनां पूर्ववत्कृत्वा चातुर्वर्ण्याश्रमाकुलाम् ॥ ६८
स्फीतां जनसमाकीर्णां भक्त्या च सुचिरं नृपः । मयि सर्वार्पितप्राणो मामेव प्रतिपत्स्यते ६९
ततःप्रभृति चार्वङ्गि येऽपि क्षेत्रनिवासिनः । गृहिणो लिङ्गिनो वाऽपि मद्भक्ता मत्परायणाः
मत्प्रसादाद्भजिष्यन्ति मोक्षं परमदुर्लभम् । विषयासक्तचित्तोऽपि त्यक्तधर्मरतिर्नरः ॥ ७१
इह क्षेत्रे मृतः सोऽपि संसारं न पुनर्विशेत् । ये पुनर्निर्ममा धीराः सत्त्वस्था विजितेन्द्रियाः ॥
व्रतिनश्च निरारम्भाः सर्वे ते मयि भाविताः । देहभङ्गं समासाद्य धीमन्तः सङ्गवर्जिताः ॥
गता एव परं मोक्षं प्रसादान्मम सुव्रते ॥ ७३
जन्मान्तरसहस्रेषु युञ्जन्योगमवाप्नुयात् । तमिहैव परं मोक्षं मरणादधिगच्छति ॥ ७४
एतत्संक्षेपतो देवि क्षेत्रस्यास्य महत्फलम् । अविमुक्तस्य कथितं मया ते गुह्यमुत्तमम् ॥ ७५
अतः परतरं नास्ति सिद्धिगुह्यं महेश्वरि । एतद्बुध्यन्ति योगज्ञा ये च योगेश्वरा भुवि ॥ ७६
एतदेव परं स्थानमेतदेव परं शिवम् । एतदेव परं ब्रह्म एतदेव परं पदम् ॥ ७७

वाराणसी तु भुवनत्रयसारभूता रम्या सदा मम पुरी गिरिराजपुत्रि ।
अत्राऽऽगता विविधदुष्कृतकारिणोऽपि पापक्षयाद्विरजसः प्रतिभान्ति मर्त्याः ७८
एतत्स्मृतं प्रियतमं मम देवि नित्यं क्षेत्रं विचित्रतरुगुल्मलतासुपुष्पम् ।
अस्मिन्मृतास्तनुभृतः पदमाप्नुवन्ति *मूर्खागमेन *रहितापि न संशयोऽत्र ७९

सूत उवाच—

एतस्मिन्नन्तरे देवो देवीं प्राह गिरीन्द्रजाम् । दातुं प्रसादं यक्षाय वरं भक्ताय भामिनि ॥ ८०
भक्तो मम वरारोहे तपसा हतकिल्बिषः । अहो वरमसौ लब्धुमस्मत्तो भुवनेश्वरि ॥ ८१
एवमुक्त्वा ततो देवः सह देव्या जगत्पतिः । जगाम यक्षो यत्राऽऽस्ते कृशो धमनिसंततः ८२
+ततस्तं गुह्यकं देवी दृष्टिपातैर्निरीक्षती । श्वेतवर्णं विचर्माणं स्नायुबद्धास्थिपञ्जरम् ॥ ८३
देवी प्राह तदा देवं दर्शयन्ती च गुह्यकम् । सत्यं नाम भवानुग्रो देवैरुक्तस्तु शंकर ॥ ८४
ईदृशे चास्य तपसि न प्रयच्छसि यद्वरम् । अतः क्षेत्रे महादेव पुण्ये सम्यगुपासिते ॥ ८५
कथमेवं परिक्लेशं प्राप्तो यक्षकुमारकः । शीघ्रमस्य वरं यच्छ प्रसादात्परमेश्वर ॥ ८६

* अत्र संधिरार्षः । + इत आरभ्य धमनिसंतत इत्यन्तग्रन्थो नास्ति ग. ङ. पुस्तकयोः ।

१ क ख. भक्त्या । २ घ. ङ. 'नपदाक्षी' । ३ ग. 'न्यो गी समाप्नु' । ४ क. ख. 'सादाय ज्ञा' । ५ ङ. 'र्व शक्काऽसि भा' ।

एवं मन्वादयो देव वदन्ति परमर्षयः। रुष्टाद्वा चाथ तुष्टाद्वा सिद्धिस्तूभयतो भवेत् ॥
भोगप्राप्तिस्तथा राज्यमन्ते मोक्षः सदाशिवात् ॥ ८७
एवमुक्तस्ततो देवः सह देव्या जगत्पतिः। जगाम यक्षो यत्राऽऽस्ते कृशो धमनिसंततः ८८
तं दृष्ट्वा प्रणतं भक्त्या हरिकेशं वृषध्वजः । दिव्यं चक्षुरदात्तस्मै येनापश्यत्स शंकरम् ॥
अथ यक्षस्तदादेशाच्छनैरुन्मील्य चक्षुषी । अपश्यत्सगणं देवं वृषध्वजमुपस्थितम् ॥ ९०

देवदेव उवाच—

वरं ददामि ते पूर्वं त्रैलोक्ये दर्शनं तथा । सांवर्ण्यं च शरीरस्य पश्य मां विगतज्वरः ॥

सूत उवाच—

ततः स लब्ध्वा तु वरं शरीरेणाक्षतेन च। पादयोः प्रणतस्तस्थौ कृत्वा शिरसि चाञ्जलिम्
उवाचाथ तदा तेन वरदोऽस्मीति चोदितः । भगवन्भक्तिमव्यग्रां त्वय्यनन्यां विधत्स्व मे
अन्नदत्वं च लोकानां गाणपत्यं तथाऽक्षयम् । अविमुक्तं च ते स्थानं पश्येयं सर्वदा यथा
एतदिच्छामि देवेश त्वत्तो वरमनुत्तमम् ॥ ९४

देवदेव उवाच—

जरामरणसंत्यक्तः सर्वरोगविवर्जितः । भविष्यसि गणाध्यक्षो धनदः सर्वपूजितः ॥ ९५
अजेयश्चापि सर्वेषां योगैश्वर्यं समाश्रितः । अन्नदश्चापि लोकेभ्यः क्षेत्रपालो भविष्यसि॥
महाबलो महासत्त्वो ब्रह्मण्यो मम च प्रियः । त्र्यक्षश्च दण्डपाणिश्च महायोगी तथैव च
उद्भ्रमः संभ्रमश्चैव गणौ ते परिचारकौ । तवाऽऽज्ञया करिष्येते लोकस्योद्भ्रमसंभ्रमौ ॥९८

सूत उवाच—

एवं स भगवांस्तत्र यक्षं कृत्वा गणेश्वरम् । जगाम वासं देवेशः सह तेन महेश्वरः ॥ ९९

इति श्रीमात्स्ये महापुराणे वाराणसीमाहात्म्ये दण्डपाणिवरप्रदानं नामाशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ९७२६ ॥

---

अथैकाशीत्यधिकशततमोऽध्यायः ।

---

सूत उवाच—

इमां पुण्योद्भवां स्निग्धां कथां पापप्रणाशिनीम् । शृण्वन्तु ऋषयः सर्वे सुविशुद्धास्तपोधनाः
गणेश्वरपतिं दिव्यं रुद्रतुल्यपराक्रमम् । सनत्कुमारो भगवानपृच्छन्नन्दिकेश्वरम् ॥ २
ब्रूहि गुह्यं यथातत्त्वं यत्र नित्यं भवः स्थितः । महात्मा सर्वभूतानां परमात्मा महेश्वरः ॥ ३
घोररूपं समास्थाय दुष्करं देवदानवैः । आभूतसंप्लवं यावत्स्थाणुभूतो महेश्वरः ॥ ४

नन्दिकेश्वर उवाच—

पुरा देवेन यत्प्रोक्तं पुराणं पुण्यमुत्तमम् । तत्सर्वं संप्रवक्ष्यामि नमस्कृत्य महेश्वरम् ॥ ५
ततो देवेन तुष्टेन उमायाः प्रियकाम्यया । कथितं भुवि विख्यातं यत्र नित्यं स्वयं स्थितः

---

१ ग. घ. °लोक्यद° । २ लावण्यं । ३ ङ. 'भद्रः सर्वलो' । ४ क. ख. ग. वामदे° । ५ क. ख. ग. घ. दे नामरेश्व' । ६ ग. °वै योगज्ञानसमहिताः । ग° । ७ ङ. 'शुद्धाः समाहिताः । ग° । ८ ख. ख. ग. घ. माहात्म्यं° । ९ ग. घ. ङ भवः ।

रुद्रस्यार्धासनगता मेरुशृङ्गे यशस्विनी । महादेवं ततो देवी प्रणता परिपृच्छति ॥ ७

देव्युवाच—

भगवन्देवदेवेश चन्द्रार्धकृतशेखर । धर्मं प्रब्रूहि मर्त्यानां भुवि चैवोर्ध्वरेतसाम् ॥ ८

जप्तं दत्तं हुतं चेष्टं तपस्तप्तं कृतं च यत् । ध्यानाध्ययनसंपन्नं कथं भवति चाक्षयम् ॥ ९

जन्मान्तरसहस्रेण यत्पापं पूर्वसंचितम् । कथं तत्क्षयमायाति तन्ममाऽऽचक्ष्व शंकर ॥ १०

यस्मिन्व्यवस्थितो भक्त्या तुष्यसि त्वं महेश्वर । व्रतानि नियमाश्चैव आचारो धर्म एव च ॥

सर्वसिद्धिकरं यत्र ह्यक्षय्यगतिदायकम् । वक्तुमर्हसि तत्सर्वं परं कौतूहलं हि मे ॥ १२

महेश्वर उवाच—

शृणु देवि प्रवक्ष्यामि गुह्यानां गुह्यमुत्तमम् । सर्वक्षेत्रेषु विख्यातमविमुक्तं प्रियं मम ॥ १३

अष्टषष्टिः पुरा प्रोक्ता स्थानानां स्थानमुत्तमम् । यत्र साक्षात्स्वयं रुद्रः कृत्तिवासाः स्वयं स्थितः ॥ १४

यत्र संनिहितो नित्यमविमुक्ते निरन्तरम् । तत्क्षेत्रं न मया मुक्तमविमुक्तं ततः स्मृतम् ॥

अविमुक्ते परा सिद्धिरविमुक्ते परा गतिः । जप्तं दत्तं हुतं चेष्टं तपस्तप्तं कृतं च यत् ॥ १६

ध्यानमध्ययनं दानं सर्वं भवति चाक्षयम् । जन्मान्तरसहस्रेण यत्पापं पूर्वसंचितम् ॥ १७

अविमुक्तं प्रविष्टस्य तत्सर्वं व्रजति क्षयम् । अविमुक्ताग्निना दग्धमग्नौ तूलमिवाऽऽहितम्

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वै वर्णसंकराः । कृमिम्लेच्छाश्च ये चान्ये संकीर्णाः पापयोनयः ॥ १९

कीटाः पिपीलिकाश्चैव ये चान्ये मृगपक्षिणः । कालेन निधनं प्राप्ता अविमुक्ते शृणु प्रिये

चन्द्रार्धमौलिनः सर्वे ललाटाक्षा वृषध्वजाः । शिवे मम पुरे देवि मोदन्ते तत्र मानवाः ॥ २१

अकामो वा सकामो वा ह्यपि तिर्यग्गतोऽपि वा । अविमुक्ते त्यजन्प्राणान्मम लोके महीयते

अविमुक्तं यदा गच्छेत्कदाचित्कालपर्ययात् । अश्मना चरणौ भित्त्वा तत्रैव निधनं व्रजेत् ॥

अविमुक्तं गतो देवि न निर्गच्छेत्ततः पुनः । सोऽपि मत्पदमाप्नोति नात्र कार्या विचारणा ॥

वस्त्रापदं रुद्रकोटिं सिद्धेश्वरमहालयम् । गोकर्णं रुद्रकर्णं च सुवर्णाक्षं तथैव च ॥ २५

अमरं च महाकालं तथा कायावरोहणम् । एतानि हि पवित्राणि सांनिध्यात्संध्ययोर्द्वयोः ॥

कालिञ्जरवनं चैव शङ्कुकर्णं स्थलेश्वरम् । एतानि च पवित्राणि सांनिध्याद्धि मम प्रिये ॥

अविमुक्ते वरारोहे त्रिसंध्यं नात्र संशयः ॥ २७

हरिश्चन्द्रं[12] परं गुह्यं[13] गुह्यमाम्रातकेश्वरम् । जैलेश्वरं परं गुह्यं गुह्यं श्रीपर्वतं तथा ॥ २८

महालयं तथा गुह्यं कृमिचण्डेश्वरं शुभम् । गुह्यातिगुह्यं केदारं महाभैरवमेव च ॥ २९

अष्टावेतानि स्थानानि सांनिध्याद्धि मम प्रिये । अविमुक्ते वरारोहे त्रिसंध्यं नात्र संशयः ॥

यानि स्थानानि श्रूयन्ते त्रिषु लोकेषु सुव्रते । अविमुक्तस्य पादेषु नित्यं संनिहितानि वै ॥

---

१ ग. °वन्सर्वदे° । २ ङ. ध्यान चैव तथा सम्यक्कथं । च. ध्यानमध्ययनं दानं क° । ३ क. ख. °यस्मिश्च पूजितो । ४ क. ख. घ्यसे परमेश्व° । ग. °ष्यते परमेश्वरः । व्र° । ५ ङ. षष्टिपुरोक्तानां स्था° । च. °षष्टिपुराणोक्तस्था° । ६ क. ख. जायन्ते । ७ क. ख. यद्गृध्वा । ८ ग. ङ. च. वस्त्रापदं । घ. चम्पापदं । ९ ग. अपरं । १० क. ख. घ. °म् । जले° । ११ च जालं वनं प° । १२ ङ. 'यं भद्रेकर्णं मरुच' । १३ ग. °ह्यं हरच' ।

अथोत्तरां कथां दिव्यामविमुक्तस्य शोभने। स्कन्दो वक्ष्यति माहात्म्यमृषीणां भावितात्मनाम् ॥ ३२

इति श्रीमात्स्ये महापुराणेऽविमुक्तमाहात्म्य एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ९७५८ ॥

---

अथ द्व्यशीत्यधिकशततमोऽध्यायः ।

---

सूत उवाच—

कैलासपृष्ठमासीनं स्कन्दं ब्रह्मविदां वरम्। पप्रच्छुर्ऋषयः सर्वे सनकाद्यास्तपोधनाः ॥ १

तथा राजर्षयः सर्वे ये भक्तास्तु महेश्वरे । ब्रूहि त्वं स्कन्द भूर्लोके यत्र नित्यं भवः स्थितः

स्कन्द उवाच—

महात्मा सर्वभूतात्मा देवदेवः सनातनः । घोररूपं समास्थाय दुष्करं देवदानवैः ॥ ३

आभूतसंप्लवं यावत्स्थाणुभूतः स्थितः प्रभुः । गुह्यानां परमं गुह्यमविमुक्तमिति स्मृतम् ॥४

अविमुक्ते सदा सिद्धिर्यत्र नित्यं भवः स्थितः। अस्य क्षेत्रस्य माहात्म्यं यदुक्तं त्वीश्वरेण तु॥

स्थानं परं पवित्रं च तीर्थमायतनं तथा। श्मशानसंस्थितं वेश्म दिव्यमन्तर्हितं च यत् ॥ ६

भूर्लोके नैव संयुक्तमन्तरिक्षे शिवालयम्। अयुक्तास्तु न पश्यन्ति युक्ताः पश्यन्ति चेतसा ७

ब्रह्मचर्यव्रतोपेताः सिद्धा वेदान्तकोविदाः। आ देहपतनाद्यावत्तत्क्षेत्रं यो न मुञ्चति ॥ ८

ब्रह्मचर्यव्रतैः सम्यक्सम्यगिष्टं मखैर्भवेत् । अपापात्मा गतिः सर्वा या तूक्ता च क्रियावताम्९

यस्तत्र निवसेद्विप्रोऽसंयुक्तात्माऽसमाहितः। त्रिकालमपि भुञ्जानो वायुभक्षसमो भवेत् १०

निमेषमात्रमपि यो ह्यविमुक्ते तु भक्तिमान्। ब्रह्मचर्यसमायुक्तः परमं प्राप्नुयात्तपः ॥ ११

योऽत्र मासं वसेद्धीरो लघ्वाहारो जितेन्द्रियः। सम्यक्तेन व्रतं चीर्णं दिव्यं पाशुपतं महत्१२

जन्ममृत्युभयं तीर्त्वा स याति परमां गतिम्। *नैःश्रेयसीं गतिं पुण्यां तथा योगगतिं व्रजेत्॥

न हि योगगतिर्दिव्या जन्मान्तरशतैरपि। प्राप्यते क्षेत्रमाहात्म्यात्प्रभावाच्छंकरस्य तु ॥ १४

ब्रह्महा योऽभिगच्छेत्तु अविमुक्तं कदाचन। तस्य क्षेत्रस्य माहात्म्याद्ब्रह्महत्या निवर्तते ॥१५

आ देहपतनाद्यावत्क्षेत्रं यो न विमुञ्चति। न केवलं ब्रह्महत्या प्राकृतं च निवर्तते ॥ १६

प्राप्य विश्वेश्वरं देवं न स भूयोऽभिजायते। अनन्यमानसो भूत्वा योऽविमुक्तं न मुञ्चति १७

तस्य देवः सदा तुष्टः सर्वान्कामान्प्रयच्छति। +द्वारं यत्सांख्ययोगानां स तत्र वसति प्रभुः१८

सगणो हि भवो देवो भक्तानामनुकम्पया। अविमुक्तं परं क्षेत्रमविमुक्ते परा गतिः ॥ १९

---

* एतदर्धस्थानेऽयं पाठो ङ. पुस्तके—पुण्यां तथा योगगतिं मनुष्यो निर्मलां लभेत् इति। + एतदर्धं न विद्यते ङ. पुस्तके।

---

१ ङ. °मासाद्य दु । २ ग °तः सनातनः । गु° । ३ क ख. स्थानान्तरं । ४ ङ. °र्यै युतः शान्तोऽप्यथ वेदान्तगो द्विजः । आ° । ५ ङ. °ति । वेदहीनो व्रती चापि सम्य° । ६ ङ. °त् । पापात्मनो गतिः सद्यो या । ७ ङ. त्र वसते विप्रः संयतात्मा । ८ ग. °द्विप्रः सं° । ९ ङ. भक्षः सदा भ° । १० ङ. तिष्ठति । ११ ङ. द्विला । १२ क. ख. °कृता च । १३ ग. विमुञ्चति । १४ क. ख. सा । १५ ङ. कं निवर्तते । त°।

अविमुक्ते परा सिद्धिरविमुक्ते परं पदम् । अविमुक्तं निषेवेत देवर्षिगणसेवितम् ॥ २०
यदीच्छेन्मानवो धीमान्न पुनर्जायते क्वचित् । मेरोः शक्तो गुणान्वक्तुं दीपानां च तथैव च
समुद्राणां च सर्वेषां नाविमुक्तस्य शक्यते । अन्तकाले मनुष्याणां छिद्यमानेषु मर्मसु ॥
वायुना प्रेर्यमाणानां स्मृतिर्नैवोपजायते । अविमुक्ते ह्यन्तकाले भक्तानामीश्वरः स्वयम् ॥
कर्मभिः प्रेर्यमाणानां कर्णजापं प्रयच्छति । मणिकर्ण्यां त्यजन्देहं गतिमिष्टां व्रजेन्नरः ॥
ईश्वरप्रेरितो याति दुष्प्रापामकृतात्मभिः । अशाश्वतमिदं ज्ञात्वा मानुष्यं बहुकिल्बिषम् ॥
अविमुक्तं निषेवेत संसारभयमोचनम् । योगक्षेमप्रदं दिव्यं बहुविघ्नविनाशनम् ॥ २६
विघ्नैश्चाऽऽलोड्यमानोऽपि योऽविमुक्तं न मुञ्चति । स मुञ्चति जरां मृत्युं जन्म चैतदशाश्व-
तम् । अविमुक्तप्रसादात्तु शिवसायुज्यमाप्नुयात् ॥ २७

इति श्रीमात्स्ये महापुराणेऽविमुक्तमाहात्म्ये द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ९७८५ ॥

---

अथ त्र्यशीत्यधिकशततमोऽध्यायः ।

---

देव्युवाच—

हिमवन्तं गिरिं त्यक्त्वा मन्दरं गन्धमादनम् । कैलासं निषधं चैव मेरुपृष्ठं महाद्युति ॥ १
रम्यं त्रिशिखरं चैव मानसं सुमहागिरिम् । देवोद्यानानि रम्याणि नन्दनं वनमेव च ॥
सुरस्थानानि मुख्यानि तीर्थान्यायतनानि च । तानि सर्वाणि संत्यज्य अविमुक्ते रतिः कथम् ॥ ३
किमत्र सुमहत्पुण्यं परं गुह्यं वदस्व मे । येन त्वं रमसे नित्यं भूतसंपद्गुणैर्युतः । ४
क्षेत्रस्य प्रवरत्वं च ये च तत्र निवासिनः । तेषामनुग्रहः कश्चित्तत्सर्वं ब्रूहि शंकर ॥ ५

शंकर उवाच—

अत्यद्भुतमिमं प्रश्नं यत्त्वं पृच्छसि भामिनि । तत्सर्वं संप्रवक्ष्यामि तन्मे निगदतः शृणु ॥
वाराणस्यां नदी पुण्या सिद्धगन्धर्वसेविता । प्रविष्टा त्रिपथा गङ्गा तस्मिन्क्षेत्रे मम प्रिये
*ममैव प्रीतिरतुला कृत्तिवासे च सुन्दरि । सर्वेषां चैव स्थानानां स्थानं तत्तु यथाऽधिकम् ॥
तेन कार्येण सुश्रोणि तस्मिन्स्थाने रतिर्मम । तस्मिँल्लिङ्गे च सांनिध्यं मम देवि सुरेश्वरि
क्षेत्रस्य च प्रवक्ष्यामि गुणान्गुणवतां वरे । याञ्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥
यदि पापो यदि शठो यदि वाऽधार्मिको नरः । मुच्यते सर्वपापेभ्यो ह्यविमुक्तं व्रजेद्यदि ॥
प्रलये सर्वभूतानां लोके स्थावरजङ्गमे । न हि त्यजामि तत्स्थानं महागणशतैर्वृतः ॥ १२

---

* इत आरभ्य सुरेश्वरि इत्यन्तग्रन्थो ङ. पुस्तके न विद्यते ।

---

१ ङ. °नर्जन्म आत्मनः । मे° । २ ग. ङ. °ति । अविमुक्ते त्यजेद्देहं । ३ ग. °ग मोक्षप्रदं नित्यं ब° । ङ. °गमोक्षप्रदं पुण्यं ब° । ४ ङ °रं कौतूहलं हि मे । ५ ग. °तसर्वैर्गुणै° । घ. °तसम्यग्गुणै° । ६ ङ. °संघैर्गणैः° । ७ ङ. °णसी पुरी पु° । ८ क. ख. °ये । मामेव प्रीतिसंतुष्टा कृत्तिवासश्च सु° । ९ ग. °सेश्वरं प्रभुन् । स° । १० ङ. °पोऽथ पाखण्डो यद्यप्यर्थातिगो न° । ११ ङ. °पेभ्यः कृत्तिवासस्य दर्शनात् । प्र° । १२ क. ख. त्यक्ष्यामि ।

यत्र देवाः सगन्धर्वाः सयक्षोरगराक्षसाः । वक्त्रं मम महाभागे प्रविशन्ति युगक्षये ॥१३
तेषां साक्षादहं पूजां प्रतिगृह्णामि पार्वति । सर्वगुह्योत्तमं स्थानं मम प्रियतमं शुभम् ॥
धन्याः प्रविष्टाः सुश्रोणि मम भक्ता द्विजातयः । मद्भक्तिपरमा नित्यं ये मद्भक्तास्तु ते नराः
तस्मिन्प्राणान्परित्यज्य गच्छन्ति परमां गतिम् । सदा यजति रुद्रेण सदा दानं प्रयच्छति ॥
सदा तपस्वी भवति अविमुक्तस्थितो नरः । यो मां पूजयते नित्यं तस्य तुष्याम्यहं प्रिये
सर्वदानानि यो दद्यात्सर्वयज्ञेषु दीक्षितः । सर्वतीर्थाभिषिक्तश्च स प्रपद्येत मामिह ॥ १८
अविमुक्तं सदा देवी ये व्रजन्ति सुनिश्चिताः । ते तिष्ठन्तीह सुश्रोणि मद्भक्ताश्च त्रिविष्टपे
मत्प्रसादात्तु ते देवि दीप्यन्ते शुभलोचने । दुर्धराश्चैव दुर्धर्षा भवन्ति विगतज्वराः ॥ २०
अविमुक्तं शुभं प्राप्य मद्भक्ताः कृतनिश्चयाः । निर्धूतपापा विमला भवन्ति विगतज्वराः ॥

पार्वत्युवाच—

दक्षयज्ञस्त्वया देव मत्प्रियार्थे निषूदितः । अविमुक्तगुणानां तु न तृप्तिरिह जायते ॥ २२

ईश्वर उवाच—

क्रोधेन दक्षयज्ञस्तु त्वत्प्रियार्थे विनाशितः । महाप्रिये महाभागे नाशितोऽयं वरानने ॥ २३
अविमुक्ते यजन्ते तु मद्भक्ताः कृतनिश्चयाः । न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥ २४

देव्युवाच—

दुर्लभास्तु गुणा देव अविमुक्ते तु कीर्तिताः । सर्वांस्तान्मम तत्त्वेन कथयस्व महेश्वर ॥ २५
कौतूहलं महादेव हृदिस्थं मम वर्तते । तत्सर्वं मम तत्त्वेन आख्याहि परमेश्वर ॥ २६

ईश्वर उवाच—

अक्षया ह्यमराश्चैव ह्यदेहाश्च भवन्ति ते । मत्प्रसादाद्वरारोहे मामेव प्रविशन्ति वै ॥ २७
ब्रूहि ब्रूहि विशालाक्षि किमन्यच्छ्रोतुमर्हसि ॥ २८

देव्युवाच—

अविमुक्ते महाक्षेत्रे अहो पुण्यमहो गुणाः । न तृप्तिमधिगच्छामि ब्रूहि देव पुनर्गुणान् ॥

ईश्वर उवाच—

महेश्वरि वरारोहे शृणु तांस्तु मम प्रिये । अविमुक्ते गुणा ये तु तथाऽन्यानपि तच्छृणु ॥
शाकपर्णाशिनो दान्ताः संप्रक्षाल्या मरीचिपाः । दन्तोलूखलिनश्चान्ये अश्मकुट्टास्तथा परे ॥
मासि मासि कुशाग्रेण जलमास्वादयन्ति वै । वृक्षमूलनिकेताश्च शिलाशय्यास्तथा परे ॥
आदित्यवपुषः सर्वे जितक्रोधा जितेन्द्रियाः । एवं बहुविधैर्धर्मैरन्यत्र चरितव्रताः ॥ ३३
त्रिकालमपि भुञ्जाना येऽविमुक्तनिवासिनः । तपश्चरन्ति वाऽन्यत्र कलां नार्हन्ति षोडशीम्
येऽविमुक्ते वसन्तीह स्वर्गे प्रतिवसन्ति ते ॥ ३४
मत्समः पुरुषो नास्ति त्वत्समा नास्ति योषिताम् । अविमुक्तसमं क्षेत्रं न भूतं न भविष्यति ॥
अविमुक्ते परो योगो ह्यविमुक्ते परा गतिः । अविमुक्ते परो मोक्षः क्षेत्रं नैवास्ति तादृशम् ॥
परं गुह्यं प्रवक्ष्यामि तत्त्वेन वरवर्णिनि । अविमुक्ते महाक्षेत्रे यदुक्तं हि मया पुरा ॥ ३७

---

१ ङ. °नं तन्मे प्रियतरं शुभे । ध° । २ ङ. °त्यं नान्यभक्ताश्च ये न° । ३ ङ. °यज्ञैर्यजेत्तव । स° । ४ क. ख. °णि त्वद्र° । ५ क. ख. दीव्यन्ति । ६ ग. तु सर्वांस्तान° ।

जन्मान्तरशतैर्देवि योगोऽयं यदि लभ्यते । मोक्षः शतसहस्रेण जन्मना लभ्यते न वा ॥ ३८
अविमुक्ते न संदेहो मद्भक्तः कृतनिश्चयः । एकेन जन्मना सोऽपि योगं मोक्षं च विन्दति ॥
अविमुक्तं नरा देवि ये व्रजन्ति सुनिश्चिताः । ते विशन्ति परं स्थानं मोक्षं परमदुर्लभम् ॥
पृथिव्यामीदृशं क्षेत्रं न भूतं न भविष्यति । चतुर्मूर्तिः सदा धर्मस्तस्मिन्संनिहितः प्रिये ॥
चतुर्णामपि वर्णानां गतिस्तु परमा स्मृता ॥ ४१

देव्युवाच—

श्रुता गुणास्ते क्षेत्रस्य इह चान्यत्र ये प्रभो । वदस्व भुवि विप्रेन्द्राः कं वा यज्ञैर्यजन्ति ते ॥

ईश्वर उवाच—

इज्यया चैव मन्त्रेण मामेव हि यजन्ति ये । न तेषां भयमस्तीति भवं रुद्रं यजन्ति येत् ॥
अमन्त्रो मन्त्रको देवि द्विविधो विधिरुच्यते । सांख्यं चैवाथ योगश्च द्विविधो योग उच्यते
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः । सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ४५
आत्मौपम्येन सर्वत्र सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ४६
निर्गुणः सगुणो वाऽपि योगश्च कथितो भुवि । सगुणश्चैव विज्ञेयो निर्गुणो मनसः परः ॥
एतत्ते कथितं देवि यन्मां त्वं परिपृच्छसि ॥ ४८

देव्युवाच—

या भक्तिस्त्रिविधा प्रोक्ता भक्तानां बहुधा त्वया । तामहं श्रोतुमिच्छामि तत्त्वतः कथयस्व मे

ईश्वर उवाच—

शृणु पार्वति देवेशि भक्तानां भक्तिवत्सले । प्राप्य सांख्यं च योगं च दुःखान्तं च नियच्छति
सदा यः सेवते भिक्षां ततो भवति रञ्जितः । रञ्जनात्तन्मयो भूत्वा लीयते स तु भक्तिमान् ॥
शास्त्राणा तु वरारोहे बहुकारणदर्शिनः । न मां पश्यन्ति ते देवि ज्ञानवाक्यविवादिनः ॥
परमार्थज्ञानतृप्ता युक्ता जानन्ति योगिनः । विद्यया विदितात्मानो योगस्य च द्विजातयः ॥
प्रत्याहारेण शुद्धात्मा नान्यथा चिन्तयेच्च तत् । तुष्टिं च परमां प्राप्य योगं मोक्षं परं तथा ॥
त्रिभिर्गुणैः समायुक्तो ज्ञानवान्पश्यतीह माम् ॥ ५४
एतत्ते कथितं देवि किमन्यच्छ्रोतुमर्हसि । भूय एव वरारोहे कथयिष्यामि सुव्रते ॥ ५५
गुह्यं पवित्रमथवा यच्चापि हृदि वर्तते । तत्सर्वं कथयिष्यामि शृणुष्वैकमनाः प्रिये ॥ ५६

देव्युवाच—

स्वरूपं कीदृशं देव युक्ताः पश्यन्ति योगिनेः । एतं मे संशयं ब्रूहि नमस्ते सुरसत्तम ॥ ५७

श्रीभगवानुवाच—

अमूर्तं चैव मूर्तं च ज्योतीरूपं हि तत्स्मृतम् । तस्योपलब्धिमान्विच्छन्यत्नः कार्यो विजानता ॥
गुणैर्वियुक्तो भूतात्मा एवं वक्तुं न शक्यते । शक्यते यदि वक्तुं वै दिव्यैर्वर्षशतैर्न वा ॥ ५९

देव्युवाच—

किंप्रमाणं तु तत्क्षेत्रं समन्तात्सर्वतोदिशम् । यत्र नित्यं स्थितो देवो महादेवो गणैर्युतः ॥

---

१ ग. यो योगं सम्यगभ्यसेत् । २ ङ. °ति । अविमुक्ते चतुष्पादो धर्मः स° । ३ ग. ये । ङ. ते । ४ ङ. तत्तेन क° । ५ ङ. भक्तवत्स° । ६ ग. ङ. हे हेतुः का° । ७ ग. °नयुक्तास्तथा जा° । ८ ङ. सा मुक्ताः पश्यन्ति । ९ क. घ. °नः । पश्यन्मे सं° ।

ईश्वर उवाच—

द्वियोजनं तु तत्क्षेत्रं पूर्वपश्चिमतः स्मृतम् । अर्धयोजनविस्तीर्णं तत्क्षेत्रं दक्षिणोत्तरम् ॥
वरणाऽसी नदी यावत्तावच्छुक्लनदी तु वै । भीष्मचण्डिकमारभ्य पर्वतेश्वरमन्तिके ॥ ६२
गणा यत्रावतिष्ठन्ते संनियुक्ता विनायकाः । कूष्माण्डगजतुण्डश्च जयन्तश्च मदोत्कटाः ॥
सिंहव्याघ्रमुखाः केचिद्विकटाः कुब्जवामनाः । यत्र नन्दी महाकालश्चण्डघण्टो महेश्वरः
दण्डचण्डेश्वरश्चैव घण्टाकर्णो महाबलः । एते चान्ये च बहवो गणाश्चैव गणेश्वराः ॥६५
महोदरा महाकाया वज्रशक्तिधरास्तथा । रक्षन्ति सततं देवि ह्यविमुक्तं तपोवनम् ॥
द्वारे द्वारे च तिष्ठन्ति शूलमुद्गरपाणयः ॥ ६६
सुवर्णशृङ्गीं रौप्यखुरीं चैलाजिनपयस्विनीम् । वाराणस्यां तु यो दद्यात्सवत्सां कांस्यभाजनाम् ॥ ६७
गां दत्त्वा तु वरारोहे ब्राह्मणे वेदपारगे । आसप्तमं कुलं तेन तारितं नात्र संशयः ॥ ६८
यो दद्याद्ब्राह्मणे किंचित्तस्मिन्क्षेत्रे वरानने । कनकं रजतं वस्त्रमन्नाद्यं बहुविस्तरम् ॥
अक्षयं चाव्ययं चैव स्यातां तस्य सुलोचने ॥ ६९
शृणु तत्त्वेन तीर्थस्य विभूतिं व्युष्टिमेव च । तत्र स्नात्वा महाभागे भवन्ति नीरुजा नराः ॥
दशानामश्वमेधानां फलं प्राप्नोति मानवः । तदवाप्नोति धर्मात्मा तत्र स्नात्वा वरानने॥ ७१
बहुस्वल्पे च यो दद्याद्ब्राह्मणे वेदपारगे । शुभां गतिमवाप्नोति अग्निवच्चैव दीप्यते ॥ ७२
* वाराणसीजाह्नवीभ्यां संगमे लोकविश्रुते । दत्त्वाऽन्नं च विधानेन न स भूयोऽभिजायते ॥
एतत्ते कथितं देवि तीर्थस्य फलमुत्तमम् ॥ ७४
+ पुनरन्यत्प्रवक्ष्यामि तीर्थस्य फलमुत्तमम् । उपवासं तु यः कृत्वा विप्रान्संतर्पयेन्नरः ॥
सौत्रामणेश्च यज्ञस्य फलं प्राप्नोति मानवः ॥ ७५
एकाहारस्तु यस्तिष्ठेन्मासं तत्र वरानने । यावज्जीवकृतं पापं सहसा तस्य नश्यति ॥ ७६
अग्निप्रवेशं ये कुर्युरविमुक्ते विधानतः । प्रविशन्ति मुखं ते मे निःसंदिग्धं वरानने ॥ ७७
× कुर्वन्त्यनशनं ये तु मद्भक्ताः कृतनिश्चयाः । न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥ ७८
अर्चयेद्यस्तु मां देवि अविमुक्ते तपोवने । तस्य धर्मं प्रवक्ष्यामि यदवाप्नोति मानवः ॥ ७९
दशाश्वमेधिकं पुण्यं लभते नात्र संशयः ॥ ८०
दशसौवर्णिकं पुण्यं योऽविमुक्ते प्रयच्छति । अग्निहोत्रफलं धूपे गन्धदाने तथा शृणु ॥
भूमिदानेन तत्तुल्यं गन्धदानफलं स्मृतम् ॥ ८१
संमार्जने पञ्चशतं सहस्रमनुलेपने । मालया शतसाहस्रमनन्तं गीतवाद्यतः ॥ ८२

* इतआरभ्य यः कृत्वेत्यन्तग्रन्थो नास्ति घ. पुस्तके । + एतदर्धं न विद्यते क. ख. पुस्तकयोः । × इत आरभ्य संशय इत्यन्तग्रन्थः क. ख. पुस्तकयोर्नास्ति ।

१ ग. दी भवेत् । भीमच° । २ ङ. °न्ते तथा विघ्नवि° । ३ क. ख. °ण्डराजः शंभोश्च ज° । ४ ङ. सुरेश्वरम् । ५ ग. °रां ताम्रपृष्ठां प° । ६ क. ख. °याग्निवर्णा कञ्जलोचने । गां । ७ ङ. विरुजा । ८ ग. °ने । स्वल्पमर्थं च । ९ ग. °पं शतधा त° । ङ. °पं मासेनैकेन न° । १० ङ. विप्राय । ११ ग. छ °वादने । दे° ।

देव्युवाच—

अत्यद्भुतमिदं देव स्थानमेतत्प्रकीर्तितम् । रहस्यं श्रोतुमिच्छामि यदर्थं त्वं न मुञ्चसि ॥ ८३

ईश्वर उवाच—

आसीत्पूर्वं वरारोहे ब्रह्मणस्तु शिरो वरम् । पञ्चमं शृणु सुश्रोणि जातं काञ्चनसप्रभम् ॥
ज्वलत्तत्पञ्चमं शीर्षं जातं तस्य महात्मनः । तदेवमब्रवीद्देवि जन्म जानामि ते ह्यहम् ८५
ततः क्रोधपरीतेन संरक्तनयनेन च । वामाङ्गुष्ठनखाग्रेण च्छिन्नं तस्य शिरो मया ॥ ८६

ब्रह्मोवाच—

यदा निरपराधस्य शिरश्छिन्नं त्वया मम । तस्माच्छापसमायुक्तः कपाली त्वं भविष्यसि ॥
ब्रह्महत्याकुलो भूत्वा चर तीर्थानि भूतले ॥ ८७
ततोऽहं गतवान्देवि हिमवन्तं शिलोच्चयम् । तत्र नारायणः श्रीमान्मया भिक्षां प्रयाचितः
ततस्तेन स्वकं पार्श्वं नखाग्रेण विदारितम् । स्रवतो महती धारा तस्य रक्तस्य निःसृता ८९
प्रयाता साऽतिविस्तीर्णा योजनार्धशतं तदा । न संपूर्णं कपालं तु घोरमद्भुतदर्शनम् ॥ ९०
दिव्यं वर्षसहस्रं तु सा च धारा प्रवाहिता । प्रोवाच भगवान्विष्णुः कपालं कुत ईदृशम् ॥ ९१
आश्चर्यभूतं देवेश संशयो हृदि वर्तते । कुतश्च संभवो देव सर्वं मे ब्रूहि पृच्छतः ॥ ९२

देवदेव उवाच—

श्रूयतामस्य हे देव कपालस्य तु संभवः । शतं वर्षसहस्राणां तपस्तप्त्वा सुदारुणम् ॥ ९३
ब्रह्माऽसृजद्वपुर्दिव्यमद्भुतं लोमहर्षणम् । तपसश्च प्रभावेण दिव्यं काञ्चनसंनिभम् ॥ ९४
ज्वलत्तत्पञ्चमं शीर्षं जातं तस्य महात्मनः । निकृत्तं तन्मया देव तदिदं पश्य दुर्जयम् ॥ ९५
यत्र यत्र च गच्छामि कपालं तत्र गच्छति । एवमुक्तस्ततो देवः प्रोवाच पुरुषोत्तमः ॥ ९६

श्रीभगवानुवाच—

गच्छ गच्छ स्वकं स्थानं ब्रह्मणस्त्वं प्रियं कुरु । तस्मिन्स्थास्यति भद्रं ते कपालं तस्य तेजसा ॥
ततः सर्वाणि तीर्थानि पुण्यान्यायतनानि च । गतोऽस्मि पृथुलश्रोणि न क्वचित्प्रत्यतिष्ठत ९८
ततोऽहं समनुप्राप्तो ह्यविमुक्ते महाशये । अवस्थितः स्वके स्थाने शापश्च विगतो मम ॥ ९९
विष्णुप्रसादात्सुश्रोणि कपालं तत्सहस्रधा । स्फुटितं बहुधा जातं स्वप्नलब्धं धनं यथा ॥ १००
ब्रह्महत्यापहं तीर्थं क्षेत्रमेतन्मया कृतम् । *कपालमोचनं देवि देवानां प्रथितं भुवि ॥ १०१
कालो भूत्वा जगत्सर्वं संहरामि सृजामि च । +ततस्तत्पतितं तत्र शापश्च विगतो मम ॥ १०२
कपालमोचनं तीर्थमभूद्धत्याविनाशनम् । तत्रस्थोऽस्मि जगत्सर्वं सुकरोमि सुरेश्वरि ॥
देवेशि सर्वगुह्यानां स्थानं प्रियतरं मम ॥ १०३
मद्भक्तास्तत्र गच्छन्ति विष्णुभक्तास्तथैव च । ये भक्ता भास्करे देवि लोकनाथे दिवाकरे ॥
तत्रस्थो यस्त्यजेद्देहं मामेव प्रविशेत्तु सः ॥ १०४

---

* एतदर्धस्थानेऽयं पाठः क. ख. पुस्तकयोः—श्मशानमेतद्भद्रं मे देवानां वरवर्णिनि । + अयं सार्धश्लोको न विद्यते क. ख. ग. पुस्तकेषु ।

---

१ घ. ङ. 'ह्महाकुलितो भू' । २ क. 'हिणी । प्रो°' । ख. घ. '°हिनी । प्रो' । ३ ग. '°स्य दिव्यस्य क' ।
४ ङ. 'ह्महत्यापहं कु°' । ५ ङ. '°णि पृथिव्यां यानि सन्ति हि । ततो°' । ६ ग. तीर्थानां ।

देव्युवाच—

अत्यद्भुतमिदं देव यदुक्तं पद्मयोनिना। त्रिपुरान्तकर स्थानं गुह्यमेतन्महाद्युते[1] ॥ १०५
यान्यन्यानि सुतीर्थानि कलां नार्हन्ति षोडशीम्। यत्र तिष्ठति देवेशो यत्र तिष्ठति शंकरः ॥
गङ्गा तीर्थसहस्राणां तुल्या भवति वा न वा। त्वमेव भक्तिर्देवेश त्वमेव गतिरुत्तमा ॥ १०७
ब्रह्मादीनां तु ते देव गतिरुक्ता सनातनी। श्राव्यमेतद्द्विजातीनां भक्तानामनुकम्पया ॥ १०८

इति श्रीमात्स्ये महापुराणेऽविमुक्तमाहात्म्ये त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ९८९३ ॥

---

अथ चतुरशीत्यधिकशततमोऽध्यायः।

---

महेश्वर उवाच—

सेवितं बहुभिः सिद्धैरपुनर्भवकाङ्क्षिभिः। विदित्वा तु परं क्षेत्रमविमुक्तनिवासिनाम् ॥ १
तद्गुह्यं देवदेवस्य तत्तीर्थं तत्तपोवनम्। परं स्थानं तु ते यान्ति संभवन्ति न ते पुनः ॥ २
ज्ञाने विहितनिष्ठानां परमानन्दमिच्छताम्। या गतिर्विहिता सद्भिः साऽविमुक्ते मृतस्य तु ॥
भवस्य प्रीतिरतुला ह्यविमुक्ते ह्यनुत्तमा। असंख्येयं फलं तत्र ह्यक्षया च गतिर्भवेत् ॥ ४
परं गुह्यं समाख्यातं श्मशानमिति संज्ञितम्। अविमुक्तं न सेवन्ते वञ्चितास्ते नरा भुवि ॥ ५
अविमुक्ते स्थितैः पुण्यैः पांशुभिर्वायुनेरितैः। अपि दुष्कृतकर्माणो यास्यन्ति परमां गतिम् ६
*अविमुक्तगुणान्वक्तुं देवदानवमानवैः। न शक्यतेऽप्रमेयत्वात्स्वयं यत्र भवः स्थितः ॥ ७
अनाहिताग्निर्नो यष्टा नोऽशुचिस्तस्करोऽपि वा। अविमुक्ते वसेद्यस्तु स वसेदीश्वरालये ॥८
+तत्र नापुण्यकृत्कश्चित्प्रसादादीश्वरस्य च। अज्ञानाज्ज्ञानतो वाऽपि स्त्रिया वा पुरुषेण वा
यत्किंचिदशुभं कर्म कृतं मानुषबुद्धिना। अविमुक्ते प्रविष्टस्य तत्सर्वं भस्मसाद्भवेत् ॥ १०
सरितः सागराः शैलास्तीर्थान्यायतनानि च। भूतप्रेतपिशाचाश्च गणा मातृगणास्तथा॥११
श्मशानिकपरीवाराः प्रियास्तस्य महात्मनः। न ते मुञ्चन्ति भूतेशं तान्भवस्तु न मुञ्चति॥१२
रमते च गणैः सार्धमविमुक्ते स्थितः प्रभुः। दृष्ट्वा तान्भीतकृपणान्पापदुष्कृतकारिणः ॥ १३
अनुकम्पया तु देवस्य प्रयान्ति परमां गतिम्। भक्तानुकम्पी भगवांस्तिर्यग्योनिगतानपि १४
नयत्येव वरं स्थानं यत्र यान्ति च याज्ञिकाः। मार्गवाङ्गिरसः सिद्धा ऋषयश्च महाव्रताः॥१५
अविमुक्ताग्निना दग्धा अग्नौ तूलमिवाऽऽहितम्। न सा गतिः कुरुक्षेत्रे गङ्गाद्वारे च पुष्करे१६
सा गतिर्विहिता पुंसामविमुक्तनिवासिनाम्। तिर्यग्योनिगताः सत्त्वा येऽविमुक्ते कृतालयाः
कालेन निधनं प्राप्तास्ते यान्ति परमां गतिम् ॥ १७
मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः। अविमुक्तं समासाद्य तत्सर्वं व्रजति क्षयम् ॥ १८

---

* इत आरभ्य परमां गतिमित्यन्तग्रन्थो न वर्तते क. ख. ङ. पुस्तकेषु। + एतदर्धं न विद्यते ग. पुस्तके ।

---

१ क. ख. °ते। संनिधानात्तु ते सर्वे क°। २ ङ. तिष्ठन्ति मुनयो°। ३ ङ. °णां तत्तुल्यं वर्तते न वा। यत्र त्वमसि वै शुद्धस्तथाऽन्ये पापिनो भृशम्। ब्र। ४ ग. तु देवानां ग°। ङ. तु सर्वेषां ग°। ५ ङ. °मुक्तं समाश्रयेत्। त°। ६ ङ. °तिरुत्तमा ह्य°। ७ ग. ङ. ह्यनौपमा। ८ ग. °स्तेऽनिशं भु°। ९ क. ख. ग. शक्यास्तेऽस्य प्रमे°। १० च. °मुक्तं प्र°। ११ घ. °तान्दीनकृ° १२ च. °काः। भृगवोऽङ्गिर°।

आजन्म जनितं पापं स्नानमात्राद्व्यपोहति । लिङ्गसारं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ ५१
गोसहस्रफलं तस्य रुद्रलोके महीयते । भङ्गतीर्थं ततो गच्छेत्सर्वपापप्रणाशनम् ॥ ५२
तत्र गत्वा तु राजेन्द्र स्नानं तत्र समाचरेत् । सप्तजन्मकृतैः पापैर्मुच्यते नात्र संशयः ॥ ५३
वटेश्वरं ततो गच्छेत्सर्वतीर्थमनुत्तमम् । तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ ५४
संगमेशं ततो गच्छेत्सर्वदेवनमस्कृतम् । स्नातमात्रान्नरस्तत्र चेन्द्रत्वं लभते ध्रुवम् ॥ ५५
कोटितीर्थं ततो गच्छेत्सर्वपापहरं परम् । तत्र स्नात्वा नरो राज्यं लभते नात्र संशयः ॥ ५६
तत्र तीर्थं समासाद्य दत्त्वा दानं तु यो नरः । तस्य तीर्थप्रभावेण सर्वं कोटिगुणं भवेत् ॥
अथ नारी भवेत्काचित्तत्र स्नानं समाचरेत् । गौरीतुल्या भवेत्साऽपि त्विन्द्रपत्नी न संशयः
अङ्गारेशं ततो गच्छेत्स्नानं तत्र समाचरेत् । स्नातमात्रो नरस्तत्र रुद्रलोके महीयते ॥ ५९
अङ्गारकचतुर्थ्यां तु स्नानं तत्र समाचरेत् । अक्षयं मोदते कालं शुचिः प्रयतमानसः ॥ ६०
अयोनिसंभवे स्नात्वा न पश्येद्योनिसंकटम् । पाण्डवेशं तु तत्रैव स्नानं तत्र समाचरेत् ॥ ६१
अक्षयं मोदते कालमवध्यस्त्रिदशैरपि । विष्णुलोकं ततो गत्वा क्रीडते भोगसंयुतः ॥ ६२
तत्र भुक्त्वा महाभोगान्मर्त्यराजोऽभिजायते । कंठेश्वरं ततो गच्छेत्तत्र स्नानं समाचरेत् ॥ ६३
उत्तरायणसंप्राप्तौ यदिच्छेत्तस्य तद्भवेत् । चन्द्रभागां ततो गच्छेत्तत्र स्नानं समाचरेत् ॥ ६४
स्नातमात्रो नरो राजन्सोमलोके महीयते । ततो गच्छेत्तु राजेन्द्र तीर्थं शक्रस्य विश्रुतम् ॥ ६५
पूजितं देवराजेन दैवैरपि नमस्कृतम् । तत्र स्नात्वा नरो राजन्दानं दत्त्वा तु काञ्चनम् ॥ ६६
अथवा नीलवर्णाभं वृषभं यः समुत्सृजेत् । वृषभस्य तु रोमाणि तत्प्रसूतिकुलेषु च ॥ ६७
तावद्वर्षसहस्राणि नरो हरपुरे वसेत् । ततः स्वर्गात्परिभ्रष्टो राजा भवति वीर्यवान् ॥ ६८
अश्वानां श्वेतवर्णानां सहस्राणां नराधिप । स्वामी भवति मर्त्येषु तस्य तीर्थप्रभावतः ॥ ६९
ततो गच्छेत्तु राजेन्द्र ब्रह्मावर्तमनुत्तमम् । तत्र स्नात्वा नरो राजंस्तर्पयेत्पितृदेवताः ॥ ७०
उपोष्य रजनीमेकां पिण्डं दत्त्वा यथाविधि । कन्यागते तथाऽऽदित्ये अक्षयं स्यान्नराधिप ७१
ततो गच्छेच्च राजेन्द्र कपिलातीर्थमुत्तमम् । तत्र स्नात्वा नरो राजन्कपिलां यः प्रयच्छति ७२
संपूर्णां पृथिवीं दत्त्वा यत्फलं तदवाप्नुयात् । नर्मदेशं परं तीर्थं न भूतं न भविष्यति ॥ ७३
तत्र स्नात्वा नरो राजन्नश्वमेधफलं लभेत् । नर्मदादक्षिणे कूले संगमेश्वरमुत्तमम् ॥ ७४
तत्र स्नात्वा नरो राजन्सर्वयज्ञफलं लभेत् । तत्र सर्वोद्यतो राजा पृथिव्यामेव जायते ॥ ७५
सर्वलक्षणसंपूर्णः सर्वव्याधिविवर्जितः । नार्मदे चोत्तरे कूले तीर्थं परमशोभनम् ॥ ७६
आदित्यायतनं दिव्यमीश्वरेण तु भाषितम् । तत्र स्नात्वा तु राजेन्द्र दानं दत्त्वा तु शक्तितः ॥
तस्य तीर्थप्रभावेण दत्तं भवति चाक्षयम् ॥ ७७
दरिद्रा व्याधिंता ये तु ये तु दुष्कृतकर्मिणः । मुच्यन्ते सर्वपापेभ्यः सूर्यलोकं तु यान्ति ते ॥ ७८
माघमासे तु संप्राप्ते शुक्लपक्षस्य सप्तमी । वसेदायतने तत्र निराहारो जितेन्द्रियः ॥ ७९
न जराव्याधितो मूको न चान्धो बधिरोऽथवा । सुभगो रूपसंपन्नः स्त्रीणां भवति वल्लभः ८०
एवं तीर्थं महापुण्यं मार्कण्डेयेन भाषितम् । ये न जानन्ति राजेन्द्र वञ्चितास्ते न संशयः ॥ ८१

---

१ ङ. 'न्मर्त्ये राजाऽभि' । २ ग. ङ. कण्ठ नितकेश्वरं ग' । ३ ग. ङ. 'प्राप्ते य' । ४ ङ 'षु तीर्थयात्राप्र' ।
५ ग. ङ. 'देश्वरतीर्थं तु न भू' । ६ ग. ङ 'न रम्यनी' । ७ क. ख. 'धिनो ये ।

गर्गेश्वरं ततो गच्छेत्स्नानं तत्र समाचरेत्। स्नातमात्रो नरस्तत्र स्वर्गलोकमवाप्नुयात् ॥ ८२
मोदते स्वर्गलोकस्थो यावदिन्द्राश्चतुर्दश। समीपतः स्थितं तस्य नागेश्वरतपोवनम् ॥ ८३
तत्र स्नात्वा तु राजेन्द्र नागलोकमवाप्नुयात्। बह्वीभिर्नागकन्याभिः क्रीडते कालमक्षयम् ८४
कुबेरभवनं गच्छेत्कुबेरो यत्र संस्थितः। कालेश्वरं परं तीर्थं कुबेरो यत्र तोषितः ॥ ८५
तत्र स्नात्वा तु राजेन्द्र सर्वसंपदमाप्नुयात्। ततः पश्चिमतो गच्छेन्मारुतालयमुत्तमम् ॥ ८६
तत्र स्नात्वा तु राजेन्द्र शुचिर्भूत्वा समाहितः। काञ्चनं तु ततो दद्याद्यथाशक्ति सुबुद्धिमान् ॥
पुष्पकेण विमानेन वायुलोकं स गच्छति। यवतीर्थं ततो गच्छेन्माघमासे युधिष्ठिर ॥ ८८
कृष्णपक्षे चतुर्दश्यां स्नानं तत्र समाचरेत्। नक्तभोज्यं[1] ततः कुर्यान्न पश्येद्योनिसंकटम् ॥ ८९
अहल्यातीर्थं ततो गच्छेत्स्नानं तत्र समाचरेत्। स्नातमात्रो नरस्तत्र ह्यप्सरोभिः प्रमोदते॥९०
अहल्या च तपस्तप्त्वा तत्र मुक्तिमुपागता। चैत्रमासे तु संप्राप्ते शुक्लपक्षे चतुर्दशी[2] ॥ ९१
कामदेवदिने तस्मिन्नहल्यां यस्तु पूजयेत्। यत्र यत्र नरोत्पन्नो[3] नरस्तत्र प्रियो भवेत् ॥ ९२
स्त्रीवल्लभो भवेच्छ्रीमान्कामदेव इवापरः। अयोध्यां तु समासाद्य तीर्थं रामस्य विश्रुतम्॥९३
स्नातमात्रो नरस्तत्र सर्वपापैः प्रमुच्यते। सोमतीर्थं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ ९४
स्नातमात्रो नरस्तत्र सर्वपापैः प्रमुच्यते। सोमग्रहे तु राजेन्द्र[4] पापक्षयकरं नृणाम् ॥ ९५
त्रैलोक्यविश्रुतं राजन्सोमतीर्थं महाफलम्। यस्तु चान्द्रायणं कुर्यात्तस्मिंस्तीर्थे नराधिप
सर्वपापविशुद्धात्मा सोमलोकं स गच्छति। अग्निप्रवेशेऽथ जले अथवाऽपि ह्यनाशके९७
सोमतीर्थे मृतो यस्तु नासौ मर्त्येऽभिजायते। शुम्भतीर्थं[5] ततो गच्छेत्स्नानं तत्र समाचरेत्॥
स्नातमात्रो नरस्तत्र गोलोके तु महीयते। ततो गच्छेच्च राजेन्द्र विष्णुतीर्थमनुत्तमम्[6] ॥ ९९
योधनीपुरमाख्यातं[7] विष्णुस्थानमनुत्तमम्। असुरा योधितास्तत्र वासुदेवेन कोटिशः ॥१००
तत्र तीर्थं समुत्पन्नं विष्णुः प्रीतो भवेदिह। अहोरात्रोपवासेन ब्रह्महत्यां व्यपोहति ॥१०१
ततो गच्छेत्तु राजेन्द्र तापसेश्वरमुत्तमम्[8]। हरिणी व्याधसंत्रस्ता पतिता यत्र सा मृगी ॥
जले प्रक्षिप्तगात्रा तु अन्तरिक्षं गता च सा। व्याधो विस्मितचित्तस्तु परं विस्मयमागतः[9]
तेन तापेश्वरं तीर्थं न भूतं न भविष्यति। ततो गच्छेत्तु राजेन्द्र ब्रह्मतीर्थमनुत्तमम् ॥ १०४
अमोहकमिति ख्यातं पितॄंश्चैवात्र तर्पयेत्। पौर्णमास्याममायां तु श्राद्धं कुर्याद्यथाविधि॥
तत्र स्नात्वा नरो राजन्पितृपिण्डं तु दापयेत्। गजरूपा शिला तत्र तोयमध्ये प्रतिष्ठिता ॥
तस्यां तु दापयेत्पिण्डं वैशाख्यां तु विशेषतः। तृप्यन्ति पितरस्तत्र यावत्तिष्ठति मेदिनी ॥
ततो गच्छेच्च राजेन्द्र सिद्धेश्वरमनुत्तमम्। तत्र स्नात्वा नरो राजन्गणपत्यन्तिकं व्रजेत् ॥
ततो गच्छेत्तु राजेन्द्र लिङ्गं[10] यत्र जनार्दनः। तत्र स्नात्वा तु राजेन्द्र विष्णुलोके महीयते॥
नर्मदादक्षिणे कूले तीर्थं परमशोभनम्। कामदेवः स्वयं तत्र तपोऽतप्यत वै महत् ॥ ११०
दिव्यं वर्षसहस्रं तु शंकरं पर्युपासत। समाधिभङ्गदग्धस्तु शंकरेण महात्मना ॥ १११
श्वेतपर्वा यमश्चैव हुताशः शुक्रपर्वणि। एते दग्धास्तु ते सर्वे कुसुमेश्वरसंस्थिताः ॥११२

---

१ क. ख. घ. नक्तं भो॰। २ ग. ङ. त्रयोदशी। ३ ङ ॰न्नो वरस्त्रीणां प्रि॰। ४ ग. ॰न्द्र पितॄणां दत्तमक्षयम्। त्रै॰। ५ ग. शुम्भतीर्थे। ङ. शंभुतीर्थे। ६ क. ख. ॰केपु म॰। ७ ङ. ॰म्। योध॰। ८ ग. योधानां पु॰। ९ ङ. ॰तः। तापसेशं परं ती॰। १० क. ख. ग. लिङ्गो। घ. लिङ्गे।

दिव्यवर्षसहस्रेण तुष्टस्तेषां महेश्वरः । उमया सहितो रुद्रस्तुष्टस्तेषां वरप्रदः ॥ ११३
मोक्षयित्वा तु तान्सर्वान्नर्मदातटमास्थितः । ततस्तीर्थप्रभावेण पुनर्देवत्वमागताः॥ ११४
*ऊचुश्च परया भक्त्या देवदेवं वृषध्वजम् । त्वत्प्रसादान्महादेव तीर्थं भवतु चोत्तमम् ॥
अर्धयोजनविस्तीर्णं क्षेत्रं दिक्षु समन्ततः ॥ ११५
तस्मिंस्तीर्थे नरः स्नात्वा वोपवासपरायणः । कुसुमायुधरूपेण रुद्रलोके महीयते ॥ ११६
वैश्वानरो यमश्चैव कामदेवस्तथा मरुत् । तपस्तप्त्वा तु राजेन्द्र परां सिद्धिमवाप्नुयुः ॥
अङ्कोलस्य समीपे तु नातिदूरे तु तस्य वै । स्नानं दानं च तत्रैव भोजनं पिण्डपातनम् ॥
अग्निप्रवेशोऽथ जले अथवा तु ह्यनाशके । अनिवर्तिका गतिस्तस्य मृतस्यामुत्र जायते ॥
त्र्यम्बकेण तु तोयेन यश्चरुं श्रपयेन्नरः । अङ्कोलमूले दत्त्वा तु पिण्डं चैव यथाविधि१२०
तृप्यन्ति पितरस्तस्य यावच्चन्द्रदिवाकरौ । उत्तरे त्वयने प्राप्ते घृतस्नानं करोति यः १२१
पुरुषो वाऽथ स्त्री वाऽपि वसेदायतने शुचिः । सिद्धेश्वरस्य देवस्य प्रातः पूजां प्रकल्पयेत्
स यां गतिमवाप्नोति न तां सर्वैर्महामखैः । यदाऽवतीर्णः कालेन रूपवान्सुभगो भवेत् ॥
मर्त्यै भवति राजा च त्वासमुद्रान्तगोचरे । क्षेत्रपालं न पश्येत्तु दण्डपाणिं महाबलम् ॥
वृथा तस्य भवेद्यात्रा ह्यदृष्ट्वा कर्णकुण्डलम् । एवं तीर्थफलं ज्ञात्वा सर्वे देवाः समागताः
मुञ्चन्ति कुसुमैर्वृष्टिं तेन तत्कुसुमेश्वरम् ॥ १२५

इति श्रीमात्स्ये महापुराणे नर्मदामाहात्म्य एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १०४१७ ॥

---

अथ द्विनवत्यधिकशततमोऽध्यायः ।

---

मार्कण्डेय उवाच—

भार्गवेशं ततो गच्छेद्ब्रह्मो यत्र जनार्दनः । + असुरैस्तु महायुद्धे महाबलपराक्रमैः ॥ १
हुंकारितास्तु देवेन दानवाः प्रलयं गताः । तत्र स्नात्वा तु राजेन्द्र सर्वपापैः प्रमुच्यते ॥ २
शुक्लतीर्थस्य चोत्पत्तिं शृणु त्वं पाण्डुनन्दन । हिमवच्छिखरे रम्ये नानाधातुविचित्रिते॥३
तरुणादित्यसंकाशे तप्तकाञ्चनसप्रभे । वज्रस्फटिकसोपाने चित्रपट्टशिलातले ॥ ४
जाम्बूनदमये दिव्ये नानापुष्पोपशोभिते । तत्राऽऽसीनं महादेवं सर्वज्ञं प्रभुमव्ययम् ॥ ५
लोकानुग्रहकर्तारं गणवृन्दैः समावृतम् । स्कन्दनन्दिमहाकालैर्वीरभद्रगणादिभिः ॥
उमया सहितं देवं मार्कण्डिः पर्यपृच्छत ॥ ६
देवदेव महादेव ब्रह्मविष्णिवन्द्रसंस्तुत । संसारभयभीतोऽहं सुखोपायं ब्रवीहि मे ॥ ७
भगवन्भूतभव्येश सर्वपापप्रणाशनम् । तीर्थानां परमं तीर्थं तद्वदस्व महेश्वर ॥ ८

---

* एतदर्धं ङ. पुस्तक एव वर्तते । + एतदर्धं नास्ति ङ. च. पुस्तकयोः ।

---

१ ग. °गतः । त्व° । २ ङ. च. °नरयमाभ्यां तु कामदेवेन चापरे । त° । ३ ङ. °स्यात्रापि जा° । ४ घ. मर्त्यो । ५ ग. ङ. °त्रवेदिशि° । ६ ङ. नारत्नोप° ७ ग. ङ. °नुग्रा हकं शान्तं ग° । ८ ख. घ. °हदं शान्तं ग° । ९ ग. ङ. °कंण्डः परिपृच्छति । देवदे° । घ. °कंण्डे परिपृच्छति । देवदे° ।

ईश्वर उवाच—

शृणु विप्र महाप्राज्ञ सर्वशास्त्रविशारद । स्नानाय गच्छ सुभग ऋषिसंघैः समावृतः ॥ ९
मन्वत्रिकश्यपाश्चैव याज्ञवल्क्योशनोऽङ्गिराः * । यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥
नारदो गौतमश्चैवं सेवन्ते धर्मकाङ्क्षिणः । गङ्गा कनखले पुण्या प्रयागं पुष्करं गयाम् ॥
कुरुक्षेत्रं महापुण्यं राहुग्रस्ते दिवाकरे । दिवा वा यदि वा रात्रौ शुक्लतीर्थं महाफलम् ॥
दर्शनात्स्पर्शनाच्चैव स्नानाद्दानात्तपोजपात् । होमाच्चैवोपवासाच्च शुक्लतीर्थं महाफलम् ॥१३
शुक्लतीर्थं महापुण्यं नर्मदायां व्यवस्थितम् । चाणक्यो नाम राजर्षिः सिद्धिं तत्र समागतः ॥
एतत्क्षेत्रं सुविपुलं योजनं वृत्तसंस्थितम् । शुक्लतीर्थं महापुण्यं सर्वपापप्रणाशनम् ॥ १५
पादपाग्रेण दृष्टेन ब्रह्महत्यां व्यपोहति । +जगतीदर्शनाच्चैव भ्रूणहत्यां व्यपोहति ॥ १६
अहं तत्र ऋषिश्रेष्ठ तिष्ठामि ह्युमया सह । वैशाखे चैत्रमासे तु कृष्णपक्षे चतुर्दशी ॥ १७
कैलासाच्चापि निष्क्रम्य तत्र संनिहितो ह्यहम् । दैत्यदानवगन्धर्वाः सिद्धविद्याधरास्तथा
गणाश्चाप्सरसो नागाः सर्वे देवाः समागताः । गगनस्थास्तु तिष्ठन्ति विमानैः सार्व-
कामिकैः ॥ १९
शुक्लतीर्थं तु राजेन्द्र ह्यागता धर्मकाङ्क्षिणः । रजकेन यथा वस्त्रं शुक्लं भवति वारिणा
आजन्मजनितं पापं शुक्लं तीर्थं व्यपोहति । स्नानं दानं महापुण्यं मार्कण्ड ऋषिसत्तम ॥२१
शुक्लतीर्थात्परं तीर्थं न भूतं न भविष्यति । पूर्वे वयसि कर्माणि कृत्वा पापानि मानवः ॥
अहोरात्रोपवासेन शुक्लतीर्थे व्यपोहति । तपसा ब्रह्मचर्येण यज्ञैर्दानेन वा पुनः ॥ २३
देवार्चनेन या पुष्टिर्न सा क्रतुशतैरपि । कार्तिकस्य तु मासस्य कृष्णपक्षे चतुर्दशी ॥ २४
घृतेन स्नापयेद्देवमुपोष्य परमेश्वरम् । एकविंशकुलोपेतो न च्यवेदैश्वरात्पदात् ॥ २५
शुक्लतीर्थं महापुण्यमृषिसिद्धनिषेवितम् । तत्र स्नात्वा नरो राजन्न पुनर्जन्मभाग्भवेत् ॥२६
×स्नात्वा वै शुक्लतीर्थे तु ह्यर्चयेद्वृषभध्वजम् । कपालपूरणं कृत्वा तुष्यत्यत्र महेश्वरः ॥२७
अर्धनारीश्वरं देवं पटे भक्त्या लिखापयेत् । शङ्खतूर्यनिनादैश्च ब्रह्मघोषैश्च सद्विजैः ॥२८
जागरं कारयेत्तत्र नृत्यगीतादिमङ्गलैः । प्रभाते शुक्लतीर्थे तु स्नानं वै देवतार्चनम् ॥ २९
आचार्यान्भोजयेत्पश्चाच्छिवव्रतपराङ्शुचीन् । दक्षिणां च यथाशक्ति वित्तशाठ्यं विवर्जयेत्
प्रदक्षिणं ततः कृत्वा शनैर्देवान्तिकं व्रजेत् । एवं वै कुरुते यस्तु तस्य पुण्यफलं शृणु ॥३१
दिव्ययानं समारूढो गीयमानोऽप्सरोगणैः । शिवतुल्यबलोपेतस्तिष्ठत्याभूतसंप्लवम् ॥ ३२
शुक्लतीर्थे तु या नारी ददाति कनकं शुभम् । घृतेन स्नापयेद्देवं कुमारं चापि पूजयेत् ॥३३
एवं या कुरुते भक्त्या तस्याः पुण्यफलं शृणु । मोदते शर्वलोकस्था यावदिन्द्राश्चतुर्दश ॥

---

* अत्र पुंस्त्वमार्षम् । + इत उत्तरमय श्लोको ङ. पुस्तके—जलस्य स्पर्शनाच्चैव ब्रह्महत्यां व्यपोहति । जलस्य दर्शनादेव भ्रूणहत्यां व्यपोहति, इति ॥ × इत आरभ्य सद्विजैरित्यन्तग्रन्थो नास्ति ग. ङ. पुस्तकयोः ।

१ ग. ङ. °व सर्वे ते ध° । २ ग. घ. शुक्ती° । ३ ग. °पोव्रतात् । हो° । ङ. पोर्चनात् । हो° । ४ ग. °मू । पांशुमात्रेण । ५ ग. °मि प्रमथैः स° । ६ ग. ङ. °खे तु मुने मासि कृ° । ७ ग. शुक्लतीर्थे व्य° । ८ क. ख. °कण्डे ऋ° । ९ ग वा नृप । या पुष्टिर्जायते शुक्ले न सा । १० ङ. °नः ! वेददानेन या तुष्टि° । ११ ङ. शुक्लपक्षे । १२ ग. न त्यजेदैश्वरं पदम् । शु° । १३ च. पटस्थं यो लि° ।

पौर्णमास्यां चतुर्दश्यां संक्रान्तौ विषुवे तथा । स्नात्वा तु सोपवासः सन्विजितात्मा समाहितः
दानं दद्याद्यथाशक्त्या प्रीयेतां हरिशंकरौ । एवं तीर्थप्रभावेण सर्वं भवति चाक्षयम् ॥
अनाथं दुर्गतं विप्रं नाथवन्तमथापि वा । उद्वाहयति यस्तीर्थे तस्य पुण्यफलं शृणु ॥ ३७
यावत्तद्रोमसंख्या च तत्प्रसूतिकुलेषु च । तावद्वर्षसहस्राणि शिवलोके महीयते ॥ ३८

इति श्रीमात्स्ये महापुराणे नर्मदामाहात्म्ये द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १०४५५ ॥

---

अथ त्रिनवत्यधिकशततमोऽध्यायः ।

---

मार्कण्डेय उवाच—

ततस्त्वनरकं गच्छेत्स्नानं तत्र समाचरेत् । स्नातमात्रो नरस्तत्र नरकं च न पश्यति ॥ १
तस्य तीर्थस्य माहात्म्यं शृणु त्वं पाण्डुनन्दन । तस्मिंस्तीर्थे तु राजेन्द्र यस्यास्थीनि विनिक्षिपेत् ॥ २
विलयं यान्ति पापानि रूपवाञ्जायते नरः । गोतीर्थं तु ततो गत्वा सर्वपापात्प्रमुच्यते ॥३
ततो गच्छेत्तु राजेन्द्र कपिलातीर्थमुत्तमम् । तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥
ज्येष्ठमासे तु संप्राप्ते चतुर्दश्यां विशेषतः । तत्रोपोष्य नरो भक्त्या कपिलां यः प्रयच्छति ॥
घृतेन दीपं प्रज्वाल्य घृतेन स्नापयेच्छिवम् । सघृतं श्रीफलं जग्ध्वा दत्त्वा चान्ते प्रदक्षिणम्
घण्टाभरणसंयुक्तां कपिलां यः प्रयच्छति । शिवतुल्यबलो भूत्वा नैवासौ जायते पुनः ॥ ७
अङ्गारकदिने प्राप्ते चतुर्थ्यां तु विशेषतः । पूजयेत्तु शिवं भक्त्या ब्राह्मणेभ्यश्च भोजनम् ॥
अङ्गारकनवम्यां तु अमायां च विशेषतः । स्नापयेत्तत्र यत्नेन रूपवान्सुभगो भवेत् ॥ ९
घृतेन स्नापयेल्लिङ्गं पूजयेद्भक्तितो द्विजान् । पुष्पकेण विमानेन सहस्रैः परिवारितः ॥ १०
शैवं पदमवाप्नोति यत्र चाभिमतं भवेत् । अक्षयं मोदते कालं यथा रुद्रस्तथैव सः ॥ ११
यदा तु कर्मसंयोगान्मर्त्यलोकमुपागतः । राजा भवति धर्मिष्ठो रूपवाञ्जायते कुले ॥ १२
ततो गच्छेच्च राजेन्द्र ऋषितीर्थमनुत्तमम् । तृणबिन्दुर्नाम ऋषिः शापदग्धो व्यवस्थितः ॥
तत्तीर्थस्य प्रभावेण शापमुक्तोऽभवद्द्विजः । ततो गच्छेत्तु राजेन्द्र गङ्गेश्वरमनुत्तमम् ॥ १४
श्रावणे मासि संप्राप्ते कृष्णपक्षे चतुर्दशी । स्नातमात्रो नरस्तत्र रुद्रलोके महीयते ॥ १५
पितॄणां तर्पणं कृत्वा मुच्यते च ऋणत्रयात् । गङ्गेश्वरसमीपे तु गङ्गावदनमुत्तमम् ॥ १६
अकामो वा सकामो वा तत्र स्नात्वा तु मानवः । आजन्मजनितैः पापैर्मुच्यते नात्र संशयः
तत्र तीर्थे नरः स्नात्वा व्रजेद्वै यत्र शंकरः । सर्वदा पर्वदिवसे स्नानं तत्र समाचरेत् ॥ १८
पितॄणां तर्पणं कृत्वा ह्यश्वमेधफलं लभेत् । प्रयागे यत्फलं दृष्टं शंकरेण महात्मना ॥ १९
तदेव निखिलं दृष्टं गङ्गावदनसंगमे । तस्यैव पश्चिमे स्थाने समीपे नातिदूरतः ॥ २०
दशाश्वमेधजननं त्रिषु लोकेषु विश्रुतम् । उपोष्य रजनीमेकां मासि भाद्रपदे तथा ॥ २१
अमायां च नरः स्नात्वा व्रजते यत्र शंकरः । सर्वदा पर्वदिवसे स्नानं तत्र समाचरेत् ॥२२

---

१ क. ख. ङ. सर्वाणि । २ च. 'तः स्नापयित्वा शि' । ३ ग. °त्र सर्वपापैः प्रमुच्यते ।

पितॄणां तर्पणं कृत्वा चाश्वमेधफलं लभेत् । दशाश्वमेधात्पश्चिमतो भृगुर्ब्राह्मणसत्तमः ॥
दिव्यं वर्षसहस्रं तु ईश्वरं पर्युपासते* । वल्मीकवेष्टितश्चासौ पक्षिणां च निकेतनः ॥ २४
आश्चर्यं सुमहज्जातमुमायाः शंकरस्य च । गौरी पप्रच्छ देवेशं कोऽयमेवं तु संस्थितः ॥
देवो वा दानवो वाऽथ कथयस्व महेश्वर ॥ २५

महेश्वर उवाच—

भृगुर्नाम द्विजश्रेष्ठ ऋषीणां प्रवरो मुनिः । मां ध्यायते समाधिस्थो वरं प्रार्थयते प्रिये[1] ॥
ततः प्रहसिता देवी ईश्वरं प्रत्यभाषत । धूमवत्तच्छिखा जाता ततोऽद्यापि न तुष्यसे ॥
दुराराध्योऽसि तेन त्वं नात्र कार्या विचारणा ॥ २७

महेश्वर उवाच—

न जानासि महादेवि ह्ययं क्रोधेन वेष्टितः । दर्शयामि यथातथ्यं प्रत्ययं ते करोम्यहम् ॥ २८
ततः स्मृतोऽथ देवेन धर्मरूपो वृषस्तदा । स्मरणात्तस्य देवस्य वृषः शीघ्रमुपस्थितः ॥
वदंस्तु मानुषीं वाचमादेशो दीयतां प्रभो ॥ २९

भगवानुवाच—

वल्मीकं त्वं खनस्वैनं विप्रं भूमौ निपातय । योगस्थस्तु ततो ध्यायन्भृगुस्तेन निपातितः ॥
तत्क्षणात्क्रोधसंतप्तो हस्तमुत्क्षिप्य सोऽशपत् । एवं संभाषमाणस्तु कुत्र गच्छसि भो वृष ॥
अद्याहं संप्रकोपेण प्रलयं त्वां नये वृष ॥ ३१
धर्षितस्तु तदा विप्रश्चान्तरिक्षं गतो वृषम् । आकाशे प्रेक्षते विप्र एतदद्भुतमुत्तमम् ॥ ३२
तत्र प्रहसितो रुद्र ऋषिरग्रे व्यवस्थितः । तृतीयलोचनं दृष्ट्वा वैलक्ष्यात्पतितो भुवि ॥
प्रणम्य दण्डवद्भूमौ तुष्टाव परमेश्वरम् ॥ ३३

प्रणिपत्य भूतनाथं भवोद्भवं त्वामहं दिव्यरूपम् ।
भवातीतो भुवनपते प्रभो तु विज्ञापये किंचित् ॥ ३४
त्वद्गुणनिकरान्वक्तुं कः शक्तो भवति मानुषो नाम ।
वासुकिरपि हि कदाचिद्वदनसहस्रं भवेद्यस्य ॥ ३५
भक्त्या तथाऽपि शंकर भुवनपते त्वत्स्तुतौ मुखरः ।
वदतः क्षमस्व भगवन्प्रसीद मे तव चरणपतितस्य ॥ ३६
सत्त्वं रजस्तमस्त्वं स्थित्युत्पत्त्योर्विनाशने देव ।
त्वां मुक्त्वा भुवनपते भुवनेश्वर नैव दैवतं किंचित् ॥ ३७
यमनियमयज्ञदानवेदाभ्यासाश्च धारणा योगः ।
त्वद्भक्तेः सर्वमिदं नार्हति हि कलासहस्रांशम् ॥ ३८

---

* अत्र लुगभाव आर्षः ।

---

१ ङ 'प्रियम् । २ घ. ङ. च 'र्त्तिशिखा । ३ ङ. च प्रत्यक्षं । ४ ङ. 'गस्थितं ततो दृष्ट्वा ध्यायंस्ते' । ५ ङ. 'प्य चाक्षिप' । ६ ग. ङ. च 'सि रे वृ' । ७ ङ. 'हं त्वां प्रकोपेन नयामि प्रलयं वृ' । ८ ङ. च. धर्षयित्वा ततो विप्रमन्तरिक्षगतो वृषः । आ' । ९ ङ. च. ततः प्र' । १० क. ख. ग. घ. 'सिते रु' । ११ ङ. च 'वं दिव्यमयं नित्यम् । भीतोऽहं भुवनपते प्रभो प्रभो त्वां वि' । १२ ग. 'प । भ' । १३ घ. भवसितो । १४ ग. घ. ङ. च. 'दानै· र्वेदाभ्यासोऽथवा' । १५ ग. घ. 'द्भक्तः स' । १६ ग. घ. 'स्रांशः । उत्तिष्ठ रस' ।

उच्छिष्टरसरसायनखड्गाञ्जनपादुकाविवरसिद्धिर्वा ।
चिह्नं भवव्रतानां दृश्यति चेह जन्मनि प्रकटम् ॥ ३९
शाठ्येन नमति यद्यपि ददासि त्वं भूतिमिच्छतो देव ।
भक्तिर्भवभेदकरी मोक्षाय विनिर्मिता नाथ ॥ ४०
परदारपरस्वरतं परपरिभवदुःखशोकसंतप्तम् ।
परवदनवीक्षणपरं परमेश्वर मां परित्राहि ॥ ४१
मिथ्याभिमानदग्धं क्षणभङ्गुरदेहविलसितं क्रूरम् ।
कुपथाभिमुखं पतितं त्वं मा पापात्परित्राहि ॥ ४२
दीने द्विजगणसार्थे बन्धुजनेनैव दूपिता ह्याशा ।
तृष्णा तथाऽपि शंकर किं मूढं मां विडम्बयति ॥ ४३
तृष्णां हरस्व शीघ्रं लक्ष्मीं प्रदत्स्व यावदासिनीं नित्यम् ।
छिन्धि मदमोहपाशानुत्तारय मां महादेव ॥ ४४
करुणाभ्युदयं नाम स्तोत्रमिदं सर्वसिद्धिदं दिव्यम् ।
यः पठति भक्तियुक्तस्तस्य तुष्येद्भृगोर्यथा च शिवः ॥ ४५

ईश्वर उवाच—

अहं तुष्टोऽस्मि ते वत्स प्रार्थयस्वेप्सितं वरम् । उमया सहितो देवो वरं तस्य ह्यदापयत् ॥ ४६

भृगुरुवाच—

यदि तुष्टोऽसि देवेश यदि देयो वरो मम । रुद्रवेदी भवेद्देवमेतत्संपादयस्व मे ॥ ४७

ईश्वर उवाच—

एवं भवतु विप्रेन्द्र क्रोधस्त्वा न भविष्यति । न पितापुत्रयोश्चैवं त्वैकमत्यं भविष्यति ॥ ४८
तदाप्रभृति ब्रह्माद्या सर्वे देवाः सकिंनराः । उपासते भृगोस्तीर्थं तुष्टो यत्र महेश्वरः ॥ ४९
दर्शनात्तस्य तीर्थस्य सद्यः पापात्प्रमुच्यते । अवशाः स्ववशा वाऽपि म्रियन्ते यत्र जन्तवः ॥
+ गुह्यातिगुह्यां सुगतिस्तेषां निःसंशयं भवेत् । एतत्क्षेत्रं सुविपुलं सर्वपापप्रणाशनम् ॥ ५१
तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः । उपानहौ च च्छत्रं च देयमन्नं च काञ्चनम् ॥
भोजनं च यथाशक्त्या ह्यक्षयं च तथा भवेत् । सूर्योपरागे यो दद्याद्दानं चैव यथेच्छया ॥ ५३
दीयमानं तु तद्दानमक्षयं तस्य तद्भवेत् । चन्द्रसूर्योपरागेषु यत्फलं त्वमरकण्टके ॥ ५४
तदेव निखिलं पुण्यं भृगुतीर्थे न संशयः । क्षरन्ति सर्वदानानि यज्ञदानतपःक्रियाः ॥ ५५
न क्षरेत्तु तपस्तप्तं भृगुतीर्थे युधिष्ठिर । यस्य वै तपसोग्रेण तुष्टेनैव तु शंभुना ॥ ५६

* इत उत्तरं सार्धश्लोको न विद्यते ग. पुस्तके ।

१ ङ. च. चिह्नानि तव नतानां दृश्यन्ते जन्मिनः प्र° । २ क. ख. °रनिभवविलसन्तम् । क्रूरं कुपथ्याभि° । ३ क. ख. ग. °तं मां पाहि देवेश । दी° । ४ ङ. °क्ष्मीं मे देहि हृदयवासि° । ५ ग. सुधियाम् । ६ ग. ङ. °देपा एत° । ७ ङ. °न्द्र अक्रुद्धस्त्वं भ° । ८ क. ग. °धस्थानं भ° । ९ ग. ङ. च. °व एकवाक्यं भ° । १० ङ. च. सदेवासुरकिं° । ११ ङ. देवस्य । १२ ङ. च. °ह्यात्सुग° । १३ ग. ङ. °यं तस्य तद्भवे° । १४ ग. °द्यादन्नं चै° ।

सांनिध्यं तत्र कथितं भृगुतीर्थे नराधिप । प्रख्यातं त्रिषु लोकेषु यत्र तुष्टो महेश्वरः ॥५७
एवं तु वदतो देवीं भृगुतीर्थमनुत्तमम् । न जानन्ति नरा मूढा विष्णुमायाविमोहिताः ॥ ५८
नर्मदायां स्थितं दिव्यं भृगुतीर्थं नराधिप । भृगुतीर्थस्य माहात्म्यं यः शृणोति नरः क्वचित् ॥
विमुक्तः सर्वपापेभ्यो रुद्रलोकं स गच्छति । ततो गच्छेत्तु राजेन्द्र गौतमेश्वरमुत्तमम् ॥ ६०
तत्र स्नात्वा नरो राजन्नुपवासपरायणः । काञ्चनेन विमानेन ब्रह्मलोके महीयते ॥ ६१
धौतपापं ततो गच्छेत्क्षेत्रं यत्र वृषेण तु । नर्मदायां कृतं राजन्सर्वपातकनाशनम् ॥ ६२
तत्र तीर्थे नरः स्नात्वा ब्रह्महत्यां विमुञ्चति । तस्मिंस्तीर्थे तु राजेन्द्र प्राणत्यागं करोति यः ६३
चतुर्भुजस्त्रिनेत्रश्च शिवतुल्यबलो भवेत् । वसेत्कल्पायुतं साग्रं शिवतुल्यपराक्रमः ॥ ६४
कालेन महता प्राप्तः पृथिव्यामेकराड्भवेत् । ततो गच्छेच्च राजेन्द्र ऐरण्डीतीर्थमुत्तमम् ॥६५
प्रयागे यत्फलं दृष्टं मार्कण्डेयेन भाषितम् । तत्फलं लभते राजन्स्नातमात्रो हि मानवः ॥ ६६
मासि भाद्रपदे चैव शुक्लपक्षे चतुर्दशी । उपोष्य रजनीमेकां तस्मिन्स्नानं समाचरेत् ॥
यमदूतैर्न बाध्येत रुद्रलोकं स गच्छति ॥ ६७
ततो गच्छेत्तु राजेन्द्र सिद्धो यत्र जनार्दनः । हिरण्यद्वीपविख्यातं सर्वपापप्रणाशनम् ॥ ६८
तत्र स्नात्वा नरो राजन्धनवान्रूपवान्भवेत् । ततो गच्छेत्तु राजेन्द्र तीर्थं कनखलं महत् ॥ ६९
गरुडेन तपस्तप्तं तस्मिंस्तीर्थे नराधिप । प्रख्यातं त्रिषु लोकेषु योगिनी तत्र तिष्ठति ॥ ७०
क्रीडते योगिभिः सार्धं शिवेन सह नृत्यति । तत्र स्नात्वा नरो राजन्रुद्रलोके महीयते ॥ ७१
ततो गच्छेत्तु राजेन्द्र हंसतीर्थमनुत्तमम् । हंसास्तत्र विनिर्मुक्ता गता ऊर्ध्वं न संशयः ॥ ७२
ततो गच्छेत्तु राजेन्द्र सिद्धो यत्र जनार्दनः । वाराहं रूपमास्थाय अर्चितः परमेश्वरैः ॥ ७३
वराहतीर्थे नरः स्नात्वा द्वादश्यां तु विशेषतः । विष्णुलोकमवाप्नोति नरकं न च पश्यति ॥७४
ततो गच्छेत्तु राजेन्द्र चन्द्रतीर्थमनुत्तमम् । पौर्णमास्यां विशेषेण स्नानं तत्र समाचरेत् ॥ ७५
स्नातमात्रो नरस्तत्र चन्द्रलोके महीयते । दक्षिणेन तु द्वारेण कन्यातीर्थं तु विश्रुतम् ॥ ७६
शुक्लपक्षे तृतीयायां स्नानं तत्र समाचरेत् । प्रणिपत्य तु चेशानं बलिस्तेन प्रसीदति ॥ ७७
हरिश्चन्द्रपुरं दिव्यमन्तरिक्षे च दृश्यते । शक्रध्वजे समावृत्ते सुप्ते नागरिकेतने ॥ ७८
नर्मदासलिलौघेन तरूंसंप्लावयिष्यति । अस्मिन्स्थाने निवासः स्याद्विष्णुः शंकरमब्रवीत् ॥
द्वीपेश्वरे नरः स्नात्वा लभेद्बहु सुवर्णकम् । ततो गच्छेत्तु राजेन्द्र कन्यातीर्थे सुसंगमे ॥ ८०
स्नातमात्रो नरस्तत्र देव्याः स्थानमवाप्नुयात् । देवतीर्थं ततो गच्छेत्सर्वतीर्थमनुत्तमम् ॥ ८१
तत्र स्नात्वा तु राजेन्द्र दैवतैः सह मोदते । ततो गच्छेच्च राजेन्द्र शिखितीर्थमनुत्तमम् ॥ ८२
यत्तत्र दीयते दानं सर्वं कोटिगुणं भवेत् । अपरपक्षे त्वमायां तु स्नानं तत्र समाचरेत् ॥ ८३
ब्राह्मणं भोजयेदेकं कोटिर्भवति भोजिता । भृगुतीर्थे तु राजेन्द्र तीर्थकोटिर्व्यवस्थिता ॥ ८४

---

१ ग. यस्य । ङ. यथा । २ ग. घ. ङ. °वीं वृषोत्सर्गम । ३ ग. घ. ङ. वृषतीर्थे । ४ घ. °च्छेद्धौतं य° । ५ ङ. व्यपोहति । ६ ङ. °तुल्यो भवेन्नरः व° । ७ ङ. च. °पक्षस्य चाष्टमी । उ° । ८ ग. घ. ङ. इन्द्रलोकं । ९ क. ख. °ण्यदीपेति वि° । १० ग. द्वीपं वि° । ११ ग. ङ. °रः । वारा° । १२ ग. °कं नैव गच्छति । १३ क. ख. तीरेण । १४ ग. °नं हरिस्ते° । ङ. च. बली राजा प्र° । १५ ङ. च. तत्सर्वं प्ला° । १६ ग. संमार्जयिष्यति । १७ ग. देवीती° । १८ ङ. परपक्षे ।

अकामो वा सकामो वा तत्र स्नानं समाचरेत् । अश्वमेधमवाप्नोति दैवतैः सह मोदते ॥ ८५
तत्र सिद्धिं परां प्राप्तो भृगुस्तु मुनिपुंगवः । अवतारः कृतस्तत्र शंकरेण महात्मना ॥ ८६

इति श्रीमात्स्ये महापुराणे नर्मदामाहात्म्ये त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १०५४१ ॥

---

अथ चतुर्नवत्यधिकशततमोऽध्यायः ।

---

मार्कण्डेय उवाच—

ततो गच्छेत्तु राजेन्द्र[1] ह्यङ्कुशेश्वरमुत्तमम् । दर्शनात्तस्य देवस्य मुच्यते सर्वपातकैः ॥ १
ततो गच्छेच्च राजेन्द्र नर्मदेश्वरमुत्तमम् । तत्र स्नात्वा नरो राजन्स्वर्गलोके[2] महीयते ॥ २
अश्वतीर्थं[3] ततो गच्छेत्स्नानं तत्र समाचरेत् । सुभगो दर्शनीयश्च भोगवाञ्जायते नरः ॥ ३
पैतामहं[4] ततो गच्छेद्ब्रह्मणा निर्मितं पुरा । तत्र स्नात्वा नरो भक्त्या पितृपिण्डं तु दापयेत् ॥
तिलदर्भविमिश्रं तु ह्युदकं तत्र दापयेत् । तस्य तीर्थप्रभावेण सर्वं भवति चाक्षयम्[5] ॥ ५
सावित्रीतीर्थमासाद्य यस्तु स्नानं समाचरेत् । विधूय सर्वपापानि ब्रह्मलोके महीयते ॥ ६
मनोहरं ततो गच्छेत्तीर्थं परमशोभनम् । तत्र स्नात्वा नरो राजन्पितृलोके महीयते ॥ ७
ततो गच्छेच्च राजेन्द्र मानसं तीर्थमुत्तमम् । तत्र स्नात्वा नरो राजन्रुद्रलोके महीयते ॥ ८
ततो गच्छेच्च राजेन्द्र कुब्जतीर्थमनुत्तमम् । विख्यातं त्रिषु लोकेषु सर्वपापप्रणाशनम् ॥ ९
यान्यान्कामयते कामान्पशुपुत्रधनानि च । प्राप्नुयात्तानि सर्वाणि तत्र स्नात्वा नराधिप
ततो गच्छेत्तु राजेन्द्र त्रिदशज्योतिविश्रुतम् । यत्र ता ऋषिकन्यास्तु तपोऽतप्यन्त सुव्रताः
भर्ता भवतु सर्वासामीश्वरः प्रभुरव्ययः । प्रीतस्तासां महादेवो[6] * दण्डरूपधरो हरः ॥ १२
विकृताननबीभत्सुर्व्रती तीर्थमुपागतः । तत्र कन्या महाराज वरयन्परमेश्वरः ॥ १३
कन्यास्तृषेर्वरयतः कन्यादानं प्रदीयताम् । तीर्थं तत्र महाराज ऋषिकन्येति विश्रुतम् ॥ १४
तत्र स्नात्वा नरो राजन्सर्वपापैः प्रमुच्यते । ततो गच्छेच्च राजेन्द्र स्वर्णबिन्दु त्विति स्मृतम्
तत्र स्नात्वा नरो राजन्दुर्गतिं न च पश्यति । +अप्सरेशं ततो गच्छेत्स्नानं तत्र समाचरेत्
क्रीडते नागलोकस्थोऽप्सरोभिः सह मोदते । ततो गच्छेत्तु राजेन्द्र नरकं तीर्थमुत्तमम् ॥ १७
तत्र स्नात्वार्चयेद्देवं नरकं च न पश्यति । भारभूतिं ततो गच्छेदुपवासपरो[7] जनः ॥ १८
एतत्तीर्थं समासाद्य चावतारं[8] तु शांभवम् । अर्चयित्वा विरूपाक्षं रुद्रलोके महीयते ॥ १९
अस्मिंस्तीर्थे नरः स्नात्वा भारभूतौ महात्मनः । यत्र यत्र मृतस्यापि ध्रुवं गाणेश्वरी गतिः
कार्तिकस्य तु मासस्य ह्यर्चयित्वा महेश्वरम् । अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः ॥ २१
दीपकानां शतं तत्र घृतपूर्णं तु दापयेत् । विमानैः सूर्यसंकाशैर्व्रजते यत्र शंकरः ॥ २२

---

* अत्र प्रशंसायां रूपप् । + अत्र संधिरार्षः ।

---

१ ग. 'न्द्र संकुलेश्व' । ङ. च. न्द्र अङ्केश्व' । २ घ. ङ. रुद्रलोके । ३ ग. च. आश्वितीर्थं । ङ. अग्नितीर्थं । ४ क. ख. पितामहं । ५ ङ. 'म् । यो यान्प्रार्थयते । ६ ङ. च. 'वो डिण्डीरूप' । ७ ङ. 'परायणः । ए' । ८ ङ. 'रं न संभवेत् । अं' ।

वृषभं यः प्रयच्छेत्तु शङ्खकुन्देन्दुसप्रभम् । वृषयुक्तेन यानेन रुद्रलोकं स गच्छति[1] ॥ २३
धेनुमेकां तु यो दद्यात्तस्मिंस्तीर्थे नराधिप । पायसं मधुसंयुक्तं भक्ष्याणि विविधानि च ॥
यथाशक्त्या च राजेन्द्र ब्राह्मणान्भोजयेत्ततः । तस्य तीर्थप्रभावेण सर्वं कोटिगुणं भवेत् ॥
नर्मदाया जलं पीत्वा ह्यर्चयित्वा वृषध्वजम् । दुर्गतिं च न पश्यन्ति तस्य तीर्थप्रभावतः ॥
*एतत्तीर्थं समासाद्य यस्तु प्राणान्विमुञ्चति । सर्वपापविनिर्मुक्तो व्रजेद्वै यत्र शंकरः ॥
जलप्रवेशं यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ २७
हंसयुक्तेन यानेन ब्रह्मलोकं स गच्छति । यावच्चन्द्रश्च सूर्यश्च हिमवांश्च महोदधिः ॥ २८
गङ्गाद्याः सरितो यावत्तावत्स्वर्गे महीयते । अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥
गर्भवासे तु राजेन्द्र न पुनर्जायते पुमान् । ततो गच्छेत्तु राजेन्द्र आपाढीतीर्थमुत्तमम् ॥
तत्र स्नात्वा नरो राजन्निन्द्रस्यार्धासनं लभेत् । स्त्रियास्तीर्थं ततो गच्छेत्सर्वपापप्रणाशनम् ।
तत्रापि स्नातमात्रस्य ध्रुवं गाणेश्वरी गतिः । ऐरण्डीनर्मदयोश्च संगमं लोकविश्रुतम् ॥
तच्च तीर्थं महापुण्यं सर्वपापप्रणाशनम् । उपवासपरो भूत्वा नित्यव्रतपरायणः + ॥ ३३
तत्र स्नात्वा तु राजेन्द्र मुच्यते ब्रह्महत्यया । ततो गच्छेच्च राजेन्द्र नर्मदोदधिसंगमम् ॥ ३४
जामदग्न्यमिति ख्यातं सिद्धो यत्र जनार्दनः । यत्रेष्ट्वा बहुभिर्यज्ञैरिन्द्रो देवाधिपोऽभवत् ॥
तत्र स्नात्वा तु राजेन्द्र नर्मदोदधिसंगमे । त्रिगुणं चाश्वमेधस्य फलं प्राप्नोति मानवः ॥
पश्चिमस्योदधेः संधौ स्वर्गद्वारविघट्टनम् । तत्र देवाः सगन्धर्वा ऋषयः सिद्धचारणाः ॥
आराधयन्ति देवेशं त्रिसंध्यं विमलेश्वरम् । तत्र स्नात्वा नरो राजन्रुद्रलोके महीयते ॥
विमलेशात्परं तीर्थं न भूतं न भविष्यति । तत्रोपवासं कृत्वा ये पश्यन्ति विमलेश्वरम् ॥ ३९
सप्तजन्मकृतं पापं हित्वा यान्ति शिवालयम् । ततो गच्छेत्तु राजेन्द्र कौशिकीतीर्थमुत्तमम् ।
तत्र स्नात्वा नरो राजन्नुपवासपरायणः । उपोष्य रजनीमेकां नियतो नियताशनः ॥ ४१
एतत्तीर्थप्रभावेण मुच्यते ब्रह्महत्यया । सर्वतीर्थाभिषेकं तु यः पश्येत्सागरेश्वरम् ॥ ४२
योजनाभ्यन्तरे तिष्ठन्नावर्ते संस्थितः शिवः । तं दृष्ट्वा सर्वतीर्थानि दृष्टान्येव न संशयः ॥
सर्वपापविनिर्मुक्तो यत्र रुद्रः स गच्छति । नर्मदासंगमं यावद्यावच्चामरकण्टकम् ॥ ४४
अत्रान्तरे महाराज तीर्थकोट्यो दश स्मृताः । तीर्थात्तीर्थान्तरं यत्र ऋषिकोटिनिषेवितम् ।
×साग्निहोत्रैस्तु विद्वद्भिः सर्वैर्ध्यानपरायणैः । सेविताऽनेन राजेन्द्र त्वीप्सितार्थप्रदायिका
यस्त्विदं वै पठेन्नित्यं शृणुयाद्वाऽपि भावतः । तस्य तीर्थानि सर्वाणि ह्यभिषिञ्चति पाण्डव
नर्मदा च सदा प्रीता भवेद्वै नात्र संशयः । प्रीतस्तस्य भवेद्रुद्रो मार्कण्डेयो महामुनिः ॥
वन्ध्या चैव लभेत्पुत्रान्दुर्भगा सुभगा भवेत् । कन्या लभेत भर्तारं यश्च वाञ्छेत्तु यत्फलम् ॥
तदेव लभते सर्वं नात्र कार्या विचारणा ॥ ४९

* इत आरभ्य नराधिप । इत्यन्तग्रन्थः क. ख. पुस्तकयोर्नास्ति । + इतः परं सार्धश्लोको न विद्यते ग. ङ. पुस्तकयोः । × एतच्छ्लोकस्थानेऽयं पाठो ङ. पुस्तके—साग्निहोत्राश्च विद्वांसः सर्वे ध्यानपरायणाः ॥ सेवन्ते नर्मदां राज- न्नीप्सितार्थप्रदायिनीम् ॥

१ घ. °ति । तरुमेकं तु । च. °ति । चरुमेकं तु । २ ग. °ह्मणं भोजयेन्नरः । त° । ३ क. ख. °न रुद्रलो° । ४ ङ. °त् । त्रियस्तीं° । ५ ङ. °तिः । एवं श्रीनर्मदायां तु सं° । ६ ग. °ऽदायाश्च । ७ ग. °रमपावृतम् । त° । ८ क. ख. °लेशप° । घ. लेशं पर° । ९ ग. ङ. च. तिष्ठेदात्र° । १० ङ. °टिभिरन्वित° ।

ब्राह्मणो वेदमाप्नोति क्षत्रियो विजयी भवेत् । वैश्यस्तु लभते लाभं शूद्रः प्राप्नोति सद्गतिम्
मुर्खस्तु लभते विद्यां त्रिसंध्यं यः पठेन्नरः । नरकं च न पश्येत्तु वियोगं च न गच्छति ॥

इति श्रीमात्स्ये महापुराणे नर्मदामाहात्म्यं नाम चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १०५९२ ॥

---

अथ पञ्चनवत्यधिकशततमोऽध्यायः ।

---

सूत उवाच—

इत्याकर्ण्य स राजेन्द्र ओंकारस्याभिवर्णनम् । ततः पप्रच्छ देवेशं मत्स्यरूपं जलार्णवे ॥ १

मनुरुवाच—

ऋषीणां नाम गोत्राणि वंशावतरणं तथा । प्रवराणां तथा साम्यमसाम्यं विस्तराद्वद ॥२
महादेवेन ऋषयः शप्ताः स्वायंभुवेऽन्तरे । तेषां वैवस्वते प्राप्ते संभवं मम कीर्तय ॥ ३
दाक्षायणीनां च तथा प्रजाः कीर्तय मे प्रभो । ऋषीणां च तथा वंशं भृगुवंशविवर्धनम् ॥

मत्स्य उवाच—

मन्वन्तरेऽस्मिन्संप्राप्ते पूर्वं वैवस्वते तथा । चरित्रं कथ्यते राजन्ब्रह्मणः परमेष्ठिनः ॥ ५
महादेवस्य शापेन त्यक्त्वा देहं स्वयं तथा । ऋषयश्च समुद्भूता हुते शुक्रे महात्मना ॥ ६
देवानां मातरो दृष्ट्वा देवपत्न्यस्तथैव च । स्कन्नं शुक्रं महाराज ब्रह्मणः परमेष्ठिनः ॥ ७
तज्जुहाव ततो ब्रह्मा ततो जाता हुताशनात् । ततो जातो महातेजा भृगुश्च तपसां निधिः ॥
अङ्गारेष्वङ्गिरा जातो ह्यर्चिभ्योऽत्रिस्तथैव च । मरीचिभ्यो मरीचिस्तु ततो जातो महातपाः
केशैस्तु कपिशो जातः पुलस्त्यश्च महातपाः । केशैः प्रलम्बैः पुलहस्ततो जातो महातपाः ॥
वसुमध्यात्समुत्पन्नो वसिष्ठस्तु तपोधनः । भृगुः पुलोम्नस्तु सुतां दिव्यां भार्यामविन्दत ॥
तस्यामस्य सुता जाता देवा द्वादश याज्ञिकाः । भुवनो भौवनश्चैव सुजन्यः सुजनस्तथा ॥
क्रतुर्वसुश्च मूर्धा च त्याज्यश्च वसुदश्च ह । प्रभवश्चाव्ययश्चैव दक्षोऽथ द्वादशस्तथा ॥ १२
इत्येते भृगवो नाम देवा द्वादश कीर्तिताः । पौलोम्यां जनयन्विप्रा देवानां तु कनीयसः ॥
च्यवनं तु महाभागमाप्नुवानं तथैव च । आप्नुवानात्मजश्चौर्वो जमदग्निस्तदात्मजः ॥ १५
और्वो गोत्रकरस्तेषां भार्गवाणां महात्मनाम् । तत्र गोत्रकरान्वक्ष्ये भृगोर्वै दीप्ततेजसः ॥
भृगुश्च च्यवनश्चैव आप्नुवानस्तथैव च । और्वश्च जमदग्निश्च वात्स्यो दण्डिर्नडायनः ॥१७
वैगायनो वीतिहव्यः पैलश्चैवात्र शौनकः । शौनकायनजीवन्तिरावेदः कार्पणिस्तथा ॥१८
वैहीनरिर्विरूपाक्षो रौहित्यायनिरेव च । वैश्वानरिस्तथा नीलो लुब्धः सावर्णिकश्च सः ॥

---

१ ग. °यो जयति क्षितिम् । वै° । ङ. 'योऽपि जयेन्महीम् । वै' । २ ग. ङ. 'योनिं च । ३ ग. 'प्ते राजा वैवस्वतः प्रभुः । अश्वमेधे तु वितते ब्रह्म' । ङ. च 'प्ते सतवैस्वते पुरा । अश्वमेधे तु वितते ब्रह्म' । ४ क ख. 'ताच्युते । ग. 'ताहुतेऽप्यग्नौ यथेप्सया । दे' । ५ क. ख. 'त्मनः । दे° । ङ. यथेच्छया । च. यादृच्छया । ६ ङ. केशेषु° क° । ७ ग. घ. च. °पिशैर्जातः । ८ ङ. 'सुसंध्या' । च. 'सुसंध्यां समु' । ९ ग. °नो भाव° । १० ग. दत्तोऽथ । ११ ग. °श्च वत्स्यो दार्भिर्नत्रप्रभः । श्वैराय° । १२ क. 'न्तिकाम्वाजाः पार्वणि' ।

विष्णुः पौरोऽपि बालाकिरैलिकोऽनन्तभागिनः। मृगमार्गेयमार्कण्ड जाविनो नीतिनस्तथा॥ मण्डमाण्डव्यमाण्डूकफेनपाः स्तनितस्तथा। स्थलपिण्डः शिखावर्णः शार्कराक्षिस्तथैव च जालधिः सौधिकः क्षुभ्यः कुत्सोऽन्यो मौद्गलायनः। माङ्क्षायनो देवपतिः पाण्डुरोचिः सगालवः॥ २२

सांकृत्यश्चातकिः सार्पिर्यज्ञपिण्डायनस्तथा। गार्ग्यायणो गायनश्च ऋषिर्गार्हायणस्तथा॥ गोष्ठायनो वाह्यंयनो वैशम्पायन एव च। वैकर्णिनिः शार्ङ्गरवो याज्ञेयिर्भ्राष्ट्रकायणिः॥ २४

लालाटिर्नाकुलिश्चैव लौक्षिण्योपरिमण्डलौ। आलुकिः सौचकिः कौत्सस्तथाऽन्यः पैङ्गलायनिः॥ २५

सात्यायनिर्मालयनिः कौटिलिः कौचहस्तिकः। सौहः सोक्तिः सकौवाक्षिः कौसिश्चान्द्रमसिस्तथा॥ २६

नैकाजिह्वो जिह्वकश्च व्याधाज्यो लौहवैरिणः। शारद्गतिकनेतिष्यौ लोलाक्षिश्चलकुण्डलः॥ थांगायनिश्चानुमतिः पूर्णिमागतिकोऽसकृत्। सामान्येन यथा तेषां पञ्चैते प्रवरा मताः॥२८

भृगुश्च च्यवनश्चैव आप्नुवानस्तथैव च। और्वश्च जमदग्निश्च पञ्चैते प्रवरा मताः॥ २९

अतः परं प्रवक्ष्यामि शृणु त्वन्यान्भृगूद्वहान्। जमदग्निर्विदश्चैव पौलस्त्यो वैजभृत्तथा॥ ३०

ऋषिश्चोभयजातश्च कायनिः शाकटायनः। और्वेया मारुताश्चैव सर्वेषां प्रवराः शुभाः॥३१

भृगुश्च च्यवनश्चैवं आप्नुवानस्तथैव च। परस्परमवैवाह्या ऋषयः परिकीर्तिताः॥ ३२

भृगुदासो मार्गपथो ग्राम्यायणिकटायनी। आपस्तम्बिस्तथा बिल्विर्नैकशिः कपिरेव च॥ आर्ष्टिषेणो गार्दभिश्च कार्दमायनिरेव च। आश्वायनिस्तथा रूपिः पञ्चाऽऽर्षेयाः प्रकीर्तिताः भृगुश्च च्यवनश्चैव आप्नुवानस्तश्चैव च। आर्ष्टिषेणस्तथा रूपिः प्रवराः पञ्च कीर्तिताः॥ ३५

परस्परमवैवाह्या ऋषयः परिकीर्तिताः। यैस्को वा वीतिहव्यो वा मथितस्तु तथा दमः॥ ३६

जैवन्त्यायनिर्मौञ्जश्च पिलिश्चैव चलिस्तथा। भागिलो भागवित्तिश्च कौशापिस्त्वथ काश्यपिः॥ ३७

बालपिः श्रमदागेपिः सौरस्तिथिस्तथैव च। गार्गीयस्त्वथ जाबालिस्तथा पौष्ण्यायनो ह्यृषिः रामोदश्च तथैतेषामार्षेयाः प्रवरा मताः। भृगुश्च वीतिहव्यश्च तथा रैवसवैवसौ॥ ३९

परस्परमवैवाह्या ऋषयः परिकीर्तिताः। शालायनिः शाकटाक्षो मैत्रेयः खाण्डवस्तथा॥ ४०

द्रौणायनो रौक्मायणिरापिशिश्चापिकायनिः। हंसजिह्वस्तथैतेषामार्षेयाः प्रवरा मताः॥ भृगुश्चैवाथ वद्ध्र्यश्वो दिवोदासस्तथैव च। परस्परमवैवाह्या ऋषयः परिकीर्तिताः॥ ४२

ऐकायनो यज्ञपतिर्मत्स्यगन्धस्तथैव च। प्रैत्यहश्च तथा सौरिश्चौक्षिर्वै कार्दमायनिः॥ ४३

---

१ ख. नः। भृतभार्गे। २ क. °था। मुग्ड°। ३ घ. नः। कर्माय°। ४ च. °पिर्यज्ञो यद्रामिलायनः। गा°। ५ घ. °नो महाभागो वै°। ६ ङ च. °कर्णेय. रवर्गेर°। ७ घ. °णिः। टलाटि°। ८ ङ. °टिलीम्त्रुकिश्चै°। ९ ग. लौगाक्षिः परिमण्डलः। आ°। १० ङ. च. जलाभित्। ११ ग. °कौगाक्षिः। १२ च. °ह्रो नदाकिश्च। १३ क. ख. जिह्मक°। १४ ङ. °तिः पौर्णि°। १५ ग. ङ. णुष्वान्या°। १६ ग. ङ. च. °नः। आर्षेया। १७ ङ °व एकायनिर्जटायनिः। प°। १८ ग. ङ. च. °थाभक्षिनै°। १९ ग. यस्कावरोवी°। २० ग. °व्यो माधवः सुदमोद°। घ. °व्योमाधवस्तुमोद°। २१ क. ख. °पिः। प्रामद°। २२ क. ख. °यणापिशलीचापि। २३ ग. घ. °र्षेयः प्रवरो मतः। भृ°। २४ ग. शाकायनो। २५ ग. घ. प्रत्यूहश्च।

तथा गृत्समदो राजन्सनकश्च महानृषिः । प्रवरास्तु तथोक्तानामार्षेयाः परिकीर्तिताः ॥ ४४
भृगुर्गृत्समदश्चैव आर्षावेतौ प्रकीर्तितौ । परस्परमवैवाह्या इत्येते परिकीर्तिताः ॥ ४५
एते तवोक्ता भृगुवंशजाता महानुभावा नृपगोत्रकाराः ।
एषां तु नाम्नां[1] परिकीर्तनेन पापं समग्रं विजहाति जन्तुः ॥ ४६

इति श्रीमात्स्ये महापुराणे भृगुवंशप्रवरकीर्तनं नाम पञ्चनवत्यधिकशततमोऽध्यायः ॥१९५ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १०६३८ ॥

---

अथ षण्णवत्यधिकशततमोऽध्यायः ।

---

मत्स्य उवाच—

मरीचितनया राजन्सुरूपा नाम विश्रुता । भार्या चाङ्गिरसो देवास्तस्याः[2] पुत्रा दश स्मृताः ॥
आत्मायुर्दमनो दक्षः सदः प्राणस्तथैव च । हविष्मांश्च गविष्ठश्च[3] ऋतः सत्यश्च ते दश ॥ २
एते चाऽऽङ्गिरसो नाम देवा वै सोमपायिनः । सुरूपा जनयामास ऋषीन्सर्वेश्वरानिमान् ॥ ३
बृहस्पतिं गौतमं च संवर्तमृषिमुत्तमम् । उतथ्यं वामदेवं च अजस्यमृषिजं[4] तथा ॥ ४
इत्येते ऋषयः सर्वे गोत्रकाराः प्रकीर्तिताः । तेषां गोत्रसमुत्पन्नान्गोत्रकारान्निबोध मे ॥ ५
उतथ्यो गौतमश्चैव[5] तौलेयोऽभिजितस्तथा । सार्धनेमिः सलौगाक्षिः क्षीरः कौष्टिकिरेव च ॥
राहुकर्णिः[6] सौपुरिश्च कैरातिः सामलोमकिः । पौषाजितिर्भार्गवतो[7] ह्यृषिश्चैरीडवस्तथा ॥ ७
कारोटकः सजीवी च उपबिन्दुसुरैषिर्णौ[8] । वाहिनीपतिवैशाली क्रोष्टा चैवारुणायनिः ॥ ८
सोमोऽत्रायनिकासोरुकौशल्याः पार्थिवास्तथा[11] । रौहिण्यायनिरेवाग्नी मूलपः पाण्डुरेव च ॥
क्षपाविश्वकरोऽरिश्च पारिकारारिरेव[9] च[10] । आर्षेयाः प्रवराश्चैव तेषां च प्रवराञ्छृणु ॥ १०
अङ्गिराः सुवचोतथ्य उशिजश्च महानृषिः । परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ ११
आत्रेयायणिसौवेष्टयावग्निवेश्यः शिलास्थलिः । बालिशायनिश्चैकेपी वाराहिर्वाष्कलिस्तथा
सौटिश्च तृणकर्णिश्च प्रावहिश्चाऽऽश्वलायनिः । वाराहिर्बर्हिसादी[12] च शिखाग्रीविस्तथैव च
कारकिश्च[13] महाकापिस्तथा चोडुपतिः प्रभुः । कौचकिर्धमितश्चैव पुष्पान्वेपिस्तथैव च ॥ १४
सोमतन्विर्ब्रह्मतन्विः[14] सालडिर्बालडिस्तथा । देवरारिर्देवस्थानिर्हारिकर्णिः सरिद्भुविः ॥ १५
प्रावेपिः साद्यसुग्रीविस्तथा गोमेदगन्धिकः । मत्स्याच्छाद्यो मूलहरः[15] फलाहारस्तथैव च ॥
गाङ्गोदधिः कौरुपतिः कौरुक्षेत्रिस्तथैव च । नायकिर्जैत्यद्रौणिश्च जैह्वलायनिरेव च ॥ १७
आपस्तम्बिर्मौञ्जवृष्टिमार्ष्टिपिङ्गलिरेव च । पैलश्चैव महातेजाः शालङ्कायनिरेव च ॥ १८
द्व्यार्ष्येयो[16] मारुतश्चैषां सर्वेषां[17] प्रवरो नृप । अङ्गिराः प्रथमस्तेषां द्वितीयश्च बृहस्पतिः ॥ १९
तृतीयश्च भरद्वाजः प्रवराः परिकीर्तिताः । परस्परमवैवाह्या इत्येते परिकीर्तिताः ॥ २०

---

१ क. ख. नाम्ना परिकीर्तितेन । २ ङ. च. देवी तस्याः । ३ ङ. च. °श्च वसिष्ठ° । ४ ङ. अयस्यमुनि° । ५ ङ. च. °व शैलें° । ६ ग. रागक° । ७ क. ख. पौषजि° । ग. पौष्यजि° । ८ ग. ङ. °णौ । रोहिणायनिर्वैशालिः क्रो° । ९ ङ. पारस्कारिरे° । १० क. ख. च । त्र्यार्षे° । ११ ङ. °र्षेयप्र° । १२ ङ. च. काचापिश्च । १३ ग. °किर्मूनित° । १४ ग. °मस्तविर्ब्रह्मस्तविर्भालुठिवालुठिस्त° । १५ ङ. मलहरः । १६ ग. घ. आर्षेयो । १७ क. ख. त्र्यार्षेयः ।

काण्वायनाः कोपचयास्तथा वात्स्यतरायणाः । भ्राष्ट्रकृद्राष्ट्रपिण्डी च लैन्द्राणिः सायकायनिः ॥ २१
क्रोष्टाक्षी बहुवीती च तालकृन्मधुरावहः । लावकृद्गालविद्वार्थी मार्कटिः पौलिकायनिः ॥ २२
स्कन्दसश्च तथा चक्री गार्ग्यः श्यामायनिस्तथा । बलाकिः साहरिश्चैव पञ्चाऽऽर्षेयाः प्रकीर्तिताः ॥ २३
अङ्गिराश्च महातेजा देवाचार्यो बृहस्पतिः । भरद्वाजस्तथा गर्गः सैत्यश्च भगवानृषिः ॥ २४
परस्परमवैवाह्या ऋषयः परिकीर्तिताः । कपीतरः स्वस्तितरो दाक्षिः शक्तिः पतञ्जलिः ॥ २५
भूयसिर्जलसंधिश्च बिन्दुर्मादिः कुसीदकिः । ऊर्वस्तु राजकेशी च वौषडिः शंसपिस्तथा ॥
शालिश्च कलशीकण्ठ ऋषिः कारीरयस्तथा । काव्यो धान्यायनिश्चैव भावास्यायनिरेव च ॥
भरद्वाजिः सौबुधिश्च लघ्वी देवमतिस्तथा । त्र्यार्षेयोऽभिमतश्चैषां प्रवरो भूमिपोत्तम ॥ २८
अङ्गिरा दमवाह्यश्च तथा चैवाप्युरुक्षयः । परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ २९
*संकृतिश्च त्रिमार्ष्टिश्च मनुः संबधिरेव वा । तण्डिश्चैनातकिश्चैव तैलका दक्ष एव च ॥ ३०
नारायणिश्चार्षिणिश्च लौक्षिर्गार्ग्यहरिस्तथा । गालवश्च अनेहश्च सर्वेषां प्रवरो मतः ३१
अङ्गिराः संकृतिश्चैव गौरवीतिस्तथैव च । परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ ३२
कात्यायनो हरितकः कौत्सः पिङ्गस्तथैव च । हण्डिदासो वात्स्यायनिर्माद्रिर्मौलिः कुवेराणिः
भीमवेगः शाश्वदर्भिः सर्वे त्रिप्रवराः स्मृताः । अङ्गिरा बृहदश्वश्च जीवनाश्वस्तथैव च ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः । बृहदुक्थो वामदेवस्तथा त्रिप्रवरा मताः ॥ ३५
अङ्गिरा बृहदुक्थश्च वामदेवस्तथैव च । परस्परमवैवाह्या इत्येते परिकीर्तिताः ॥ ३६
कुत्सगोत्रोद्भवाश्चैव तथा त्रिप्रवरा मताः । अङ्गिराश्च सदस्युश्च पुरुकुत्सस्तथैव च ॥
कुत्साः कुत्सैरवैवाह्या एवमाहुः पुरातनाः ॥ ३७
रथीतराणां प्रवरास्त्र्यार्षेयाः परिकीर्तिताः । अङ्गिराश्च विरूपश्च तथैव च रथीतरः ॥
रथीतरा ह्यवैवाह्या नित्यमेव रथीतरैः ॥ ३८
विष्णुसिद्धिः शिवमतिर्जतृणः कर्तृणस्तथा । पुत्रवश्च महातेजास्तथा वैरपरायणः ॥ ३९
त्र्यार्षेयोऽभिमतस्तेषां सर्वेषां प्रवरो नृप । अङ्गिराश्च विरूपश्च वृषपर्वस्तथैव च ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ ४०
सात्यमुग्रिर्महातेजा हिरण्यस्तम्बिमुद्गलौ । त्र्यार्षेयो हि मतस्तेषां सर्वेषां प्रवरो नृप ॥ ४१
अङ्गिरा मत्स्यदग्धश्च मुद्गलश्च महातपाः । परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ ४२
हंसजिह्वो देवजिह्वो ह्यग्निजिह्वो विराडपः । अपाग्नेयस्त्वश्वयुश्च परण्यस्ता विमौद्गलाः ॥

---

* न विद्यतेऽयं श्लोकः क. ख. पुस्तकयोः ।

---

१ क. ख. वालाकि' । २ ग. घ. °था । आर्षे° । ३ ङ. च. °राचश्वमदाश्च° । ४ क. ख. च । परस्परायण्यपर्णी लौ° । ङ. च । चारायणि वीर्ष्येणिश्च लौ° । ५ ग. °र्गार्गिहरस्त° । ६ ग. °था । लागलिश्च त्र्यर्षहिश्च स° । ७ क. ख. लविश्चैव त्र्यार्षेयः स° । घ. °लविश्चैव आर्षेश्च स° । ८ च. °नोहेश्च° । ९ ग. घ. °रोत्तमः । अ° । १० ग. ङ. °राः सांकृ° । ११ ग. °श्च युव° । १२ ङ. °रा आर्षे° । १३ ङ. °श्च रथीतारो वितप° । १४ ङ. च. कार्मिण° । १५ घ. °लौ । आर्षेयोऽभिमं° । १६ ग. ङ. °जिह्वा देवजिह्वाग्निजिह्वा विडालजाः । अ° ।

ह्यार्षेयाभिमतास्तेषां सर्वेषां प्रवराः शुभाः। अङ्गिराश्चैव ताण्डिश्च मौद्गल्यश्च महातपाः
परस्परमवैवाह्या ऋषयः परिकीर्तिताः । अपाण्डुश्च गुरुश्चैव तृतीयः शाकटायनः ॥
ततः प्रागाथमा नारी मार्कण्डो मरणः शिवः ॥ ४५
कटुर्मर्कटपश्चैव तथा नाडायनो ह्यृषिः। श्यामायनस्तथैवैषां ह्यार्षेयाः प्रवराः शुभाः॥ ४६
अङ्गिराश्चाजमीढश्च कण्ठश्चैव महातपाः । परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ ४७
तित्तिरिः कपिभूश्चैव गार्ग्यश्चैव महानृषिः । ह्यार्षेयो हि मतस्तेषां सर्वेषां प्रवरः शुभः॥
अङ्गिरास्तित्तिरिश्चैव कपिभूश्च महानृषिः । परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ ४९
अथ ऋक्षभरद्वाजौ ऋषिर्वान्मानवस्तथा । ऋषिर्मैत्रवरश्चैव पञ्चार्षेयाः प्रकीर्तिताः ॥ ५०
अङ्गिराः सभरद्वाजस्तथैव च बृहस्पतिः । ऋषिर्मैत्रवरश्चैव ऋषिवान्मानवस्तथा ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ ५१
भारद्वाजो हुतः शौङ्गः शैशिरेयस्तथैव च । इत्येते कथिताः सर्वे द्व्यामुष्यायणगोत्रजाः॥
पञ्चाऽऽर्षेयास्तथा ह्येषां प्रवराः परिकीर्तिताः । अङ्गिराश्च भरद्वाजस्तथैव च बृहस्पतिः
मौद्गल्यः शैशिरश्चैव प्रवराः परिकीर्तिताः । परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ ५४

एते तवोक्ताङ्गिरसस्तु वंशे महानुभावा ऋषिगोत्रकाराः ।
येषां तु नाम्ना परिकीर्तितेन पापं समग्रं पुरुषो जहाति ॥ ५५

इति श्रीमात्स्ये महापुराणे प्रवरानुकीर्तनेऽङ्गिरोवंशकीर्तनं नाम षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १०६९२ ॥

---

अथ सप्तनवत्यधिकशततमोऽध्यायः ।

---

* मत्स्य उवाच—

अत्रिवंशसमुत्पन्नान्गोत्रकारान्निबोध मे । कर्दमायनशाखेयास्तथा शारायणाश्च ये ॥ १
उद्दालकिः शौणकर्णिरथौ शौक्रतवश्च ये । गौरग्रीवा गौरजिनस्तथा चैत्रायणाश्च ये ॥ २
अर्धपण्या वामरथ्या गोपनास्तकिबिन्दवः । कर्णजिह्वो हरप्रीतिर्लैद्राणिः शाकलायनिः ॥
तैलपश्च सवैलेयो अत्रिर्गोणीपतिस्तथा । जलदो भगपादश्च सौपुष्पिश्च महातपाः ॥ ४
छन्दोगेयस्तथैतेषां ह्यार्षेयाः प्रवरा मताः । श्यावाश्वश्च तथाऽत्रिश्च आर्चनानश एव च
परस्परमवैवाह्या ऋषयः परिकीर्तिताः । दाक्षिर्बलिः पर्णविश्च ऊर्णनाभिः शिलार्दनिः ॥
बीजवापी शिरीषश्च मौञ्जकेशो गविष्ठिरः । भलन्दनस्तथैतेषां ह्यार्षेयाः प्रवरा मताः ॥

---

* न विद्यतेऽयमध्यायो ङ. पुस्तके ।

---

१ ग. घ. °गात्रसो नारी मार्कटो मरनाशनः । कराटमर्क° । २ ङ. कङ्कटः कटकश्चै° । ३ ग. °माजनिस्त· थैवैषामार्षेयः प्रवरो मतः । अ° । ४ ङ. च. कण्ठश्चै° । ५ ग. °पित्रामो नरस्त° । ६ ग. ऋपिश्चात्मन° । ७ ग. °किः सौनकार्णस्तथा सौत्रावनश्च । ८ च. कर्णरथ्येशाक्रवतश्च । ९ घ °रथोशौक्रवतश्च । १० ङ. कराजि° । ११ ग. °ह्वोरस· द्वीन्निर्नैद्रालिः शाकलायनः । तै° । १२ ग. सचैले° । १३ ग. °गोणायनिस्त° । १४ घ. च. तेषामार्षेयः प्रवरोमतः । श्या° । १५ च. °श्च त्रिवरातम ए° । १६ ग. घ °तेषामार्षेयः प्रवरो मतः । अ° ।

अत्रिर्गविष्ठिरश्चैव तथा पूर्वातिथिः स्मृतः। परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ ८
आत्रेयपुत्रिकापुत्रानत ऊर्ध्वं निबोध मे। कालेयाश्च सबालेया वामरथ्यास्तथैव च ॥ ९
धात्रेयाश्चैव मैत्रेयास्त्र्यार्षेयाः परिकीर्तिताः। अत्रिश्च वामरथ्यश्च पौत्रिश्चैव महानृपिः॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ १०

इत्यत्रिवंशप्रभवास्तवोक्ता महानुभावा नृप गोत्रकाराः।
येषां तु नाम्ना परिकीर्तितेन पापं समग्रं पुरुषो जहाति ॥

इति श्रीमात्स्ये महापुराणे प्रवरानुकीर्तनेऽत्रिवंशानुकीर्तनं नाम सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १०७०४ ॥

अथाष्टनवत्यधिकशततमोऽध्यायः।

मत्स्य उवाच—
अत्रेरेवापरं वंशं तव वक्ष्यामि पार्थिव। अत्रेः सोमः सुतः श्रीमांस्तस्य वंशोद्भवो नृप॥
विश्वामित्रस्तु तपसा ब्राह्मण्यं समवाप्तवान्। तस्य वंशमहं वक्ष्ये तन्मे निगदतः शृणु ॥
विश्वामित्रो देवरातस्तथा वैकृतिगालवः। वतण्डश्च शलङ्कश्च ह्यभयश्चायतायनः॥ ३
श्यामायना याज्ञवल्क्या जावालाः सैन्धवायनाः। बाभ्रव्याश्च करीषाश्च संश्रुत्या अथ संश्रुताः॥ ४
उलूपा औपहावाश्च पयोदजनपादपाः। खरवाचो हलयमाः साधिता वास्तुकौशिकाः ॥
त्र्यार्षेयाः प्रवरास्तेषां सर्वेषां परिकीर्तिताः। विश्वामित्रो देवरात उद्दालश्च महयशाः॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः। देवश्रवाः सुजातेयाः सौमुकाः कारुकायणाः ॥
तथा वैदेहराता ये कुशिकाश्च नराधिपं। त्र्यार्षेयोऽभिमतस्तेषां सर्वेषां प्रवरः शुभः ॥ ८
देवश्रवा देवरातो विश्वामित्रस्तथैव च। परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ ९
[ *धनंजयः कपर्देयः परिकूटश्च पार्थिव। पाणिनिश्चैव त्र्यार्षेयाः सर्व एते प्रकीर्तिताः ॥
विश्वामित्रस्तथाऽऽद्यश्च माधुच्छन्दस एव च। त्र्यार्षेयाः प्रवरा ह्येते ऋषयः परिकीर्तिताः॥
विश्वामित्रो मधुच्छन्दास्तथा चैवाघमर्षणः। परस्परमवैवाह्या ऋषयः परिकीर्तिताः ]॥
कामलायनिजश्चैव अश्मरथ्यस्तथैव च। वञ्जुलिश्चापि त्र्यार्षेयः सर्वेषां प्रवरो मतः॥१३
विश्वामित्रश्चाश्मरथो वञ्चुलिश्च महातपाः। परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥
विश्वामित्रो लोहितश्च अष्टकः पूरणस्तथा। विश्वामित्रः पूरणश्च तयोर्द्वौ प्रवरौ स्मृतौ ॥
परस्परमवैवाह्याः पूरणाश्च परस्परम्। लोहिता अष्टकाश्चैषां त्र्यार्षेयाः परिकीर्तिताः ॥१६
विश्वामित्रो लोहितश्च अष्टकश्च महातपाः। अष्टका लोहितैर्नित्यमवैवाह्याः परस्परम् ॥

* धनुश्चिह्नान्तर्गतग्रन्थो ङ. पुस्तके नास्ति। * न विद्यतेऽयं श्लोको ग. पुस्तके।

१ ङ. वैकलिनायनः। व°। २ ङ. च. उलपा। ३ ग. 'तेयास्तौसुकाः कामुकायनाः। त°। ४ ग. देवराजे· तु कु°। ङ. देहजाता। च. देहनाता। ५ ग. ङ °प। आर्षेयाभिमतास्ते°। ६ ग. ङ. 'वराः शुभाः। दे°। ७ ग. ङ 'रथ्यास्त°।

उद्रेणुः क्रथकश्च ऋषिश्चोदावहिस्तथा । *आर्षेयोऽभिमतस्तेषां सर्वेषां प्रवरः स्मृतः ॥१८
ऋणवान्गतिनश्चैव विश्वामित्रस्तथैव च । परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ १९
उदुम्बरः सैपिरिंटिर्ऋषिस्त्राक्षायणिस्तथा । शांठ्यायनिः करीराशी शालङ्कायनिलावकी
मौञ्जायनिश्च भगवांस्त्र्यार्षेयाः परिकीर्तिताः ॥ २०
खिंलिखिलिस्तथा विद्यो विश्वामित्रस्तथैव च । परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥

एते तवोक्ताः कुशिका नरेन्द्र महानुभावाः सततं द्विजेन्द्राः ।
येषां तु नाम्ना परिकीर्तितेन पापं समग्रं पुरुषो जहाति ॥ २२

इति श्रीमात्स्ये महापुराणे प्रवरानुकीर्तने विश्वामित्रवंशानुवर्णनं नामाष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १०७२६ ॥

---

अथ नवनवत्यधिकशततमोऽध्यायः ।

---

मत्स्य उवाच—
मरीचेः कश्यपः पुत्रः कश्यपस्य तथा कुले । गोत्रकारानृषीन्वक्ष्ये तेषां नामानि मे शृणु ॥
आश्रायणिऋषिगणो मेषकीरिटकायनाः । उदग्रजा माठराश्च भोजा विनयलक्षणाः ॥ २
शालाहलेयाः कौरिष्टाः कन्यकाश्चाऽऽसुरायणाः । मन्दाकिन्यां वै मृगयाः श्रोतना भौतपायनाः ॥ ३
देवयाना गोमयाना ह्यधश्छायाभयाश्च ये । कात्यायनाः शक्रयणा बर्हियोगगदायनाः ॥ ४
भवनन्दिर्महाचक्रिर्दाक्षपायण एव च । योधयानाः कार्तिवयो हस्तिदानास्तथैव च ॥ ५
वात्स्यायना निकृतजा ह्याश्वलायनिनस्तथा । प्रागायणाः पैलमौलिराश्ववातायनस्तथा ॥
कौवेरकाश्च श्याकारा अग्निशर्मायणाश्च ये । मेषपाः कैकरसपास्तथा चैव तु बभ्रवः ॥ ७
प्राचेयो ज्ञानसंज्ञेया आग्ना प्रासेव्य एव च । श्यामोदरा वैवशपास्तथा चैवोद्वलायनाः ॥ ८
काष्ठाहारिणमारीचा आजिहायनहास्तिकाः । वैकर्णेयाः काश्यपेयाः सासिसाहारितायनाः
मातङ्गिनश्च भृगवरूयार्षेयाः परिकीर्तिताः । वत्सरः कश्यपश्चैव निध्रुवश्च महातपाः ॥ १०
परस्परमवैवाह्या ऋषयः परिकीर्तिताः । अतः परं प्रवक्ष्यामि द्व्यामुष्यायणगोत्रजान् ॥ ११
अनसूयो नाकुरयः स्नातपो राजर्वतपः । शैशिरोदवहिश्चैव सैरन्ध्री रौपसेवकिः ॥ १२
यामुनिः काद्रुपिङ्गाक्षिः सजातम्बिस्तथैव च । दिवावष्टाश्च इत्येते भक्त्या ज्ञेयाश्च काश्यपाः
त्र्यार्षेयाश्च तथैवेषां सर्वेषां प्रवराः शुभाः । वत्सरः कश्यपश्चैव वासिष्ठश्च महातपाः ॥ १४
परस्परमवैवाह्या ऋषयः परिकीर्तिताः । संयातिश्च नभश्चोभौ पिप्पल्योऽथ जलंधरः ॥ १५
भुजातपूरः पूर्यश्च कर्दमो गर्दभीमुखः । हिरण्यबाहुकैरातावुभौ काश्यपगोभिलौ ॥ १६

---

* इत आरभ्य त्राक्षायणिस्तथेत्यन्तग्रन्थः क. ख. घ. पुस्तकेषु नास्ति ।

---

१ ग. ङ. कात्यायनिः । २ ङ. च. °की । कौञ्जा° । ३ ङ. खिलिः क्षितिमुखाविद्धो त्रि° । ४ ङ. °याः श्रुतयो भीमपा. । ५ क. ख. °नाः शाक्राय° । ६ ग. °कांगकाः का° । ७ ग. °वाह्यौ गोत्रौ द्वौ परिकीर्तितौ । अ° । ८ ङ. °वल्लभः । शै° । ९ ग. °रग्भ्रिःशेष से° । १० ग. °किः । सामुःकिः कार्दपि° । ११ ग. °वसोश्च इ° । ङ. °वसिष्ठास्त्विवस्ये° ।

कुलहो वृषकण्डश्च मृगकेतुस्तथोत्तरः। निदाघमसृणौ भत्स्यौ महान्तः केरलाश्च ये ॥ १७
शाण्डिल्यो दानवश्चैव तथा वै देवजातयः। पैप्पलादिः सप्रवरा ऋषयः परिकीर्तिताः ॥ १८
त्र्यार्षेयाभिमताश्चैषां सर्वेषां प्रवराः शुभाः। असितो देवलश्चैव कश्यपश्च महातपाः ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ १९

ऋषिप्रधानस्य च कश्यपस्य दाक्षायणीभ्यः सकलं प्रसूतम्।
जगत्समग्रं मनुसिंह पुण्यं किं ते प्रवक्ष्याम्यहमुत्तरं तु ॥ २०

इति श्रीमात्स्ये महापुराणे प्रवरानुकीर्तने कश्यपवंशवर्णनं नाम नवनवत्यधिकशततमोऽध्यायः ॥ १९९ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १०७४६ ॥

---

अथ द्विशततमोऽध्यायः।

---

*मत्स्य उवाच—

वसिष्ठवंशजान्विप्रान्निबोध वदतो मम। एकार्षेयस्तु प्रवरो वासिष्ठानां प्रकीर्तितः ॥ १
वसिष्ठा एव वासिष्ठा अविवाह्या वसिष्ठजैः। व्याघ्रपादा औपगवा वैक्लवाः शाद्वलायनाः ॥ २
कपिष्ठला औपलोमा अलब्धाश्च शठाः कठाः। गौपायना बोधपाश्च दाकव्या ह्यथ वाह्यकाः
बालिशयाः पालिशयास्ततो वाग्ग्रन्थयश्च ये। आपस्थूणाः शीतवृत्तास्तथा ब्राह्मपुरेयकाः
लोमायनाः स्वस्तिकराः शाण्डिलिर्गौडिनिस्तथा। वाडोहलिश्च सुमनाश्चोपावृद्धिस्तथैव च
चौलिर्बौलिर्ब्रह्मबलः पौलिः श्रवस एव च। पौडवो याज्ञवल्क्यश्च एकार्षेया महर्षयः ॥ ६
वसिष्ठ एषां प्रवरो ह्यवैवाह्याः परस्परम्। शैलालयो महाकर्णः कौरव्यः क्रोधिनस्तथा ॥ ७
कपिञ्जला वालखिल्या भागवित्तायनाश्च ये। कौलायनः कालशिखः कोरकृष्णाः सुरायणाः ॥ ८
शाकाहार्याः शाकधियः काण्वा उपलपाश्च ये। शाकायना उहाकाश्च अथ माषशरावयाः ॥
दाकायना वालवयो वाकयो गोरथास्तथा। लम्बायनाः श्यामवयो ये च क्रोडोदरायणाः ॥
प्रलम्बायनाश्च ऋषय औपमन्यव एव च। सांख्यायनाश्च ऋषयस्तथा वै वेदशेरकाः ॥ ११
पालङ्कायन उद्गाहा ऋषयश्च बलेक्षवः। मातेया ब्रह्ममलिनः पैङ्गागारिस्तथैव च ॥ १२
त्र्यार्षेयोऽभिमतश्चैषां सर्वेषां प्रवरस्तथा। भगीवसुर्वसिष्ठश्च इन्द्रप्रमदिरेव च ॥ १३
परस्परमवैवाह्या ऋषयः परिकीर्तिताः। औपस्थलास्वस्थलयो बालो हालो हलाश्च ये ॥ १४

---

* अयमध्यायो नास्ति च पुस्तके।

---

१ ग. वैं वेदसातनः। पं°। २ ग. घ. आपगक्षा। ३ ग. °ला अपष्टोमा। ४ ग. °श्च पटाकुराः। गोपा°। ५ ग. °तो याहुरय°। ६ ङ. °था ब्रह्मकृतेजनाः। लो°। ७ ग. °लि जौंडिलिस्त°। ८ ङ. °वण ए°। ९ ङ. च। खाण्डवो यज्ञदतश्च एकार्षेयो महान्नृपिः। व°। १० ग. रौरालयो। ङ. शैवलेयो। ११ ङ. °वित्रासना°। १२ ङ. कौमानरायणा लोके कौर°। १३ क. ख. °वयः। दा°। १४ ङ. पादपायन उद्वाटस्तपर्यश्चदलेपवः। १५ क. ख. पर्गांगा°। १६ ग. °था। भा॑।र्वसु°। १७ ङ. श्च चन्द्रसंमतिरे°। १८ ग. °ताः। जपस्त्रस्थाश्च मुनयो घवा लोहलयश्च।

माध्यंदिनो माक्षतयः पैप्पलादिर्विचक्षुषः । त्रैशृङ्गायणसैबल्काः कुण्डिनश्च नरोत्तम ॥ १५
त्र्यार्षेयाभिमताश्चैषां सर्वेषां प्रवराः शुभाः । वसिष्ठमित्रावरुणौ कुण्डिनश्च महातपाः ॥ १६
दानकाया महावीर्या नागेयाः परमास्तथा । आलम्बा वायनश्चापि ये चक्रोडादयो नराः ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः । शिवकर्णो वयश्चैव पादपश्च तथैव च ॥ १८
त्र्यार्षेयोऽभिमतश्चैषां सर्वेषां प्रवरस्तथा । जातूकर्ण्यो वसिष्ठश्च तथैवात्रिश्च पार्थिव ॥
परस्परमवैवाह्या ऋषयः परिकीर्तिताः ॥ १९

वसिष्ठवंशेऽभिहिता मयैते ऋषिप्रधानाः सततं द्विजेन्द्राः ।
येषां तु नाम्नां परिकीर्तितेन पापं समग्रं पुरुषो जहाति ॥ २०

इति श्रीमात्स्ये महापुराणे प्रवरानुकीर्तने वसिष्ठगोत्रानुवर्णनं नाम द्विशततमोऽध्यायः ॥ २०० ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १०७६६ ॥

---

अथैकाधिकद्विशततमोऽध्यायः ।

---

मत्स्य उवाच—
वसिष्ठस्तु महातेजा निमेः पूर्वपुरोहितः । बभूवुः पार्थिवश्रेष्ठ यज्ञास्तस्य समन्ततः ॥ १
श्रान्तात्मा पार्थिवश्रेष्ठ विशश्राम तदा गुरुः । तं गत्वा पार्थिवश्रेष्ठो निमिर्वचनमब्रवीत् ॥ २
भगवन्यष्टुमिच्छामि तन्मां याजय मा चिरम् । तमुवाच महातेजा वसिष्ठः पार्थिवोत्तमम् ॥
कंचित्कालं प्रतीक्षस्व तव यज्ञैः सुसंस्तमैः । श्रान्तोऽस्मि राजन्विश्रम्य याजयिष्यामि ते नृप ॥
एवमुक्तः प्रत्युवाच वसिष्ठं नृपसत्तमः । पारलौकिककार्ये तु कः प्रतीक्षितुमुत्सहेत् ॥ ५
न च मे सौहृदं ब्रह्मन्कृतान्तेन बलीयसा । धर्मकार्ये त्वरा कार्या चलं यस्माद्धि जीवितम् ॥ ६
धर्मपथ्योदनो जन्तुर्मृतोऽपि सुखमश्नुते । श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चाऽऽपराह्णिकम् ॥
न हि प्रतीक्षते मृत्युः कृतं चास्य न वा कृतम् । क्षेत्रापणगृहासक्तमन्यत्रगतमानसम् ॥ ८
वृकीवोरणमासाद्य मृत्युरादाय गच्छति । न कालस्य प्रियः कश्चिद्द्वेष्यश्चास्य न विद्यते ॥ ९
आयुष्ये कर्मणि क्षीणे प्रसह्य हरते जनम् । प्राणवायोश्चलत्वं च त्वया विदितमेव च ॥ १०
यदत्र जीव्यते ब्रह्मन्क्षणमात्रं तदद्भुतम् । शरीरं शाश्वतं मन्ये विद्याभ्यासे धनार्जने ॥ ११
अशाश्वतं धर्मकार्ये ऋणवानस्मि संकटे । सोऽहं संभृतसंभारो भवन्मूलमुपागतः ॥ १२
न चेद्याजयसे मां त्वमन्यं यास्यामि याजकम् । एवमुक्तस्तदा तेन निमिना ब्राह्मणोत्तमः
शशाप तं निमिं क्रोधाद्विदेहस्त्वं भविष्यसि । श्रान्तं मां त्वं समुत्सृज्य यस्मादन्यं द्विजोत्तमम्
धर्मज्ञस्तु नरेन्द्र त्वं याजकं कर्तुमिच्छसि । निमिस्तं प्रत्युवाचाथ धर्मकार्यरतस्य मे ॥ १५
विघ्नं करोषि नान्येन याजनं च तथेच्छसि । शापं ददामि तस्मात्त्वं विदेहोऽथ भविष्यसि

---

१ ङ. °विंत्रर्धकाः । त्रैशृङ्गाः सर्वसौलावाः कु° । २ ग. ङ. °म । आर्षेयो मरुतश्चैषां सर्वेषां प्रवरः शुभः । व° । ३ ङ. शवकर्णो । ४ ङ. च । आर्षेयः प्रवरश्चै° । ५ ग. द्विजाग्रयाः । ६ ग. ङ. पूर्वे पु° । ७ ग. घ. ङ. बभूव । ८ ङ. यज्ञैस्तस्य तु संस्कृतैः । श्रान्ता° । ९ ग. °स्व जपयज्ञैर्भृशं नृप । श्रा° । १० ङ. सुसंस्कृतैः । श्रा° । ११ ङ. °द् । ज्ञीयते हि जगद्ब्रह्म° । १२ क. ख. पथ्यौद° । १३ ख. वृकश्चो° । १४ क. ख °ति । नैकान्तेन । प्रि° । १५ ङ. °षि तन्मे त्वं या° । १६ क ख. °दासि यस्मा° ।

नोपेक्ष्यस्तस्य मानश्च तथा राज्ञः प्रियो भवेत्। राज्ञश्च न तथा कार्यं वेषभाषितचेष्टितम् ॥ ६
राजलीला न कर्तव्या तद्विद्विष्टं च वर्जयेत्। राज्ञः समोऽधिको वा न कार्यो वेषो विजानता ॥
द्यूतादिषु तथैवान्यत्कौशलं तु प्रदर्शयेत्। प्रदर्श्य कौशलं चास्य राजानं तु विशेषयेत् ॥ ८
अन्तःपुरजनाध्यक्षैर्वैरिदूतैर्निराकृतैः। संसर्गं न व्रजेद्राजन्विना पार्थिवशासनात् ॥ ९
निःस्नेहतां चावमानं प्रयत्नेन तु गोपयेत्। यच्च गुह्यं भवेद्राज्ञो न तल्लोके प्रकाशयेत् ॥ १०
नृपेण श्रावितं यत्स्याद्वाच्यावाच्यं नृपोत्तम। न तत्संश्रावयेल्लोके तथा राज्ञोऽप्रियो भवेत् ॥
आज्ञाप्यमाने वाऽन्यस्मिन्समुत्थाय त्वरान्वितः। किमहं करवाणीति वाच्यो राजा विजानता ॥ १२
कार्यावस्थां च विज्ञाय कार्यमेव यथा भवेत्। सततं क्रियमाणेऽस्मिँल्लाघवं तु व्रजेद्ध्रुवम् ॥
राज्ञः प्रियाणि वाक्यानि न चात्यर्थं पुनः पुनः। न हास्यशीलस्तु भवेन्न चापि भृकुटीमुखः॥
नातिवक्ता न निर्वक्ता न च मात्सरिकस्तथा। आत्मसंभावितश्चैव न भवेत्तु कथंचन ॥ १५
दुष्कृतानि नरेन्द्रस्य न तु संकीर्तयेत्क्वचित्। वस्त्रमस्त्रमलंकारं राज्ञा दत्तं तु धारयेत् ॥ १६
औदार्येण न तद्देयमन्यस्मै भूतिमिच्छता। नचैवात्यशनं कार्यं दिवा स्वप्नं न कारयेत् ॥१७
नानिर्दिष्टे तथा द्वारे प्रविशेत्तु कथंचन। न च पश्येत्तु राजानमयोग्यासु च भूमिषु ॥ १८
राज्ञस्तु दक्षिणे पार्श्वे वामे चोपविशेत्तदा। पुरस्ताच्च तथा पश्चादासनं तु विगर्हितम् ॥ १९
जृम्भां निष्ठीवनं कासं कोपं पर्यास्तिकाश्रयम्। भृकुटिं वान्तमुद्गारं तत्समीपे विवर्जयेत् ॥ २०
स्वयं तत्र न कुर्वीत स्वगुणाख्यापनं बुधः। स्वगुणाख्यापने युक्त्या परमेव प्रयोजयेत् ॥ २१
हृदयं निर्मलं कृत्वा परां भक्तिमुपाश्रितैः। अनुजीविगणैर्भाव्यं नित्यं राज्ञामतन्द्रितैः ॥
शाठ्यं लौल्यं च पैशुन्यं नास्तिक्यं क्षुद्रता तथा। चापल्यं च परित्याज्यं नित्यं राज्ञोऽनुजीविभिः ॥ २३
श्रुतेन विद्याशीलैश्च संयोज्याऽऽत्मानमात्मना। राजसेवां ततः कुर्याद्भूतये भूतिवर्धनीम् ॥
नमस्कार्याः सदा चास्य पुत्रवल्लभमन्त्रिणः। सचिवैश्चास्य विश्वासो न तु कार्यः कथं चन ॥
अपृष्टश्चास्य न ब्रूयात्कामं ब्रूयात्तथा यदि। हितं तथ्यं च वचनं हितैः सह सुनिश्चितम् ॥ २६
चित्तं चैवास्य विज्ञेयं नित्यमेवानुजीविना। भर्तुराराधनं कुर्याच्चित्तज्ञो मानवः सुखम् ॥ २७
रागापरागौ चैवास्य विज्ञेयौ भूतिमिच्छता। त्यजेद्विरक्तं नृपतिं रक्ताद्वृत्तिं तु कारयेत्॥२८
विरक्तः कारयेन्नाशं विपक्षाभ्युदयं तथा। आशावर्धनकं कृत्वा फलनाशं करोति च ॥ २९
अकोपोऽपि सकोपाभः प्रसन्नोऽपि च निष्कलः। वाक्यं च समदं वक्ति वृत्तिच्छेदं करोति वै॥
*प्रदेशवाक्यमुदितो नं च संभावयेत्तथा। आराधनासु सर्वासु सुप्तवच्च विचेष्टते ॥ ३१
कथासु दोषं क्षिपति वाक्यभङ्गं करोति च। लक्ष्यते विमुखश्चैव गुणसंकीर्तनेऽपि च ॥ ३२
दृष्टिं क्षिपति चान्यत्र क्रियमाणे च कर्मणि। विरक्तलक्षणं चैतच्छृणु रक्तस्य लक्षणम् ॥ ३३

* इत आरभ्य करोति चेत्यन्तग्रन्थो ग. ङ. पुस्तकयोर्नास्ति।

१ ङ. च. 'यं गतिभा'। २ ग. ङ. तद्वेषं च नि'। ३ ग. 'शल्यं तु'। ४ ग. 'रिभिः समागतैः। ५ ग. घ. ङ. राज्ञः प्रि'। ६ क. 'ता। तत्रैवोपासनं। 'ता। ख. तथैवात्मासनं। ७ क. ख. श्रुतिविद्यसुधी'। ८ ङ. च. यासिष्पैश्च। ९ क. 'रक्तो नृपती रक्तो वृ'। १० ग. रक्ते व'। ११ घ. प्रवेश'। १२ क. ख. न संभावयतेऽन्यथा। आ'।

हृष्टा प्रसन्नो भवति वाक्यं गृह्णाति चाऽऽदरात् । कुशलादिपरिप्रश्नं संप्रयच्छति चाऽऽसनम् ॥
विविक्तदर्शने चास्य रहस्येनं न शङ्कते । जायते हृष्टवदनः श्रुत्वा तस्य तु तत्कथाम् ॥ ३५
अप्रियाण्यपि वाक्यानि तदुक्तान्यभिनन्दते । उपायनं च गृह्णाति स्तोकमप्यादरात्तथा ॥
कथान्तरेषु स्मरति प्रहृष्टवदनस्तथा । इति रक्तस्य कर्तव्या सेवा रविकुलोद्वह ॥
आपत्सु न त्यजेत्पूर्वं विरक्तमपि सेवितम् ॥ ३७

मित्रं न चाऽऽपत्सु तथा च भृत्यं त्यजन्ति ये निर्गुणमप्रमेयम् ।
विभुं विशेषेण च ते व्रजन्ति सुरेन्द्रधामामरवृन्दजुष्टम् ॥ ३८

इति श्रीमात्स्ये महापुराणे राजधर्मेऽनुजीविवर्तनं नाम षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ११३६१ ॥

---

अथ सप्तदशाधिकद्विशततमोऽध्यायः ।

---

मत्स्य उवाच—

राजा सहायसंयुक्तः प्रभूतयवसेन्धनम् । रम्यमानतसामन्तं मध्यमं देशमावसेत् ॥ १
वैश्यशूद्रजनप्रायमनाहार्यं तथा परैः । किंचिद्ब्राह्मणसंयुक्तं बहुकर्मकरं तथा ॥ २
अदेवमातृकं रम्यमनुरक्तजनान्वितम् । करैरपीडितं चापि बहुपुष्पफलं तथा ॥ ३
अगम्यं परचक्राणां तद्वासगृहमापदि । समदुःखसुखं राज्ञः सततं प्रियमास्थितम् ॥ ४
सरीसृपविहीनं च व्याघ्रतस्करवर्जितम् । एवंविधं यथालाभं राजा विषयमावसेत् ॥ ५
तत्र दुर्गं नृपः कुर्यात्षण्णामेकतमं बुधः । धनुर्दुर्गं महीदुर्गं नरदुर्गं तथैव च ॥ ६
वार्क्षं चैवाम्बुदुर्गं च गिरिदुर्गं च पार्थिव । सर्वेषामेव दुर्गाणां गिरिदुर्गं प्रशस्यते ॥ ७
दुर्गं च परिखोपेतं वप्राट्टालकसंयुतम् । शतघ्नीयन्त्रमुख्यैश्च शतशश्च समावृतम् ॥ ८
गोपुरं सकपाटं च तत्र स्यात्सुमनोहरम् । सपताकं गजारूढो येन राजा विशेत्पुरम् ॥ ९
चतस्रश्च तथा तत्र कार्यास्त्वायतवीथयः । एकस्मिंस्तत्र वीथ्यग्रे देववेश्म भवेद्दृढम् ॥
वीथ्यग्रे च द्वितीये च राजवेश्म विधीयते । धर्माधिकरणं कार्यं वीथ्यग्रे च तृतीयके ॥ ११
चतुर्थे त्वथ वीथ्यग्रे गोपुरं च विधीयते । आयतं चतुरस्रं वा वृत्तं वा कारयेत्पुरम् ॥ १२
मुक्तिहीनं त्रिकोणं च यवमध्यं तथैव च । अर्धचन्द्रप्रकारं च वज्राकारं च कारयेत् ॥ १३
अर्धचन्द्रं प्रशंसन्ति नदीतीरेषु तद्वसन् । अन्यत्र तन्न कर्तव्यं प्रयत्नेन विजानता ॥ १४
राज्ञा कोशगृहं कार्यं दक्षिणे राजवेश्मनः । तस्यापि दक्षिणे भागे गजस्थानं विधीयते ॥
गजानां प्राङ्मुखी शाला कर्तव्या वाऽप्युदङ्मुखी । आग्नेये च तथा भागे आयुधागारमिष्यते
महानसं च धर्मज्ञ कर्मशालास्तथा पराः । गृहं पुरोधसः कार्यं वामतो राजवेश्मनः ॥ १७
मन्त्रिवेदविदां चैव चिकित्साकर्तुरेव च । तत्रैव च तथा भागे कोष्ठागारं विधीयते ॥ १८
गवां स्थानं तथैवात्र तुरगाणां तथैव च । उत्तराभिमुखा श्रेणी तुरगाणां विधीयते ॥ १९

---

१ ग. प्रक्षापयति । २ क. ख. भृत्या भज° । ३ ङ. च. °क्राणामाराध्यं सहसा प° । ४ च. °यास्तत्रोपवी° । ५ ग. °२८ ।रणवी° । ६ ग. °येद्द्रहम् । ७ ङ च क्षुप्तिहीनं । ८ ग. ङ. °द्वशा।.।अ । ९ क. ख °ःयत्तत्र न क° । १० ग. °मुखी श्रे° । ११ घ. ङ च °ते । प्राङ्मुखा वाऽपि धर्मज्ञ प° ।

दक्षिणाभिमुखा वाऽथ परिशिष्टास्तु गर्हिताः । तुरगास्ते तथा धार्याः प्रदीपैः सार्वरात्रिकैः ॥
कुक्कुटान्वानरांश्चैव मर्कटांश्च विशेषतः । धारयेदश्वशालासु सवत्सां धेनुमेव च ॥ २१
अजाश्च धार्या यत्नेन तुरगाणां हितैषिणा । गोगजाश्वादिशालासु तत्पुरीषस्य निर्गमः ॥
अस्तं गते न कर्तव्यो देवदेवे दिवाकरे । तत्र तत्र यथास्थानं राजा विज्ञाय सारथीन् ॥ २३
दद्यादावसथस्थानं सर्वेषामनुपूर्वशः । योधानां शिल्पिनां चैव सर्वेषामविशेषतः ॥ २४
दद्यादावसथान्दुर्गे कालमन्त्रविदां शुभान् । गोवैद्यानश्ववैद्यांश्च गजवैद्यांस्तथैव च ॥ २५
आहरेत भृशं राजा दुर्गे हि प्रबला रुजः । कुशीलवानां विप्राणां दुर्गे स्थानं विधीयते ॥ २६
न बहूनामतो दुर्गे विना कार्यं तथा भवेत् । दुर्गे च तत्र कर्तव्या नानाप्रहरणान्विताः ॥ २७
सहस्रघातिनो राजंस्तैस्तु रक्षा विधीयते । दुर्गे द्वाराणि गुप्तानि कार्याण्यपि च भूभुजा ॥ २८
संचयश्चात्र सर्वेषामायुधानां प्रशस्यते । धनुषां क्षेपणीयानां तोमराणां च पार्थिव ॥ २९
शराणामथ खड्गानां कवचानां तथैव च । लगुडानां गुडानां च हुडानां परिघैः सह ॥ ३०
अश्मनां च प्रभूतानां मुद्गराणां तथैव च । त्रिशूलानां पट्टिशानां कुठाराणां च पार्थिव ॥ ३१
प्रासानां च सशूलानां शक्तीनां च नरोत्तम । परश्वधानां चक्राणां वर्मणां चर्मभिः सह ॥ ३२
कुद्दालरज्जुवेत्राणां पीठकानां तथैव च । तुषाणां चैव दात्राणामङ्गाराणां च संचयः ॥ ३३
सर्वेषां शिल्पिभाण्डानां संचयश्चात्र चेष्यते । वादित्राणां च सर्वेषामोषधीनां तथैव च ॥
यवसानां प्रभूतानामिन्धनस्य च संचयः । गुडस्य सर्वतैलानां गोरसानां तथैव च ॥ ३५
वसानामथ मज्जानां स्नायूनामस्थिभिः सह । गोचर्मपटहानां च धान्यानां सर्वतस्तथा ॥ ३६
तथैवाभ्रपटानां च यवगोधूमयोरपि । रत्नानां सर्ववस्त्राणां लोहानामप्यशेषतः ॥ ३७
कलायमुद्गमाषाणां चणकानां तिलैः सह । तथा च सर्वसस्यानां पांसुगोमययोरपि ॥ ३८
शणसर्जरसं भूर्जं जतु लाक्षा च टङ्कणम् । राजा संचिनुयाद्दुर्गे यच्चान्यदपि किंचन ॥
कुम्भाश्चाऽऽशीविषैः कार्या व्यालसिंहादयस्तथा । मृगाश्च पक्षिणश्चैव रक्ष्यास्ते च परस्परम् ।
स्थानानि च विरुद्धानां सुगुप्तानि पृथक् पृथक् । कर्तव्यानि महाभाग यत्नेन पृथिवीक्षिता ।
उक्तानि चाप्यनुक्तानि राजद्रव्याण्यशेषतः । सुगुप्तानि पुरे कुर्याज्जनानां हितकाम्यया ॥
जीवकर्षभकाकोलमामलक्याटरूषकान् । शालपर्णी पृश्निपर्णी मुद्गपर्णी तथैव च ॥ ४३
माषपर्णी च मेदे द्वे शारिवे द्वे बलात्रयम् । वीरा श्वसन्ती वृष्या च बृहती कण्टकारिका ॥
शृङ्गी शृङ्गाटकी द्रोणी वर्षाभूर्दर्भरेणुका । मधुपर्णी विदार्यौ द्वे महाक्षीरा महातपाः ॥ ४५
धन्वनः सहदेवाह्वा कटुकैरण्डकं विषः । पर्णी शताह्वा मृद्वीका फल्गुखर्जूरयष्टिकाः ॥ ४६
शुक्रातिशुक्रकाश्मर्यश्छत्रातिच्छत्रवीरणाः । इक्षुरिक्षुविकाराश्च फाणिताद्याश्च सत्तम ॥
सिंही च सहदेवी च विश्वेदेवाश्वरोधकम् । मधुकं पुष्पहंसाख्या शतपुष्पा मधूलिका ॥
शतावरीमधूके च पिप्पलं तालमेव च । आत्मगुप्ता कट्फलाख्या दार्विका राजशीर्षकी ॥
राजसर्षपधान्याकमृष्यप्रोक्ता तथोत्कटा । कालशाकं पद्मबीजं गोवल्ली मधुवल्लिका ॥ ५०

---

१ ङ. च. कार्याः । २ ङ. च. °र्गे परव । ३ ग. घ. ङ. °दन्त्राः । ४ घ. कणपानां । ५ ग. °थैव पटहानां । ६ घ. ङ. °पट्टिकानां । ७ ङ. च. सेरा च महामेदाफलत्र' । ८ क. ख. वारा । ९ ग. 'हाद्राक्षा म' । घ. ङ. 'हाक्षुद्र म° । १० ग. °न्वला सहदेव्या ह्वा । ङ. च. °न्वनास° । ११ ग. ङ. च. प्रियालं । १२ ङ. °जसारका । रा° । १३ ग. °शीर्षिका । १४ ग. °धुयष्टिका ।

शीतपाकी कुलिङ्गाक्षी काकजिह्वोरुपुष्पिका[1] । पर्वतत्रपुसौ[2] चोभौ[3] गुञ्जातकपुनर्नवे ॥ ५१
कसेरुका तु काश्मीरी बिल्वशालूककेसरम्[4] । शूकधान्यानि सर्वाणि शमीधान्यानि चैव हि
क्षीरं क्षौद्रं तथा तक्रं[5] तैलं मज्जा वसाघृतम्[6] । नीपश्चारिष्टकक्षोडवातामासोमबाणकम् ॥ ५३
एवमादीनि चान्यानि विज्ञेयो मधुरो गणः । राजा संचिनुयात्सर्वं पुरे निरवशेषतः ॥ ५४
दाडिमाम्रातकौ चैव तिन्तिडीकाम्लवेतसम् । भव्यकर्कन्धुलकुचकरमर्दकरूषकम् ॥ ५५
बीजपूरकँकण्डूरे[7] मालती राजबन्धुकम् । कोलकद्वयपर्णानि[8] द्वयोराम्रातयोरपि ॥ ५६
पारावतं नागरकं प्राचीनारुकमेव च । कपित्थामलकं चुक्रफलं[10] दन्तशठस्य च ॥ ५७
जाम्बवं नवनीतं च सौवीरकतुषोदके । सुरासवं च मद्यानि मण्डतक्रदधीनि च ॥ ५८
शुक्लानि चैव सर्वाणि ज्ञेयमाम्लगणं द्विज । एवमादीनि[12] चान्यानि राजा संचिनुयात्पुरे ॥
सैन्धवोद्भिदपाठेयपाक्यसामुद्रलोमकम्[11] । कुप्यसौवर्चलाबिल्वं बालकेयं यवाह्वकम् ॥ ६०
औवं क्षारं कालभस्म विज्ञेयो लवणो गणः । एवमादीनि चान्यानि राजा संचिनुयात्पुरे ॥
पिप्पली पिप्पलीमूलचव्यचित्रकनागरम् । कुबेरकं[13] च मरिचं[14] शिग्रुभल्लातसर्षपौ ॥ ६२
कुष्ठाजमोदा किणिही हिङ्गुमूलकधान्यकम् । कारवी कुञ्चिका याज्या[15] सुमुखा कलमालिका
फणिज्झकोऽथ लशुनं भूस्तृणं सुरसं तथा । कायस्था च वयःस्था च हरितालं मनःशिला
अमृता च रुदन्ती च रोहिषं[16] कुङ्कुमं तथा । जया[17] एरण्डकाण्डीरं शल्लकी हञ्जिका तथा ॥
सर्वपित्तानि मूत्राणि प्रायो हरितकानि च । *संगतानि च मूलानि यष्टिश्चातिविषाणि च
फलानि चैव हि तथा सूक्ष्मैला हिङ्गुपत्रिका[18] ॥ ६६
एवमादीनि चान्यानि गणः कटुकसंज्ञितः । राजा संचिनुयाद्दुर्गे प्रयत्नेन नृपोत्तम ॥ ६७
मुस्तं चन्दनह्रीबेरकृतमालकदारवः[19] । हरिद्रानलदोशीरनक्तमालकदम्बकम् ॥ ६८
दूर्वा पटोलकटुका दन्तीत्वक्पत्रकं त्वचा । +किराततिक्तभूतुम्बी विषा चातिविषा तथा ॥
तालीसपत्रतगरं सप्तपर्णविकङ्कताः । काकोदुम्बरिका दिव्यास्तथा चैव सुरोद्भवा ॥ ७०
षड्ग्रन्था[20] रोहिणी मांसी पर्पटश्चाथ दन्तिका । रसाञ्जनं भृङ्गराजं पतङ्गी परिपेलवम् ॥
दुःस्पर्शा[21] गुरुणी कामा श्यामाकं गन्धनाकुली । तुंषपर्णी[22] व्याघ्रनखं मञ्जिष्ठा[23] चतुरङ्गुला
×रम्भा चैवाङ्कुरास्फोता तालास्फोता हरेणुका । वेत्राग्रवेतसस्तुम्बी विषाणी लोध्रपुष्पिणी[24]
मालतीकरँकृष्णाख्या[25] वृश्चिका जीविता तथा । पर्णिका च गुडूची च स गणस्तिक्तसंज्ञकः

---

* एतदर्धं न विद्यते क. ख. घ. पुस्तकेषु । + एतदर्धस्थानेऽयं पाठो ङ. पुस्तके—केतकानि च युग्मानि यष्टराणि विषाणि च, इति । × एतदर्धस्थानेऽयं पाठो ङ. पुस्तके—राम्रा चैवाङ्कुशा भेत्तारस्थेताहरेणुकेति ।

---

१ ग. ङ. °रुपत्रिका । उर्वारुत्र° । २ च. °का । फशेरुत्र° । ३ ङ. °भौ मुञ्जातकपुनर्भवौ । कालेरकं तु काश्मीरा विश्वासेनुकके° । ४ क. ख. °म् । तुषथा° । ५ ग. घ. ङ. शुक्रं । ६ घ. °म् । निष्कोचाभिष्णुकं क्षोडा वाता मांसोरुशाण° । ७ ग. °ककाण्डीरमा° । ङ. कजम्बीरमा° । ८ ग. कोटक° । ९ घ. °राम्लकयो° । १० घ कं बुकाफ° । ११ ङ. °यद्राक्षा सा° । १२ क. ख. °चैलविडंषा° । १३ ग. घ. कुठेरकं । १४ ग. च. मरिचं । १५ घ. °पाः । कृष्णाज° । ङ. पाः । शुण्ठ्यांज° । १६ ङ. °याश्वासु° । १७ ङ. जपा । १८ ङ. च. °ह्नु यावकम् । ए° । १९ ङ. °कसारणम् । ह्° । २० ग. °कपन्धुक° । २१ ग. षड्गन्धां । २२ क. ख. रूषपर्णी । २३ ग. चैव कुसुम्भासा तारास्याजाह° । २४ ङ. च. लोध्रमञ्जरी । २५ ङ. °रतिकाख्या ।

एवमादीनि चान्यानि राजा संचिनुयात्पुरे। अभयामलके चोभे तथैव च बिभीतकम् ॥७५
प्रियङ्गुधातकीपुष्पं मोचाख्या चार्जुनासनाः। अनन्ता स्त्री तुवरिका श्योणाकं कट्फलं तथा
भूर्जपत्रं शिलापत्रं पाटलापत्रलोमकम्। समङ्गात्रिवृतामूलकार्पासगैरिकाञ्जनम् ॥ ७७
विद्रुमं समधूच्छिष्टं कुम्भिका कुमुदोत्पलम्। न्यग्रोधोदुम्बराश्वत्थकिंशुकाः शिंशपा शमी॥
प्रियालपीलुकासारीशिरीषाः पद्मकं तथा। बिल्वोऽग्निमन्थः प्लक्षश्च श्यामाकं च बको घनम् ॥ ७९
राजादनं करीरं च धान्यकं प्रियकस्तथा। कङ्कोलाशोकबदराः कदम्बखदिरद्वयम् ॥ ८०
एषां पत्राणि साराणि मूलानि कुसुमानि च। एवमादीनि चान्यानि कषायाख्यो गणो मतः
प्रयत्नेन नृपश्रेष्ठ राजा संचिनुयात्पुरे। *कीटाश्च मारणे योग्या व्यङ्गतायां तथैव च ॥ ८२
वातधूमाम्बुमार्गाणां दूषणानि तथैव च। धार्याणि पार्थिवैर्दुर्गे तानि वक्ष्यामि पार्थिव ॥
विषाणां धारणं कार्यं प्रयत्नेन महीभुजा। विचित्राश्चागदा धार्या विषस्य शमनास्तथा ॥
रक्षोभूतपिशाचघ्नाः पापघ्नाः पुष्टिवर्धनाः। कलाविदश्च पुरुषाः पुरे धार्याः प्रयत्नतः ॥ ८५
भीतान्प्रमत्तान्कुपितांस्तथैव च विमानितान्। कुभृत्यान्पापशीलांश्च न राजा वासयेत्पुरे ॥

यन्त्रायुधाट्टालचयोपपन्नं समग्रधान्यौषधिसंप्रयुक्तम्।
वणिग्जनैश्चाऽऽवृतमावसेत दुर्गं सुगुप्तं नृपतिः सदैव ॥ ८७

इति श्रीमात्स्ये महापुराणे राज्ञामोषध्यादिसंचयकथनं नाम सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ११४४८ ॥

---

अथाष्टादशाधिकद्विशततमोऽध्यायः।

---

मनुरुवाच—

रक्षोघ्नानि विषघ्नानि यानि धार्याणि भूभुजा। अगदानि समाचक्ष्व तानि धर्मभृतां वर ॥ १

मत्स्य उवाच—

[10] बिल्वाटकी यवक्षारं पाटला बाह्लिकोषणा। श्रीपर्णी[12] शल्लकीयुक्तो निक्वाथः प्रोक्षणं परम्॥
सविषं प्रोक्षितं तेन सद्यो भवति निर्विषम्। यवसैन्धवपानीयवस्त्रशय्यासनोदकम् ॥ ३
कवचाभरणं छत्रं बालव्यजनवेश्मनाम्। शेलुः पाटल्यतिविषा शिग्रु मूर्वा पुनर्नवा ॥ ४
समङ्गा वृषमूलं च कपित्थवृषशोणितम्। महादन्तशठं तद्वत्प्रोक्षणं विषनाशनम् ॥ ५
लाक्षाप्रियङ्गुमञ्जिष्ठा सममेला हरेणुका। यष्ट्याह्वा मधुरा चैव बभ्रुपित्तेन कल्पिताः ॥६

---

* अत्रार्धेऽयं पाठो ग. पुस्तके—काष्ठांश्च मरणे योग्यानङ्गजानि तथैव चेति। * अत्रार्धस्थानेऽयं पाठो ङ. च. पुस्तकयोः कल्पाश्च मारणे योग्या वृषभाणां तथैव चेति।

---

१ ङ. पुनर्मांसा। २ ग. लोष्टक°। ३ ग. काक्षतम्। वि°। ४ ग. ङ. °श्री। पिप्पली पी°। ५ घ. कल्काश्च। ६ घ. वृषभाणां। ७ ग. °माश्वमा°। ८ घ. चित्राः श्वापदा। ९ क. ख. °श्चाङ्गदा। १० ङ. च. बिल्वाटकी। ११ क. ख. °पणाः। श्री°। १२ ग. श्रीपर्णा। १३ ग. गात्रं। १४ क. ख. °टलाति°। १५ ग. समंगात्रमूलत्वक्कपि°। १६ घ. च. °वृक्षमूलं त्वक्कपित्थं विष°। १७ ग. °मू। शकृद°। घ. °मू। सहदेवाहरिद्रे द्वे प्रत्यक्षं वि°। १८ ग. ङ. मधुना।

निखनेद्गोविषाणस्थं सप्तरात्रं महीतले । ततः कृत्वा मणिं हेम्ना बद्धं हस्तेन धारयेत् ॥७
संसृष्टं सविषं तेन सद्यो भवति निर्विषम् । मनोह्वया शमीपत्रं तुम्बिका श्वेतसर्षपाः ॥८
कपित्थकुष्ठमञ्जिष्ठाः पित्तेन श्लक्ष्णकल्पिताः । शुनो गोः कपिलायाश्च सौम्याक्षिप्तोऽ-
परो गदः ॥ ९
विषजित्परमं कार्यं मणिरत्नं च पूर्ववत् । मूषिका जतुका चापि हस्ते बद्ध्वा विषापहा ॥
हरेणुमांसी मञ्जिष्ठा रजनी मधुका मधु । अक्षत्वक्सुरसं लाक्षा श्वपित्तं पूर्ववद्भुवि ॥११
वादित्राणि पताकाश्च पिष्टैरेतैः प्रलेपिताः । श्रुत्वा दृष्ट्वा समाघ्राय सद्यो भवति निर्विषः
त्र्यूषणं पञ्चलवणं मञ्जिष्ठा रजनीद्वयम् । सूक्ष्मैला त्रिवृतापत्रं विडङ्गानीन्द्रवारुणी ॥१३
मधुकं वेतसं क्षौद्रं विषाणे च निधापयेत् । तस्मादुष्णाम्बुना मात्रं प्रागुक्तं योजयेत्ततः ॥
*विषभुक्तं जरं याति निर्विषं पित्तदोषकृत् । शुक्लं सर्जरसोपेतं सर्षपा एलवालुकैः ॥ १५
सुवेगा तस्करसुरौ कुसुमैरर्जुनस्य तु । धूपो वासगृहे हन्ति विषं स्थावरजङ्गमम् ॥ १६
न तत्र कीटा न विषं दर्दुरा न सरीसृपाः । न कृत्या कर्मणां चापि धूपोऽयं यत्र दह्यते ॥
कल्पितैश्चन्दनक्षीरपलाशद्रुमवल्कलैः । मूर्वैलावालुसरसानाकुलीतण्डुलीयकैः ॥ १८
क्वाथः सर्वोदकार्येषु काकमाचीयुतो हितः । रोचनापत्रनेपालीकुङ्कुमैस्तिलकान्वहन् ॥
विषैर्न बाध्यतेऽस्माच्च नरनारीनृपप्रियः । चूर्णैर्हरिद्रामञ्जिष्ठाकिणिहीकणनिम्बजैः ॥ २०
दिग्धं निर्विषतामेति गात्रं सर्वविषार्दितम् । शिरीषस्य फलं पत्रं पुष्पं त्वङ्मूलमेव च ॥
गोमूत्रघृष्टो ह्यगदः सर्वकर्मकरः स्मृतः । एकवीर महौषध्यः शृणु चातः परं नृप ॥ २२
वन्ध्या कर्कोटकी राजन्विष्णुक्रान्ता तथोत्कटा । शतमूली सितानन्दा बला मोचा पटोलिका
सोमा पिण्डा निशा चैव तथा दग्धरुहा च या । स्थले कमलिनी या च विशाली शङ्ख-
मूलिका ॥२४
चाण्डाली हस्तिमगधा गोऽजापर्णी करम्भिका । रक्ता चैव महारक्ता तथा बर्हिशिखा च या
कोशातकी नक्तमालं प्रियालं च सुलोचनी । वारुणी वसुगन्धा च तथा वै गन्धनाकुली
ईश्वरी शिवगन्धा च श्यामला वंशनालिका । जतुकाली महाश्वेता श्वेता च मधुयष्टिका
वज्रकः पारिभद्रश्च तथा वै सिन्धुवारकाः । जीवानन्दा वसुच्छिद्रा नतनागरकण्टकौ ॥
नालं च जाली जाती च तथा च वटपत्रिका । कार्तस्वरं महानीला कुन्दुरुर्हंसपादिका ॥
मण्डूकपर्णी वाराही द्वे तथा तण्डुलीयके । सर्पाक्षी लवली ब्राह्मी विश्वरूपा सुखाकरा
रुजापहा वृद्धिकरी तथा चैव तु शल्यदा । पत्रिका रोहिणी चैव रक्तमाला महौषधी ॥

* एतदर्धं न विद्यते क. ख. पुस्तकयोः ।

१ ङ. 'न सूक्ष्मचूर्णिताः । २ ग. °श्रं तिण्डिकानिद्रवा' । ३ ङ. °द्रं गोविषाणे नि' । ४ ङ. °दुष्णाम्बुना चात्र प्राग्भक्ष्यं यो° । च. 'दुष्णावनामन्त्रं प्राग्° । ५ ग. मात्राप्राग्भक्ष्ये यो' । ६ च. °तः । जतुसर्जरसोशीरसर्षपापत्रता° । ७ ग. सुवेला । ङ. सुतैला । घ. सुविल्वा । ८ च. कीटाः सविषा नोन्दुरा । ९ ङ. °कापहा । वि° । १० घ. च. °वे साधु न° । ११ च. दष्टं । १२ ग सर्पवि° । १३ च शृङ्गवेरं तथैव च । व° । १४ घ. ङ. शतानन्दा । १५ ग. खिखिणी । च. पिडली । १६ च. गोचण्डाली च पद्मका । १७ ग ङ. वसुमती । १८ ग. ङ. °का । तालना जालपाला च त° । १९ ङ. राजमाता ।

तथाऽऽमलकवन्दाकं श्यामचित्रफला च या। काकोली[1] क्षीरकाकोली पीलुपर्णी तथैव च॥
केशिनी वृश्चिकाली च महानागा शतावरी। गरुडी[2] च तथा वेगा जले कुमुदिनी तथा॥ ३३
स्थले चोत्पलिनी या च महाभूमिलता च या। उन्मादिनी सोमराजी सर्वरत्नानि पार्थिव॥
*विशिखा[3]ऽमरकन्या च कीटपक्षं विशेषतः। जीवजाताश्च मणयः सर्वे धार्याः प्रयत्नतः॥३५
रक्षोघ्नाश्च विषघ्नाश्च कृत्या वैतालनाशनाः। विशेषान्नरनागाश्च गोखरोष्ट्रसमुद्भवाः॥ ३६
सर्पतित्तिरगोमायुबभ्रुमण्डुकजाश्च ये। सिंहव्याघ्रर्क्षमार्जारद्वीपिवानरसंभवाः॥
कपिञ्जला गजा वाजिमहिषैणभवाश्च ये॥ ३७

इत्येवमेतैः सकलैरुपेतैर्द्रव्यैः[4]पराध्यैः परिरक्षितः स्यात्।
राजा वसेत्तत्र गृहे सुशुभ्रे गुणान्विते लक्षणसंप्रयुक्ते[5]॥ ३८

इति श्रीमात्स्ये महापुराणेऽगदाध्यायो नामाष्टादशाधिकद्विशततमोऽध्यायः॥ २१८॥

आदितः श्लोकानां समष्ट्यङ्काः॥ ११४८६॥

---

अथैकोनविंशत्यधिकद्विशततमोऽध्यायः।

---

मनुरुवाच—

राजरक्षारहस्यानि यानि दुर्गे निधापयेत्। कारयेद्वा महीभर्ता ब्रूहि तत्त्वानि तानि मे॥ १

मत्स्य उवाच—

शिरीषोदुम्बर[6]शमीबीजपूरं घृतप्लुतम्। क्षुद्योगः[7] कथितो राजन्मासार्धस्य पुरातनैः॥ २
कशेरुफलमूलानि इक्षुमूलं तथा विषम्। दूर्वाक्षीरघृतैर्मण्डः सिद्धोऽयं मासिकः परः॥ ३
नरं शस्त्रहतं प्राप्तो[8] न तस्य मरणं भवेत्। कल्मापवेणुना तत्र जनयेत्तु विभावसुम्॥ ४
गृहे त्रिरपसव्यं तु क्रियते यत्र पार्थिव। नान्योऽग्निर्ज्वलते तत्र नात्र कार्या विचारणा॥
कार्पासास्थिन भुजङ्गस्य तेन निर्मोचनं भवेत्। सर्पनिर्वासने धूपः प्रशस्तः सततं गृहे॥ ६
सामुद्रसैन्धवयवा[9] विद्युद्दग्धा च मृत्तिका। तयाऽनुलिप्तं यद्वेश्म नाग्निना दह्यते नृप॥ ७
दिवा च दुर्गे रक्ष्योऽग्निर्वाति वाते विशेषतः। विषाच्च रक्ष्यो नृपतिस्तत्र युक्तिं निबोध मे॥
क्रीडानिमित्तं[10] नृपतिर्धारयेन्मृगपक्षिणः। अन्नं वै प्राक्परीक्षेत वह्नौ चान्यतरेषु च॥ ९
वस्त्रं पुष्पमलंकारं भोजनाच्छादनं तथा। नापरीक्षितपूर्वं तु स्पृशेदपि महीपतिः॥ १०
स्याच्चासौ वक्त्रसंतप्तः सोद्वेगं च निरीक्षते। विषदो[11]ऽथ विषं दत्तं यच्च तत्र परीक्षते[12]॥ ११
स्रस्तोत्तरीयो विमनाः स्तम्भकुड्यादिभिस्तथा। प्रच्छादयति चाऽऽत्मानं लज्जते त्वरते तथा॥
भुवं विलिखति ग्रीवां तथा चालयते नृप। कण्डूयति च मूर्धानं परिलोड्या[13]ऽऽननं तथा॥१२

---

* एतदर्धस्थानेऽयं पाठो ङ. पुस्तके—वेषामरकतान्यत्र कोटीयक्षां विशेषतः इति।

---

१ ङ. कङ्कोली। २ ग. घ. ङ. °री। तथा गरुडवेगा च ज°। ३ क. ख. विशेषान्मरकतादीनि की°। ४ क. ख. °पेतं द्रव्यैश्च सर्वैः स्वपुरं सुरक्षितम्। रा°। ५ क. ख. गृहं सुशुभ्रं गुणान्वितं लक्षणसंप्रयुक्तम्। इ°। ६ ङ °रश्वत्थवी°। ७ ग. घ. ट्योगः। ङ. दुर्गेण। ८ ग. घ. आप्य। ९ क. ख. °सास्थ्ना भु°। १० ग. °क्षं छत्रम°। ङ. °त्रं पत्रम°। ११ ग. °द्दोषो वि°। ङ. °द्दोषानिषेधार्थं यत्र यत्र। १२ ग. परीक्ष्यते। ङ. निरीक्ष्यते। १३ ग. °रिलेन्याऽऽन°। ङ. °रिलेख्याश्वरं त°।

क्रियासु त्वरितो राजन्विपरीतास्वपि ध्रुवम् । एवमादीनि चिह्नानि विपदस्य परीक्षयेत् ॥ १४
समीपैर्विक्षिपेद्वह्नौ तदन्नं त्वरयाऽन्वितः । इन्द्रायुधसवर्णं तु रूक्षं स्फोटसमन्वितम् ॥ १५
एकावर्तं तु दुर्गन्धि भृशं चटचटायते । तद्धूमसेवनाज्जन्तोः शिरोरोगश्च जायते ॥ १६
सविषेऽन्ने विलीयन्ते न च पार्थिव मक्षिकाः । निलीनाश्च विपद्यन्ते संस्पृष्टे सविषे तथा ॥ १७
विरज्यति चकोरस्य दृष्टिः पार्थिवसत्तम । विकृतिं च स्वरो याति कोकिलस्य तथा नृप ॥ १८
गतिः स्खलति हंसस्य भृङ्गराजश्च कूजति । क्रौञ्चो मदमथाभ्येति कृकवाकुर्विरौति च ॥ १९
विक्रोशति शुको राजन्सारिका वमते ततः । चामीकरोऽन्यतो याति मृत्युं कारण्डवस्तथा ॥
मेहते वानरो राजन्ग्लायते जीवजीवकः । हृष्टरोमा भवेद्बभ्रुः पृषतश्चैव रोदिति ॥ २१
हर्षमायाति च शिखी विषसंदर्शनान्नृप । अन्नं च सविषं राजंश्चिरेण च विपद्यते ॥ २२
तदा भवति निःश्राव्यं पक्वपर्युषितोपमम् । व्यापन्नरसगन्धं च चन्द्रिकाभिस्तथा युतम् ॥ २३
व्यञ्जनानां तु शुष्कत्वं द्रवाणां बुद्बुदोद्भवः । ससैन्धवानां द्रव्याणां जायते फेनमालिता ॥
सस्यराजिश्च ताम्रा स्यान्नीला च पयसस्तथा । कोकिलाभा च मद्यस्य तोयस्य च नृपोत्तम ॥
धान्याम्लस्य तथा कृष्णा कपिला कोद्रवस्य च । मधुश्यामा च तक्रस्य नीला पीता तथैव च
घृतस्योदकसंकाशा कपोताभा च मस्तुनः । हरिता माक्षिकस्यापि तैलस्य च तथाऽरुणा ॥
फलानामप्यपक्वानां पाकः क्षिप्रं प्रजायते । प्रकोपश्चैव पक्वानां माल्यानां म्लानता तथा ॥ २८
मृदुता कठिनानां स्यान्मृदूनां च विपर्ययः । सूक्ष्माणां रूपदलनं तथा चैवातिरङ्गता ॥ २९
श्याममण्डलता चैव वस्त्राणां वै तथैव च । लोहानां च मणीनां च मलपङ्कोपदिग्धता ॥ ३०
अनुलेपनगन्धानां माल्यानां च नृपोत्तम । विगन्धता च विज्ञेया वर्णानां म्लानता तथा
पीतावभासता ज्ञेया तथा राजञ्जलस्य तु ॥ ३१
दन्ता ओष्ठौ त्वचः श्यामास्तनुसत्त्वास्तथैव च । एवमादीनि चिह्नानि विज्ञेयानि नृपोत्तम ॥
तस्माद्राजा सदा तिष्ठेन्मणिमन्त्रौषधागदैः । उक्तैः संरक्षितो राजा प्रमादपरिवर्जकः ॥ ३३

प्रजातरोर्मूलमिहावनीशस्तद्रक्षणाद्राष्ट्रमुपैति वृद्धिम् ।
तस्मात्प्रयत्नेन नृपस्य रक्षा सर्वेण कार्या रविवंशचन्द्र ॥ ३४

इति श्रीमात्स्ये महापुराणे राजधर्मे राजरक्षा नामैकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ११५२० ॥

---

अथ विंशत्यधिकद्विशततमोऽध्यायः ।

---

मत्स्य उवाच—

राजन्पुत्रस्य रक्षा च कर्तव्या पृथिवीक्षिता । आचार्यश्चात्र कर्तव्यो नित्ययुक्तश्च रक्षिभिः ॥ १

---

१ घ. समिद्धे विक्षि° । २ ग. घ. °वर्तोऽथ दुर्गन्धिर्भृशं । ३ ङ. °श्च परिकू° । ४ ग. घ. राजन्नाश्चिरे° । ङ. च. राजन्नचिरेण विपच्यते । ५ ङ. च. °दा तरति । ६ ग. पक्वप° । ङ. च. पक्वं प° । ५ ङ. °नशालि° । च. °नला-लि° । ८ ग. घ. ङ. °ता । रसस्य राजिस्ताम्रा । ९ ख. च सत्तनुः । ह° । १० घ. °तिरागता । ११ क. ख. दन्तकाष्ठत्व° । ११ ग. घ. ङ. च. °जपु° । १२ घ. च. चार्यैश्चास्य कर्तव्यं नित्ययुक्तैश्च रक्षणम् । अ° ।

धर्मकामार्थशास्त्राणि धनुर्वेदं च शिक्षयेत्। रथे च कुञ्जरे चैनं व्यायामं कारयेत्सदा ॥ २
शिल्पानि शिक्षयेच्चैनं नाऽऽप्तैर्मिथ्याप्रियं वदेत्। शरीररक्षाव्याजेन रक्षिणोऽस्य नियोजयेत्
न चास्य सङ्गो दातव्यः क्रुद्धलुब्धावमानितैः। तथा च विनयेदेनं यथा यौवनगोचरे ॥ ४
इन्द्रियैर्नापकृष्येत सतां मार्गात्सुदुर्गमात्। गुणाधानमशक्यं तु यस्य कर्तुं स्वभावतः ॥ ५
बन्धनं तस्य कर्तव्यं गुप्तदेशे सुखान्वितम्। अविनीतकुमारं हि कुलमाशु विशीर्यते ॥ ६
अधिकारेषु सर्वेषु विनीतं विनियोजयेत्। आदौ स्वल्पे ततः पश्चात्क्रमेणाथ महत्स्वपि ॥ ७
मृगयापानमक्षांश्च वर्जयेत्पृथिवीपतिः। एतांस्तु सेवमानास्तु विनष्टाः पृथिवीक्षितः ॥ ८
बहवो नृपशार्दूल तेषां संख्या न विद्यते। * वृथाटनं दिवास्वप्नं विशेषेण विवर्जयेत् ॥ ९
वाक्पारुष्यं न कर्तव्यं दण्डपारुष्यमेव च। परोक्षनिन्दा च तथा वर्जनीया महीक्षिता ॥ १०
अर्थस्य दूषणं राजा द्विप्रकारं विवर्जयेत्। अर्थानां दूषणं चैकं तथाऽर्थेषु च दूषणम् ॥ ११
प्राकाराणां समुच्छेदो दुर्गादीनामसत्क्रिया। अर्थानां दूषणं प्रोक्तं विप्रकीर्णत्वमेव च ॥ १२
अदेशकाले यद्दानमपात्रे दानमेव च। अर्थेषु दूषणं प्रोक्तमसत्कर्मप्रवर्तनम् ॥ १३
कामः क्रोधो मदो मानो लोभो हर्षस्तथैव च। + एते वर्ज्याः प्रयत्नेन सादरं पृथिवीक्षिता॥
एतेषां विजयं कृत्वा कार्यो भृत्यजयस्ततः। कृत्वा भृत्यजयं राजा पौराञ्जानपदाञ्जयेत् ॥ १५
कृत्वा च विजयं तेषां शत्रून्बाह्यांस्ततो जयेत्। बाह्याश्च विविधा ज्ञेयास्तुल्याभ्यन्तरकृत्रिमाः
गुरवस्ते यथापूर्वं तेषु यत्नपरो भवेत्। पितृपैतामहं मित्रममित्रं च तथा रिपोः ॥ १७
कृत्रिमं च महाभाग मित्रं त्रिविधमुच्यते। तथाऽपि च गुरुः पूर्वं भवेत्तत्रापि चाऽऽदृतः ॥ १८
स्वाम्यमात्यो जनपदो दुर्गं दण्डस्तथैव च। कोशो मित्रं च धर्मज्ञ सप्ताङ्गं राज्यमुच्यते ॥ १९
सप्ताङ्गस्यापि राज्यस्य मूलं स्वामी प्रकीर्तितः। तन्मूलत्वात्तथाऽङ्गानां स तु रक्ष्यः प्रयत्नतः॥
षडङ्गरक्षा कर्तव्या तथा तेन प्रयत्नतः। अङ्गेभ्यो यस्तथैकस्य द्रोहमाचरतेऽल्पधीः ॥ २१
वधस्तस्य तु कर्तव्यः शीघ्रमेव महीक्षिता। न राज्ञा मृदुना भाव्यं मृदुर्हि परिभूयते ॥ २२
न भाव्यं दारुणेनातितीक्ष्णादुद्विजते जनः। काले मृदुर्यो भवति काले भवति दारुणः ॥ २३
राजा लोकद्वयापेक्षी तस्य लोकद्वयं भवेत्। भृत्यैः सह महीपालः परिहासं विवर्जयेत् ॥ २४
भृत्याः परिभवन्तीह नृपं हर्षवशं गतम्। व्यसनानि च सर्वाणि भूपतिः परिवर्जयेत् ॥ २५
लोकसंग्रहणार्थाय कृतकव्यसनी भवेत्। शौण्डीरस्य नरेन्द्रस्य नित्यमुद्रिक्तचेतसः ॥ २६
जना विरागमायान्ति सदा दुःसेव्यभावतः। स्मितपूर्वाभिभाषी स्यात्सर्वस्यैव महीपतिः ॥
वध्येष्वपि महाभाग भ्रूकुटिं न समाचरेत्। भाव्यं धर्मभृतां श्रेष्ठ स्थूललक्ष्येण भूभुजा ॥ २८
स्थूललक्ष्यस्य वशगा सर्वा भवति मेदिनी। अदीर्घसूत्रश्च भवेत्सर्वकर्मसु पार्थिवः ॥ २९
दीर्घसूत्रस्य नृपतेः कर्महानिर्ध्रुवं भवेत्। रागे दर्पे च माने च द्रोहे पापे च कर्मणि ॥ ३०

* एतदर्धस्थानेऽयं पाठो ङ. पुस्तके–दिवास्वप्नं विषादं च दुर्गादीनामसत्क्रिया। इति। + एतस्मिन्नर्धेऽयं पाठो ङ. पुस्तके—जेतव्यमरिषड्वर्गं सुतरां पृथिवीक्षितेति।

१ ङ. 'चेदेवं नास्य मि'। २ क. ख. नाप्तो मिथ्या। ३ घ. ङ. च. गोमुखे। इ'। ४ घ. 'खावहम्। अ°। ५ ख. च. 'ते। दिवास्वापं क्षितीशस्तु वि'। ६ ग. 'रोपद्रवता नित्यं व'। ७ ग. आकाराणां। घ. अकारणात्। ८ घ. ङ. च. 'ले भृत्यानामं'। ९ घ. ङ. त्रिविधा। १० ख. 'धीः। बन्धस्त्व'। ११ ङ. च. 'मुत्सिक्त'।

अप्रिये चैव कर्तव्ये दीर्घसूत्रः प्रशस्यते । राज्ञा संवृतमन्त्रेण सदा भाव्यं नृपोत्तम ॥ ३१
तस्यासंवृतमन्त्रस्य राज्ञः सर्वापदो ध्रुवम् । कृतान्येव तु कार्याणि ज्ञायन्ते यस्य भूपतेः ॥ ३२
नाऽऽरब्धानि महाभाग तस्य स्याद्वसुधा वशे । मन्त्रमूलं सदा राज्यं तस्मान्मन्त्रः सुरक्षितः॥
कर्तव्यः पृथिवीपालैर्मन्त्रभेदभयात्सदा । मन्त्रवित्साधितो मन्त्रः संपत्तीनां सुखावहः ॥ ३४
मन्त्रच्छलेन बहवो विनष्टाः पृथिवीक्षितः । आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ॥ ३५
नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः । न यस्य कुशलैस्तस्य वशे सर्वा वसुंधरा ॥ ३६
भवतीह महीभर्तुः सदा पार्थिवनन्दन । नैकस्तु मन्त्रयेन्मन्त्रं राजा न बहुभिः सह ॥ ३७
नाऽऽरोहेद्द्विपमां नावमपरीक्षितनाविकाम् । ये चास्य भूमिजयिनो भवेयुः परिपन्थिनः ३८
तानानयेद्वशे सर्वान्सामादिभिरुपक्रमैः । यथा न स्यात्कृशीभावः प्रजानामनवेक्षया ॥३९
तथा राज्ञा प्रकर्तव्यं स्वराष्ट्रं परिरक्षता । मोहाद्राजा स्वराष्ट्रं यः कर्शयत्यनवेक्षया ॥ ४०
सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः।भृतो वत्सो जातबलः कर्मयोग्यो यथा भवेत्
तथा राष्ट्रं महाभाग भृतं कर्मसहं भवेत् । यो राष्ट्रमनुगृह्णाति राज्यं स परिरक्षति ॥ ४२
संजातमुपजीवेत्तु विन्दते स महत्फलम् । राष्ट्राद्धिरण्यं धान्यं च महीं राजा सुरक्षिताम्४३
महता तु प्रयत्नेन स्वराष्ट्रस्य च रक्षिता । नित्यं स्वेभ्यः परेभ्यश्च यथा माता यथा पिता ॥४४
गोपितानि सदा कुर्यात्संयतानीन्द्रियाणि च । अजस्रमुपयोक्तव्यं फलं तेभ्यस्तथैव च ॥४५
सर्वं कर्मेदमायत्तं विधाने दैवमानुषे । तयोर्दैवमचिन्त्यं च पौरुषे विद्यते क्रिया ॥ ४६
एवं महीं पालयतोऽस्य भर्तुर्लोकानुरागः परमो भवेत्तु ।
लोकानुरागप्रभवा च लक्ष्मीर्लक्ष्मीवतश्चापि परा च कीर्तिः ॥ ४७

इति श्रीमात्स्ये महापुराणे राजधर्मानुकीर्तने विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ ११५६७ ॥

---

अथैकविंशत्यधिकद्विशततमोऽध्यायः ।

---

मनुरुवाच—
दैवे पुरुषकारे च किं ज्यायस्तद्ब्रवीहि मे । अत्र मे संशयो देव च्छेत्तुमर्हस्यशेषतः ॥ १
मत्स्य उवाच—
स्वमेव कर्म दैवाख्यं विद्धि देहान्तरार्जितम् । तस्मात्पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः ॥ २
प्रतिकूलं तथा दैवं पौरुषेण विहन्यते । मङ्गलाचारयुक्तानां नित्यमुत्थानशालिनाम् ॥ ३
येषां पूर्वकृतं कर्म सात्त्विकं मनुजोत्तम । पौरुषेण विना तेषां केषां चिद्दृश्यते फलम् ॥ ४
कर्मणा प्राप्यते लोके राजसस्य तथा फलम् । कृच्छ्रेण कर्मणा विद्धि तामसस्य तथा फलम्

---

१ ग. ङ. च. ज्ञेयाः । २ ग. घ. 'तार्थान्येव का'। ३ ङ. च. °भेदे भयं तथा । म°। ४ ग. घ. ङ. संयतानां । ५ घ. ङ भाषणेन । ६ घ. च. °नायका° । ७ ङ. च. °वः । तत्संभृतो जा° । ८ ग. °भैक्षमं भ° । ९ ङ. समाचरेत् । यो । च. समावहेत् । यो । १० ग. घ. स्वं । ११ ङ. °ति । सदा तमुपजीवन्ति वि° । १२ ङ. च. °षां कदाचिद्दृ°। १३ ङ. °के फलं राजसकर्मणः । कृ° । १४ घ. च. °जसैरत त° ।

पौरुषेणाऽऽप्यते राजन्प्रार्थितव्यं फलं नरैः। दैवमेव विजानन्ति नराः पौरुषवर्जिताः ॥ ६
तस्मात्त्रिकालं संयुक्तं दैवं तु सफलं भवेत्। पौरुषं दैवसंपत्त्या काले फलति पार्थिव ॥ ७
दैवं पुरुषकारश्च कालश्च पुरुषोत्तम । त्रयमेतन्मनुष्यस्य पिण्डितं स्यात्फलावहम् ॥ ८
कृषिवृष्टिसमायोगाद्दृश्यन्ते फलसिद्धयः। तास्तु काले प्रदृश्यन्ते नैवाकाले कथं चन ॥ ९
तस्मात्सदैव कर्तव्यं सधर्मं पौरुषं नरैः । विपत्तावपि यस्येह परलोके ध्रुवं फलम् ॥ १०
नालसाः प्राप्नुवन्त्यर्थान्न च दैवपरायणाः। तस्मात्सर्वप्रयत्नेन पौरुषे यत्नमाचरेत् ॥ ११

त्यक्त्वाऽलसान्दैवपरान्मनुष्यानुत्थानयुक्तान्पुरुषान्हि लक्ष्मीः ।
अन्विष्य यत्नाद्वृणुयान्नृपेन्द्र तस्मात्सदोत्थानवता हि भाव्यम् ॥ १२

इति श्रीमात्स्ये महापुराणे दैवपुरुषकारवर्णनं नामैकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ११५७९ ॥

---

अथ द्वाविंशत्यधिकद्विशततमोऽध्यायः ।

---

मनुरुवाच—

उपायांस्त्वं समाचक्ष्व सामपूर्वान्महाद्युते। लक्षणं च तथा तेषां प्रयोगं च सुरोत्तम ॥ १

मत्स्य उवाच—

साम भेदस्तथा दानं दण्डश्च मनुजेश्वर। उपेक्षा च तथा माया इन्द्रजालं च पार्थिव ॥२
प्रयोगाः कथिताः सप्त तन्मे निगदतः शृणु। द्विविधं कथितं साम तथ्यं चातथ्यमेव च ॥ ३
तत्राप्यतथ्यं साधूनामाक्रोशायैव जायते। * तत्र साधुः प्रयत्नेन सामसाध्यो नरोत्तम ॥४
महाकुलीना ऋजवो धर्मनित्या जितेन्द्रियाः। सामसाध्या न चातथ्यं तेषु साम प्रयोजयेत् ५
तथ्यं साम च कर्तव्यं कुलशीलादिवर्णनम्। तथा तदुपचाराणां कृतानां चैव वर्णनम् ॥ ६
अनयैव तथा युक्त्या कृतज्ञाख्यापनं स्वकम्। एवं साम्ना च कर्तव्या वशगा धर्मतत्पराः ॥७
साम्ना यद्यपि रक्षांसि गृह्णन्तीति परा श्रुतिः। तथाऽप्येतदसाधूनां प्रयुक्तं नोपकारकम् ॥ ८
अतिशङ्कितमित्येवं पुरुषं सामवादिनम् । असाधवो विजानन्ति तस्मात्तत्तेषु वर्जयेत् ॥ ९

ये शुद्धवंशा ऋजवः प्रणीता धर्मे स्थिताः सत्यपरा विनीताः ।
ते सामसाध्याः पुरुषाः प्रदिष्टा मानोन्नता ये सततं च राजन् ॥ १०

इति श्रीमात्स्ये महापुराणे राजधर्मे सामबोधो नाम द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ११५८९ ॥

---

* एतदर्धस्थान इमौ पाठौ ग. ङ. पुस्तकयोः—तत्र साधु प्रियं चैव सामसाध्या नरा मताः। तथा साधुकृतं तेन सामसाध्यो नरो मत इति ॥

---

१ ङ. 'प्यतो रा° । २ घ. ङ. °जन्मार्जित° । ३ ङ. °स्मा च कर्मणा युक्तो दैवं । ४ ङ. सदैवं । ५ क. ख. °न आचरेद्धर्ममुत्तमम् । त्य° । ६ ग. घ. ङ. °वं सान्त्वेन कृ° । ७ ग. °णीताः सत्ये स्थिता धर्मप° ।

अथ त्रयोविंशत्यधिकद्विशततमोऽध्यायः ।

मत्स्य उवाच—

परस्परं तु ये दुष्टाः क्रुद्धा भीतावमानिताः । तेषां भेदं प्रयुञ्जीत भेदसाध्या हि ते मताः ॥ १
ये तु येनैव दोषेण परस्मान्नापि बिभ्यति । ते तु तद्दोषपातेन भेदनीया भृशं ततः ॥ २
आत्मीयां दर्शयेदाशां परस्माद्दर्शयेद्भयम् । एवं हि भेदयेद्भिन्नान्यथावद्वशमानयेत् ॥ ३
संहता हि विना भेदं शक्रेणापि सुदुःसहाः । भेदमेव प्रशंसन्ति तस्मान्नयविशारदाः ॥ ४
स्वमुखेनाऽऽश्रयेद्भेदं भेदं परमुखेन च । परीक्ष्य साधु मन्येत भेदं परमुखाच्छ्रुतम् ॥ ५
सद्यः स्वकार्यमुद्दिश्य कुशलैर्ये हि भेदिताः । भेदितास्ते विनिर्दिष्टा नैव राज्ञाऽर्थवादिभिः ॥
अन्तःकोपो बहिः कोपो यत्र स्यातां महीक्षिताम् । अन्तःकोपो महांस्तत्र नाशकः पृथिवी-
क्षिताम् ॥ ७
सामन्तकोपो बाह्यस्तु कोपः प्रोक्तो महीभृतः । महिषीयुवराजाभ्यां तथा सेनापतेर्नृप ॥ ८
अमात्यमन्त्रिणां चैव राजपुत्रे तथैव च । अन्तःकोपो विनिर्दिष्टो दारुणः पृथिवीक्षिताम् ॥ ९
बाह्यकोपे समुत्पन्ने सुमहत्यपि पार्थिवः । शुद्धान्तस्तु महाभाग शीघ्रमेव जयी भवेत् ॥ १०
अपि शक्रसमो राजा अन्तःकोपेन नश्यति । सोऽन्तःकोपः प्रयत्नेन तस्माद्रक्ष्यो महीभृता ११
परतः कोपमुत्पाद्य भेदेन विजिगीषुणा । ज्ञातीनां भेदनं कार्यं परेषां विजिगीषुणा ॥ १२
रक्ष्यश्चैव प्रयत्नेन ज्ञातिभेदस्तथाऽऽत्मनः । ज्ञातयः परितप्यन्ते सततं परितापिताः ॥ १३
तथाऽपि तेषां कर्तव्यं सुगम्भीरेण चेतसा । ग्रहणं दानमानाभ्यां भेदस्तेभ्यो भयंकरः ॥ १४
न ज्ञातिमनुगृह्णन्ति न ज्ञातिं विश्वसन्ति च । ज्ञातिभिर्भेदनीयास्तु रिपवस्तेन पार्थिवैः ॥ १५

भिन्ना हि शक्या रिपवः प्रभूताः स्वल्पेन सैन्येन निहन्तुमाजौ ।
सुसंहतानां हि तदस्तु भेदः कार्यो रिपूणां नयशास्त्रविद्भिः ॥ १६

इति श्रीमात्स्ये महापुराणे राजधर्मे भेदप्रशंसा नाम त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ११६०५ ॥

अथ चतुर्विंशत्यधिकद्विशततमोऽध्यायः ।

मत्स्य उवाच—

सर्वेषामप्युपायानां दानं श्रेष्ठतमं मतम् । सुदत्तेनेह भवति दानेनोभयलोकजित् ॥ १
न सोऽस्ति राजन्दानेन वशगो यो न जायते । दानेन वशगा देवा भवन्तीह सदा नृणाम् ॥
दानमेवोपजीवन्ति प्रजाः सर्वा नृपोत्तम । प्रियो हि दानवाँल्लोके सर्वस्यैवोपजायते ॥ ३
दानवानचिरेणैव तथा राजा पराञ्जयेत् । दानवानेव शक्नोति संहतान्भेदितुं परान् ॥ ४
यद्यप्यलुब्धगम्भीराः पुरुषाः सागरोपमाः । न गृह्णन्ति तथाऽप्येते जायन्ते पक्षपातिनः ॥

१ क. °स्माद्वाऽनराध्यति । २-घ. °भुयम्य कु° । ३ ग. घ. च. राजार्थं° । ४ ख. साम्ना न को° । घ. सामा-
न्यको° ।

अन्यत्रापि कृतं दानं करोत्यन्यान्यथा वशे। उपायेभ्यः प्रशंसंन्ति दानं श्रेष्ठतमं जनाः॥६
दानं श्रेयस्करं पुंसां दानं श्रेष्ठतमं परम्। दानवानेव लोकेषु पुत्रत्वे ध्रियते सदा॥ ७
न केवलं दानपरा जयन्ति भूर्लोकमेकं पुरुषप्रवीराः।
जयन्ति ते राजसुरेन्द्रलोकं सुदुर्जयं यो विबुधाधिवासः॥ ८

इति श्रीमात्स्ये महापुराणे राजधर्मदानप्रशंसा नाम चतुर्विंशत्यधिकद्विशततमोऽध्यायः॥ २२४॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ११६१२॥

———

अथ पञ्चविंशत्यधिकद्विशततमोऽध्यायः।

———

मत्स्य उवाच—

न शक्या ये वंशे कर्तुमुपायत्रितयेन तु। दण्डेन तान्वशी कुर्याद्दण्डो हि वशकृन्नृणाम्॥१
सम्यक्प्रणयनं तस्य तथा कार्यं महीक्षिता। धर्मशास्त्रानुसारेण सुसहायेन धीमता॥ २
तस्य सम्यक्प्रणयनं यथा कार्यं महीक्षिता। वानप्रस्थांश्च धर्मज्ञान्निर्ममान्निष्परिग्रहान्॥
स्वदेशे परदेशे वा धर्मशास्त्रविशारदान्। समीक्ष्य प्रणयेद्दण्डं सर्वं दण्डे प्रतिष्ठितम्॥ ४
आश्रमी यदि वा वर्णी पूज्यो वाऽथ गुरुर्महान्। नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मेण तिष्ठति॥ ५
अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन्। इह राज्यात्परिभ्रष्टो नरकं च प्रपद्यते॥६
तस्माद्राज्ञा विनीतेन धर्मशास्त्रानुसारतः। दण्डप्रणयनं कार्यं लोकानुग्रहकाम्यया॥ ७
यत्र श्यामो लोहिताक्षो दण्डश्चरति निर्भयः। प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति
बालवृद्धातुरयतिद्विजस्त्रीविधवा यतः। मात्स्यन्यायेन भक्ष्येरन्यदि दण्डं न पातयेत्॥ ९
देवदैत्योरगगणाः सर्वे भूतपतत्रिणः। उत्क्रामयेयुर्मर्यादां यदि दण्डं न पातयेत्॥ १०
एष ब्रह्माभिशापेषु सर्वप्रहरणेषु च। सर्वविक्रमकोपेषु व्यवसाये च तिष्ठति॥ ११
पूज्यन्ते दण्डिनो देवैर्न पूज्यन्ते त्वदण्डिनः। न ब्रह्माणं विधातारं न पूषार्यमणावपि॥
यजन्ते मानवाः केचित्प्रशान्ताः सर्वकर्मसु। रुद्रमग्निं च शक्रं च सूर्याचन्द्रमसौ तथा॥
विष्णुं देवगणांश्चान्यान्दण्डिनः पूजयन्ति च। दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः। राजदण्डभयादेव पापाः पापं न कुर्वते॥१५
यमदण्डभयादेके परस्परभयादपि। एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम्॥ १६
अन्धे तमसि मज्जेयुर्यदि दण्डं न पातयेत्। यस्माद्दण्डो दमयति दुर्मदान्दण्डयत्यपि॥
दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः॥ १७

---

१ ङ. च. वशी। २ क. ख. °ण ससहा°। ३ घ. ङ च. तथा। ४ ग. निधानेन ५ क. पापहा। ६ ग. °विक्लवा नराः। मा°। घ. ङ. विक्लवा। ७ ग. ङ. पालये°। ८ ङ. °णाः स्रिद्रभू°। ९ ङ. सर्वातिक्र°। १० ङ. ब्राह्मणं ११ ग. पि°। पूज्यन्ते मानवैः कैश्चित्प्र°। १२ ङ. च. °जेत यदि। १३ च. °दण्ड्यं दण्डय°। १४ क. °ति अदण्ड्यान्द°। ख. °ति अदण्ड्यान्दमय°। १५ च न्दमय°।

दण्डस्य भीतैस्त्रिदशैः समेतैर्भागो धृतः शूलधरस्य यज्ञे ।
दत्तं कुमारे ध्वजिनीपतित्वं वरं शिशूनां च भयाद्बलस्थम् ॥ १८

इति श्रीमात्स्ये महापुराणे राजधर्मे दण्डप्रशंसा नाम पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ११६३१ ॥

---

अथ षड्विंशत्यधिकद्विशततमोऽध्यायः ।

---

मत्स्य उवाच—

दण्डप्रणयनार्थाय राजा सृष्टः स्वयंभुवा । देवभागानुपादाय सर्वभूतादिगुप्तये ॥ १
[*तेजसा यदमुं कश्चिन्नैव शक्नोति वीक्षितुम् । ततो भवति लोकेषु राजा भास्करवत्प्रभुः॥
यदाऽस्य दर्शने लोकः प्रसादमुपगच्छति । नयनानन्दकारित्वात्तदा भवति चन्द्रमाः ॥ ३
+यथा यमः प्रियद्वेष्ये प्राप्ते काले प्रयच्छति । तथा राज्ञा विधातव्याः प्रजास्तद्धि यमव्रतम्॥
वरुणेन यथा पाशैर्बद्ध एव प्रदृश्यते । तथा पापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम् ॥ ५
परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यति मानवः । तथा प्रकृतयो यस्मिन्स चन्द्रप्रतिमो नृपः॥६
प्रतापयुक्तस्तेजस्वी नित्यं स्यात्पापकर्मसु । दुष्टसामन्तहिंस्रेषु राजाऽऽग्नेयव्रते स्थितः ॥ ७
यथा सर्वाणि भूतानि धरा धारयते स्वयम् । तथा सर्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम्]॥
इन्द्रस्यार्कस्य वातस्य यमस्य वरुणस्य च । चन्द्रस्याग्नेः पृथिव्याश्च तेजोव्रतं नृपश्चरेत्॥९
वार्षिकांश्चतुरो मासान्यथेन्द्रोऽप्यभिवर्षति । तथाऽभिवर्षेत्स्वं राष्ट्रं काममिन्द्रव्रतं स्मृतम्
अष्टौ मासान्यथाऽऽदित्यस्तोयं हरति रश्मिभिः । तथा हरेत्करं राष्ट्रान्नित्यमर्कव्रतं हि तत् ॥
प्रविश्य सर्वभूतानि यथा चरति मारुतः । तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम् ॥ १२

इति श्रीमात्स्ये महापुराणे राजधर्मे राज्ञो लोकपालसाम्यनिर्देशो नाम षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ११६४३ ॥

---

अथ सप्तविंशत्यधिकद्विशततमोऽध्यायः ।

---

मत्स्य उवाच—

निक्षेपस्य समं मूल्यं दण्ड्यो निक्षेपभुक् तथा । वस्त्रादिकसमस्तस्य तदा धर्मो न हीयते ॥
यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते । तावुभौ चोरवच्छास्यौ दाप्यौ वा द्विगुणं धनम्॥
उपधाभिश्च यः कश्चित्परद्रव्यं हरेन्नरः । ससहायः स हन्तव्यः प्रकामं विविधैर्वधैः ॥ ३
यो याचितं समादाय न तद्दद्याद्यथाक्रमम् । स निगृह्य बलाद्दाप्यो दण्ड्यो वा पूर्वसाहसम्
अज्ञानाद्यदि वा कुर्यात्परद्रव्यस्य विक्रयम् । निर्दोषो ज्ञानपूर्वं तु चोरवद्वधमर्हति ॥ ५

---

* धनुश्चिह्नान्तर्गतग्रन्थो ग. पुस्तके न विद्यते । + इत आरभ्य अध्यायान्तग्रन्थो ङ. घ. पुस्तकयोर्नास्ति ।

---

१ च. चक्षुः २ ङ. °त्वं बलं शिशौ तच्च भ° । ३ घ. च. तदा । ४ क. ख. राज्यं । ५ क. ख क्षेप्त्रस्व । ६ क. ख. °निक्षेप्य । ७ ङ. च. °ड्यो द्विगुणसा° । ८ ङ. °वद्दण्डम° ।

मूल्यमादाय यो विद्यां शिल्पं वा न प्रयच्छति। दण्ड्यः स मूल्यं सकलं धर्मज्ञेन महीक्षिता॥
द्विजभोज्ये तु संप्राप्ते प्रतिवेश्ममभोजयन्। हिरण्यमाषकं दण्ड्यः पापे नास्ति व्यतिक्रमः॥
आमन्त्रितो द्विजो यस्तु वर्तमानश्च स्वे गृहे। निष्कारणं न गच्छेद्यः स दाप्योऽष्टशतं दमम्॥
प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेन्नृपः॥ ८
भृत्यश्चाऽऽज्ञां न कुर्याद्यो दर्पात्कर्म यथोदितम् । स दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम्॥ ९
संगृहीतं न दद्याद्यः काले वेतनमेव च। अकाले तु त्यजेद्भृत्यं दण्ड्यः स्याच्छतमेव च॥१०
यो ग्रामदेशसस्यानां कृत्वा सत्येन संविदम्। विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत्॥११
क्रीत्वा विक्रीय वा किंचिद्यस्येहानुशयी भवेत्। सोऽन्तर्दशाहात्तत्साम्यं दद्याच्चैवाऽऽददीत वा॥ १२
परेण तु दशाहस्य न दद्यान्नैव दापयेत्। आददन्न ददच्चैव राज्ञा दण्ड्यः शतानि षट्॥ १३
यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति। तस्य कुर्यान्नृपो दण्डं स्वयं षण्णवतिं पणान्॥
अकन्यैवेति यः कन्यां ब्रूयाद्दोषेण मानवः। स शतं प्राप्नुयाद्दण्डं तस्या दोषमदर्शयन्॥१५
यस्त्वन्यां दर्शयित्वाऽन्यां वोढुः कन्यां प्रयच्छति। उत्तमं तस्य कुर्वीत राजा दण्डं तु साहसम्
वरो दोषाननाख्याय यः कन्यां वरयेदिह। दत्ताऽप्यदत्ता सा तस्य राज्ञा दण्ड्यः शतद्वयम्॥
प्रदाय कन्यां योऽन्यस्मै पुनस्तां संप्रयच्छति। दण्डः कार्यो नरेन्द्रेण तस्याप्युत्तमसाहसः॥
सत्यंकारेण वा वाचा युक्तं पण्यमसंशयम्। लुब्धो ह्यन्यत्र विक्रेता षट्शतं दण्डमर्हति॥
दुहितुः शुल्कविक्रेता सत्यंकारात्तु संत्यजेत्। द्विगुणं दण्डयेदेनमिति धर्मो व्यवस्थितः॥
मूल्यैकदेशं दत्त्वा तु यदि क्रेता धनं त्यजेत्। स दण्ड्यो मध्यमं दण्डं तस्य पण्यस्य मोक्षणम्॥ २१
दुह्याद्धेनुं च यः पालो गृहीत्वा भक्तवेतनम्। स तु दण्ड्यः शतं राज्ञा सुवर्णं चाप्यरक्षिता॥
दण्डं दत्त्वा तु विरमेत्स्वामितः कृतलक्षणः। बद्धः कार्ष्णायसैः पाशैस्तस्य कर्मकरो भवेत्
धनुःशतपरीणाहो ग्रामस्य तु समन्ततः। द्विगुणं त्रिगुणं वाऽपि नगरस्य तु कल्पयेत्॥ २४
वृत्तिं तत्र प्रकुर्वीत यामुष्ट्रो नावलोकयेत्। छिद्रं वा वारयेत्सर्वं श्वशूकरमुखानुगम्॥ २५
यत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि। न तत्र कारयेद्दण्डं नृपतिः पशुरक्षिणे॥ २६
अनिर्दशाहां गां सूतां वृषं देवपशुं तथा। छिद्रं वा वारयेत्सर्वं न दण्ड्यमनुरब्रवीत्॥२७
अतोऽन्यथा विनष्टस्य दशांशं दण्डमर्हति*। पाल्यस्य पालकस्वामी विनाशे क्षत्रियस्य तु
भक्षयित्वोपविष्टस्तु द्विगुणं दण्डमर्हति। विशं दण्ड्याद्दशगुणं विनाशे क्षत्रियस्य तु॥
गृहं तडागमारामं क्षेत्रं वाऽपि समाहरन्। शतानि पञ्च दण्डः स्यादज्ञानाद्द्विशतो दमः॥

* इतः परं सार्धश्लोको न विद्यते ग. घ. पुस्तकयोः।

१ घ. ङ. च. °शसंधानां। २ क. ख घ. °क्षयो भ°। ३ ङ. °त्। अददाद्विवदंश्चैव। ४ क. ख. °दद्विदद°। ५ घ. अनवेक्ष्येति। घ. अनदोषवतीं क°। ६ घ. ङ. याद्द्वेषे°। ७ घ. ङ. वोढुं। ८ घ. ङ. वरे दोषमना°। ९ च. °रोऽप्येवं समाच्छाद्य यः। १० ङ. दत्वा। ११ ग. °त्वा तक्रवे°। १२ ग. ङ. °भिभिः कृ°। च. °मिना कृतरक्ष°। १३ ग. घ. ङ. वा धार°। १४ ङ. °स्वागतम्। य°। १५ ग. घ. ङ. वा धारये°। १६ घ. °र्वं निर्दण्ड्यान्मनु°। १७ ङ. वापीमपाहरेत्। श°।

सीमाबन्धनकाले तु सीमान्तं यो हि कारयेत्। तेषां संज्ञां ददानस्तु जिह्वाच्छेदमवाप्नुयात्
अथैनामपि यो दद्यात्संविदं वाऽधिगच्छति। उत्तमं साहसं दण्ड्य इति स्वायंभुवोऽब्रवीत्
वर्णानामानुपूर्व्येण त्रयाणामविशेषतः। अकार्यकारिणः सर्वान्प्रायश्चित्तानि कारयेत् ॥
असत्येन प्रमाप्य स्त्रीं शूद्रहत्याव्रतं चरेत्। दानेन च धनेनैकं सर्पादीनामशक्नुवन् ॥ ३४
एकैकं स चरेत्कृच्छ्रं द्विजः पापापनुत्तये। फलदानां च वृक्षाणां छेदने जप्यमृक्शतम्॥३५
गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम्। अस्थिमतां च सत्त्वानां सहस्रस्य प्रमापणे
पूर्णे वाऽनस्यवस्थातुं शूद्रहत्याव्रतं चरेत् ॥ ३६
किंचिद्देयं च विप्राय दद्यादस्थिमतां वधे। अनस्थ्नां चैव हिंसायां प्राणायामैर्विशुध्यति
अन्नादिजानां सत्त्वानां रसजानां च सर्वशः। फलपुष्पोद्भूतानां च घृतप्राशो विशोधनम्
कृष्टानामोषधीनां च जातानां च स्वयं वने। वृथा छेदेन गच्छेत दिनमेकं पयोव्रती ॥३९
एतैर्व्रतैरपोह्यं स्यादेनो हिंसासमुद्भवम्। स्तेयदोषापहर्तॄणां श्रूयतां व्रतमुत्तमम् ॥ ४०
धान्यान्नधनचौर्याणि कृत्वा कामाद्द्विजोत्तमः। सजातीयगृहादेव कृच्छ्रार्धेन विशुध्यति
मनुष्याणां तु हरणे स्त्रीणां क्षेत्रगृहस्य तु। कूपवापीजलानां तु शुद्धिश्चान्द्रायणं स्मृतम्
द्रव्याणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मतः। चरेत्सांतपनं कृच्छ्रं तन्निर्यात्य विशुद्धये
भक्ष्यभोज्यापहरणे यानशय्यासनस्य तु। पुष्पमूलफलानां तु पञ्चगव्यं विशोधनम् ॥४४
तृणकाष्ठद्रुमाणां तु शुष्कान्नस्य गुडस्य च। चैलचर्मामिषाणां तु त्रिरात्रं स्यादभोजनम्
मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च। अयस्कांस्योपलानां च द्वादशाहं कणान्नभुक् ॥
कार्पासकीटजोर्णानां द्विशफैकशफस्य च। पक्षिगन्धौषधीनां च रज्ज्वाश्चैव त्र्यहं पयः॥४७
एतैर्व्रतैर्व्यपोहेत पापं स्तेयकृतं द्विजः। अगम्यागमनीयं तु व्रतैरेभिरपानुदेत् ॥ ४८
गुरुतल्पव्रतं कुर्याद्रेतः सिक्त्वा स्वयोनिषु। सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च॥
पैतृष्वस्रीयभगिनीं स्वस्रीयां मातुरेव च। भ्रातुर्दुहितरं चैव गत्वा चान्द्रायणं चरेत् ॥ ५०
एताः स्त्रियस्तु भार्यार्थे नोपगच्छेत्तु बुद्धिमान्। *ज्ञातीमां च स्त्रियो यास्तु पतितानुगताश्च याः ॥ ५१
अमानुषीषु पुरुषो उदक्यायामयोनिषु। रेतः सिक्त्वा जले चैव कृच्छ्रं सांतपनं चरेत् ॥
मैथुनं च समालोक्य पुंसि योषिति वा द्विजः। गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत्
चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च। पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति ॥५४
विप्रदुष्टां स्त्रियं भर्ता निरुन्ध्यादेकवेश्मनि। यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम् ॥ ५५
सा चेत्पुनः प्रदुष्येत्तु सदृशेनोपमन्त्रिता। कृच्छ्रं चान्द्रायणं चैव तत्तस्याः पावनं स्मृतम् ॥
यः करोत्येकरात्रेण वृषलीसेवनं द्विजः। +तंद्भक्ष्यभुग्जपेन्नित्यं त्रिभिवर्षैर्व्यपोहति ॥ ५७

* एतदर्धस्थानेऽयं पाठः ख. पुस्तके—ज्ञातीश्च मातुलेयास्ते पतिता उपयन्ति य इति । * एतदर्धस्थानेऽयं पाठो ङ. पुस्तके–जातियोनिषु ये यान्ति पतितास्ते पतन्त्यध इति । + एतदर्धस्थानेऽयं पाठो ङ. पुस्तके–भिक्षाशी ऋग्जपी नित्यं त्रिभिर्मासैर्विमुच्यत इति ।

१ घ. °थारम्भे न गच्छेदाद्दिन° । ङ. °थारम्भान्न गच्छेदाद्दिन° । २ क. ख. °यकर्त्रेप° । ३ ङ. °र्यात्याऽऽत्मशु° । ४ ग. घ. °हं फलान्न° । ५ ङ. °जादिषु । पै° । ६ ङ. न. स्वसारं । ७ क. ख. च । मातुश्च भ्रातुरार्य्यायां ग° । ८ ङ. °तुराप्तस्य तां गत्वा चरेच्चान्द्रायणव्रतम् । ए° । ९ ग. °ण्डालीं च स्त्रियं ग° । १० ख. घ. तदेकभु° ।

एषा पापकृतामुक्ता चतुर्णामपि निष्कृतिः। पतितैः संप्रयुक्तानामिमां शृणुत निष्कृतिम्॥
संवत्सरेण पतति पतितेन सहाऽऽचरन्। याजनाध्यापनाद्यौनात्तुल्ययानाशनासनात्॥ ५९
यो येन पतितेनैषां संसर्गं याति मानवः। स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये॥ ६०
पतितस्योदकं कार्यं सपिण्डैर्बान्धवैः सह। निन्दितेऽहनि सायाह्ने ज्ञातिभिर्गुरुसंनिधौ॥
दासी घटमपां पूर्णं पर्यस्येत्प्रेतवत्सदा। अहोरात्रमुपासीरन्नाशौचं बान्धवैः सह॥ ६२
निवर्तयेरंस्तस्मात्तु संभाषणसहासनम्। दायादस्य प्रमाणं च यात्रामेवं च लौकिकीम्॥
*ज्येष्ठभावान्निवर्तेत ज्येष्ठावाप्तं च यत्पुनः। ज्येष्ठांशं प्राप्नुयाच्चास्य यवीयान्गुणतोऽधिकः॥
स्थापितां चापि मर्यादां ये भिन्द्युः पापकर्मिणः। सर्वे पृथक्पृथग्दण्ड्या राज्ञा प्रथमसाहसम्
शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति। वैश्यस्तु द्विशतं राजञ्छूद्रस्तु वधमर्हति॥ ६६
पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने। वैश्यस्याप्यर्धपञ्चाशच्छूद्रे द्वादशको दमः॥
क्षत्रियस्याऽऽप्नुयाद्वैश्यः साहसं पुनरेव च। शूद्रः क्षत्रियमाक्रुश्य जिह्वाच्छेदनमाप्नुयात्॥ ६८
पञ्चाशत्क्षत्रियो दण्ड्यस्तथा वैश्याभिशंसने। शूद्रे चैवार्धपञ्चाशत्तथा धर्मो न हीयते॥ ६९
वैश्यस्याऽऽक्रोशने दण्डः शूद्रश्चोत्तमसाहसम्। शूद्राक्रोशे तथा वैश्यः शतार्धं दण्डमर्हति॥
सवर्णाक्रोशने दण्ड्यस्तथा द्वादशकं स्मृतम्। वादेष्ववचनीयेषु तदेव द्विगुणं भवेत्॥ ७१
एकजातिर्द्विजातिं तु वाचा दारुणया क्षिपन्। जिह्वायाः प्राप्नुयाच्छेदं जघन्यः प्रथमो हि सः
नामजातिगृहं तेषामभिद्रोहेण कुर्वतः। निक्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः ७३
धर्मोपदेशं शूद्रस्तु(स्य) द्विजानामभिकुर्वतः। तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः॥ ७४
श्रुतिं देशं च जातिं च कर्म शारीरमेव च। वितथं च ब्रुवन्दण्ड्यो राज्ञा द्विगुणसाहसम्॥ ७५
यस्तु पातकसंयुक्तः क्षिपेद्वर्णान्तरं नरः। उत्तमं साहसं दण्डः पात्यस्तस्मिन्यथाक्रमम्॥ ७६
राज्ञो निवेशनियमं वितथं यान्ति वै मिथः। सर्वे द्विगुणदण्ड्यास्ते विप्रलम्भान्नृपस्य तु॥ ७७
प्रीत्या मयाऽस्याभिहितं प्रमादेनाथवा वदेत्। भूयो न चैवं वक्ष्यामि स तु दण्डार्धभाग्भवेत्॥
काणं वाऽप्यथवा खञ्जमन्धं चापि तथाविधम्। तथ्येनापि ब्रुवन्दाप्यो दण्डं कार्षापणं धनम्
मातरं पितरं ज्येष्ठं भ्रातरं श्वशुरं गुरुम्। आक्रोशयञ्छतं दण्ड्यः पन्थानं चार्दयन्गुरोः॥ ८०
गुरुवर्ज्यं तु मानार्हं यो हि मार्गं न यच्छति। स दाप्यः कृष्णलं राज्ञस्तस्य पापस्य शान्तये ८१
एकजातिर्द्विजातिं तु येनाङ्गेनापराध्नुयात्। तदेव च्छेदयेत्तस्य क्षिप्रमेवाविचारयन्॥ ८२
अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ च्छेदयेन्नृपः। अवमूत्रयतो मेढ्रमपशब्दयतो गुदम्॥ ८३
सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः। कट्यां कृताङ्को निर्वास्यः स्फिचं वाऽप्यस्य कर्तयेत्
केशेषु गृह्णतो हस्तं छेदयेदविचारयन्। पादयोर्नासिकायां च ग्रीवायां वृषणेषु च॥ ८५

* एतच्छ्लोकेऽयं पाठश्च पुस्तके—ज्येष्ठकार्यान्निवर्तेत ज्येष्ठलभ्यं च यत्पुनः। ज्येष्ठं संप्राप्नुयाच्चास्य यवीयान्गुणतोऽपि वेति॥

१ घ. °नाद्यजनाद्यानादालापादश°। २ क. ख. °नादनुया°। ३ ग. °धौ। दद्यादृघट°। ४ ग. °हाशन°। ५ ङ. °वाप्यं च निर्वृतः। ज्येष्ठं समाप्नु°। ६ क. ख. °थग्दण्डनीया रा°। ७ ग. च. °देषु व°। ८ ग. क्षिपेत्। ९ ग. घ. च. °धन्यप्रभवो हि। १० च. °नं न त्यजेद्गुरोः। ११ ङ. च. °मधः श°। १२ घ. ङ. च. कर्णे। १३ घ. ङ. च. °र्वास्य एकं चैवा°।

त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः । मांसभेत्ता च षण्निष्कान्निर्वास्यस्त्वस्थिभेदकः ॥ ८६
अङ्गभङ्गकरस्याङ्गं तदेवापहरेन्नृपः । दण्डपारुष्यकृद्दण्ड्यः समुत्थानव्ययं तथा ॥ ८७
अर्धपादकरः कार्यो गोगजाश्वोष्ट्रघातकः । पशुक्षुद्रमृगाणां च हिंसायां द्विगुणो दमः ॥ ८८
पञ्चाशच्च भवेद्दण्ड्यस्तथैव मृगपक्षिषु । कृमिकीटेषु दण्ड्यः स्याद्रजतस्य च माषकम् ॥ ८९
तस्यानुरूपं मूल्यं च प्रदद्यात्स्वामिने तथा । स्वस्वामिकानां सकलं शेषाणां दण्डमेव तु ॥ ९०
वृक्षं तु सफलं छित्त्वा सुवर्णं दण्डमर्हति । द्विगुणं दण्डयेच्चैनं पथि सीम्नि जलाशये ॥ ९१
छेदनादफलस्यापि मध्यमं साहसं स्मृतम् । गुल्मवल्लीलतानां च सुवर्णस्य च माषकम् ॥ ९२
वृथाच्छेदी तृणस्यापि दण्ड्यः कार्षापणं भवेत् । त्रिभागं कृष्णला दण्ड्याः प्राणिनस्ताडने तथा ॥ ९३
देशकालानुरूपेण मूल्यं राजा द्रुमादिषु । तत्स्वामिनस्तथा दण्ड्या दण्डमुक्तस्तु पार्थिव ९४
यत्रातिवर्तते युग्यं वैगुण्यात्प्राजकस्य तु । तत्र स्वामी भवेद्दण्ड्यो नाऽऽप्तश्चेत्प्राजको भवेत् ॥
प्राजकश्च भवेद्दासः प्राजको दण्डमर्हति । नास्ति दण्डश्च तस्यापि तथा वै हेतुकल्पकः ॥ ९६
द्रव्याणि यो हरेद्यस्य ज्ञानतोऽज्ञानतोऽपि वा । स तस्योत्पादयेत्तुष्टिं राज्ञो दद्यात्ततो दमम् ॥
यस्तु रज्जुं घटं कूपाद्धरेद्भिन्द्याच्च तां प्रपाम् । स दण्डं प्राप्नुयान्माषं तच्च संप्रतिपादयेत् ॥ ९८
धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः । शेषेऽप्येकादशगुणं तस्य दण्डं प्रकल्पयेत् ॥
तथा भक्ष्यान्नपानानां न तथाऽप्यधिके वधः । सुवर्णरजतादीनामुत्तमानां च वाससाम् ॥
पुरुषाणां कुलीनानां नारीणां च विशेषतः । महापशूनां हरणे शस्त्राणामौषधस्य च ॥ १०१
मुख्यानां चैव रत्नानां हरणे वधमर्हति । दध्नः क्षीरस्य तक्रस्य पानीयस्य रसस्य च ॥ १०२
वेणुवैदलभाण्डानां लवणानां तथैव च । मृन्मयानां च सर्वेषां मृदो भस्मन एव च ॥ १०३
कालमासाद्य कार्यं च राजा दण्डं प्रकल्पयेत् । गोषु ब्राह्मणसंस्थासु महिषीषु तथैव च ॥ १०४
अश्वापहारकश्चैव सद्यः कार्योऽर्धपादकः । सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च १०५
मत्स्यानां पक्षिणां चैव तैलस्य च घृतस्य च । मांसस्य मधुनश्चैव यच्चान्यद्वस्तुसंभवम् ॥ १०६
अन्येषां लवणादीनां मद्यानामोदनस्य च । पक्वान्नानां च सर्वेषां तन्मूल्याद्द्विगुणो दमः ॥
पुष्पेषु हरिते धान्ये गुल्मवल्लीलतासु च । अन्नेषु परिपूर्णेषु दण्डः स्यात्पञ्चमाषकम् ॥
परिपूर्णेषु धान्येषु शाकमूलफलेषु च ॥ १०८
निरन्वये शतं दण्ड्यः सान्वये द्विशतं दमः । येन येन यथाङ्गेन स्तेनोऽन्येषु विचेष्टते ॥ १०९
तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः । द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ॥ ११०
त्रपुसोर्वारुकौ द्वौ च तावन्मात्रं फलेषु च । तथा च सर्वधान्यानां मुष्टिग्राहेण पार्थिव ॥ १११
शाके शाकप्रमाणेन गृह्यमाणे न दुष्यति । वानस्पत्यं फलं मूलं दार्वग्न्यर्थं तथैव च ॥ ११२
तृणं गोभ्यवहारार्थमस्तेयं मनुरब्रवीत् । अदेववाटिजं पुष्पं देवतार्थं तथैव च ॥ ११३
आददानः परक्षेत्रान्न दण्डं दातुमर्हति । शृङ्गिणं नखिनं राजन्दंष्ट्रिणं च वधोद्यतम् ॥ ११४

---

१ घ. ङ. च. हिंसाणां । २ ङ. च. दण्डः । ३ घ. ङ. च. 'मिने तथा द्रव्यःदण्डमुक्तं च पार्थिवः । य' । ४ घ. च. पै हितजल्पतः । द्र° ।

यो हन्यान्न स पापेन लिप्यते मनुजेश्वर। गुरुं वा बालवृद्धं वा ब्राह्मणं वा बहुश्रुतम् ॥ ११५
आततायिनमायान्तं हन्यादेवाविचारयन्। नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन ११६
प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमृच्छति। गृहक्षेत्राभिहर्तारस्तथाऽगम्याभिगामिनः॥
अग्निदो गरदश्चैव तथा चाभ्युद्यतायुधः। अभिचारं तु कुर्वाणो राजगामि च पैशुनम् ॥ ११८
एते हि कथिता लोके धर्मज्ञैराततायिनः । *भिक्षुकोऽप्यथवा नारी योऽपि वा स्यात्कुशी-
लवः ॥ ११९
प्रविशेत्प्रतिषिद्धस्तु प्राप्नुयाद्द्विगुणं दमः। परस्त्रीणां तु संभाषे तीर्थेऽरण्ये गृहेऽपि वा॥१२०
नदीनां चैव संभेदे स संग्रहणमाप्नुयात्। न संभाषेत्परस्त्रीभिः प्रतिषिद्धः समाचरेत् ॥ १२१
प्रतिषिद्धे समाभाष्य सुवर्णं दण्डमर्हति। नैष चारणदारेषु विधिरात्मोपजीविषु ॥ १२२
सज्जयन्ति मनुष्यैस्ता निगूढं वा चरन्त्युत । किंचिदेव तु दाप्यः स्यात्संभाषेणापचारयन् ॥
प्रेष्यासु चैव सर्वासु गृहप्रव्रजितासु च। योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति ॥ १२४
सकामां दूषयाणस्तु प्राप्नुयाद्द्विशतं दमम्। यश्च संरक्षकस्तत्र पुरुषः स तथा भवेत् ॥ १२५
पारदारिकवद्दण्ड्यो योऽपि स्यादवकाशदः । बलात्संदूषयेद्यस्तु परभार्यां नरः क्वचित् ॥
वधो दण्डो भवेत्तस्य नापराधो भवेत्स्त्रियाः। रजस्तृतीयं या कन्या स्वगृहे प्रतिपद्यते ॥१२७
अदण्ड्या सा भवेद्राज्ञा वरयन्ती पतिं स्वयम्। स्वदेशे कन्यकां दत्त्वा तामादाय तथा व्रजेत्
परदेशे भवेद्वध्यः स्त्रीचोरः स यतो भवेत्। अद्रव्यां मृतपत्नीं तु संगृह्णन्नापराध्नुते ॥ १२९
सद्रव्यां तां संग्रहीता दण्डं तु क्षिप्रमर्हति । उत्कृष्टं या भजेत्कन्या देया तस्यैव सा भवेत् ॥
यश्चान्यं सेवमानां च संयतां वासयेद्गृहे। उत्तमां सेवमानस्तु जघन्यो वधमर्हति ॥
जघन्यमुत्तमा नारी सेवमाना तथैव च ॥ १३१
भर्तारं लङ्घयेद्या स्त्री ज्ञातिभिर्बलदर्पिता। तां च निष्कासयेद्राजा संस्थाने बहुसंस्थिते ॥
हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम्। वासयेत्स्वैरिणीं नित्यं संवर्णेनाभिदूषिताम्
ज्यायसा दूषिता नारी मुण्डनं समवाप्नुयात्। वासश्च मलिनं नित्यं शिखां संप्राप्नुयाद्दश ॥
ब्राह्मणः क्षत्रियो वैश्यः क्षत्रविट्शूद्रयोषितः। व्रजन्दाप्यो भवेद्राज्ञा दण्डमुत्तमसाहसम् ॥
वैश्यागमे च विप्रस्य क्षत्रियस्यान्त्यजागमे। मध्यमं प्रथमं वैश्यो दण्ड्यः शूद्रागमाद्भवेत् ॥
शूद्रः सवर्णागमने शतं दण्ड्यो महीक्षिता। वैश्यस्तु द्विगुणं राजन्क्षत्रियस्त्रिगुणं तथा॥१३७
ब्राह्मणश्च भवेद्दण्ड्यस्तथा राजंश्चतुर्गुणम्। +अगुप्तासु भवेद्दण्डः सुगुप्तास्वधिको भवेत् ॥
माता पितृष्वसा श्वश्रूर्मातुलानी पितृव्यजा। पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी तथा ॥
भ्रातृभार्यागमे पूर्वाद्दण्डस्तु द्विगुणो भवेत् ॥ १३९

---

* इत आरभ्य दम इत्यन्तग्रन्थः क. पुस्तक एव वर्तते। + एतदर्धस्थानेऽयं पाठो ङ. पुस्तके—गुप्ताश्चेत्तद्भवेद्दण्ड अगुप्तास्वाधिकं भवेदिति।

---

१ घ. ङ. च. °न्युस्तमनुपृच्छ°। २ घ. ङ. च. °था पत्न्याभि°। ३ च. संग्राहमवाप्नु°। ४ ग. घ. ङ. च. °षेत्सहस्त्री°। ५ च. °द्धः पुमान्किल। यस्तु संभाषते स्त्रीभिः सु°। ६ घ. ङ. °ढं विचरन्त्यतः। किं°। ७ क. घ. च. संचारक°। ८ क. ख. ग. घ. °राध्यति। स°। ९ ग. घ. ङ. तां गृह्णानस्तु दण्डमर्हति सत्तम। उ°। १० ङ. °त्कृष्टां यो भजेत्कन्यां दे°। ११ घ. °त्। जघन्यं से°। १२ घ. ङ. स्त्री स्वज्ञातिबल°। १३ घ. ङ. तां श्वभिः खादये°। १४ ग. संस्थते सर्वसंसदि। हृ°। १५ ङ. सर्ववर्णेन दू°।

* भागिनेयी तथा चैव राजपत्नी तथैव च । तथा प्रव्रजिता नारी वर्णोत्कृष्टा तथैव च ॥ १४०
इत्यगम्याश्च निर्दिष्टास्तासां तु गमने नरः । शिश्नस्योत्कर्तनं कृत्वा ततस्तु वधमर्हति ॥ १४१
चण्डालीं च श्वपाकीं च गच्छन्वधमवाप्नुयात् ॥ १४२
तिर्यग्योनिं च गोवर्ज्यं मैथुनं यो निषेवते । वपनं प्राप्नुयाद्दण्डं तस्याश्च यवसोदकम् ॥ १४३
सुवर्णं च भवेद्दण्ड्यो गां व्रजन्मनुजोत्तम । वेश्यागामी द्विजो दण्ड्यो वेश्याशुल्कसमं पणम्॥
गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति । वेतनं द्विगुणं दद्याद्दण्डं च द्विगुणं तथा ॥ १४५
अन्यमुद्दिश्य यो वेश्यां नयेदन्यस्य कारणात् । तस्य दण्डो भवेद्राजन्सुवर्णस्य च माषकम् ॥
+नीत्वा भोगान्न यो दद्याद्दाप्यो द्विगुणवेतनम् । राज्ञश्च द्विगुणं दण्डं तथा धर्मो न हीयते ॥
बहूनां व्रजतामेकां सर्वे ते द्विगुणं दमम् । दद्युः पृथक्पृथक्सर्वे दण्डं च द्विगुणं परम् ॥ १४८
न माता न पिता न स्त्री न ऋत्विग्याज्यमानवाः । अन्योन्यं पतितास्त्याज्या योगे दण्ड्याः शतानि षट् ॥ १४९
पतिता गुरवस्त्याज्या न तु माता कथं चन । गर्भधारणपोषाभ्यां तेन माता गरीयसी ॥ १५०
अधीयानोऽप्यनध्याये दण्ड्यः कार्षापणत्रयम् । अध्यापकश्च द्विगुणं तथाऽऽचारस्य लङ्घने
अनुक्तस्य भवेद्दण्डः सुवर्णस्य च कृष्णलम् । भार्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः ॥
कृतापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा । पृष्ठतस्तु शरीरस्य नोत्तमाङ्गं कथं चन ॥१५३
अतोऽन्यथा प्रहरतः प्राप्नुयाच्चोरकिल्बिषम् । दूतीं समाह्वयंश्चैव यो निषिद्धं समाचरेत् ॥१५४
प्रच्छन्नं वा प्रकाशं वा स दण्ड्यः पार्थिवेच्छया । वासांसि फलकैः श्लक्ष्णैर्निर्णिज्याद्रजकः शनैः ॥ १५५
अतोऽन्यथा हि कुर्वंस्तु दण्ड्यः स्याद्रुक्ममाषकम् । रक्षास्वधिकृतानां च प्रदेयं यैर्विलुप्यते ॥
कर्षकेभ्योऽर्थमादाय यः कुर्यात्करमन्यथा । तस्य सर्वस्वमादाय तं राजा विप्रवासयेत् ॥ १५७
ये नियुक्ताः स्वकार्येषु हन्युः कार्याणि कार्यिणाम् । निर्घृणाः क्रूरमनसः सर्वे कर्मापराधिनः॥
धनोष्मणा पच्यमानास्तान्निःस्वान्कारयेन्नृपः । कूटशासनकर्तॄंश्च प्रकृतीनां च दूषकान् ॥
स्त्रीबालब्राह्मणघ्नांश्च वध्यांत्तत्सेविनस्तथा।अमात्यः प्राड्विवाको वा यः कुर्यात्कार्यमन्यथा
तस्य सर्वस्वमादाय तं राजा विप्रवासयेत् । ब्रह्मघ्नश्च सुरापश्च तस्करो गुरुतल्पगः ॥ १६१
एतान्सर्वान्पृथग्विद्यान्महापातकिनो नरान् । महापातकिनो वध्या ब्राह्मणं तु विवासयेत्॥
कृतचिह्नं स्वदेशाच्च शृणु चिह्नाकृतिं ततः । गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ॥ १६३
स्तेने तु श्वपदं तद्वद्ब्रह्महण्यशिराः पुमान् । असंभाप्या ह्यसंभोज्या असंवाह्या विशेषतः ॥
त्यक्तव्याश्च तथा राजञ्ज्ञातिसंबन्धिबान्धवैः । महापातकिनो वित्तमादाय नृपतिः स्वयम् ॥

---

* इत आरभ्य वधमर्हति इत्यन्तग्रन्थः ख. ग. पुस्तकयोर्नास्ति । + एतदर्धस्थानेऽयं पाठो ङ. पुस्तके—
नीत्वा भुक्त्वाऽन्यस्य दद्याद्दाप्यो द्विगुणवेतनम् ।

---

१ ङ. °न्यत्र का° । २ ङ. °नां भुञ्जता° । ३ घ. °थग्भागं द° । च. °थग्ग्रासं द° । ४ ग. घ. ङ. च. °ज्यसूनवः । अ° । ५ क. ग. प्रासं स्याचो° । ङ. प्रासेः स्याद्घोर° । ६ क. ख. °त् । आच्छन्नं । ७ क. ख. °कृतैश्चैव प्र° । ८ ङ. घ्नन्ति । ९ क. ख. °ध्याद्विद्सेवि° । १० ङ. °थकुर्वन्म° । ११ घ. चिह्नकर्म त° । १२ घ. स्तेयकर्तुः पदं छिन्द्याद्ब्रह्महन्तुः शिरः पु° ।

अप्सु प्रवेशयेद्दण्डं वरुणायोपपादयेत् । सहोढं न विना चोरं घातयेद्धार्मिको नृपः ॥ १६६
सहोढं सोपकरणं घातयेदविचारयन् । ग्रामेष्वपि च ये केचिच्चोराणां भक्ष्यदायकाः ॥ १६७
भाण्डावकाशदाश्चैव सर्वांस्तानपि घातयेत् । राष्ट्रेषु राज्ञाऽधिकृताः सामन्ताश्चैव दूषकाः ॥
अभ्याघातेषु मध्यस्थाः क्षिप्रं शास्यास्तु चोरवत् । ग्रामघाते मठाभङ्गे पथि मोषाभिमर्दने ॥
शक्तितो नाभिधावन्तो निर्वास्याः सपरिच्छदाः । राज्ञः कोशापहर्तृंश्च प्रतिकूलेषु संस्थितान् ॥
अरीणामुपेकर्तृंश्च घातयेद्विविधैर्वधैः । संधिं कृत्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः ॥
तेषां छित्त्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत् । तडागभेदकं हन्यादप्सु शुद्धवधेन तु ॥
यस्तु पूर्वं निविष्टं स्यात्तडागस्योदकं हरेत् । आगमं चाप्यपां भिन्द्यात्स दाप्यः पूर्वसाहसम् ॥
कोष्ठागारायुधागारदेवागारविभेदकान् । पापान्पापसमाचारान्घातयेच्छीघ्रमेव च ॥ १७४
समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि । स हि कार्षापणं दण्ड्यस्तत्त्वमेध्यं च शोधयेत् ॥ १७५
आपद्गतोऽथवा वृद्धो गर्भिणी बाल एव च । परिभाषणमर्हन्ति न च शोध्यमिति स्थितिः ॥
प्रथमं साहसं दण्ड्यो यश्च मिथ्या चिकित्सते । पुरुषे मध्यमं दण्डमुत्तमं च तथोत्तमे ॥ १७७
छत्रस्य ध्वजयष्टीनां प्रतिमानां च भेदकाः । प्रतिकुर्युस्ततः सर्वे पञ्च दण्ड्याः शतानि च ॥
अदूषितानां द्रव्याणां दूषणे भेदने तथा । मणीनामपि भेदेन दण्ड्यः प्रथमसाहसम् ॥ १७९
समं च विषमं चैव कुरुते मूल्यतोऽपि वा । समाप्नुयात्स वै पूर्वं दमं मध्यममेव च ॥ १८०
बन्धनानि च सर्वाणि राजमार्गे निवेशयेत् । कर्षन्तो यत्र दृश्यन्ते विकृताः पापकारिणः ॥
प्राकारस्य च भेत्तारं परिखाणां च भेदकम् । द्वाराणां चैव भेत्तारं क्षिप्रं निर्वासयेत्पुरात् ॥
मूलकर्माभिचारेषु कर्तव्यो द्विशतो दमः । अबीजविक्रयी यश्च बीजोत्कर्षक एव च ॥ १८३
मर्यादाभेदकश्चापि विकृतं वधमाप्नुयात् । सर्वसंकरपापिष्ठं हेमकारं नराधिप ॥ १८४
अन्याये वर्तमानं च च्छेदयेल्लवशः क्षुरैः । द्रव्यमादाय वणिजामनर्घेणावरुन्धताम् ॥ १८५
द्रव्याणां दूषको यस्तु प्रतिच्छन्नस्य विक्रयी । मध्यमं प्राप्नुयाद्दण्डं कूटकर्ता तथोत्तमम् ॥ १८६
राजा पृथक्पृथक्कुर्याद्दण्डं चोत्तमसाहसम् । शास्त्राणां यज्ञतपसां देशानां क्षेपको नरः ॥ १८७
देवतानां सतीनां च उत्तमं दण्डमर्हति । एकस्य दण्डपारुष्ये बहूनां द्विगुणो दमः ॥ १८८
कलहो यद्गतो दाप्यो दण्डश्च द्विगुणस्ततः । मध्यमं ब्राह्मणं राजा विषयाद्विप्रवासयेत् ॥
लशुनं च पलाण्डुं च शूकरं ग्रामकुक्कुटम् । तथा पञ्चनखं सर्वं भक्ष्यादन्यत्तु भक्षयेत् ॥ १९०
विवासयेत्क्षिप्रमेव ब्राह्मणं विषयात्स्वकात् । अभक्ष्यभक्षणे दण्ड्यः शूद्रो भवति कृष्णलम् ॥
ब्राह्मणक्षत्रियविशां चतुस्त्रिद्विगुणं स्मृतम् । यः साहसं कारयति स दण्ड्यो द्विगुणं दमम् ॥
यस्त्वेवमुक्त्वाऽहं दाता कारयेत्स चतुर्गुणम् । संदिष्टस्याप्रदाता च समुद्रगृहभेदकः ॥ १९३

---

१ ग. च चोराणां भक्ष्यभोज्यादिदा° । २ घ. भक्तदा° । ३ घ. सर्वदा । ४ ग. ङ. °पजप्तृश्च । ५ ङ छित्त्वा । ६ घ. पूर्वनिबद्धं तु तडा° । ७ घ. स्वश्वणं । ८ घ. भेत्ता । ९ क. ख. वंशासनम् । को° । १० घ. °मेध्यं नराधमः । स । ११ ग. °नातुरः । स° । १२ ङ. °स्तममे° । १३ क. ख. °त् । अजङ्गमोऽथ° । १४ ङ. °मे । संक्रमध्व° । घ. °मे । संक्रमाप्रामय° । १५ ग. क्रमस्य । १६ ग. घ. ङ. सर्वे । १७ ग. °क्रयाश्चैत्र बी° । १८ ग. घ. ङ. °जोत्कृष्टस्तथैव । १९ ख. °तं बन्धसा° । २० ग. घ. यतीनां । २१ घ. गृञ्जनं । २२ ग. °नखात्सर्वभक्ष्यादन्यत्र भक्षिणम् । वि° ।

पञ्चाशत्पणिको दण्डस्तयोः कार्यो महीक्षिता । अस्पृश्यं च स्पृशन्नार्यो ह्ययोग्यो योग्य-
कर्मकृत् ॥ १९५
पुंस्त्वहर्ता पशूनां च दासीगर्भविनाशकृत् । शूद्रप्रव्रजितानां च दैवे पित्र्ये च भोजकः ॥ १९६
अव्रजन्वाढमुक्त्वा तु तथैव च निमन्त्रणे । एते कार्षापणशतं सर्वे दण्ड्या महीक्षिता ॥ १९७
दुःखोत्पादि गृहे द्रव्यं क्षिपन्दड्यस्तु कृष्णलम् । पितापुत्रविरोधे च साक्षिणां द्विशतो दमः ॥
स्यान्नरश्च तथाऽर्यः स्यात्तस्याऽप्यष्टशतो दमः ॥ १९८
*तुलाशासनमानानां कूटकृन्नानकस्य च । एभिश्च व्यवहर्ता च स दण्ड्यो दममुत्तमम् ॥
विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम् । विकर्णनासिकां व्योष्ठीं कृत्वा गोभिः प्रमापयेत् ॥
ग्रामस्य दाहका ये च ये च क्षेत्रस्य वेश्मनः । राजपत्न्यभिगामी च दग्धव्यास्ते कटाग्निना ॥
ऊनं वाऽप्यधिकं चापि लिखेद्यो राजशासनम् । पारदारिकचौरं वा मुञ्चतो दण्ड उत्तमः ॥
अभक्ष्येण द्विजं दूष्य दण्ड्य उत्तमसाहसम् । क्षत्रियं मध्यमं वैश्यं प्रथमं शूद्रमर्धकम् ॥ २०३
मृताङ्गलग्नविक्रेतुर्गुरुं ताडयतस्तथा । राजयानासनारोढुर्दण्ड उत्तमसाहसः ॥ २०४
यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः । तमायान्तं पुनर्जित्वा दण्डयेद्द्विगुणं दमम् ॥
आह्वानकारी मध्यः स्यादनाह्वाने तथाऽऽह्वयन् । दाण्डिकस्य च यो हस्तादभियुक्तः पलायते
हीनः पुरुषकारेण तं दण्ड्याद्दाण्डिको धनम् । प्रेष्यापराधात्प्रेष्यस्तु स दण्ड्यश्चार्धमेव च ॥
दण्डार्थं नियमार्थं च नीयमानेषु बन्धनम् । यदि कश्चित्पलायेत दण्डश्चाष्टगुणो भवेत् ॥
अनिन्दिते विवादे तु नखरोमावतारणम् । कारयेद्यः स पुरुषो मध्यमं दण्डमर्हति ॥ २०९
बन्धनं चाप्यवध्यस्य बलान्मोचयते तु यः । वध्यं विमोचयेद्यस्तु दण्ड्यो द्विगुणदण्डभाक्
दुर्दृष्टव्यवहाराणां सभ्यानां द्विगुणो दमः । राज्ञा त्रिंशद्गुणो दण्डः प्रक्षेप्य उदके भवेत् ॥
अल्पदण्डेऽधिकं कुर्याद्विपुले चाल्पमेव च । ऊनाधिकं तु तं दण्डं सभ्यो दद्यात्स्वकाद्गृहात्
यावानवध्यस्य वधे तावान्वध्यस्य रक्षणे । अधर्मो नृपतेर्दृष्ट एतयोरुभयोरपि ॥ २१३
ब्राह्मणं नैव हन्यात्तु सर्वपापेष्ववस्थितम् । प्रवासयेत्स्वकाद्राष्ट्रात्समग्रधनसंयुतम् ॥ २१४
न जातु ब्राह्मणं वध्यात्पातकं त्वधिकं भवेत् । यस्मात्तस्मात्प्रयत्नेन ब्रह्महत्यां विवर्जयेत् ॥
अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चाधिगच्छति ॥

* एतदर्धस्थानेऽयं पाठो घ. च. पुस्तकयोः—तुलानां कूटकृत्स्तेनः पिशुनश्च विशेषत इति ।

१ क ख. °स्तत्र का° । २ ग. °स्पृश्यां च स्पृशन्नरभियोग्ये यो° । ३ घ. °धरस्तथा । शू° । ङ. °भंकर-स्तथा शू° । ४ ग. घ. मः । सान्तरश्च तर्योर्थः । ५ क कृन्मान° । ग. °कृत्कन° । ६ ङ. विकृत्तकर्णनासोष्ठीं । ७ घ. °ष्ठीं गोभिः सह विवासये° । ८ ग ङ. च प्रवासयेत् । ९ ख. घ. खलस्य । १० ग. अभीक्ष्णेन । ११ ग. °ध्यन्दण्डय । १२ ख. °तुर्गां तु ता । १३ ग. °रं लङ्घयितुस्त । १४ ग. राज्ञश्चैवास° । १५ ग. °नाहूतं त° । १६ क. ख. ङ. °न् । दण्डि° । १७ ग. घ. भीतः । १८ ग. प्रेष्योपचारप्रेष्य° । १९ घ. °ध्यस्य स दण्डश्चा° । २० ग. घ. चाथ वध्ये वा व° । २१ ग. मध्ये । २२ क. ख. दण्डाद्द्विगुणभाग्भवेत् । दु° । २३ घ. दुर्दिष्ट° । २४ क. ख. ग. घ. °ष्टस्तथा वध्यस्य मोक्षणे ब्रा° । २५ ग. घ.° म् । सद्यो विवासयेद्रा° ।

ज्ञात्वाऽपराधं पुरुषस्य राजा कालं तथा चानुमतं द्विजानाम् ।
दण्ड्येषु दण्डं परिकल्पयेत्तु यो यस्य युक्तः स समीक्ष्य कुर्यात् ॥ २१७

इति श्रीमात्स्ये महापुराणे राजधर्मे दण्डप्रणयनं नाम सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ११८६० ॥

---

अथाष्टाविंशत्यधिकद्विशततमोऽध्यायः ।

---

मनुरुवाच—
दिव्यान्तरिक्षभौमेषु या शान्तिरभिधीयते । तामहं श्रोतुमिच्छामि महोत्पातेषु केशव ॥१
मत्स्य उवाच—
अथातः संप्रवक्ष्यामि त्रिविधामद्भुतादिषु । विशेषेण तु भौमेषु शान्तिः कार्या तथा भवेत्
अभयाचान्तरिक्षेषु सौम्या दिव्येषु पार्थिव । विजिगीषुः परं राजन्भूतिकामस्तु यो भवेत्॥
विजिगीषुः परानेवमभियुक्तस्तथा परैः । तथाऽभिचारशङ्कायां शत्रूणामभिनाशने ॥ ४
भये महति संप्राप्ते अभया शान्तिरिष्यते । राजयक्ष्माभिभूतस्य क्षतक्षीणस्य चाप्यथ ॥५
सौम्या प्रशस्यते शान्तिर्यज्ञकामस्य चाप्यथ । भूकम्पे च समुत्पन्ने प्राप्ते चान्नक्षये तथा ॥ ६
अतिवृष्ट्यामनावृष्ट्यां शलभानां भयेषु च । प्रमत्तेषु च चौरेषु वैष्णवी शान्तिरिष्यते ॥ ७
पशूनां मारणे प्राप्ते नराणामपि दारुणे । भूतेषु दृश्यमानेषु रौद्री शान्तिस्तथेष्यते ॥ ८
वेदनाशे समुत्पन्ने जने जाते च नास्तिके । अपूज्यपूजने जाते ब्राह्मी शान्तिस्तथेष्यते ॥ ९
भविष्यत्यभिषेके च परचक्रभयेऽपि च । स्वराष्ट्रभेदेऽरिवधे रौद्री शान्तिः प्रशस्यते ॥ १०
त्र्यहातिरिक्ते पवने भक्ष्ये सर्वविगर्हिते । वैकृते वातजे व्याधौ वायवी शान्तिरिष्यते ॥ ११
अनावृष्टिभये जाते प्राप्ते विकृतिवर्षणे । जलाशयविकारेषु वारुणी शान्तिरिष्यते ॥ १२
अभिशापभये प्राप्ते भार्गवी च तथैव च । जाते प्रसववैकृत्ये प्राजापत्या महाभुज ॥ १३
उपस्कराणां वैकृत्ये त्वाष्ट्री पार्थिवनन्दन । बालानां शान्तिकामस्य कौमारी च तथा नृप १४
कुर्याच्छान्तिमथाऽऽग्नेयीं संप्राप्ते वह्निवैकृते । आज्ञाभङ्गे तु संजाते तथा भृत्यादिसंक्षये ॥१५
अश्वानां शान्तिकामस्य तद्विकारे समुत्थिते । अश्वानां कामयानस्य गान्धर्वी शान्तिरिष्यते
गजानां शान्तिकामस्य तद्विकारे समुत्थिते । गजानां कामयानस्य शान्तिराङ्गिरसी भवेत् ॥
पिशाचादिभये जाते शान्तिर्वै नैर्ऋती स्मृता । अपमृत्युभये जाते दुःस्वप्ने च तथा स्थिते ॥
याम्यां तु कारयेच्छान्तिं प्राप्ते तु मारके तथा । धननाशे समुत्पन्ने कौबेरी शान्तिरिष्यते ॥ १९
वृक्षाणां च तथाऽर्थानां वैकृते समुपस्थिते । भूतिकामस्तथा शान्तिं पार्थिवीं प्रतियोजयेत् ॥
प्रथमे दिनयामे च रात्रौ वा मनुजोत्तम । हस्ते स्वातौ च चित्रायामादित्ये चाऽऽश्विने तथा ॥
अर्याम्णि सौम्यजातेषु वायव्यां त्वद्भुतेषु च । द्वितीये दिनयामे तु रात्रौ च रविनन्दन ॥ २२

---

१ ङ. च. 'तु पापस्य यथच्छमनं च. कु' । २ ग. घ. प्रवृत्तेषु । ३ ग. मारके । ४ ङ. इयते सर्वा यमशा° । ५ ग. °ने रक्षे सर्वदिगुत्थिते । वै° । घ. °ने रूक्षे सर्वदिगुत्थिते । वै° । ६ घ. त्वाभिसं° । ७ क. ख. नरके । घ. ङ. मरके । ८ ङ. °वीं संप्रयो° । ९ ग. घ. °म्णि सोमजा° :

पुष्याग्नेयविशाखासु पित्र्यासु भरणीषु च । उत्पातेषु तथा मांग आग्नेयीं तेषु कारयेत् ॥ २३
तृतीये दिनयामे च रात्रौ च रविनन्दन । रोहिण्यां वैष्णवे ब्राह्मे वासवे वैश्वदेवते ॥ २४
ज्येष्ठायां च तथा मैत्रे ये भवन्त्यद्भुताः क्वचित् । ऐन्द्री तेषु प्रयोक्तव्या शान्ती रविकुलोद्वह ॥
चतुर्थे दिनयामे च रात्रौ वा रविनन्दन । सार्पे पौष्णे तथाऽऽर्द्रायामहिर्बुध्न्ये च दारुणे ॥२६
मूले वरुणदैवत्ये ये भवन्त्यद्भुतास्तथा । वारुणी तेषु कर्तव्या महाशान्तिर्महीक्षिताम् ॥ २७
[*मित्रमण्डलवेलासु ये भवन्त्यद्भुताः क्वचित् । तत्र शान्तिद्वयं कार्यं निमित्तेषु च नान्यथा
निर्निमित्तकृता शान्तिर्निमित्तेनोपयुज्यते ॥ २८

बाणप्रहारा न भवन्ति यद्वद्राजन् नृणां संनहनैर्युतानाम् ।
दैवोपघाता न भवन्ति तद्वद्धर्मात्मनां शान्तिपरायणानाम् ॥ २९ ॥

इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तिर्नामाष्टविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ११८८९ ॥

---

अथैकोनत्रिंशदधिकद्विशततमोऽध्यायः ।

---

मनुरुवाच—
अद्भुतानां फलं देव शमनं च तथा वद । +त्वं हि वेत्सि विशालाक्ष ज्ञेयं सर्वमशेषतः ॥ १
मत्स्य उवाच—
अत्र ते वर्णयिष्यामि यदुवाच महातपाः । अत्रये वृद्धगर्गस्तु सर्वधर्मभृतां वरः ॥ २
+सरस्वत्याः सुखासीनं गर्गं स्रोतसि पार्थिव । पप्रच्छासौ महातेजा अत्रिर्मुनिजनप्रियम् ॥
अत्रिरुवाच—
नश्यतां पूर्वरूपाणि जनानां कथयस्व मे । नगराणां तथा राज्ञां त्वं हि सर्वं वदस्व माम् ॥ ४
गर्ग उवाच—
पुरुषापचाराश्रियतमपरज्यन्ति देवताः । ततोऽपरागाद्देवानामुपसर्गः प्रवर्तते ॥ ५
दिव्यान्तरिक्षभौमं च त्रिविधं संप्रकीर्तितम् । ग्रहर्क्षवैकृतं दिव्यमान्तरिक्षं निबोध मे ॥ ६
उल्कापातो दिशां दाहः परिवेषस्तथैव च । गन्धर्वनगरं चैव वृष्टिश्च विकृता तु या ॥ ७
एवमादीनि लोकेऽस्मिन्नान्तरिक्षं विनिर्दिशेत् । चरस्थिरभवो भौमो भूकम्पश्चापि भूमिजः
जलाशयानां वैकृत्यं भौमं तदपि कीर्तितम् । भौमे त्वल्पफलं ज्ञेयं चिरेण च विपच्यते ॥ ९
अभ्रजं मध्यफलदं मध्यकालफलप्रदम् । अद्भुते तु समुत्पन्ने यदि वृष्टिः शिवा भवेत् ॥ १०
सप्ताहाभ्यन्तरे ज्ञेयमद्भुतं निष्फलं भवेत् । अद्भुतस्य विपाकश्च विना शान्त्या न दृश्यते ॥

---

* धनुश्चिह्नान्तर्गतग्रन्थो ङ पुस्तके नास्ति । + एतस्मिन्नर्थेऽयं पाठो ङ. पुस्तके—यथा वेत्स्याम्यहं सम्य० क्प्रब्रूहि वदतां वरेति । * न विद्यतेऽयं श्लोको ङ. पुस्तके ।

---

१ क. ख. 'ग्नेये वि' । २ ग. चित्रासु । ङ. 'ष्याजभ' । ३ ग. त्वाता ये त° । ४ क. ख. भाग्ये । ५ क. ख. श्वदेव' । ६ घ. मूल्ये । ७ ध. ङ. 'ता । भिन्नम' । ८ घ. ङ. च. वर्तयि° । ९ क. 'स्वल्पां सु° । घ. 'स्वत्यामुपासी° । १० घ. 'जं चाप्यफलदमल्पकालफ' । ११ ङ. 'दं शान्त्या चैवोपश्याम्यति । अ' ।

त्रिभिर्वर्षैस्तथा ज्ञेयं सुमहद्भयकारकम्। राज्ञः शरीरे लोके च पुरद्वारे पुरोहिते ॥ १२
पाकमायाति पुत्रेषु तथा वै कोशवाहने। ऋतुस्वभावाद्राजेन्द्र भवन्त्यद्भुतसंज्ञिताः ॥ १३
शुभावहास्ते विज्ञेयास्तांश्च मे गदतः शृणु। वज्राशनिमहीकम्पसंध्यानिर्घातनिःस्वनाः १४
परिवेषरजोधूमरक्तार्कास्तमयोदयाः। द्रुमोद्भेदकरस्नेहो बहुशः सफलोद्गमः॥ १५
गोपक्षिमधुवृद्धिश्च शुभानि मधुमाधवे। ऋक्षोल्कापातकलुषं कपिलार्केन्दुमण्डलम्॥ १६
कृष्णश्वेतं तथा पीतं धूसरध्वान्तलोहितम्। रक्तपुष्पारुणं सांध्यं नभः क्षुब्धार्णवोपमम् ॥
सरितां चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत्। शक्रायुधपरीवेषं विद्युदुल्काधिरोहणम्॥१८
कम्पोद्वर्तनवैकृत्यं ह्रसनं दारणं क्षितेः। नद्युदपानसरसां विधूनतरणप्लवाः॥ १९
शृङ्गिणां च वराहाणां वर्षासु शुभमिष्यते। शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम्॥ २०
रक्षोभूतपिशाचानां दर्शनं वागमानुषी। दिशो धूमान्धकाराश्च सनभोवनपर्वताः॥ २१
उच्चैः सूर्योदयास्तौ च हेमन्ते शोभनाः स्मृताः। दिव्यस्त्रीरूपगन्धर्वविमानाद्भुतदर्शनम् ॥
ग्रहनक्षत्रताराणां दर्शनं वागमानुषी। गीतवादित्रनिर्घोषो वनपर्वतसानुषु॥ २३
सस्यवृद्धी रसोत्पत्तिः शरत्काले शुभाः स्मृताः। हिमपातानिलोत्पातविरूपाद्भुतदर्शनम्
कृष्णाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम्। चित्रगर्भोद्भवः स्त्रीपुं गोजाश्वमृगपक्षिषु ॥
पत्राङ्कुरलतानां च विकाराः शिशिरे शुभाः॥ २५

ऋतुस्वभावेन विनाऽद्भुतस्य जातस्य दृष्टस्य तु शीघ्रमेव।
यथागमं शान्तिरनन्तरं तु कार्या यथोक्ता वसुधाधिपेन॥ २६

इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तिकोत्पत्तिर्नामैकोनत्रिंशदधिकद्विशततमोऽध्यायः॥ २२९॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ ११९१५ ॥

---

अथ त्रिंशदधिकद्विशततमोऽध्यायः।

---

* गर्ग उवाच—

देवतार्चाः प्रनृत्यन्ति वेपन्ते प्रज्वलन्ति च। वमन्त्यग्निं तथा धूमं स्नेहं रक्तं तथा वसाम्॥ १
आरटन्ति रुदन्त्येताः प्रस्विद्यन्ति हसन्ति च। उत्तिष्ठन्ति निषीदन्ति प्रधावन्ति धमन्ति च॥
भुञ्जते विक्षिपन्ते वा कोशप्रहरणध्वजान् । अवाङ्मुखा वा तिष्ठन्ति स्थानात्स्थानं भ्रमन्ति च॥ ३
वमन्त्यग्निं तथा धूमं स्नेहं रक्तं तथा वसाम्। एवमाद्या हि दृश्यन्ते विकाराः सहसोत्थिताः ॥
लिङ्गायतनविप्रेषु तत्र वासं न रोचयेत्॥ ४
राज्ञो वा व्यसनं तत्र स च देशो विनश्यति। देवयात्रासु चोत्पातान्दृष्ट्वा देशभयं वदेत्॥ ५

* एषोऽध्यायो न विद्यते ङ. च. पुस्तकयोः।

१ घ. ङ. च. पुरे दारे। २ घ. ङ. °मनोद°। ३ ङ. च द्रुमेभ्यो भवति स्ने°। ४ क. °फलद्रुमः। ५ घ. ङ. °म्। अनभिज्वलनस्फोटधू°। ६ क. ख. घ. नवोद°। ७ घ. °क्षोयक्षपि°। ङ. च. °क्षोयक्षादिसत्त्वानां। ८ ङ. °ताः। देवगन्धर्वरूपं च वि°। ९ च. °वृगजा°। १० घ. °न चित्रेषु। ११ घ. वासो न रोचते। रा°।

पितामहस्य हर्म्येषु तत्र वासं न रोचयेत् । पशूनां रुद्रजं ज्ञेयं नृपाणां लोकपालजम् ॥ ६
ज्ञेयं सेनापतीनां तु यत्स्यात्स्कन्दविशाखजम् । लोकानां विष्णुवस्विन्द्रविश्वकर्मसमुद्भवम् ] ॥ ७
विनायकोद्भवं ज्ञेयं गणानां ये तु नायकाः । देवप्रेष्यान्नृपप्रेष्या देवस्त्रीभिर्नृपस्त्रियः ॥ ८
वासुदेवोद्भवं ज्ञेयं ग्रहाणामेव नान्यथा । देवतानां विकारेषु श्रुतिवेत्ता पुरोहितः ॥ ९
देवतार्चां तु गत्वा वै स्नानमाच्छाद्य भूषयेत् । पूजयेच्च महाभाग गन्धमाल्यान्नसंपदा ॥ १०
मधुपर्केण विधिवदुपातिष्ठेदनन्तरम् । तल्लिङ्गेन च मन्त्रेण स्थालीपाकं यथाविधि ॥
पुरोधा जुहुयाद्वह्नौ सप्तरात्रमतन्द्रितः ॥ ११

विप्राश्च पूज्या मधुरान्नपानैः सदक्षिणं सप्तदिनं नरेन्द्र ।
प्राप्तेऽष्टमेऽह्नि क्षितिगोप्रदानैः सकाञ्चनैः शान्तिमुपैति पापम् ॥ १२

इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तावर्चाधिकारो नाम त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ ११९२७ ॥

---

अथैकत्रिंशदधिकद्विशततमोऽध्यायः ।

---

गर्ग उवाच—
अनग्निर्दीप्यते यत्र राष्ट्रे यस्य निरिन्धनः । न दीप्यते चेन्धनवांस्तद्राष्ट्रं पीड्यते नृपैः ॥ १
प्रज्वलेदप्सु मांसं वा तदर्धं वाऽपि किंचन । प्राकारं तोरणं द्वारं नृपवेश्म सुरालयम् ॥ २
एतानि यत्र दीप्यन्ते तत्र राज्ञो भयं भवेत् । विद्युता वा प्रदह्यन्ते तदाऽपि नृपतेर्भयम् ॥ ३
अनैशानि तमांसि स्युर्विना पांशुरजांसि च । धूमश्चानग्निजो यत्र तत्र विंद्यान्महाभयम् ॥ ४
तर्डिस्त्वनभ्रे गगने भयं स्याद्वृक्षवर्जिते । दिवा सतारे गगने तथैव भयमादिशेत् ॥ ५
ग्रहनक्षत्रवैकृत्ये ताराविषमदर्शने । पुरवाहनयानेषु चतुष्पान्मृगपक्षिषु ॥ ६
आयुधेषु च दीप्तेषु धूमायत्सु तथैव च । निर्गमत्सु च कोशाच्च सङ्ग्रामस्तुमुलो भवेत् ॥ ७
विनाऽग्निं विस्फुलिङ्गाश्च दृश्यन्ते यत्र कुत्रचित् । स्वभावाच्चापि पूर्यन्ते धनूंषि विकृतानि च
विकारश्चाऽऽयुधानां स्यात्तत्र सङ्ग्राममादिशेत् । त्रिरात्रोपोषितश्चात्र पुरोधाः सुसमाहितः
समिद्भिः क्षीरवृक्षाणां सर्षपैश्च घृतेन च । होमं कुर्यादग्निमन्त्रैर्ब्राह्मणांश्चैव भोजयेत् ॥ १०

दद्यात्सुवर्णं च तथा द्विजेभ्यो गाश्चैव वस्त्राणि तथा भुवं च ।
एवं कृते पापमुपैति नाशं यदग्निवैकृत्यभवं द्विजेन्द्रं ॥ ११

इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तावग्निवैकृत्यं नामैकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ ११९३८ ॥

---

१ ग. 'धुनाऽन्नं° । २ ङ. °ष्ट्रे भृशमनिष्टदः । न° । च. °ष्ट्रे भृशमनिष्टकृत् । न । ३ ङ. °लेदाशु मार्गे वा तथार्धे वासिकेन च । प्रासादतो° । ४ क. ख. मांसं । ५ क. ख. तथाऽर्द्धे वा° । ६ ग. दह्यन्ते । ७ क. ख. विन्द्यान्म° । ८ ग. 'विद्धमन्ते गगने भयं स्यान्मेधव° । ९ ङ. च °त् । अनारोप्याभिपू° । १० ङ. च. नृपेन्द्र ।

अथ द्वात्रिंशदधिकद्विशततमोऽध्यायः ।

गर्ग उवाच—

पुरेषु येषु दृश्यन्ते पादपा देवचोदिताः । रुदन्तो वा हसन्तो वा स्रवन्तो वा रसान्बहून् ॥ १
अरोगा वा विना वातं शाखां मुञ्चन्त्यथ द्रुमाः । फलं पुष्पं तथाऽकाले दर्शयन्ति त्रिहायनाः
पूर्ववत्स्वं दर्शयन्ति फलं पुष्पं तथाऽन्तरे । क्षीरं स्नेहं तथा रक्तं मधु तोयं स्रवन्ति च ॥ ३
शुष्यन्त्यरोगाः सहसा शुष्का रोहन्ति वा पुनः । उत्तिष्ठन्तीह पतिताः पतन्ति च तथोत्थिताः
तत्र वक्ष्यामि ते ब्रह्मन्विपाकं फलमेव च । रोदने व्याधिमभ्येति हसने देशविभ्रमम् ॥ ५
शाखाप्रपतनं कुर्यात्सङ्ग्रामे योधपातनम् । बालानां मरणं कुर्युरकाले पुष्पिता द्रुमाः ॥ ६
स्वराष्ट्रभेदं कुरुते फलपुष्पमथान्तरे । क्षयः सर्वत्र गोक्षीरे स्नेहे दुर्भिक्षलक्षणम् ॥ ७
वाहनापचयं मद्ये रक्ते सङ्ग्राममादिशेत् । मधुस्रावे भवेद्व्याधिर्जलस्रावे न वर्षति ॥ ८
अरोगशोषणं ज्ञेयं ब्रह्मन्दुर्भिक्षलक्षणम् । शुष्केषु संप्ररोहस्तु वीर्यमन्नं च हीयते ॥ ९
उत्थाने पतितानां च भयं भेदकरं भवेत् । स्थानात्स्थानं तु गमने देशभङ्गस्तथा भवेत् ॥ १०
ज्वलत्स्वपि च वृक्षेषु रुदत्स्वपि धनक्षयम् । एतत्पूजितवृक्षेषु सर्वं राज्ञो विपद्यते ॥ ११
पुष्पे फले वा विकृते राज्ञो मृत्युं तथाऽऽदिशेत् । अन्येषु चैव वृक्षेषु वृक्षोत्पातेष्वतन्द्रितः ॥ १२
आच्छादयित्वा तं वृक्षं गन्धमाल्यैर्विभूषयेत् । वृक्षोपरि तथा छत्रं कुर्यात्पापप्रशान्तये ॥ १३
शिवमभ्यर्चयेद्देवं पशुं चास्मै निवेदयेत् । रुद्रेभ्य इति वृक्षेषु हुत्वा रुद्रं जपेत्ततः ॥ १४

मध्वाज्ययुक्तेन तु पायसेन संपूज्य विप्रांश्च भुवं च दद्यात् ।
गीतेन नृत्येन तथाऽर्चयेत्तु देवं हरं पापविनाशहेतोः ॥ १५

इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तौ वृक्षोत्पातप्रशमनं नाम द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ११९५३ ॥

अथ त्रयस्त्रिंशदधिकद्विशततमोऽध्याय. ।

गर्ग उवाच—

अतिवृष्टिरनावृष्टिर्दुर्भिक्षादि भयं मतम् । अनृतौ तु दिवाऽनन्ता वृष्टिर्ज्ञेया भयानका ॥ १
अनभ्रे वैकृता चैव विज्ञेया राजमृत्यवे । शीतोष्णानां विपर्यासे नृपाणां रिपुजं भयम् ॥ २
शोणितं वर्षते यत्र तत्र शस्त्रभयं भवेत् । अङ्गारपांशुवर्षेषु नगरं तद्विनश्यति ॥ ३
मज्जास्थिस्नेहमांसानां जनमारभयं भवेत् । फलं पुष्पं तथा धान्यं परेणातिभयाय तु ॥ ४
पांशुजन्तूपलानां च वर्षतो रोगजं भयम् । * छिद्रे वाऽन्नप्रवर्षेण सस्यानां भीतिवर्धनम् ॥ ५

* एतदर्धस्थानेऽयं पाठो ङ. पुस्तके—चित्रं तत्र प्रवर्षातः शस्यानामार्तिवर्धनम् । इति ।

१ क. ख. मूलं । २ क. ख. घ. कालं । ३ क. ख. घ. कुर्याद्बालानां फलपुष्पता । स्व° । ४ ग. °क्षणं परम् । वा । ५ ङ. °स्त्वल्पेषु वृ° । ६ घ. ङ. °त् । मूलेभ्य इति षड्होमान्कृत्वा । ७ घ. °न्यं हिरण्यान्यभयानि तु । ८ ग. छिद्रमभ्रप्रवर्षे च स° । घ. छिद्रं समनुवर्षी च स° ।

विरजस्के रवौ व्यभ्रे यदा छाया न दृश्यते। दृश्यते तु प्रतीपा वा तत्र देशभयं भवेत्॥ ६
निरभ्रे वाऽथ रात्रौ वा श्वेतं याम्योत्तरेण तु। इन्द्रायुधं तथा दृष्ट्वा उल्कापातं तथैव च॥ ७
दिग्दाहपरिवेषौ च गन्धर्वनगरं तथा। परचक्रभयं ब्रूयाद्देशोपद्रवमेव च॥ ८
सूर्येन्दुपर्जन्यसमीरणानां यागस्तु कार्यो विधिवद्द्विजेन्द्र।
धनानि गौः काञ्चनदक्षिणा च देया द्विजानामघनाशहेतोः॥ ९

इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तौ वृष्टिवैकृतिप्रशमनं नाम त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः॥ २३३॥
आदितः श्लोकानां समष्ट्यङ्काः॥ ११९६२॥

---

अथ चतुस्त्रिंशदधिकद्विशततमोऽध्यायः।

---

* गर्ग उवाच—
नगरादपसर्पन्ते समीपमुपयान्ति च। नद्यो ह्रदप्रस्रवाणि विरसाश्च भवन्ति च॥ १
विवर्णं कलुषं तप्तं फेनवज्जन्तुसंकुलम्। स्नेहं क्षीरं सुरां रक्तं वहन्ते वाऽऽकुलोदकाः॥ २
षण्मासाभ्यन्तरे तत्र परचक्रभयं भवेत्। जलाशया नदन्ते वा प्रज्वलन्ति कथंचन॥ ३
विमुञ्चन्ति तथा ब्रह्मञ्ज्वालाधूमरजांसि च। अखाते वा जलोत्पत्तिः[1] सुसत्त्वा वा जलाशयाः
संगीतशब्दाः श्रूयन्ते जनमारभयं भवेत्। दिव्यमम्भोभयं सर्पिर्मधुतैलावसेचनम्॥ ५
जप्तव्या वारुणा मन्त्रास्तैश्च होमो जले भवेत्॥ ६
मध्वाज्ययुक्तं परमान्नमत्र देयं द्विजानां द्विजभोजनार्थम्।
गावश्च देयाः सितवस्त्रयुक्तास्तथोदकुम्भाः सलिलाघशान्त्यै॥ ७

इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तौ सलिलाशयवैकृत्यं नाम चतुस्त्रिंशदधिकद्विशततमोऽध्यायः॥ २३४॥
आदितः श्लोकानां समष्ट्यङ्काः॥ ११९६९॥

---

अथ पञ्चत्रिंशदधिकद्विशततमोऽध्यायः।

---

गर्ग उवाच—
अकालप्रसवा नार्यः कालातीतप्रजास्तथा। विकृतप्रसवाश्चैव युग्मसंप्रसवास्तथा॥ १
अमानुषा ह्यतुण्डाश्च संजातव्यसनास्तथा। हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः
पशवः पक्षिणश्चैव तथैव च सरीसृपाः। विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत्॥ ३
विवासयेत्तान्[2]नृपतिः स्वराष्ट्रात्स्त्रियश्च पूज्याश्च ततो द्विजेन्द्राः[3]।
किमिच्छकैर्ब्राह्मणतर्पणैश्च लोके ततः शान्तिमुपैति पापम्॥ ४

इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तौ स्त्रीप्रसववैकृत्यं नाम पञ्चत्रिंशदधिकद्विशततमोऽध्यायः॥ २३५॥
आदितः श्लोकानां समष्ट्यङ्काः॥ ११९७३॥

---

* इत आरभ्याध्यायचतुष्टयं न विद्यते घ. पुस्तके।

१ घ. 'त्तिः ससत्वा। ङ. 'त्तिः ससिन्धवो ज°। २ ग. च. 'त्। निर्वास°। ३ क. ख. °न्द्राः'। कस्येच्छ°। च. 'न्द्राः। एवं कृतैर्ब्रा'। ४ क. ख. ग. °र्पणं च लो'। ५ च. सत्सम्।

अथ षट्त्रिंशदधिकद्विशततमोऽध्यायः ।

---

गर्ग उवाच—

यान्ति यानान्ययुक्तानि युक्तान्यपि न यान्ति च । चोद्यमानानि तत्र स्यान्महद्भयमुपस्थितम् ॥ १

वाद्यमाना न वाद्यन्ते वाद्यन्ते चाप्यनाहताः । अचलाश्च चलन्त्येव न चलन्ति[1] चलानि च ॥

आकाशे तूर्यनादाश्च गीतगन्धर्वनिःस्वनाः । काष्ठदर्वीकुठारादि विकारं कुरुते यदि ॥ ३

गावो लाङ्गूलसंघैश्च स्त्रियः स्त्री च विघातयेत् । उपस्कारादिविकृतौ घोरं शस्त्रभयं[2] भवेत्[3] ॥

वायोस्तु पूजां[4] द्विजसक्तुमिश्च कृत्वा नियुक्तांश्च जपेच्च मन्त्रान् ।
दद्यात्प्रभूतं परमान्नमत्र सदक्षिणं तेन शमोऽस्य भूयात् ॥ ५

इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तावुपस्करवैकृत्यं नाम षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ११९७८ ॥

---

अथ सप्तत्रिंशदधिकद्विशततमोऽध्यायः ।

---

गर्ग उवाच—

प्रविशन्ति यदा ग्राममारण्या मृगपक्षिणः । अरण्यं यान्ति वा ग्राम्याः स्थलं यान्ति जलोद्भवाः ॥ १

स्थलजाश्च जलं यान्ति घोरं वाशन्ति निर्भयाः । राजद्वारे पुरद्वारे शिवा चाप्यशिवप्रदा ॥ २

दिवा रात्रिंचरा वाऽपि रात्रावपि दिवाचराः । ग्राम्यास्त्यजन्ति ग्रामं च शून्यतां तस्य निर्दिशेत् ॥ ३

दीप्ता वाशन्ति संध्यासु मण्डलानि च कुर्वते । वाशन्ति विस्वरं यत्र तदाऽप्येतत्फलं लभेत् ४

प्रदोषे कुक्कुटो वाशेद्धेमन्ते वाऽपि कोकिलः । अर्कोदयेऽर्काभिमुखी शिवा रौति भयं वदेत् ॥

गृहं कपोतः प्रविशेत्क्रव्यादो मूर्ध्नि लीयते । मधु[5] वा मक्षिकाः कुर्युर्मृत्युर्गृहपतेर्भवेत् ॥ ६

प्राकारद्वारगेहेषु तोरणापणवीथिषु । केतुच्छत्रायुधाद्येषु क्रव्यादं प्रपतेद्यदि ॥ ७

जायन्ते वाऽथ वल्मीका मधु वा स्यन्दते यदि । स देशो नाशमायाति राजा वा म्रियते तथा ॥

मूषकाञ्छलभान्दृष्ट्वा प्रभूतं क्षुद्भयं[6] भवेत् । काष्ठोल्मुकास्थिशृङ्गाढ्याः[7] श्वानो मर्कटवेदनाः[8]

दुर्भिक्षवेदना ज्ञेया काका धान्यमुखा यदि । जनानभिभवन्तीह निर्भया रणवेदिनः ॥ १०

काको मैथुनसक्तश्च श्वेतस्तु यदि दृश्यते[9] । राजा वा म्रियते तत्र स च देशो विनश्यति ॥ ११

उलूको वाशते यत्र नृपद्वारे तथा गृहे । ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च ॥ १२

मृगपक्षिविकारेषु कुर्याद्धोमं सदक्षिणम् । देवाः कपोता इति वा जप्तव्याः पञ्चभिर्द्विजैः

---

१ ङ. °न्ति च चालिताः । आ° । २ ग. शत्रुभ° । ३ ङ. च. स्मृतम् । ४ ङ. च. पूजामिहवं च कुर्याद्वायोस्तु मन्त्रैर्जपमेव नित्यम् । दत्त्वा प्रभू° । ५ ग. स्वा तदुक्तां° । ६ ङ. च. °महव्यं स° । ७ ग. मक्षिकाः पटलं कु° । ८ ग. °नो मारकवेदकाः । दु° । ९ क. ख. ग. दृश्यते ।

गावश्च देया विधिवद्द्विजेभ्यः सकाञ्चना वस्त्रयुगोत्तरीयाः ।
एवं कृते शान्तिमुपैति पापं मृगैर्द्विजैर्वा विनिवेदितं यत् ॥ १४

इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तौ मृगपक्षिवैकृत्यं नाम सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ ११९९२ ॥

---

अथाष्टात्रिंशदधिकद्विशततमोऽध्यायः ।

---

गर्ग उवाच—

प्रासादतोरणाट्टालद्वारप्राकारवेश्मनाम् । निर्निमित्तं तु पतनं दृढानां राजमृत्यवे ॥ १
रजसा वाऽथ धूमेन दिशो यत्र समाकुलाः । आदित्यचन्द्रताराश्च विवर्णा भयवृद्धये॥२
राक्षसा यत्र दृश्यन्ते ब्राह्मणाश्च विधर्मिणः । ऋतवश्च विपर्यस्ता अपूज्यः पूज्यते जनैः॥
नक्षत्राणि वियोगीनि तन्महद्भयलक्षणम् । केतूदयोपरागौ च च्छिद्रं वा शशिसूर्ययोः ॥
ग्रहर्क्षविकृतिर्यत्र तत्रापि भयमादिशेत् । स्त्रियश्च कलहायन्ते बाला निघ्नन्ति बालकान्॥
क्रियाणामुचितानां च विच्छित्तिर्यत्र जायते । हूयमानस्तु यत्राग्निर्दीप्यते न च शान्तिषु॥
पिपीलिकाश्च क्रव्यादा यान्ति चोत्तरतस्तथा । पूर्णकुम्भाः स्रवन्ते च हविर्वा विप्रलुप्यते
मङ्गल्याश्च(ल्याश्च)गिरो यत्र न श्रूयन्ते समन्ततः । क्षवथुर्बाधते वाऽथ प्रहसन्ति नदन्ति च ॥
न च देवेषु वर्तन्ते यथावद्ब्राह्मणेषु च । मन्दघोषाणि वाद्यानि वाद्यन्ते विस्वराणि च॥
गुरुमित्रद्विषो यत्र शत्रुपूजारता नराः । ब्राह्मणान्सुहृदो मान्याञ्जनो यत्रावमन्यते ॥१०
शान्तिमङ्गलहोमेषु नास्तिक्यं यत्र जायते । राजा वा म्रियते तत्र स देशो वा विनश्यति ॥
राज्ञो विनाशे संप्राप्ते निमित्तानि निबोध मे । ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥
ब्राह्मणस्वानि चाऽऽदत्ते ब्राह्मणांश्च जिघांसति । न च स्मरति कृत्येषु याचितश्च प्रकुप्यति ॥
रमते निन्दया तेषां प्रशंसां नाभिनन्दति । अपूर्वं तु करं लोभात्तथा पातयते जने ॥ १४
एतेष्वभ्यर्चयेच्छक्रं सपत्नीकं द्विजोत्तम । भोज्यानि चैव कार्याणि सुराणां बलयस्तथा॥
सन्तो विप्राश्च पूज्याः स्युस्तेभ्यो दानं च दीयताम् ॥ १५

गावश्च देया द्विजपुंगवेभ्यो भुवस्तथा काञ्चनमम्बराणि ।
होमश्च कार्योऽमरपूजनं च एवं कृते पापमुपैति शान्तिम् ॥ १६

इति श्रीमात्स्ये महापुराणेऽद्भुतशान्तावुत्पातप्रशमनं नामाष्टात्रिंशदधिकद्विशततमोऽध्यायः ॥२३८॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १२००८ ॥

---

१ ग. घ. ङ. च्छिद्रता श° । २ ङ. च. व्यादाः प्रयान्ति चान्तरं तथा । ३ घ. °न्ति चान्तर° । ४ ङ. च. °तः । वेपथु° । ५ ख. ग. स्रवन्ति । ६ ग. घ. °दोऽमांस्याज्ञ° । ७ ङ °न्यान्यतो यत्रावमानिता । शा° । ८ ग. °मण्डल° । ९ ङ. च. °तश्चाभ्यसूयते । र° । १० च. नाधिगच्छति । ११ ग. °येद्विप्रं स° । ङ. च. °येच्छुक्रं ।

अथैकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

मनुरुवाच—

ग्रहयज्ञः कथं कार्यो लक्षहोमः कथं नृपैः । कोटिहोमोऽपि वा देव सर्वपापप्रणाशनः॥ १
क्रियते विधिना येन यद्दृष्टं शान्तिचिन्तकैः । तत्सर्वं विस्तराद्देव कथयस्व जनार्दन ॥ २

मत्स्य उवाच—

इदानीं कथयिष्यामि प्रसङ्गादेव ते नृप । राज्ञां धर्मप्रसक्तेन प्रजानां च हितेप्सुना ॥ ३
ग्रहयज्ञः सदा कार्यो लक्षहोमसमन्वितः । नदीनां संगमे चैव सुराणामग्रतस्तथा ॥ ४
सुषमे भूमिभागे च दैवज्ञाधिष्ठितो नृपः । गुरुणा चैव ऋत्विग्भिः सार्धं भूमिं परीक्षयेत् ॥ ५
खनेत्कुण्डं च तत्रैव सुषमं हस्तमात्रकम् । द्विगुणं लक्षहोमे तु कोटिहोमे चतुर्गुणम् ॥ ६
युग्मास्तु ऋत्विजः प्रोक्ता अष्टौ वै वेदपारगाः । कन्दमूलफलाहारा दधिक्षीराशिनोऽपि वा ॥
वेद्यां निधापयेच्चैव रत्नानि विविधानि च । सिकतापरिवेषाश्च ततोऽग्निं च समिन्धयेत् ॥ ८
गायत्र्या दशसाहस्रं मानस्तोकेन षड्गुणः । त्रिंशद्ग्रहाणां मन्त्रैश्च चत्वारो विष्णुदैवतैः ॥ ९
कूष्माण्डैर्जुहुयात्पञ्च कुसुमाद्यैस्तु षोडश । होतव्या दशसाहस्रं वादरैर्जातवेदसि ॥ १०
श्रियो मन्त्रेण होतव्याः सहस्राणि चतुर्दश । शेषाः पञ्चसहस्रास्तु होतव्यास्त्विन्द्रदैवतैः ॥
हुत्वा शतसहस्रं तु पुण्यस्नानं समाचरेत् । कुम्भैः षोडशसंख्यैश्च सहिरण्यैः सुमङ्गलैः ॥ १२
स्नापयेद्यजमानं तु ततः शान्तिर्भविष्यति । एवं कृते तु यत्किंचिद्ग्रहपीडासमुद्भवम् ॥ १३
तत्सर्वं नाशमायाति दत्त्वा वै दक्षिणां नृप । तस्मात्सर्वप्रयत्नेन प्रधाना दक्षिणा स्मृता ॥ १४
हस्त्यश्वरथयानानि भूमिवस्त्रयुगानि च । अनडुद्गोशतं दद्यादृत्विजां चैव दक्षिणाम् ॥ १५
यथाविभवसारं तु वित्तशाठ्यं न कारयेत् । मासे पूर्णे समाप्तस्तु लक्षहोमो नराधिप ॥ १६
लक्षहोमस्य राजेन्द्र विधानं परिकीर्तितम् । इदानीं कोटिहोमस्य शृणु त्वं कथयाम्यहम्॥१७
गङ्गातटेऽथ यमुनासरस्वत्योर्नरेश्वर । नर्मदादेविकायास्तु तटे होमो विधीयते ॥ १८
तत्रापि ऋत्विजः कार्या रविनन्दन षोडश । सर्वहोमे तु राजर्षे दद्याद्विभेऽथर्वा धनम् ॥ १९
ऋत्विगाचार्यसहितो दीक्षां सांवत्सरीं स्थितः । चैत्रे मासे तु संप्राप्ते कार्तिके वा विशेषतः ॥
प्रारम्भः करणीयो वा वर्त्सरं वत्सरं नृप । यजमानः पयोभक्षी फलाशी च तथाऽनघ ॥ २१
यवाँद्विव्रीहयो माषास्तिलाश्च सह सर्षपैः । पालाशाः समिधः शस्ता वसोर्धारा तथोपरि ॥
मासेऽथ प्रथमे दद्याहत्विग्भ्यः क्षीरभोजनम् । द्वितीये कृसरां दद्याद्द्भर्भकामार्थसाधनीम् ॥
तृतीये मासि संयावो देयो वै रविनन्दन । चतुर्थे मोदका देया विप्राणां प्रीतिमावहन् ॥ २४
पञ्चमे दधिभक्तं तु षष्ठे वै सक्तुभोजनम् । पूपाश्च सप्तमे देया ह्यष्टमे घृतपूपकाः ॥ २५

---

१ ङ. शास्त्रावि° । २ ग. ङ. सुसमे । ३ ङ. च. °मं तत्र मण्डपे । द्वि° । ४ ङ. च. सितवस्त्रैः परिवेष्टय त° । ५ घ. °रिधेयाश्च । ६ ङ. के षडेव च श्रि° । ७ न. षण्मनुः । ८ क. ख. °ह्यादिम° । ९ ग. घ. °मायास्तु । ङ. च. °मायां तु पा° । १० ग. ङ. च. °स्रं तदा वै जात° । ११ ग. °श । षोडशः पञ्चसाहस्रा हो° । १२ ग. पुष्पस्नानं विधीयते । कु° । ङ. च. पुष्पस्नानं विनिर्दिशेत् । कु° । १३ च. °डुहां श° । १४ ङ. °मासे तु लक्षहोमे न° । १५ ङ. वाऽवनीप् । ऋ° । १६ ग. °त्सरे वत्सरे नृ° । १७ ग. °वार्धास्तण्डुलाः शाल्यास्ति° । १८ ग. ङ. च. °द्यात्सर्वेका° ।

षष्ट्योदनं च नवमे दशमे यवषष्टिका । एकादशे समाषं तु भोजनं रविनन्दन ॥ २६
द्वादश त्वथ संप्राप्ते मासे रविकुलोद्वह । षड्रसैः सह भक्ष्यैश्च भोजनं सार्वकामिकम् ॥ २७
देया द्विजानां राजेन्द्र मासि मासि च दक्षिणाः । अहतवास:संवीतो दिनार्धं होमयेच्छुचिः
तस्मात्सदोत्थितैर्भाव्यं यजमानैः सह द्विजैः । इन्द्राद्यादिसुराणां च प्रीणनं सार्वकामिकम्॥
कृत्वा सुराणां राजेन्द्र पशुघातसमन्वितम् । सर्वदानानि देवानामग्निष्टोमं च कारयेत् ॥ ३०
एवं कृत्वा विधानेन पूर्णाहुतिः शते शते । सहस्रे द्विगुणा देया यावच्छतसहस्रकम् ॥ ३१
पुरोडाशस्ततः साध्यो देवतार्थे च ऋत्विजैः । युक्तो वसन्मानवैश्च पुनः प्राप्तार्चनान्द्विजान् ॥
प्रीणयित्वा सुरान्सर्वान्पितॄनेव ततः क्रमात् । कृत्वा शास्त्रविधानेन पिण्डानां च समर्पणम्॥
समाप्तौ तस्य होमस्य विप्राणामथ दक्षिणाम् । समां चैव तुलां कृत्वा बद्ध्वा शिक्यद्वयं पुनः
आत्मानं तोलयेत्तत्र पत्नीं चैव द्वितीयकाम् । सुवर्णेन तथाऽऽत्मानं रजतेन तथा प्रियाम् ॥
तोलयित्वा ददेद्राजा वित्तशाठ्यविवर्जितः । ददेच्छतसहस्रं तु रूप्यस्य कनकस्य च ॥ ३६
सर्वस्वं वा ददत्तत्र राजसूयफलं लभत् । एवं कृत्वा विधानेन विप्रांस्तांश्च विसर्जयेत् ॥ ३७
प्रीयतां पुण्डरीकाक्षः सर्वयज्ञेश्वरो हरिः । तस्मिंस्तुष्टे जगत्तुष्टं प्रीणिते प्रीणितं भवेत् ॥ ३८
एवं सर्वोपघाते तु देवमानुषकारिते । इयं शान्तिस्तवाऽऽख्याता यां कृत्वा सुकृती भवेत्॥३९
न शोचेज्जन्ममरणे कृताकृतविचारणे । सर्वतीर्थेषु यत्स्नानं सर्वयज्ञेषु यत्फलम् ॥
तत्फलं समवाप्नोति कृत्वा यज्ञत्रयं नृप ॥ ४०

इति श्रीमात्स्ये महापुराणे ग्रहयज्ञविधानं नामैकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १२०४८ ॥

अथ चत्वारिंशदधिकद्विशततमोऽध्यायः ।

मनुरुवाच—
इदानीं सर्वधर्मज्ञ सर्वशास्त्रविशारद । यात्राकालविधानं मे कथयस्व महीक्षिताम् ॥ १

मत्स्य उवाच—
यदा मन्येत नृपतिराक्रन्देन बलीयसा । पार्ष्णिग्राहाभिभूतोऽरिस्तदा यात्रां प्रयोजयेत् ॥ २
योधान्मत्वा प्रभूतांश्च प्रभूतं च बलं मम । मूलरक्षासमर्थोऽस्मि तदा यात्रां प्रयोजयेत् ॥ ३
अशुद्धपार्ष्णिर्नृपतिर्न तु यात्रां प्रयोजयेत् । पार्ष्णिग्राहाधिकं सैन्यं मूले निक्षिप्य च व्रजेत्॥
चैत्र्यां वा मार्गशीर्ष्यां वा यात्रां यायान्नराधिपः । चैत्र्यां पश्येच्च नैदाघं हन्ति पुष्टिं च शारदीम् ॥ ५
एतदेव विपर्यस्तं मार्गशीर्ष्यां नराधिपः । शत्रोर्वा व्यसने यायात्काल एव सुदुर्लभः ॥ ६
दिव्यान्तरिक्षक्षितिजैरुत्पातैः पीडितं परम् । षडक्षपीडासंतप्तं पीडितं च तथा ग्रहैः ॥ ७
*ज्वलन्ती च तथैवोल्का दिशं यां च प्रपद्यते । भूकम्पोल्कादि संयाति यां च केतुः प्रसूयते॥

* एतदर्धस्थानेऽयं पाठो ङ. पुस्तके—प्रज्वलन्तीभिरुल्काभिर्यस्य देशः प्रपीड्यते ।

१ क. °वासाः सं । २ ङ. °हुतिशतेन वा । स° । ३ ङ. तत्त्ववित् । ४ ङ. पुनश्च प्रेषयेद्द्विजा° । ५ ग. ङ. च. शुद्धस्य । ६ ख. °त् । दुष्टा योधा भृता भृत्याः सांप्रतं । घ. °त् । पुष्टा योधा भृता भृत्या संभृतं । ७ ग. घ. ङ. च. °त्र्यां नश्यति नै° । ८ ग. घ. °धिप । श° । ९ ग. °म् । यद्दक्षया वा सं° । ङ. च. °म् । यद्वृक्ष° ।

निर्घातश्च पतेद्यत्र तां यायाद्वसुधाधिपः। स्वबलव्यसनोपेतं तथा दुर्भिक्षपीडितम् ॥ ९
संभूतान्तरकोपं च क्षिप्रं प्रायादरिं नृपः। यूकामाक्षीकबहुलं बहुपङ्कं तथाऽऽविलम् ॥ १०
नास्तिकं भिन्नमर्यादं तथाऽमङ्गलवादिनम्। अपेतप्रकृतिं चैवं निःसारं च तथा जयेत् ॥ ११
विख्रिष्टनायकं सैन्यं तथा भिन्नं परस्परम्। व्यसनासक्तनृपतिं बलं राजाऽभियोजयेत् ॥ १२
सैनिकानां न शस्त्राणि स्फुरन्त्यङ्गानि यत्र च। दुःस्वप्नानि च पश्यन्ति बलं तदभियोजयेत् ॥
उत्साहबलसंपन्नः स्वानुरक्तबलस्तथा। तुष्टपुष्टबलो राजा परानभिमुखो व्रजेत् ॥ १४
शरीरस्फुरणे धन्ये तथा दुःस्वप्ननाशने। निमित्ते शकुने धन्ये जाते शत्रुपुरं व्रजेत् ॥ १५
ऋक्षेषु षट्सु शुद्धेषु ग्रहेष्वनुगुणेषु च। प्रश्नकाले शुभे जाते परान्यायान्नराधिपः ॥ १६
एवं तु दैवसंपन्नस्तथा पौरुषसंयुतः। देशकालोपपन्नां तु यात्रां कुर्यान्नराधिपः ॥ १७
स्थले नक्रस्तु नागस्य तस्यापि सजले वशे। उलूकस्य निशि ध्वाङ्क्षः स च तस्य दिवा वशे॥
एवं देशं च कालं च ज्ञात्वा यात्रां प्रयोजयेत्। पदातिनागबहुलां सेनां प्रावृषि योजयेत्॥१९
हेमन्ते शिशिरे चैव रथवाजिसमाकुलाम्। खरोष्ट्रबहुलां सेनां तथा ग्रीष्मे नराधिपः ॥२०
चतुरङ्गबलोपेतां वसन्ते वा शरद्यथ। सेना पदातिबहुला यस्य स्यात्पृथिवीपतेः ॥ २१
अभियोज्यो भवेत्तेन शत्रुर्विषममाश्रितः। गम्ये वृक्षावृते देशे स्थितं शत्रुं तथैव च॥ २२
किंचित्पङ्के तथा यायाद्बहुनागो नराधिपः। रथाश्वबहुलो यायाच्छत्रुं समपथस्थितम् ॥
तमाश्रयन्तो बहुलास्तांस्तु राजा प्रपूजयेत्। खरोष्ट्रबहुलो राजा शत्रुर्बन्धेन संस्थितः ॥२४
बन्धनस्थोऽभियोज्योऽरिस्तथा प्रावृषि भूभुजा। हिमपातयुते देशे स्थितं ग्रीष्मेऽभियोजयेत्
यवसेन्धनसंयुक्तः कालः पार्थिव हैमनः। शरद्वसन्तौ धर्मज्ञ कालौ साधारणौ स्मृतौ ॥२६

विज्ञाय राज्ञा द्विजदेशकालौ दैवं त्रिकालं च तथैव बुद्ध्वा।
यायात्परं कालविदां मतेन संचिन्त्य सार्धं द्विजमन्त्रविद्भिः ॥ २७

इति श्रीमात्स्ये महापुराणे यात्रानिमित्तकालयोज्यचिन्ता नाम चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥
आदितः श्लोकानां समष्ट्यङ्काः ॥ १२०७५ ॥

---

अथैकचत्वारिंशदधिकद्विशततमोऽध्यायः।

---

मनुरुवाच—
ब्रूहि मे त्वं निमित्तानि अशुभानि शुभानि च। सर्वधर्मभृतां श्रेष्ठ त्वं हि सर्वविदुच्यसे ॥ १
मत्स्य उवाच—
अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं भवेत्। अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च ॥ २
मनुरुवाच—
अङ्गानां स्पन्दनं चैव शुभाशुभविचेष्टितम्। तन्मे विस्तरतो ब्रूहि येन स्यां तद्विदो भुवि॥३

---

१ क. ख. °पः। सब°। २ ङ. च. °लं विनायकं तथा बल। ३ ङ. °व निराशं च तथा व्रजेत्। वि°। ४ ङ. °तः। ग्राम्यवृ°। च. °तः। सस्यवृ°। ५ ङ. °पथाश्रित°। ६ ग. °म्°। समा°। ७ ग. हुलांस्तदा राजाऽभि°। ८ क. ख. °जा हितदे°। ९ ङ. छ सर्वं वेत्सि यथातथम्। म°। १० ग हि धर्मवि°।

मत्स्य उवाच—

पृथ्वीलाभो भवेन्मूर्ध्नि ललाटे रविनन्दन । स्थानं विवृद्धिमायाति भ्रूनसोः प्रियसंगमः॥
भृत्यलब्धिश्चाक्षिदेशे दृगुपान्ते धनागमः । उत्कण्ठोपगमो मध्ये दृष्टं राजन्विचक्षणैः॥ ५
दृग्बन्धने संगरे च जयं शीघ्रमवाप्नुयात् । योषिद्भोगोऽपाङ्गदेशे श्रवणान्ते प्रियश्रुतिः॥ ६
नासिकायां प्रीतिसौख्यं प्रजाप्तिरधरोष्ठजे । कण्ठे तु भोगलाभः स्याद्भोगवृद्धिरथांसयोः॥
सुहृत्स्नेहश्च *बाहुभ्यां हस्ते चैव धनागमः । पृष्ठे पराजयः सद्यो जयो वक्षःस्थले भवेत्॥८
कुक्षिभ्यां प्रीतिरुद्दिष्टा स्त्रियाः प्रजननं स्तने । स्थानभ्रंशो नाभिदेशे अन्त्रे चैव धनागमः॥
जानुसंधौ परैः संधिर्बलवद्भिर्भवेन्नृपं । देशैकदेशनाशोऽथ जङ्घाभ्यां रविनन्दन ॥ १०
उत्तमं स्थानमाप्नोति पद्भ्यां प्रस्फुरणान्नृप । सलाभं चाध्वगमनं भवेत्पादतले नृप ॥ ११
लाञ्छनं पिटकं चैव ज्ञेयं स्फुरणवत्तथा । विपर्ययेण विहितः सर्वः स्त्रीणां फलागमः॥१२
+अप्रशस्ते तदा वामे त्वप्रशस्तं विशेषतः । दक्षिणेऽपि प्रशस्तेऽङ्गे प्रशस्तं स्याद्विशेषतः ॥

अतोऽन्यथा सिद्धिंप्रजल्पनात्तु फलस्य शस्तस्य च निन्दितस्य ।
अनिष्टचिह्नोपगमे द्विजानां कार्यं सुवर्णेन तु तर्पणं स्यात् ॥ १४

इति श्रीमात्स्ये महापुराणे यात्रानिमित्तकदेहस्पन्दनं नामैकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

आदितः श्लोकानां समष्टयङ्काः ॥ १२०८९ ॥

---

अथ द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

मनुरुवाच—

स्वप्नाख्यानं कथं देव गमने प्रत्युपस्थिते । दृश्यन्ते विविधाकाराः कथं तेषां फलं भवेत्॥

मत्स्य उवाच—

इदानीं कथयिष्यामि निमित्तं स्वप्नदर्शने । नाभिं विनाऽन्यगात्रेषु तृणवृक्षसमुद्भवः ॥ २
चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा । मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता ॥
उच्चात्प्रपतनं चैव दोलारोहणमेव च । अर्जनं पङ्कलोहानां हयानामपि मारणम् ॥ ४
रक्तपुष्पद्रुमाणां च मण्डलस्य तथैव च । वराहर्क्षखरोष्ट्राणां तथा चाऽऽरोहणक्रिया ॥ ५
भक्षणं पक्षिमत्स्यानां तैलस्य कृसरस्य च । नर्तनं हसनं चैव विवाहो गीतमेव च ॥ ६
तन्त्रीवाद्यविहीनानां वाद्यानामभिवादनम् । स्रोतोवगाहगमनं स्नानं गोमयवारिणा ॥ ७
पङ्कोदकेन च तथा महीतोयेन चाप्यथ । मातुः प्रवेशो जठरे चितारोहणमेव च ॥ ८
शक्रध्वजाभिपतनं पतनं शशिसूर्ययोः । दिव्यान्तरिक्षभौमानामुत्पातानां च दर्शनम् ॥ ९

---

* सप्तम्यर्थे पञ्चमी ज्ञेया + एतदर्धं न विद्यत आदर्शपुस्तकेषु ।

---

१ ङ. °च । पूजाला° । २ ङ. भ्रूभाग प्रि° । च. भ्रूदेशे प्रि° । ३ ङ. °त्कण्ठाप° । ४ ग. ङ. °पिण्डभोऽपा° ।
५ ग. ङ. च. °स्थं प्रिया स्त° । ६ ङ. °शे मेढ्रे च मिथुना° । ७ क. ख. °प । दिशै° । ८ ङ. °ङ्गे शस्तं स्याद्वामपार्श्वतः ।
९ ङ °था सद्विजपूजनं च फ° । च. °था सद्विद्विजजल्प° । १० घ. द्विरज° । ११ ङ. च. पद्मलोहानां तप्तानामपि धार° ।
१२ ग. ङ. चण्डालस्य । १३ च. पक्वमांसानां । १४ ङ. स्रोतसो रोधग° । १५ ग. °वरोष्ट्रा° ।

देवद्विजातिभूपालगुरूणां क्रोध एव च। आलिङ्गनं कुमारीणां पुरुषाणां च मैथुनम्॥१०
हानिश्चैव स्वगात्राणां विरेकवमनक्रिया। दक्षिणाशाभिगमनं व्याधिनाऽभिभवस्तथा॥
फलापहानिश्च तथा पुष्पहानिस्तथैव च। गृहाणां चैव पातश्च गृहसंमार्जनं तथा॥१२
क्रीडा पिशाचक्रव्यादवानरर्क्षनरैरपि। परादभिभवश्चैव तस्माच्च व्यसनोद्भवः॥ १३
काषायवस्त्रधारित्वं तद्वत्स्त्रीक्रीडनं तथा। स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम्॥ १४
एवमादीनि चान्यानि दुःस्वप्नानि विनिर्दिशेत्। एषां संकथनं धन्यं भूयः प्रस्वापनं तथा
कल्कस्नानं तिलैर्होमो ब्राह्मणानां च पूजनम्। स्तुतिश्च वासुदेवस्य तथा तस्यैव पूजनम्॥
नागेन्द्रमोक्षश्रवणं ज्ञेयं दुःस्वप्ननाशनम्। स्वप्नास्तु प्रथमे यामे संवत्सरविपाकिनः॥ १७
षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्तृतीयके। चतुर्थे मासमात्रेण पश्यतो नात्र संशयः॥१८
अरुणोदयवेलायां दशाहेन फलं भवेत्। एकस्यां यदि वा रात्रौ शुभं वा यदि वाऽशुभम्॥
पश्चाद्दृष्टस्तु यस्तत्र तस्य पाकं विनिर्दिशेत्। तस्माच्छोभनके स्वप्ने पश्चात्स्वप्नो न शस्यते
शैलप्रासादनागाश्ववृषभारोहणं हितम्। द्रुमाणां श्वेतपुष्पाणां गमने च तथा द्विज॥२१
द्रुमतृणोद्भवो नाभौ तथैव बहुबाहुता। तथैव बहुशीर्षत्वं फलितोद्भव एव च॥ २२
सुशुक्लमाल्यधारित्वं सुशुक्लाम्बरधारिता। चन्द्रार्कताराग्रहणं परिमार्जनमेव च॥ २३
शक्रध्वजालिङ्गनं च तदुच्छ्रायक्रिया तथा। भूम्यम्बुधीनां ग्रसनं शत्रूणां च वधक्रिया॥
जयो विवादे द्यूते च सङ्ग्रामे च तथा द्विज। भक्षणं चाऽऽर्द्रमांसानां मत्स्यानां पायसस्य च
दर्शनं रुधिरस्यापि स्नानं वा रुधिरेण च। सुरारुधिरमद्यानां पानं क्षीरस्य चाथ वा॥ २६
अन्त्रैर्वा वेष्टनं भूमौ निर्मलं गगनं तथा। मुखेन दोहनं शस्तं महिषीणां तथा गवाम्॥२७
सिंहीनां हस्तिनीनां च वडवानां तथैव च। प्रसादो देवविप्रेभ्यो गुरुभ्यश्च तथा शुभः॥२८
अम्भसा त्वभिषेकस्तु गवां शृङ्गस्रुतेन वा। चन्द्राद्भ्रष्टेन वा राजञ्ज्ञेयो राज्यप्रदो हि सः २९
राज्याभिषेकश्च तथा छेदनं शिरसस्तथा। मरणं वह्निदाहश्च वह्निदाहो गृहादिषु॥ ३०
लब्धिश्च राज्यलिङ्गानां तन्त्रीवाद्याभिवादनम्। तथोदकानां तरणं तथा विषमलङ्घनम्॥
हस्तिनीवडवानां च गवां च प्रसवो गृहे। आरोहणमथाश्वानां रोदनं च तथा शुभम्॥ ३२
वरस्त्रीणां तथा लाभस्तथाऽऽलिङ्गनमेव च। निगडैर्बन्धनं धन्यं तथा विष्ठानुलेपनम्॥ ३३
जीवतां भूमिपालानां सुहृदामपि दर्शनम्। दर्शनं देवतानां च विमलानां तथाऽम्भसाम्॥३४

शुभान्यथैतानि नरस्तु दृष्ट्वा प्राप्नोत्ययत्नाद्ध्रुवमर्थलाभम्।
स्वप्नानि वै धर्मभृतां वरिष्ठ व्याधेर्विमोक्षं च तथाऽऽतुरोऽपि॥ ३५

इति श्रीमात्स्ये महापुराणे यात्रानिमित्ते स्वप्नाध्यायो नाम द्विचत्वारिंशदधिकद्विशततमोऽध्यायः॥ २४२॥

आदितः श्लोकानां समष्ट्यङ्काः॥ १२१२४॥

---

१ ग. ध. ङ. °त्। तेषामक°। २ ग. °ण प्राप्यते। ना°। ३ घ. च. °त्वं पलि°। ङ. °त्वं पतितो°। ४ क. ख. शृङ्गाश्रिते°। ५ ङ. °मू। तीर्थं द°। ६ ङ. च. °हणं पञाश्वा°।

अथ त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

मनुरुवाच—

गमनं प्रति[1] राज्ञां तु संमुखाद्दर्शने च किम् । प्रशस्तांश्चैव संभांष्य सर्वानेतांश्च कीर्तय ॥ १

मत्स्य उवाच—

औषधानि त्वयुक्तानि धान्यं कृष्णं च यद्भवेत् । कार्पासश्च तृणं राजञ्शुष्कं गोमयमेव च ॥ २
इन्धनं च तथाऽङ्गारं गुडं तैलं तथाऽशुभम् । अभ्यक्तं मलिनं मुण्डं तथा नग्नं च मानवम् ॥ ३
मुक्तकेशं रुजार्तं च काषायाम्बरधारिणम् । उन्मत्तकं तथा सत्त्वं दीनं चाथ नपुंसकम् ॥ ४
अयःपङ्कस्तथा चर्म केशबन्धनमेव च । तथैवोध्धृतसाराणि पिण्याकादीनि यानि च ॥ ५
चण्डालश्वपचाश्चैव राजबन्धनपालकाः । वधकाः पापकर्माणो गर्भिणी स्त्री तथैव च ॥ ६
तुषभस्मकपालास्थि भिन्नभाण्डानि यानि चे । रिक्तानि चैव भाण्डानि मृतं शार्ङ्गिकमेव च
एवमादीनि चान्यानि अशस्तान्यभिदर्शने । अशस्तो वाद्यशब्दश्च भिन्नभैरवजर्जरः ॥ ८
पुरतः शब्द एहीति शस्यते न तु पृष्ठतः । गच्छेति पश्चाद्धर्मज्ञ पुरस्तात्तु विगर्हितः ॥ ९
क्व यासि तिष्ठ मा गच्छ किं ते तत्र गतस्य तु । अन्ये शब्दाश्च येऽनिष्टास्ते विपत्तिकरा अपि ॥
ध्वजादिषु तथा स्थानं क्रव्यादानां विगर्हितम् । स्खलनं वाहनानां च वस्त्रसङ्गस्तथैव च ११
निर्गतस्य तु द्वारादौ शिरसश्चाभिघातिता । छत्रध्वजानां वस्त्राणां पतनं च तथाऽशुभम् १२
दृष्टे निमित्ते प्रथमममङ्गल्यविनाशनम् । केशवं पूजयेद्विद्वान्स्तवेन मधुसूदनम् ॥ १३
द्वितीये तु ततो दृष्टे प्रतीपे प्रविशेद्गृहम् । अथेष्टानि प्रवक्ष्यामि मङ्गल्यानि तथाऽनघ॥१४
श्वेताः सुमनसः श्रेष्ठाः पूर्णकुम्भास्तथैव च । जलजाः पक्षिणश्चैव मांसमत्स्याश्च पार्थिव १५
गावस्तुरंगमा नागा बद्ध एकः पशुस्त्वजः । त्रिदशाः सुहृदो विप्रा ज्वलितश्च हुताशनः ॥१६
गणिका च महाभाग दूर्वा चाऽऽर्द्रं च गोमयम् । रुक्मं रूप्यं तथा ताम्रं सर्वरत्नानि चाप्यथ ॥
औषधानि च धर्मज्ञ यवाः सिद्धार्थकास्तथा । नृवाह्यमानं यानं च भद्रपीठं तथैव च ॥ १८
खड्गं छत्रं पताका च मृदश्चाऽऽयुधमेव च । राजलिङ्गानि सर्वाणि शवं रुदितवर्जितम् ॥१९
घृतं दधि पयश्चैव फलानि विविधानि च । स्वस्तिकं वर्धमानं च नन्द्यावर्तं सकौस्तुभम्॥२०
वादित्राणां सुखः शब्दो गम्भीरः सुमनोहरः । गान्धारषड्जऋषभा ये च शस्तास्तथा स्वराः
वायुः सशर्करो रूक्षः सर्वत्र समुपस्थितः । प्रतिलोमस्तथा नीचो विज्ञेयो भयकृद्द्विज ॥ २२
अनुकूलो मृदुः स्निग्धः सुखस्पर्शः सुखावहः । रूक्षा रूक्षस्वरा भद्राः क्रव्यादाः परिगच्छताम्
मेघाः शस्ता घनाः स्निग्धा गजबृंहितनिःस्वनाः । अनुलोमास्तडिच्छस्ताः शक्रचापं तथैव च ॥ २४
अप्रशस्ते तथा ज्ञेये परिवेषप्रवर्षणे । अनुलोमा ग्रहाः शस्ता वाक्पतिस्तु विशेषतः ॥ २५
आस्तिक्यं श्रद्दधानत्वं तथा पूज्याभिपूजनम् । शस्तान्येतानि धर्मज्ञ यच्च स्यान्मनसः प्रियम्

---

१ ङ. °ति याने तु सन्मुखे दर्शने बहु प्र° । २ ग. °भाष्यान्सर्वा° । ३ ङ. °डं सर्पिस्तथा । च. °डं सर्पस्तथा । ४ क. ख. च । रक्ता° । ५ ग. ङ. मृतं सारङ्गमे° । ६ क. ख. वाद्यश° । ७ ग. °घातनम् । छ° । ८ क. ख. बुद्ध । ९ क. ख. °णि सर्वे रुदितवर्जिताः । घृ° । १० ग. °र्वविघ्नसमन्वितः । ङ. °र्वं विघ्नसमुच्छ्रितः । ११ क. ख. °च्छन्नाः श°।

मनसस्तुष्टिरेवात्र परमं जयलक्षणम् । एकतः सर्वलिङ्गानि मनसस्तुष्टिरेकतः ॥ २७
यानोत्सुकत्वं मनसः प्रहर्षः शुभस्य लाभो विजयप्रवादः ।
मङ्गल्यलब्धिः श्रवणं च राजञ्ज्ञेयानि नित्यं विजयावहानि ॥ २८

इति श्रीमात्स्ये महापुराणे यात्रानिमित्ते मङ्गलाध्यायो नाम त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १२१५२ ॥

---

अथ चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

ऋषय ऊचुः—

राजधर्मस्त्वया सूत कथितो विस्तरेण तु । तथैवाद्भुतमङ्गल्यं स्वप्नदर्शनमेव च ॥ १
विष्णोरिदानीं माहात्म्यं पुनर्वक्तुमिहार्हसि । कथं स वामनो भूत्वा बबन्ध बलिदानवम् ॥ २
क्रमतः कीदृशं रूपमासील्लोकत्रये हरेः ॥

सूत उवाच—

एतदेव पुरा पृष्टः कुरुक्षेत्रे तपोधनः । शौनकस्तीर्थयात्रायां वामनायतने पुरा ॥ ३
यदा समयभेदित्वं द्रौपद्याः पार्थिवं प्रति । अर्जुनेन कृतं तत्र तीर्थयात्रां तदा ययौ ॥ ४
धर्मक्षेत्रे कुरुक्षेत्रे वामनायतने स्थितः । दृष्ट्वा स वामनं तत्र अर्जुनो वाक्यमब्रवीत् ॥ ५

अर्जुन उवाच—

किं निमित्तमयं देवो वामनाकृतिरिज्यते । वराहरूपी भगवान्कस्मात्पूज्योऽभवत्पुरा ॥
कस्माच्च वामनस्येदमिष्टं क्षेत्रमजायत ॥ ६

शौनक उवाच—

वामनस्य च वक्ष्यामि वराहस्य च धीमतः । त्यक्त्वाऽतिविस्तरं भूयो माहात्म्यं कुरुनन्दन
*पुरा निर्वासिते शक्रे सुरेषु विजितेषु च । चिन्तयामास देवानां जननी पुनरुद्भवम् ॥ ८
अदितिर्देवमाता च परमं दुश्चरं तपः । तीव्रं चचार वर्षाणां सहस्रं पृथिवीपते ॥ ९
आराधनाय कृष्णस्य वाग्यता वायुभोजना । दैत्यैर्निराकृतान्दृष्ट्वा तनयान्कुरुनन्दन ॥१०
वृथापुत्राऽहमस्मीति निर्वेदात्प्रणता हरिम् । तुष्टाव वाग्भिरिष्टाभिः परमार्थावबोधिनी॥
+देवदेवं हृषीकेशं नत्वा सर्वगतं हरिम् ॥ ११

अदितिरुवाच—

नमः सर्वार्तिनाशाय नमः पुष्करमालिने । नमः परमकल्याणकल्याणायाऽऽदिवेधसे ॥१२
नमः पङ्कजनेत्राय नमः पङ्कजनाभये । श्रियः कान्ताय दान्ताय दान्तदृश्याय चक्रिणे१३
नमः पङ्कजसंभूतिसंभवायाऽऽत्मयोनये× । नमः शङ्खासिहस्ताय नमः कनकरेतसे ॥ १४

---

* इतः प्रभृति कुरुनन्दनेत्यन्तग्रन्थो ग. पुस्तके न विद्यते । + एतदर्धस्थानेऽयं पाठो ग. पुस्तके—स्वामिनं देवदैत्यानां गत्वा सर्वगतं हरिम् । इति । × इत उत्तरमेतदर्धं ग. पुस्तके—नमः कान्तपदान्ताय परमार्थाय चक्रिणे । इति ।

---

१ ग. सुखस्य । २ ङ. °तशान्तिश्च स्व° । ३ ग. °मनो व्यतिरिच्यते । ४ ङ. °तिरुच्यते । ५ क. ख. निवारिते । ६ घ. ङ. च. वाता हारा त्वभो° । ७ क. ख. ङ. °मः स्मृतार्ति° । ८ क. परमार्थाय ।

तथाऽऽत्मज्ञानविज्ञानयोगिचिन्त्यात्मयोगिने । निर्गुणायाविशेषाय हरये ब्रह्मरूपिणे॥१५
जगत्प्रतिष्ठितं यत्र जगता यो न दृश्यते । नमः स्थूलातिसूक्ष्माय तस्मै देवाय शङ्खिने॥१६
यं न पश्यन्ति पश्यन्तो जगदप्यखिलं नराः । अपश्यद्भिर्जगत्यत्र स देवो हृदि संस्थितः॥
तस्मिन्नेव विनश्येत यस्यैतदखिलं जगत् । तस्मै समस्तजगतामाधाराय नमो नमः ॥ १८
आद्यः प्रजापतिपतिर्यः प्रभूणां पतिः परः । पतिः सुराणां यस्तस्मै नमः कृष्णाय वेधसे॥
यः प्रवृत्तौ निवृत्तौ च इज्यते कर्मभिः स्वकैः । स्वर्गापवर्गफलदो नमस्तस्मै गदाभृते॥ २०
यश्चिन्त्यमानो मनसा सद्यः पापं व्यपोहति । नमस्तस्मै विशुद्धाय पराय हरिवेधसे॥२१
यं बुद्ध्वा सर्वभूतानि देवदेवेशमव्ययम् । न पुनर्जन्ममरणे प्राप्नुवन्ति नमामि तम् ॥ २२
यो यज्ञे यज्ञपरमैरिज्यते यज्ञसंज्ञितः । तं यज्ञपुरुषं विष्णुं नमामि प्रभुमीश्वरम् ॥ २३
गीयते सर्ववेदेषु वेदविद्भिर्विदां पतिः । यस्तस्मै वेदवेद्याय विष्णवे जिष्णवे नमः ॥ २४
यतो विश्वं समुत्पन्नं यस्मिंश्च लयमेष्यति । विश्वागमप्रतिष्ठाय नमस्तस्मै महात्मने ॥ २५
ब्रह्मादिस्तम्बपर्यन्तं येन विश्वमिदं ततम् । मायाजालं समुत्तर्तुं तमुपेन्द्रं नमाम्यहम्॥ २६
यस्तु तोयस्वरूपस्थो बिभर्त्यखिलमीश्वरः । विश्वं विश्वपतिं विष्णुं तं नमामि प्रजापतिम्
यमाराध्य विशुद्धेन मनसा कर्मणा गिरा । तरन्त्यविद्यामखिलां तमुपेन्द्रं नमाम्यहम् ॥
विषादतोषरोषाद्यैर्योऽजस्रं सुखदुःखजैः । नृत्यत्यखिलभूतस्थस्तमुपेन्द्रं नमाम्यहम् ॥ २९
[*मूर्तं तमोऽसुरमयं तद्विधो विनिहन्ति यः । रात्रिजं सूर्यरूपीव तमुपेन्द्रं नमाम्यहम् ॥ ३०
कपिलादिस्वरूपस्थो यश्चाज्ञानमयं तमः । हन्ति ज्ञानप्रदानेन तमुपेन्द्रं नमाम्यहम् ]॥३१
यस्याक्षिणी चन्द्रसूर्यौ सर्वलोकशुभाशुभम् । पश्यतः कर्म सततमुपेन्द्रं तं नमाम्यहम्॥३२
यस्मिन्सर्वेश्वरे सर्वं सत्यमेतन्मयोदितम् । नानृतं तमजं विष्णुं नमामि प्रभवाप्ययम्॥३३
यच्च तत्सत्यमुक्तं मे भूयांश्चातो जनार्दनः । सत्येन तेन सकलाः पूर्यन्तां मे मनोरथाः ॥

शौनक उवाच—

एवं स्तुतः स भगवान्वासुदेव उवाच ताम् । अदृश्यः सर्वभूतानां तस्याः संदर्शने स्थितः

श्रीभगवानुवाच—

मनोरथांस्त्वमदिते यानिच्छस्यभिवाञ्छितान् । तांस्त्वं प्राप्स्यसि धर्मज्ञे मत्प्रसादान्न संशयः
शृणुष्व सुमहाभागे वरो यस्ते हृदि स्थितः । तमाशु व्रियतां कामं श्रेयस्ते संभविष्यति ॥
मद्दर्शनं हि विफलं न कदाचिद्भविष्यति ॥ ३७

अदितिरुवाच—

यदि देव प्रसन्नस्त्वं मद्भक्त्या भक्तवत्सल । त्रैलोक्याधिपतिः पुत्रस्तदस्तु मम वासवः ॥

---

* धनुश्चिह्नान्तर्गग्रन्थो ग. घ. पुस्तकयोर्नास्ति ।

---

१ ङ. च °न्न यतो योगेन । २ च. °गद्यश्चेद्दृश्यते हृ° । ३ ङ. °त्र यतो देवो हृ° । ४ क. ख. °तः । य. स्मिन्नत्र पयश्चैव नश्यश्चैवाखि° । ५ °तिर्यस्मात्पितॄणां परमः पतिः । सुराणां यः पतिस्त° । ६ ग. ङ. च. °संस्थितः ।७ ग. ङ. च. गतिः । ८ ग. च. विश्वोद्भवप्र° । ९ ङ. कृतम् । १० ङ. °यानालसमुत्पन्न यस्मिंश्च लयमेष्यति । विश्वाङ्गाय प्रविष्टाय तमु° । ११ ङ. °वैरजेयं सु° । १२ ङ. °जैः । नित्यं निखिलभूतस्थं तमु° । १३ ङ. च. तद्विधा विनि° । १४ ख. °धान्विनि° । १५ क. ख. ग. °वाव्यय° ।

हृतं राज्यं हृताश्चास्य यज्ञभागा महासुरैः । त्वयि प्रसन्ने वरदे तान्प्राप्नोतु सुतो मम ॥
हृतं राज्यं न दुःखाय मम पुत्रस्य केशव । सापत्नाद्दायनिर्भ्रंशो बाधां नः कुरुते हृदि ॥

श्रीभगवानुवाच—

कृतः प्रसादो हि मया तव देवि यथेप्सितः । स्वांशेन चैव ते गर्भे संभविष्यामि कश्यपात् ॥
तव गर्भसमुद्भूतस्ततस्ते ये सुरारयः । तानहं निहनिष्यामि निवृत्ता भव नन्दिनि ॥ ४२

अदितिरुवाच—

प्रसीद देवदेवेश नमस्ते विश्वभावन । नाहं त्वामुदरे देव वोढुं शक्ष्यामि केशव ॥ ४३
*यस्मिन्प्रतिष्ठितं विश्वं यो विश्वं स्वयमीश्वरः । तमहं नोदरेण त्वां वोढुं शक्ष्यामि दुर्धरम् ॥

श्रीभगवानुवाच—

सत्यमात्थ महाभागे मयि सर्वमिदं जगत् । प्रतिष्ठितं न मां शक्ता वोढुं सेन्द्रा दिवौकसः ॥ ४५
किंत्वहं सकलाँल्लोकान्सदेवासुरमानुषान् । जङ्गमान्स्थावरान्सर्वांस्त्वां च देवि सकश्यपान् ॥
धारयिष्यामि भद्रं ते तदलं संभ्रमेण ते ॥ ४६
न ते ग्लानिर्न ते खेदो गर्भस्थे भविता मयि । दाक्षायणि प्रसादं ते करोम्यन्यैः सुदुर्लभम् ॥ ४७
गर्भस्थे मयि पुत्राणां तव योऽरिर्भविष्यति । तेजसस्तस्य हानिं च करिष्ये मा व्यथां कृथाः ॥

शौनक उवाच—

एवमुक्त्वा ततः सद्यो यातोऽन्तर्धानमीश्वरः । साऽपि कालेन तं गर्भमवाप कुरुसत्तम ॥ ४९
गर्भस्थिते ततः कृष्णे चचाल सकला क्षितिः । चकम्पिरे महाशैलाः क्षोभं जग्मुस्तथाऽब्धयः
यतो यतोऽदितिर्याति ददाति ललितं पदम् । ततस्ततः क्षितिः खेदान्ननाम वसुधाधिप ॥ ५१
दैत्यानामथ सर्वेषां गर्भस्थे मधुसूदने । बभूव तेजसां हानिर्यथोक्तं परमेष्ठिना ॥ ५२

इति श्रीमात्स्ये महापुराणे वामनप्रादुर्भावेऽदितिवरप्रदानं नाम चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १२२०४ ॥

---

अथ पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ।

---

शौनक उवाच—

निस्तेजसोऽसुरान्दृष्ट्वा समस्तानसुरेश्वरः । प्रह्लादमथ पप्रच्छ बलिरात्मपितामहम् ॥ १

बलिरुवाच—

तात निस्तेजसो दैत्या निर्दग्धा इव वह्निना । किमेते सहसैवाद्य ब्रह्मदण्डहता इव ॥ २
अरिष्टं किं नु दैत्यानां किं कृत्या वैरिनिर्मिता । नाशायैषा समुद्भूता यया निस्तेजसोऽसुराः

शौनक उवाच—

इति दैत्यपतिर्धीरः पृष्टः पौत्रेण पार्थिव । चिरं ध्यात्वा जगादैनमसुरेन्द्रं बलिं तदा ॥ ४

---

* न विद्यतेऽयं श्लोको ङ. च. पुस्तकयोः ।

---

१ ग. हृतं स्वाम्यं य° । ङ. च. हृतश्चास्य यज्ञभागो म° । २ ग. °दनाद्य । प्रतिध्वंसो बा° । ३ ङ. °विभ्रंशो । ४ घ. ङ. पुरुषोत्तमम् । ग° । ५ ग. घ. ङ. °तिर्वीर. ।

भूमावेकः प्रविष्टः स्याच्चतुर्भिर्जगती मता। वृत्तो भागस्तथैकः[1] स्याद्वृत्तः पटलभागतः॥
भागैस्त्रिभिस्तथा कण्ठः[2] कण्ठपट्टस्तु[3] भागतः। भागाभ्यामूर्ध्वपट्टश्च शेषभागेन पट्टिका॥ ३
प्रविष्टं भागमेकैकं जगतीं यावदेव तु। निर्गमस्तु पुनस्तस्य यावद्वै शेषपट्टिका॥ ४
वारिनिर्गमनार्थं तु तत्र कार्यः प्रणालकः। पीठिकानां तु सर्वासामेतत्सामान्यलक्षणम्॥ ५
विशेषान्देवताभेदाच्छृणुध्वं द्विजसत्तमाः। स्थण्डिला वाऽथ वापी वा यक्षी वेदी च मण्डला॥ ६
पूर्णचन्द्रा च वज्रा च पद्मा वार्धशशी तथा। त्रिकोणा दशमी तासां संस्थानं वा निबोधत
स्थण्डिला चतुरस्रा तु वर्जिता मेखलादिभिः। वापी द्विमेखला ज्ञेया यक्षी चैव त्रिमेखला॥
चतुरस्रायता वेदी न तां लिङ्गेषु योजयेत्। मण्डला वर्तुला या तु मेखलाभिर्गणप्रिया॥ ९
रक्ता द्विमेखला मध्ये पूर्णचन्द्रा तु सा भवेत्। मेखलात्रयसंयुक्ता षडस्रा वज्रिका भवेत्॥
षोडशास्रा भवेत्पद्मा किंचिद्ध्रस्वा तु मूलतः। तथैव धनुषाकारा सार्धचन्द्रा प्रशस्यते॥ ११
त्रिशूलसदृशी तद्वत्त्रिकोणा ह्यूर्ध्वतो मता। प्रागुदक्प्रवणा तद्वत्प्रशस्ता लक्षणान्विता॥
परिवेषं त्रिभागेन(ण) निर्गमं तत्र कारयेत्। विस्तारं तत्प्रमाणं च मूले चाग्रे तथोर्ध्वतः॥ १३
जलमार्गश्च कर्तव्यस्त्रिभागेन(ण) सुशोभनः। लिङ्गस्यार्धविभागेन स्थौल्येन समधिष्ठिता॥
मेखला तत्त्रिभागेन(ण) खातं चैव प्रमाणतः। अथवा पादहीनं तु शोभनं कारयेत्सदा॥
उत्तरस्थं प्रणालं च प्रमाणादधिकं[12] भवेत्। स्थण्डिलायामथाऽऽरोग्यं धनं धान्यं च पुष्कलम्
गोप्रदा च भवेद्यक्षी वेदी संपत्प्रदा भवेत्। मण्डलायां भवेत्कीर्तिर्वरदा पूर्णचन्द्रिका॥ १७
आयुष्प्रदा भवेद्वज्रा पद्मा सौभाग्यदा भवेत्। पुत्रप्रदाऽर्धचन्द्रा स्यात्त्रिकोणा शत्रुनाशिनी॥
देवस्य यजनार्थं तु पीठिका दश कीर्तिताः। शैले शैलमयीं दद्यात्पार्थिवे पार्थिवीं तथा॥ १९
दारुजे दारुजां कुर्यान्मिश्रे मिश्रां तथैव च। नान्ययोनिस्तु कर्तव्या सदा शुभफलेप्सुभिः॥
अर्चायामसमं[13] दैर्घ्यं लिङ्गायामसमं तथा। यस्य देवस्य या पत्नी तां पीठे परिकल्पयेत्॥
एतत्सर्वं समाख्यातं समासात्पीठलक्षणम्॥ २१

इति श्रीमात्स्ये महापुराणे देवतार्चानुकीर्तने पीठिकानुकीर्तनं नाम द्विषष्ट्यधिकद्विशततमोऽध्यायः। २६२॥

आदितः श्लोकानां समष्ट्यङ्काः॥ १२१३७॥

अथ त्रिषष्ट्यधिकद्विशततमोऽध्यायः।

सूत उवाच—

अथातः संप्रवक्ष्यामि लिङ्गलक्षणमुत्तमम्। सुस्निग्धं च सुवर्णं च लिङ्गं कुर्याद्विचक्षणः॥ १
प्रासादस्य प्रमाणेन लिङ्गमानं विधीयते। लिङ्गमानेन वा विद्यात्प्रासादं शुभलक्षणम्॥ २

१ ङ. क्षैवास्य वृत्तभागास्तु भागशः। भा°। २ घ. °स्याद्वृत्तपट्टस्तु भा°। ३ ङ. °ण्ठः पिण्डान्पिण्डस्तु। ४ क. ख. °ष्टस्त्रिभा°। ५ ग. °तः। यस्य न वृत्तपट्ट°। ६ ङ. च. °षपिण्डिका। ७ च. कार्या प्रणालिका। पि°। ८ ङ. च. वज्री। ९ घ. °ला त्रिगुणा त्रि°। ङ. °ला द्विगुणा त्रि°। १० ङ. °या प्रोक्ता। च. °था। संरक्ता। ११ घ. रिक्ता। १२ क. ख. °धिकारयेत्। स्थ°। १३ क. ख. यामासमं।

चतुरस्रे समे गर्ते ब्रह्मसूत्रं निपातयेत्। वामेन ब्रह्मसूत्रस्य अर्चाया लिङ्गमेव च ॥ ३
प्रागुत्तरेण लीनं तु दक्षिणापरमाश्रितम्। पुरस्यापरदिग्भागे पूर्वद्वारं प्रकल्पयेत् ॥ ४
पूर्वेण चापरं द्वारं माहेन्द्रं दक्षिणोत्तरम्। द्वारं विभज्य पूर्वं तु एकविंशतिभागिकम् ॥ ५
ततो मध्यगतं ज्ञात्वा ब्रह्मसूत्रं प्रकल्पयेत्। तस्यार्धं तु त्रिधा कृत्वा भागं चोत्तरतस्त्यजेत्
एवं दक्षिणतस्त्यक्त्वा ब्रह्मस्थानं प्रकल्पयेत्। भागार्धेन तु यल्लिङ्गं कार्यं तदिह शस्यते ॥
*पञ्चभागविभक्तेषु त्रिभागो ज्येष्ठ उच्यते। भाजिते नवधा गर्भे मध्यमं पाञ्चभागिकम्॥
एकस्मिन्नेव नवधा गर्भे लिङ्गानि कारयेत्। समसूत्रं विभज्याथ नवधा गर्भभाजितम्॥९
ज्येष्ठमर्धं कनीयोऽर्धं तथा मध्यममध्यमम्। एवं गर्भः समाख्यातस्त्रिभिर्भागैर्विभाजयेत् ॥
ज्येष्ठं तु त्रिविधं ज्ञेयं मध्यमं त्रिविधं तथा। कनीयस्त्रिविधं तद्वल्लिङ्गभेदा नवैव तु ॥ ११
नाभ्यर्धमष्टभागेन विभज्याथ समं बुधैः। भागत्रयं परित्यज्य विष्कम्भं चतुरस्रकम् ॥ १२
अष्टास्रं मध्यमं ज्ञेयं भागं लिङ्गस्य वै ध्रुवम्। विकीर्णे चेत्ततो गृह्य कोणाभ्यां लाञ्छयेद्बुधः
अष्टास्रं कारयेत्तद्वदूर्ध्वमप्येवमेव तु। षोडशास्त्रीकृतं पश्चाद्वर्तुलं कारयेत्ततः ॥ १४
आयामं तस्य देवस्य नाभ्यां वै कुण्डलीकृतम्। माहेश्वरं त्रिभागं तु ऊर्ध्ववृत्तं त्ववस्थितम् ॥
अधस्ताद्ब्रह्मभागस्तु चतुरस्रो विधीयते। अष्टास्रो वैष्णवो भागो मध्यस्तस्य उदाहृतः ॥
एवं प्रमाणसंयुक्तं लिङ्गं वृद्धिप्रदं भवेत्। तथाऽन्यदपि वक्ष्यामि गर्भमानं प्रमाणतः ॥१७
गर्भमानप्रमाणेन यल्लिङ्गमुचितं भवेत्। चतुर्धा तद्विभज्याथ विष्कम्भं तु प्रकल्पयेत् ॥ १८
देवतायतनं सूत्रं भागत्रयविकल्पितम्। अधस्ताच्चतुरस्रं तु +अष्टास्रं मध्यभागतः ॥ १९
पूज्यभागस्ततोऽर्धं तु नाभिभागस्तथोच्यते। आयामे यद्भवेत्सूत्रं नाहस्य चतुरस्रके ॥ २०
चतुरस्रं परित्यज्य अष्टास्रस्य तु यद्भवेत्। तस्याप्यर्धं परित्यज्य ततो वृत्तं तु कारयेत् ॥ २१
शिरः प्रदक्षिणं तस्य संक्षिप्तं मूलतो न्यसेत्। +अष्टपूजं भवेल्लिङ्गमधस्ताद्विपुलं च यत् ॥ २२
शिरसा च सदा निम्नं मनोज्ञं लक्षणान्वितम्। सौम्यं तु दृश्यते यत्तु लिङ्गं तद्वृद्धिदं भवेत् ॥
अथ मूले च मध्ये तु प्रमाणं सर्वतः समम्। एवंविधं तु यल्लिङ्गं भवेत्तत्सार्वकामिकम् ॥ २४
अन्यथा यद्भवेल्लिङ्गं तदसत्संप्रचक्षते। एवं रत्नमयं कुर्यात्स्फाटिकं पार्थिवं तथा ॥
शुभं दारुमयं चापि यद्वा मनसि रोचते ॥ २५

इति श्रीमात्स्ये महापुराणे देवतार्चानुकीर्तनं नाम त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १३१६२ ॥

---

* एतदर्धस्थानेऽयं पाठश्च पुस्तके—पञ्चभागेन भक्तं तु त्रिभागे ज्येष्ठमुच्यत इति। + इत आरभ्य चतुरस्रक इत्यन्तग्रन्थश्च पुस्तके नास्ति। + इत आरभ्य न्यसेदित्यन्तग्रन्थो ग. पुस्तके नास्ति।

---

१ घ. °स्य कृत्वा वालि°। २ क. ख. °र्चा वा लि°। ३ ग. लिङ्गं। ४ क. ख. °क्ते वा त्रिभागे ज्यैष्ठ्यमुच्य°। ५ घ. ङ. ज्येष्ठार्धं कन्यसार्धं च त°। ६ ग. ङ. च. कनिष्ठं त्रिवि°। ७ ग. °यं नागलि°। ८ ग. घ. वैष्णव°। ९ ग. ङ. शास्रं ततः प°। १० क. ख. घ. °रस्रार्धे प°। ११ ग. सूत्रितं। १२ घ. ङ. च. भवेत्। १३ क. ख. च. ज्येष्ठपूज्यं। १४ क. ख. प्रमाणे।

अथ चतुःषष्ट्यधिकद्विशततमोऽध्यायः ।

ऋषय ऊचुः—

देवतानामथैतासां प्रतिष्ठाविधिमुत्तमम् । वद सूत यथान्यायं सर्वेषामप्यशेषतः ॥ १

सूत उवाच—

अथातः संप्रवक्ष्यामि प्रतिष्ठाविधिमुत्तमम् । कुण्डमण्डपवेदीनां प्रमाणं च यथाक्रमम् ॥ २
चैत्रे वा फाल्गुने वाऽपि ज्येष्ठे वा माधवे तथा । माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत् ॥ ३
प्राप्य पक्षं शुभं शुक्लमतीते दक्षिणायने । पञ्चमी च द्वितीया च तृतीया सप्तमी तथा ॥ ४
दशमी पौर्णमासी च तथा श्रेष्ठा त्रयोदशी । आसु प्रतिष्ठा विधिवत्कृता बहुफला भवेत् ॥ ५
आषाढे द्वे तथा मूलमुत्तरात्रयमेव च । ज्येष्ठाश्रवणरोहिण्यः पूर्वाभाद्रपदा तथा ॥ ६
हस्ताश्विनी रेवती च पुष्यो मृगशिरस्तथा । अनुराधा तथा स्वाती प्रतिष्ठादिषु शस्यते ॥ ७
बुधो बृहस्पतिः शुक्रस्त्रयोऽप्येते शुभग्रहाः । एभिर्निरीक्षितं लग्नं नक्षत्रं च प्रशस्यते ॥ ८
ग्रहताराबलं लब्ध्वा ग्रहपूजां विधाय च । निमित्तशकुनं लब्ध्वा वर्जयित्वाऽद्भुताविकम् ॥ ९
शुभयोगे शुभस्थाने क्रूरग्रहविवर्जिते । लग्न ऋक्षे प्रकुर्वीत प्रतिष्ठाविकमुत्तमम् ॥ १०
अयने विषुवे तद्वत्षडशीतिमुखे तथा । एतेषु स्थापनं कार्यं विधिदृष्टेन कर्मणा ॥ ११
प्राजापत्ये तु शयनं श्वेते तूत्थापनं तथा । मुहूर्ते स्थापनं कुर्यात्पुनर्ब्राह्मे विचक्षणः ॥ १२
प्रासादस्योत्तरे वाऽपि पूर्वे वा मण्डपो भवेत् । हस्तान्षोडश कुर्वीत दश द्वादश वा पुनः ॥
मध्ये वेदिकया युक्तः परिक्षिप्तः समन्ततः । पञ्च सप्तापि चतुरः करान्कुर्वीत वेदिकाम् ॥ १४
चतुर्भिस्तोरणैर्युक्तो मण्डपः स्याच्चतुर्मुखः । प्लक्षद्वारं भवेत्पूर्वं याम्ये चौदुम्बरं भवेत् ॥ १५
पश्चादश्वत्थघटितं नैयग्रोधं तथोत्तरे । भूमौ हस्तप्रविष्टानि चतुर्हस्तानि चोच्छ्रये ॥ १६
सूपलिप्तं तथा श्लक्ष्णं भूतलं स्यात्सुशोभनम् । वस्त्रैर्नानाविधैस्तद्वत्पुष्पपल्लवशोभितम् ॥ १७
कृत्वैवं मण्डपं पूर्वं चतुर्द्वारेषु विन्यसेत् । अव्रणान्कलशानष्टौ ज्वलत्काञ्चनगर्भितान् ॥ १८
चूतपल्लवसंछन्नान्सितवस्त्रयुगान्वितान् । सर्वौषधिफलोपेतांश्चन्दनोदकपूरितान् ॥ १९
एवं निवेश्य तद्गर्भे गन्धधूपार्चनादिभिः । ध्वजादिरोहणं कार्यं मण्डपस्य समन्ततः ॥ २०
ध्वजांश्च लोकपालानां सर्वदिक्षु निवेशयेत् । पताका जलदाकारा मध्ये स्यान्मण्डपस्य तु ॥
गन्धधूपादिकं कुर्यात्स्वैः स्वैर्मन्त्रैरनुक्रमात् । बलिं च लोकपालेभ्यः स्वमन्त्रेण निवेदयेत् ॥
ऊर्ध्वं तु ब्रह्मणे देयं त्वधस्ताच्छेषवासुकेः । संहितायां तु ये मन्त्रास्तद्दैवत्याः शुभाः स्मृताः ॥
तैः पूजा लोकपालानां कर्तव्या च समन्ततः । त्रिरात्रमेकरात्रं वा पञ्चरात्रमथापि वा ॥ २४
अथवा सप्तरात्रं तु कार्यं स्यादधिवासनम् । एवं सतोरणं कृत्वा अधिवासनमुत्तमम् ॥ २५
तस्याप्युत्तरतः कुर्यात्स्नानमण्डपमुत्तमम् । तदर्धेन त्रिभागेन(ण) चतुर्भागेन(ण)वा पुनः ॥

१ ङ. प्रमाणेन । २ घ. ङ. °रकृत्वा ब° । ३ ग. घ. ङ. च. °रात्रय° । ४ घ. ङ. शुभावहाः । ५ ङ. °रयोगर्वि° । ६ घ. ग. °त्येषु श° । ७ ङ. °वं सततं च सदा भवेत् । मू° । ८ ङ. वामे । ९ ग. °था शुक्लं रयस्याध्वसु श्रो° । १० ग. °द्वत्पश्चप° । ११ च. °वपूरित° । १२ घ. °जाधिरोपणं । १३ ग. ध. ब्रह्मणो । १४ क. ख. घ. ङ. शुद्धो । १५ घ. ङ. च. °नमण्डपम् । त° ।

आनीय लिङ्गमर्चां वा शिल्पिनः पूजयेद्बुधः। वस्त्राभरणरत्नैश्च येऽपि तत्परिचारकाः ॥ २७
क्षमध्वमिति तान्ब्रूयाद्यजमानोऽप्यतः परम्। देवं प्रस्तरणे कृत्वा नेत्रज्योतिः प्रकल्पयेत् ॥
अक्ष्णोरुद्धरणं वक्ष्ये लिङ्गस्यापि समासतः। सर्वतस्तु बलिं दद्यात्सिद्धार्थघृतपायसैः ॥ २९
शुक्लपुष्पैरलंकृत्य घृतगुग्गुलधूपितम्। विप्राणां वाचनं कुर्याद्दद्याच्छक्त्या च दक्षिणाम् ॥
गां महीं कनकं चैव स्थापकाय निवेदयेत्। लक्षणं कारयेद्भक्त्या मन्त्रेणानेन वै द्विजः ॥३१
ओंनमो भगवते तुभ्यं शिवाय परमात्मने। हिरण्यरेतसे विष्णो विश्वरूपाय ते नमः ॥ ३२
मन्त्रोऽयं सर्वदेवानां नेत्रज्योतिःष्वपि स्मृतः। एवमामन्त्र्य देवेशं काञ्चनेन विलेखयेत् ॥३३
मङ्गल्यानि च वाद्यानि ब्रह्मघोषं सगीतकम्। वृद्ध्यर्थं कारयेद्विद्वानमङ्गल्यविनाशनम् ॥
लक्षणोद्धरणं वक्ष्ये लिङ्गस्य सुसमाहितः। त्रिधा विभज्य पूज्यायां लक्षणं स्याद्विभाजकम्
लेखात्रयं तु कर्तव्यं यवाष्टान्तरसंयुतम्। * न स्थूलं न कृशं तद्वन्न वक्रं छेदवर्जितम् ॥ ३६
निम्नं यवप्रमाणेन ज्येष्ठलिङ्गस्य कारयेत्। सूक्ष्मास्ततस्तु कर्तव्या यथा मध्यमके न्यसेत् ॥ ३७
अष्टभक्तं ततः कृत्वा त्यक्त्वा भागत्रयं बुधः। लँम्बयेत्सप्त रेखास्तु पार्श्वयोरुभयोः समाः ॥
तावत्प्रलम्बयेद्विद्वान्यावद्भागचतुष्टयम्। भ्राम्यते पञ्चभागोर्ध्वं कारयेत्संगमं ततः ॥ ३९
रेखयोः संगमे तद्वत्पृष्ठे भागद्वयं भवेत्। एवमेतत्समाख्यातं समासाल्लक्षणं मया ॥ ४०

इति श्रीमात्स्ये महापुराणे प्रतिष्ठानुकीर्तनं नाम चतुःषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १३२०२ ॥

---

अथ पञ्चषष्ट्यधिकद्विशततमोऽध्यायः।

---

सूत उवाच—

अतः परं प्रवक्ष्यामि मूर्तिपानां तु लक्षणम्। स्थापकस्य समासेन लक्षणं शृणुत द्विजाः ॥ १
सर्वावयवसंपूर्णो वेदमन्त्रविशारदः। पुराणवेत्ता तत्त्वज्ञो दम्भलोभविवर्जितः ॥ २
कृष्णसारमये देशे य उत्पन्नः शुभाकृतिः। शौचाचारपरो नित्यं पाषण्डकुलनिःस्पृहः ॥ ३
समः शत्रौ च मित्रे च ब्रह्मोपेन्द्रहरप्रियः। ऊहापोहार्थतत्त्वज्ञो वास्तुशास्त्रस्य पारगः ॥ ४
आचार्यस्तु भवेन्नित्यं सर्वदोषविवर्जितः। मूर्तिपास्तु द्विजाश्चैव कुलीना ऋजवस्तथा ॥ ५
द्वात्रिंशत्षोडशाथापि अष्टौ वा श्रुतिपारगाः। ज्येष्ठमध्यकनिष्ठेषु मूर्तिपा वः प्रकीर्तिताः ॥६
ततो लिङ्गमथार्चां वा नीत्वा स्नपनमण्डपम्। गीतमङ्गलशब्देन स्नपनं तत्र कारयेत् ॥ ७
पञ्चगव्यकषायेण मृद्भिर्भस्मोदकेन च। शौचं तत्र प्रकुर्वीत वेदमन्त्रचतुष्टयात् ॥ ८
समुद्रज्येष्ठमन्त्रेण आपो दिव्येति चापरः। यासां राजेति मन्त्रस्तु आपो हि ष्ठेति चापरः ॥९

---

* इत आरभ्य चतुष्टयमित्यन्तग्रन्थो न विद्यते ङ. पुस्तके।

---

१ घ. °त्। लक्षणोद्दर°। ङ. च. °त्। लक्षणोद्धार°। २ क ख. °णां चार्चनं। ३ ग. घ. ङ. च. °म्। गामेकां क°। ४ घ. °ल्यनिवर्हणम्। ल°। ५ ग. घ. ङ. °णं कुर्याल्लिङ्ग°। ६ ग. पूजार्थे ल°। घ. पूजार्के ल°। ७ ग. लब्ध्वा विंशतिरेखां तु पा°। ८ ग. समाम्। ९ ग. घ. °गमं तद्वद्भागौ पृष्ठतो ल°। १० ग. °ज्ञो विषयादिवि°। ११ घ. द्विधाचैव।

एवं स्नाप्य ततो देवं पूज्य गन्धानुलेपनैः । प्रच्छाद्य वस्त्रयुग्मेन(ण) अभिवस्त्रेत्युदाहृतम् ॥ १०
उत्थापयेत्ततो देवमुत्तिष्ठ ब्रह्मणस्पते । आमूरजेति च तथा रथे तिष्ठेति चापरः ॥ ११
रथे ब्रह्मरथे वाऽपि धृतां शिल्पिगणेन तु । आरोप्यं चाऽऽनयेद्विद्वानाक्रुष्णेन प्रवेशयेत् ॥ १२
ततः प्रास्तीर्य शय्यायां स्थापयेच्छनकैर्बुधः । कुशानास्तीर्य पुष्पाणि स्थापयेत्प्राङ्मुखं ततः
ततस्तु निद्राकलशं वस्त्रकाञ्चनसंयुतम् । शिरोभागे तु देवस्य जपन्नेवं निधापयेत् ॥ १४
आपो देवीति मन्त्रेण आपोऽस्मान्मातरोऽपि च । ततो दुकूलपट्टैश्च च्छाद्य नेत्रोपधानकम् ॥
दद्याच्छिरसि देवस्य कौशेयं वा विचक्षणः । मधुना सर्पिषाऽभ्यज्य पूज्य सिद्धार्थकैस्ततः ॥
आप्यायस्वेति मन्त्रेण या ते रुद्र शिवेति च । उपविश्यार्चयेद्देवं गन्धपुष्पैः समन्ततः ॥ १७
सितं प्रतिसरं दद्याद्बार्हस्पत्येति मन्त्रतः । दुकूलपट्टैः कार्पासैर्नानाचित्रैरथापि वा ॥ १८
आच्छाद्य देवं सर्वत्र च्छत्रचामरदर्पणम् । पार्श्वतः स्थापयेत्तत्र वितानं पुष्पसंयुतम् ॥ १९
रत्नान्योषधयस्तत्र गृहोपकरणानि च । भाजनानि विचित्राणि शयनान्यासनानि च ॥ २०
अभि त्वा शूर मन्त्रेण यथा विभवतो न्यसेत् । क्षीरं क्षौद्रं घृतं तद्वद्भक्ष्यभोज्यान्नपायसैः ॥ २१
षड्विधैश्च रसैस्तद्वत्समन्तात्परिपूजयेत् । बलिं दद्यात्प्रयत्नेन मन्त्रेणानेन भूरिशः ॥ २२
त्र्यम्बकं यजामह इति सर्वतः शनकैर्भुवि । मूर्तिपान्स्थापयेत्पश्चात्सर्वदिक्षु विचक्षणः ॥ २३
चतुरो द्वारपालांश्च द्वारेषु विनिवेशयेत् । श्रीसूक्तं पावमानं च सोमसूक्तं सुमङ्गलम् ॥ २४
तथा च शान्तिकाध्यायमिन्द्रसूक्तं तथैव च । रक्षोघ्नं च तथा सूक्तं पूर्वतो बह्वृचो जपेत् ॥ २५
रौद्रं पुरुषसूक्तं च श्लोकाध्यायं सशुक्रियम् । तथैव मण्डलाध्यायमध्वर्युर्दक्षिणे जपेत् ॥ २६
वामदेव्यं बृहत्साम ज्येष्ठसाम रथंतरम् । तथा पुरुषसूक्तं च रुद्रसूक्तं सशान्तिकम् ॥ २७
भारुण्डानि च सामानि च्छन्दोगः पश्चिमे जपेत् । अथर्वाङ्गिरसं तद्वन्नीलं रौद्रं तथैव च ॥
तथाऽपराजितादेवीसप्तसूक्तं सरौद्रकम् । तथैव शान्तिकाध्यायमथर्वा चोत्तरे जपेत् ॥ २९
शिरःस्थाने तु देवस्य स्थापको होममाचरेत् । शान्तिकैः पौष्टिकैस्तद्वन्मन्त्रैर्व्याहृतिपूर्वकैः ॥
पलाशोदुम्बराश्वत्था अपामार्गः शमी तथा । हुत्वा सहस्रमेकैकं देवं पादे तु संस्पृशेत् ॥ ३१
ततो होमसहस्रेण हुत्वा हुत्वा ततस्ततः । नाभिमध्यं तथा वक्षः शिरश्चाप्यालभेत्पुनः ॥ ३२
हस्तमात्रेषु कुण्डेषु मूर्तिपाः सर्वतोदिशम् । समेखलेषु ते कुर्युर्योनिवक्त्रेषु चाऽऽदरात् ॥ ३३
वितस्तिमात्रा योनिः स्याद्गजोष्ठसदृशी तथा । आयता छिद्रसंयुक्ता पार्श्वतः कलयोच्छ्रिता
कुण्डात्कलानुसारेण सर्वतश्चतुरङ्गुला । विस्तारेणोच्छ्रयात्तद्वच्चतुरस्रा समा भवेत् ॥ ३५
वेदिभित्तिं परित्यज्य त्रयोदशभिरङ्गुलैः । एवं नवसु कुण्डेषु लक्षणं चैव दृश्यते ॥ ३६
आग्नेयशाक्रयाम्येषु होतव्यमुदगाननैः । शान्तये लोकपालेभ्यो मूर्तिभ्यः क्रमशस्तथा ॥ ३७
तथा मूर्त्यधिदेवानां होमं कुर्यात्समाहितः । वसुधा वसुरेताश्च यजमानो दिवाकरः ॥ ३८
जलं वायुस्तथा सोम आकाशश्चाष्टमः स्मृतः । देवस्य मूर्तयस्त्वष्टावेताः कुण्डेषु संस्मरेत् ॥ ३९

---

१ ङ. च. °ते । आवो राजे° । २ क. ख °प्य च ततो विद्वा° । ३ ग. °तः प्रस्तीर्य सस्यानि स्था° । ४ च. नियोजयेत् । ५ ग. धूप्य । ६ घ. ङ. °पस्कर° । ७ ग. च. °तिमास्था° । ८ ङ. मित्रसू° । ९ ग. ङ. च. °हृचः पठेत् । रौ° । १० घ. कुण्डकूला° । ११ ग. घ °गायनैः । ङ. °शान्वितैः । शा° । १२ क. ग. मूर्तिपा । १३ ग. घ. ङ. °त्समन्ततः ।

एतासामधिपान्वक्ष्ये पवित्रान्मूर्तिनामतः। पृथ्वीं पाति च शर्वश्च पशुपश्चाग्निमेव च ॥ ४०
यजमानं तथैवोग्रो रुद्रश्चाऽऽदित्यमेव च। भवो जलं सदा पाति वायुमीशान एव च ॥ ४१
महादेवस्तथा चन्द्रं भीमश्चाऽऽकाशमेव च। सर्वदेवप्रतिष्ठासु मूर्तिपा ह्येत एव च ॥ ४२
एतेभ्यो वैदिकैर्मन्त्रैर्यथास्वं होममाचरेत्। तथा शान्तिघटं कुर्यात्प्रतिकुण्डेषु सर्वतः ॥ ४३
शतान्ते वा सहस्रान्ते संपूर्णाहुतिरिष्यते। समपादः पृथिव्यां तु प्रशान्तात्मा विनिक्षिपेत्॥४४
आहुतीनां तु संपातं पूर्णकुम्भेषु वै न्यसेत्। मूलमध्योत्तमाङ्गेषु देवं तेनावसेचयेत् ॥ ४५
स्थितं च स्नापयेत्तेन संपाताहुतिवारिणा। प्रतियामेषु धूपं तु नैवेद्यं चन्दनादिकम् ॥ ४६
पुनः पुनः प्रकुर्वीत होमः कार्यः पुनः पुनः। पुनःपुनश्च दातव्या यजमानेन दक्षिणा ॥ ४७
सितवस्त्रैश्च ते सर्वे पूजनीयाः समन्ततः। विचित्रैर्हेमकटकैर्हेमसूत्राङ्गुलीयकैः ॥ ४८
वासोभिः शयनीयैश्च प्रतियामे च शक्तितः। भोजनं चापि दातव्यं यावत्स्यादधिवासनम् ॥
बलिस्त्रिसंध्यं दातव्यो भूतेभ्यः सर्वतोदिशम्। ब्राह्मणान्भोजयेत्पूर्वं शेषान्वर्णांस्तु कामतः॥
रात्रौ महोत्सवः कार्यो नृत्यगीतकमङ्गलैः। सदा पूज्याः प्रयत्नेन चतुर्थीकर्मयावता ॥ ५१
त्रिरात्रमेकरात्रं वा पञ्चरात्रमथापि वा। सप्तरात्रमथो कुर्यात्क्वचित्सद्योऽधिवासनम् ॥
सर्वयज्ञफलो यस्मादधिवासोत्सवः सदा ॥ ५२

इति श्रीमात्स्ये महापुराणेऽधिवासनविधिर्नाम पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १३२५४ ॥

---

अथ षट्षष्ट्यधिकद्विशततमोऽध्यायः।

---

सूत उवाच—

कृत्वाऽधिवासं देवानां शुभं कुर्यात्समाहितः। प्रासादस्यानुरूपेण मानं लिङ्गस्य वा पुनः ॥१
पुष्पोदकेन प्रासादं प्रोक्ष्य मन्त्रयुतेन तु। पातयेत्पक्षसूत्रं तु द्वारसूत्रं तथैव च ॥ २
आश्रयेत्किंचिदीशानीं मध्यं ज्ञात्वा दिशं बुधः। ईशानीमाश्रितं देवं पूजयन्ति दिवौकसः
आयुरारोग्यफलदमथोत्तरसमाश्रितम्। शुभं स्यादशुभं प्रोक्तमन्यथा स्थापनं बुधैः ॥ ४
अधः कूर्मशिला प्रोक्ता सदा ब्रह्मशिलाधिका। उपर्यवस्थिता तस्या ब्रह्मभागाधिका शिला
ततस्तु पिण्डिका कार्या पूर्वोक्तैर्मानलक्षणैः। ततः प्रक्षालितां कृत्वा पञ्चगव्येन पिण्डि-
काम् ॥ ६
कषायतोयेन पुनर्मन्त्रयुक्तेन सर्वतः। देवतार्चाश्रयं मन्त्रं पिण्डिकासु नियोजयेत् ॥ ७
तत उत्थाप्य देवेशमुत्तिष्ठ ब्रह्मणेति च। आनीय गर्भभवनं पीठान्ते स्थापयेत्पुनः ॥ ८
अर्घ्यपाद्यादिकं तत्र मधुपर्कं प्रयोजयेत्। ततो मुहूर्तं विश्रम्य रत्नन्यासं समाचरेत्॥ ९
वज्रमौक्तिकवैदूर्यशङ्खस्फटिकमेव च। पुष्परागेन्द्रनीलं च नीलं पूर्वादिदिक्क्रमात् ॥ १०
तालकं च शिलावज्रमञ्जनं श्याममेव च। कांक्षी काशी समाक्षीकं गैरिकं चाऽऽदितः क्रमात्

---

१ ग. °याह हो°। २ क. ख. °षु संन्यसदे। श°। ३ ङ. सर्वदा। ४ ङ. च. °न्ते:सुक्पूर्णा°। ५ ङ. °तिम॰ न्नुध्रू°। ६ ग. घ. ङ. °वत्तस्याधि°। ७ ग. °स्मात्सर्वयज्ञोत्सवस्तथा। इ°। ८ ग. कांजी कौसुम्भमा°।

गोधूमं च यवं तद्वत्तिलमुद्गं तथैव च । नीवारमथ श्यामाकं सर्षपं व्रीहिमेव च ॥ १२
न्यस्य क्रमेण पूर्वादि चन्दनं रक्तचन्दनम् । अगरुं चाञ्जनं चापि उशीरं च ततः परम् ॥१३
वैष्णवं[१] सहदेवीं च लक्ष्मणां च ततः परम् । स्वर्लोकपालनाम्ना तु न्यसेदोंकारपूर्वकम् ॥
सर्वबीजानि धातूंश्च रत्नान्योषधयस्तथा । काञ्चनं पद्मरागं तु पारदं पद्ममेव च ॥ १५
कूर्मं धरां वृषं तत्र न्यसेत्पूर्वादितः क्रमात् । ब्रह्मस्थाने तु दातव्याः संहताः स्युः परस्परम् ॥
कनकं विद्रुमं ताम्रं कांस्यं चैवाऽऽरकूटकम् । रजतं विमलं पुष्पं लोहं चैव क्रमेण तु ॥ १७
काञ्चनं हरितालं च सर्वाभावेऽपि निक्षिपेत् । दद्याद्बीजौषधेस्थाने सहदेवीं यवानपि ॥ १८
न्यासमन्त्रानतो वक्ष्ये लोकपालात्मकानिह । इन्द्रस्तु महसा दीप्तः सर्वदेवाधिपो महान् ॥
वज्रहस्तो महासत्त्वस्तस्मै नित्यं नमो नमः । आग्नेयः पुरुषो रक्तः सर्वदेवमयः शिखी २०
धूमकेतुरनाधृष्यस्तस्मै नित्यं नमो नमः । यमश्चोत्पलवर्णाभः किरीटी दण्डधृक्सदा ॥ २१
धर्मसाक्षी विशुद्धात्मा तस्मै नित्यं नमो नमः । निर्ऋतिस्तु पुमान्कृष्णः सर्वरक्षोधिपो महान् ॥ २२
खड्गहस्तो महासत्त्वस्तस्मै नित्यं नमो नमः । वरुणो धवलो[२] विष्णुः पुरुषो निम्नगाधिपः ॥
पाशहस्तो महाबाहुस्तस्मै नित्यं नमो नमः । वायुश्च सर्ववर्णो वै सर्वगन्धवहः शुभः ॥ २४
पुरुषो ध्वजहस्तश्च तस्मै नित्यं नमो नमः । गौरो यश्च पुमान्सौम्यः सर्वौषधिसमन्वितः ॥ २५
नक्षत्राधिपतिः सोमस्तस्मै नित्यं नमो नमः । ईशानपुरुषः शुक्लः सर्वविद्याधिपो महान् ॥२६
शूलहस्तो विरूपाक्षस्तस्मै नित्यं नमो नमः । पद्मयोनिश्चतुर्मूर्तिर्वेदवासाः पितामहः ॥ २७
यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मै नित्यं नमो नमः । योऽसावनन्तरूपेण ब्रह्माण्डं सचराचरम् ॥२८
पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमो नमः । ओंकारपूर्वका ह्येते न्यासे बलिनिवेदने ॥ २९
मन्त्राः स्युः सर्वकार्याणां वृद्धिपुत्रफलप्रदाः । न्यासं कृत्वा तु मन्त्राणां पायसेनानुलेपितम् ॥
पटेनाऽऽच्छादयेच्छ्वभ्रं शुक्लेनोपरि यत्नतः । तत उत्थाप्य देवेशमिष्टदेशे तु शोभने ॥ ३१
ध्रुवा द्यौरिति मन्त्रेण श्वभ्रोपरि निवेशयेत् । ततः स्थिरीकृतस्यास्य हस्तं दत्त्वा तु मस्तके ॥
ध्यात्वा परमसद्भावाद्देवदेवं च निष्कलम् । देवव्रतं तथा सोमं रुद्रसूक्तं तथैव च ॥ ३३
आत्मानमीश्वरं कृत्वा नानाभरणभूषितम् । यस्य देवस्य यद्रूपं तद्ध्याने संस्मरेत्तथा ॥ ३४
अतसीपुष्पसंकाशं शङ्खचक्रगदाधरम् । संस्थापयामि देवेशं देवो भूत्वा जनार्दनम् ॥ ३५
अक्षरं[४] दशबाहुं च चन्द्रार्धकृतशेखरम् । गणेशं वृषसंस्थं च स्थापयामि त्रिलोचनम् ॥ ३६
ऋषिभिः संस्तुतं देवं चतुर्वक्त्रं जटाधरम् । पितामहं महाबाहुं स्थापयाम्यम्बुजोद्भवम् ॥
सहस्रकिरणं शान्तमप्सरोगणसंयुतम्[५] । पद्महस्तं महाबाहुं स्थापयामि दिवाकरम् ॥ ३८
देवमन्त्रांस्तथा रौद्रान्रुद्रस्य स्थापने जपेत् । विष्णोस्तु वैष्णवांस्तद्वद्ब्राह्मान्वै ब्रह्मणो बुध
सौराः सूर्यस्य जप्तव्यास्तथाऽन्येषु तदाश्रयाः । वेदमन्त्रप्रतिष्ठा तु यस्मादानन्ददायिनी ॥
स्थापयेद्यं तु देवेशं तं प्रधानं प्रकल्पयेत् । तस्य पार्श्वस्थितानन्यान्संस्मरेत्परिवारितः ॥ ४१
गणं नन्दिमहाकालं वृषं भृङ्गिं रिटिं गुहम् । देवीं विनायकं चैव विष्णुं ब्रह्माणमेव च ॥

---

१ ङ. च. °सेत्प्रणवपू° । २ ग. ङ. च. °रुणः सबलो । ३ ग. घ. ङ. रत्नानां । ४ अष्टादशभुजं देवं च° ।
५ ङ. °णसेवित° ।

रुद्रं शक्रं जयन्तं च लोकपालान्समन्ततः। तथैवाप्सरसः सर्वा गन्धर्वगणगुह्यकाम् ॥ ४३
यो यत्र स्थाप्यते देवस्तस्य तान्परितः स्मरेत्। आवाहयेत्तथा रुद्रं मन्त्रेणानेन यत्नतः ॥
यस्य सिंहा रथे युक्ता व्याघ्रभूतास्तथोरगाः। ऋषयो लोकपालाश्च देवः स्कन्दस्तथा वृषः
प्रियो गणो मातरश्च सोमो विष्णुः पितामहः। नागा यक्षाः सगन्धर्वा ये च दिव्या नभश्चराः
तमहं त्र्यक्षमीशानं शिवं रुद्रमुमापतिम्। आवाहयामि सगणं सपत्नीकं वृषध्वजम् ॥ ४७
आगच्छ भगवन्रुद्रानुग्रहाय शिवो भव। शाश्वतो भव पूजां मे गृहाण त्वं नमो नमः ॥
ओं नमः स्वागतं भगवते नमः, ओं नमः सोमाय सगणाय सपरिवाराय प्रतिगृह्णातु
भगवन्मन्त्रपूतमिदं सर्वमर्घ्यपाद्यमाचमनीयमासनं ब्रह्मणाऽभिहितं नमो नमः स्वाहा॥४९
ततः पुण्याहघोषेण ब्रह्मघोषैश्च पुष्कलैः। स्नापयेत्तु ततो देवं दधिक्षीरघृतेन च ॥ ५०
मधुशर्करया तद्वत्पुष्पगन्धोदकेन च। शिवध्यानैकचित्तस्तु मन्त्रानेतानुदीरयेत् ॥ ५१
यज्जाग्रतो दूरमुदेति ततो विराडजायत इति च ॥ सहस्रशीर्षा पुरुष इति च ॥ अभि
त्वा शूर नोनुम इति च ॥ पुरुष एवेदं सर्वमिति ॥ त्रिपादूर्ध्वमिति ॥ येनेदं भूतमिति ॥
नत्वा वाँ अन्य इति ॥ ५२
सर्वांश्चैतान्प्रतिष्ठासु मन्त्राञ्जप्त्वा पुनःपुनः। चतुष्कृत्वः स्पृशेदद्भिर्मूले मध्ये शिरस्यपि ॥
स्थापिते तु ततो देवे यजमानोऽथ मूर्तिपम्। आचार्यं पूजयेद्भक्त्या वस्त्रालंकारभूषणैः ॥५४
दीनान्धकृपणांस्तद्वद्ये चान्ये समुपस्थिताः। ततस्तु मधुना देवं प्रथमेऽहनि लेपयेत् ॥ ५५
हरिद्रयाऽथ सिद्धार्थैर्द्वितीयेऽहनि तत्त्वतः। चन्दनेन यवैस्तद्वत्तृतीयेऽहनि लेपयेत् ॥ ५६
मनःशिलाप्रियङ्गुभ्यां चतुर्थेऽहनि लेपयेत्। सौभाग्यशुभदं यस्माल्लेपनं व्याधिनाशनम् ॥
परं प्रीतिकरं नृणामेतद्वेदविदो विदुः। कृष्णाञ्जनं तिलं तद्वत्पञ्चमेऽपि निवेदयेत् ॥ ५८
षष्ठे तु सघृतं दद्याच्चन्दनं पद्मकेसरम्। रोचनागरुपुष्पं तु सप्तमेऽहनि दापयेत् ॥ ५९
यत्र सद्योधिवासः स्यात्तत्र सर्वं निवेदयेत्। स्थितं न चालयेद्देवमन्यथा दोषभाग्भवेत्॥६०
पूरयेत्सिकताभिस्तु निश्छिद्रं सर्वतो भवेत्। लोकपालस्य दिग्भागे यस्य संचलते विभुः॥६१
तस्य लोकपतेः शान्तिर्देयाश्चेमाश्च दक्षिणाः। इन्द्राय वारणं दद्यात्काञ्चनं चाल्पवित्तवान्
अग्नेः सुवर्णमेव स्याद्यमस्य महिषं तथा। अजं च काञ्चनं दद्यान्नैर्ऋतं राक्षसं प्रति। ६३
वरुणं प्रति मुक्तानि सशुक्तीनि प्रदापयेत्। रीतिकं वायवे दद्याद्वस्त्रयुग्मेन(ण) सांप्रतम्॥६४
सोमाय धेनुर्दातव्या राजतं वृषभं शिवे। यस्यां यस्यां संचलनं शान्तिः स्यात्तत्र तत्र तु ॥ ६५
अन्यथा तु भवेद्घोरं भयं कुलविनाशनम्। अचलं कारयेत्तस्मात्सिकताभिः सुरेश्वरम् ॥ ६६
अन्नं वस्त्रं च दातव्यं पुण्याहजयमङ्गलम्। त्रिपञ्च सप्तदश वा दिनानि स्यान्महोत्सवः ॥ ६७
चतुर्थेऽह्नि महास्नानं चतुर्थीकर्म कारयेत्। दक्षिणा च पुनस्तद्वद्देया तत्रातिभक्तितः ॥ ६८

---

१ क. ख. °महमृक्ष° । २ ग. °श्वतीं भ° । ३ ग. ङ. °मुपैति । ४ ग. घ. ङ. °म् । मनःप्री° । ५ ग. घ. °नानागपु° । ६ क. ख. °न्द्रायाभर° । ७ ख. च. अन्नं । ८ घ. ङ °याद्गुरवे रा° । ९ ग. कपिलां । घ. ङ. च. रीतिकाम् । १० ग. घ. ङ. संयुताम् । ११ क. ख. घ. °त्था रजतं सवृषं शि° । १२ ग. ङ. °लत शा° । १३ ग. घ. च °यात्तत्रापि शान्ति° ।

देवप्रतिष्ठाविधिरेष तुभ्यं निवेदितः पापविनाशहेतोः ।
यस्माद्बुधैः पूर्वमनन्तमुक्तमनेकविद्याधरदेवपूज्यम् ॥ ६९

इति श्रीमात्स्ये महापुराणे प्रतिष्ठानुकीर्तनं नाम षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १३३२३ ॥

---

अथ सप्तषष्ट्यधिकद्विशततमोऽध्यायः ।

---

सूत उवाच—

अथातः संप्रवक्ष्यामि देवस्नपनमुत्तमम् । अर्घस्यापि समासेन शृणु त्वं विधिमुत्तमम् ॥ १
दध्यक्षतकुशाग्राणि क्षीरं दूर्वास्तथा मधु । यवाः सिद्धार्थकास्तद्वदष्टाङ्गोऽर्घः फलैः सह॥ २
गजाश्वरथ्यावल्मीकवराहोत्खातमण्डलात् । अग्न्यगारात्तथा तीर्थाद्गजाद्गोमण्डलादपि ॥
कुम्भे तु मृत्तिकां दद्यादुद्धृताऽसीतिमन्त्रवित् । शं नो देवीत्यपां मन्त्रमापो हि ष्ठेति वै तथा
सावित्र्याऽऽदाय गोमूत्रं गन्धद्वारेति गोमयम् । आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि
तेजोऽसीति घृतं तद्वद्देवस्य त्वेति चोदकम् । कुशमिश्रं क्षिपेद्विद्वान्पञ्चगव्यं भवेत्ततः ॥ ६
स्नाप्याथ पञ्चगव्येन दध्ना शुद्धेन वै ततः । दधिक्राव्णेतिमन्त्रेण कर्तव्यमभिमन्त्रणम् ॥ ७
आप्यायस्वेति पयसा तेजोऽसीति घृतेन च । मधुवातेति मधुना ततः पुष्पोदकेन च ॥ ८
सरस्वत्यै भैषज्येन कार्यं तस्याभिमन्त्रणम् । हिरण्याक्षेति मन्त्रेण स्नापयेद्रत्नवारिणा ॥ ९
कुशाम्भसा ततः स्नानं देवस्य त्वेति कारयेत् । फलोदकेन च स्नानमग्न आयाहि कारयेत्॥१०
ततस्तु गन्धतोयेन सावित्र्या चाभिमन्त्रयेत् । ततो घटसहस्रेण सहस्रार्धेन वा पुनः ॥ ११
तस्याप्यर्धेन वा कुर्यात्सपादेन शतेन वा । चतुःषष्ट्या ततोऽर्धेन तदर्धार्धेन वा पुनः ॥ १२
चतुर्भिरथवा कुर्याद्घटानामल्पवित्तवान् । सौवर्णै राजतैर्वाऽपि ताम्रैर्वा रीतिकोद्भवैः॥ १३
कांस्यैर्वा पार्थिवैर्वाऽपि स्नपनं शक्तितो भवेत् । सहदेवी वचा व्याघ्री बला चातिबला तथा ॥
शङ्खपुष्पी तथा सिंही ह्यष्टमी च सुवर्चला । महौषध्यष्टकं ह्येतन्महास्नानेषु योजयेत् ॥ १५
यवगोधूमनीवारतिलश्यामाकशालयः । प्रियङ्गवो व्रीहयश्च स्नानेषु परिकल्पिताः ॥ १६
स्वस्तिकं पद्मकं शङ्खमुत्पलं कमलं तथा । श्रीवत्सं दर्पणं तद्वन्नन्द्यावर्तमथाष्टकम् ॥ १७
एतानि गोमयैः कुर्यान्मृदा च शुभया ततः । पञ्चवर्णादिकं तद्वत्पञ्चवर्णं रजस्तथा ॥ १८
दूर्वाः कृष्णतिलान्दद्यान्नीराजनविधिर्मतः । एवं नीराजनं कृत्वा दद्यादाचमनं बुधः ॥ १९
मन्दाकिन्यास्तु यद्वारि सर्वपापापहं शुभम् । ततो वस्त्रयुगं दद्यान्मन्त्रेणानेन यत्नतः ॥ २०
देवसूत्रसमायुक्ते यज्ञदानसमन्विते । सर्ववर्णे शुभे देव वाससी ते विनिर्मिते ॥ २१
ततस्तु चन्दनं दद्यात्समं कर्पूरकुङ्कुमैः । इममुच्चारयेन्मन्त्रं दर्भपाणिः प्रयत्नतः ॥ २२
शरीरं ते न जानामि चेष्टां नैव च नैव च । मया निवेदितान्गन्धान्प्रतिगृह्य विलिप्यताम् ॥
चत्वारिंशत्ततो दीपान्दद्याच्चैव प्रदक्षिणान् । त्वं सूर्यचन्द्रज्योतींषि विद्युदग्निस्तथैव च॥२४

---

१ ङ. °रसंघजुष्टम् । इ° । २ ग. घ. °र्थोदधाऽग्रज° । ३ ङ. °ष्पी च वाराही स्य° । ४ ग. °द्याद्दानं तत स्ततः । म° । ५ ग. घ. °क्षिणम् । त्वं ।

त्वमेव सर्वज्योतींषि दीपोऽयं प्रतिगृह्यताम् । ततस्त्वनेन मन्त्रेण धूपं दद्याद्विचक्षणः ॥ २५
वनस्पतिरसो दिव्यो गन्धाढ्यो गन्ध उत्तमः । मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यताम्
ततस्त्वाभरणं दद्यान्महाभूपाय ते नमः । अनेन विधिना कृत्वा सप्तरात्रं महोत्सवम् ॥ २७
देवकुम्भैस्ततः कुर्याद्यजमानोऽभिषेचनम् । चतुर्भिरष्टभिर्वाऽपि द्वाभ्यामेकेन वा पुनः ॥ २८
सपञ्चरत्नकलशैः सितवस्त्राभिवेष्टितैः । देवस्य त्वेति मन्त्रेण साम्ना चाऽऽथर्वणेन च ॥ २९
अभिषेके च ये मन्त्रा नवग्रहमखे स्मृताः । सिताम्बरधरः स्नात्वा देवान्संपूज्य यत्नतः ॥ ३०
स्थापकं पूजयेद्भक्त्या वस्त्रालंकारभूषणैः । यज्ञभाण्डानि सर्वाणि मण्डपोपस्करादिकम् ॥
यच्चान्यदपि तद्गेहे तदाचार्याय दापयेत् । सुप्रसन्ने गुरौ यस्मात्तृप्यन्ति सर्वदेवताः ॥ ३२

नैतद्द्विशीलेन च दाम्भिकेन न लिङ्गिना स्थापनमत्र कार्यम् ।
विप्रेण कार्यं श्रुतिपारगेण गृहस्थधर्माभिरतेन नित्यम् ॥ ३३
पाषण्डिनं यस्तु करोति भक्त्या विहाय विप्राञ्छ्रुतिधर्मयुक्तान् ।
गुरुं प्रतिष्ठादिषु तत्र नूनं कुलक्षयः स्याद्दचिरादपूज्यः ॥ ३४
स्थानं पिशाचैः परिगृह्यते वा अपूज्यतां यात्यचिरेण लोके ।
विप्रैः कृतं यच्छुभदं कुले स्यात्सपूज्यतां याति चिरं च कालम् ॥ ३५

इति श्रीमात्स्ये महापुराणे देवतास्नानं नाम सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १३३५८ ॥

---

अथाष्टषष्ट्यधिकद्विशततमोऽध्यायः ।

---

ऋषय ऊचुः—

प्रासादाः कीदृशाः सूत कर्तव्या भूतिमिच्छता । प्रमाणं लक्षणं तद्वद्वद विस्तरतोऽधुना ॥ १

सूत उवाच—

अथातः संप्रवक्ष्यामि प्रासादविधिनिर्णयम् । वास्तौ परीक्षिते सम्यग्वास्तुदेहविचक्षणः ॥ २
वास्तूपशमनं कुर्यात्समिद्भिर्बलिकर्मणा । जीर्णोद्धारे तथोद्याने तथा गृहनिवेशने ॥ ३
नवप्रासादभवने प्रासादपरिवर्तने । द्वाराभिवर्तने तद्वत्प्रासादेषु गृहेषु च ॥ ४
वास्तूपशमनं कुर्यात्पूर्वमेव विचक्षणः । एकाशीतिपदं लिख्य वास्तुमध्ये च पृष्ठतः ॥ ५
होमस्त्रिमेखले कार्यः कुण्डे हस्तप्रमाणके । यवैः कृष्णतिलैस्तद्वत्समिद्भिः क्षीरवृक्षजैः ॥
पालाशैः खादिरैश्चापि मधुसर्पिःसमन्वितैः । कुशदूर्वामयैर्वाऽपि मधुसर्पिःसमन्वितैः ॥ ७
कार्यस्तु पञ्चाभिर्बिल्वैर्बिल्वबीजैरथापि वा । होमान्ते भक्ष्यभोज्यैस्तु वास्तुदेशे बलिं हरेत् ॥
तद्वद्विशेषनैवेद्यमेवं दद्यात्क्रमेण तु । ईशकोणे घृताक्तं तु शिखिने विनिवेदयेत् ॥ ९
ओदनं सफलं दद्यात्पर्जन्याय घृतान्वितम् । जयाय च ध्वजान्पीतान्पैष्टं कूर्मं च संन्यसेत् ।
इन्द्राय पञ्चरत्नानि पैष्टं च कुलिशं तथा । वितानकं च सूर्याय धूम्रं सक्तुं तथैव च ॥ ११

---

१ ग. घ. °मानाभि° । २ क. ख. घ. 'ष्यन्ते स° । ३ ङ. बुद्ध्या । ४ ग. °भैनिष्ठान् । गु° । ५ ग. ङ. च. °स्यात्तत्पू° । ६ ग. घ. °क्षकैः । पा° । ७ ग. °बिल्वैः पञ्चभी° । ८ ङ. °ल्वैर्बीजेरन्नैर° । ९ घ. °न्ते नव भो° । १० क. ख. °ताम्रं तु । ११ ग. जयन्ताय ध्व° ।

सत्याय घृतगोधूमं मत्स्यं दद्याद् भृशाय च । शष्कुलीश्चान्तरिक्षाय दद्यात्सक्तूंश्च वायवे॥ १२
लाजाः पूष्णे तु दातव्या वितथे चणकौदनम् । गृहक्षताय मध्वन्नं यमाय पिशितौदनम् ॥ १३
गैन्धौदनं च गन्धर्वे भृङ्गराजस्य भृङ्गिकाम् । मृगाय यावकं दद्यात्पितृभ्यः कृसरा मता ॥ १४
दौवारिके दन्तकाष्ठं पिष्टं कृष्णबलिं तथा । सुग्रीवेऽपूपकं दद्यात्पुष्पदन्ताय पायसम् ॥ १५
कुशस्तम्बेन संयुक्तं तथा पद्मं च वारुणे । पिष्टं हिरण्मयं दद्यादसुराय सुरा मता ॥ १६
घृतौदनं च शोषाय यवान्नं पापयक्ष्मणे । घृतलड्डुकास्तु रोगाय नागे पुष्पफलानि च ॥ १७
सर्पिर्मुख्याय दातव्यं मुद्गौदनमतः परम् । भल्लाटस्थानके दद्यात्सोमाय घृतपायसम् ॥ १८
भगाय शालिकं पिष्टमदित्यै पोलिकास्तथा । दित्यै तु पूरिका दद्यादित्येवं बाह्यतो बलिः ॥
क्षीरं यमाय दातव्यमापवत्साय वै दधि । सावित्रे लड्डुकान्दद्यात्समरीचं कुशौदनम् ॥ २०
सवितुर्गुडपूपांश्च जयाय घृतचन्दनम् । विवस्वते पुनर्दद्याद्रक्तचन्दनपायसम् ॥ २१
हरितालौदनं दद्यादिन्द्राय घृतसंयुतम् । घृतौदनं च मित्राय रुद्राय घृतपायसम् ॥ २२
आमं पक्वं तथा मांसं देयं स्याद्राजयक्ष्मणे । पृथ्वीधराय मांसानि कूष्माण्डानि च दापयेत् ॥
शर्करापायसं दद्यादर्यम्णे पुनरेव हि । पञ्चगव्यं यवांश्चैव तिलाक्षतमयं चरुम् ॥ २४
भक्ष्यं भोज्यं च विविधं ब्रह्मणे विनिवेदयेत् । एवं संपूजिता देवाः शान्तिं कुर्वन्ति ते सदा ॥
सर्वेभ्यः काञ्चनं दद्याद्ब्राह्मणे गां पयस्विनीम् । राक्षसीनां बलिर्देयः अपि याहृग्यथा शृणु ॥
मांसौदनं घृतं पद्मकेसरं रुधिरान्वितम् । ईशानभागमाश्रित्य चरक्यै विनिवेदयेत् ॥ २७
मांसौदनं च रुधिरं हरिद्रौदनमेव च । आग्नेयीं दिशमाश्रित्य विदार्यै विनिवेदयेत् ॥ २८
दध्योदनं सरुधिरमस्थिखण्डैश्च संयुतम् । पीतरक्तं बलिं दद्यात्पूतनायै सरक्षसे ॥ २९
वायव्यां पापराक्षस्यै मत्स्यमांसं सुरासवम् । पायसं चापि दातव्यं स्वनाम्ना सर्वतः क्रमात् ॥
नमस्कारान्तयुक्तेन प्रणवाद्येन संयुतः । ततः सर्वौषधीस्नानं यजमानस्य कारयेत् ॥ ३१
*द्विजान्सुपूजयेद्भक्त्या ये चान्ये गृहमागताः । एतद्वास्तूपशमनं कृत्वा कर्म समारभेत् ॥ ३२
प्रासादभवनोद्यानप्रारम्भे विनिवर्तने । पुरवेश्मप्रवेशेषु सर्वदोषापनुत्तये ॥ ३३
रक्षोघ्नपावमानेन सूक्तेन भवनादिकम् । नृत्यमङ्गलवाद्येन कुर्याद्ब्राह्मणवाचनम् ॥ ३४
अनेन विधिना यस्तु प्रतिसंवत्सरं बुधः । गृहे वाऽऽयतने कुर्यान्न स दुःखमवाप्नुयात् ॥ ३५
न च व्याधिभयं तस्य न च बन्धुधनक्षयः । जीवेद्वर्षशतं स्वर्गे कल्पमेकं च तिष्ठति ॥ ३६

इति श्रीमात्स्ये महापुराणे वास्तुदोषोपशमनं नामाष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १३३९४ ॥

---

अथैकोनसप्तत्यधिकद्विशततमोऽध्यायः ।

---

सूत उवाच—

एवं वास्तुबलिं कृत्वा भजेत्षोडशभागिकम् । तस्य मध्ये चतुर्भिस्तु भागैर्गर्भं तु कारयेत् ॥ १

---

* इत आरभ्य सर्वदोषापनुत्तय इत्यन्तग्रन्थो घ. पुस्तके न विद्यते ।

---

१ ग. गन्धोदकं । २ क. ख. पुष्पकं । ग. पूरिकां । ३ क. ख. वारुणम् । ४ क. शेषाय । ग. ङ. सोमाय । ५ ग. °पुष्पं फलान्वितम् । भक्ष्यमुख्या° । ६ ग. °थ मधुपा° । ७ घ. °तद्दविधरु° । ८ ङ. शरावे ।

भागद्वादशकं सार्धं ततस्तु परिकल्पयेत्। चतुर्दिक्षु तथा ज्ञेयं निर्गमं तु ततो बुधैः॥ २
चतुर्भागेन(ण) भित्तीनामुच्छ्रायः स्यात्प्रमाणतः। द्विगुणः शिखरोच्छ्रायो भित्त्युच्छ्रायप्रमाणतः॥ ३
शिखरार्धस्य चार्धेन विधेया तु प्रदक्षिणा। गर्भसूत्रद्वयं चाग्रे विस्तारो मण्डपस्य तु॥ ४
आयतः स्यात्त्रिभिर्भागैर्भद्रयुक्तः सुशोभनः। पञ्चभागेन संभज्य गर्भमानं विचक्षणः॥ ५
भागमेकं गृहीत्वा तु प्राग्ग्रीवं कल्पयेद्बुधः। गर्भसूत्रसमो भागादग्रतो मुखमण्डपः॥ ६
एतत्सामान्यमुद्दिष्टं प्रासादस्येह लक्षणम्। तथाऽन्यं तु प्रवक्ष्यामि प्रासादं लिङ्गमानतः॥ ७
लिङ्गपूजाप्रमाणेन कर्तव्या पीठिका बुधैः। पिण्डिकार्धेन भागः स्यात्तन्मानेन तु भित्तयः
बाह्यभित्तिप्रमाणेन उत्सेधस्तु भवेत्पुनः। भित्त्युच्छ्रायात्तु द्विगुणः शिखरस्य समुच्छ्रयः॥
शिखरस्य चतुर्भागात्कर्तव्या च प्रदक्षिणा। प्रदक्षिणाध्वस्तु समस्त्वग्रतो मण्डपो भवेत्॥१०
तस्य चार्धेन कर्तव्यस्त्वग्रतो मुखमण्डपः। प्रासादान्निर्गतौ कार्यौ कपोलौ गर्भमानतः॥ ११
ऊर्ध्वं भित्त्युच्छ्रयात्तस्य मञ्जरीं तु प्रकल्पयेत्। मञ्जर्याश्चार्धभागेन शुकनासां प्रकल्पयेत्॥
ऊर्ध्वं तथाऽर्धभागेन वेदीबन्धो भवेदिह। वेद्याश्चोपरि यच्छेषं कण्ठश्चामलसारकः॥ १३
एवं विभज्य प्रासादं शोभनं कारयेद्बुधः। अथान्यच्च प्रवक्ष्यामि प्रासादस्येह लक्षणम्॥१४
गर्भमानप्रमाणेन प्रासादं शृणुत द्विजाः। विभज्य नवधा गर्भं मध्ये स्याल्लिङ्गपीठिका॥
पादाष्टकं तु रुचिरं पार्श्वतः परिकल्पयेत्। मानेन तेन विस्तारो भित्तीनां तु विधीयते॥ १६
पादं पञ्चगुणं कृत्वा भित्तीनामुच्छ्रयो भवेत्। स एव शिखरस्यापि द्विगुणः स्यात्समुच्छ्रयः॥
चतुर्धा शिखरं भज्य अर्धभागद्वयस्य तु। शुकनासं प्रकुर्वीत तृतीये वेदिका मता॥ १८
कण्ठमामलसारं तु चतुर्थे परिकल्पयेत्। कपोलयोस्तु संहारो द्विगुणोऽत्र विधीयते॥ १९
शोभनैः पत्रवल्लीभिरण्डकैश्च विभूषितः। प्रासादोऽयं तृतीयस्तु मया तुभ्यं निवेदितः॥
सामान्यमपरं तद्वत्प्रासादं शृणुत द्विजाः। त्रिभेदं कारयेत्क्षेत्रं यत्र तिष्ठन्ति देवताः॥ २१
रथाङ्कस्तेन मानेन बाह्यभागविनिर्गतः। नेमी पादेन विस्तीर्णा प्रासादस्य समन्ततः॥२२
गर्भं तु द्विगुणं कुर्यात्तस्य मानं भवेदिह। स एव भित्तेरुत्सेधो द्विगुणः शिखरो मतः॥२३
ाग्ग्रीवः पञ्चभागेन निष्कासस्तस्य चोच्यते। कारयेत्सुषिरं तद्वत्त्रीकारस्य त्रिभागतः॥
ाग्ग्रीवं पञ्चभागेन निष्कासेण विशेषतः। कुर्याद्वा पञ्चभागेन प्राग्ग्रीवं कर्णमूलतः॥ २५
थापयेत्कनकं तत्र गर्भान्ते द्वारमूलतः। एवं तु त्रिविधं कुर्याज्ज्येष्ठमध्यकनीयसम्॥ २६
लेङ्गमानानुभेदेन रूपभेदेन वा पुनः। एते समासतः प्रोक्ता नामतः शृणुताधुना॥ २७
रुमन्दरकैलासकुम्भसिंहमृगास्तथा। विमानच्छन्दकस्तद्वच्चतुरस्रस्तथैव च॥ २८

---

१ घ. ङ. °ण्डलस्य। २ ग. ङ. युक्तं सुशोभनम्। प°। ३ क. ख. °समाद्भागा°। ग. च. समभा। ४ क. [illegible] विभा°। ५ च. °खरार्धस्य चार्धेन विधेया तु प्र°। ६ क. ख. ङ. कपालौ। ७ ग. घ. ङ. °नासं प्र°। ८ ग. कण्ठे [illegible]मलकारकम्। ए°। ९ ग. शिखरं। ङ. सुचिरं। १० ग. ङ. °तु एवं च शि°। ११ क. ख. कपाल°। १२ ङ. °मानेन प°। १३ घ. ङ. °थाङ्कितेन। १४ ङ. च. °ीतम्। ने°। १५ घ. °तः। एकपादे। १६ क. ख. °सादः स्यात्सम°। [illegible] ग. °तः। भित्तिश्च त्रिगुणा कार्या तस्या मा°। ङ. च. °तः। भित्तिश्च द्विगुणा कार्या तस्या मा°। १८ ग. °प्राग्ग्रीवं°। १९ घ. निष्कासेन। २० क. ख. प्राग्गर्भे। २१ ग. घ. ङ. च. °न्ते द्वार°।

अष्टास्रः षोडशास्रश्च वर्तुलः सर्वभद्रकः । सिंहास्यो नन्दनश्चैव नन्दिवर्धनकस्तथा ॥ २९
हंसो वृषः सुवर्णेशः पद्मकोऽथ समुद्गकः । प्रासादा नामतः प्रोक्ता विभागं शृणुत द्विजाः ॥ ३०
शतशृङ्गश्चतुर्द्वारो भूमिकाषोडशोच्छ्रितः । नानाविचित्रशिखरो मेरुः प्रासाद उच्यते ॥ ३१
मन्दरो द्वादश प्रोक्तः कैलासो नवभूमिकः । विमानच्छन्दकस्तद्वदनेकशिखराननः ॥ ३२
स चाष्टभूमिकस्तद्वत्सर्वैभिर्नन्दिवर्धनः । विषाणकसमायुक्तो नन्दनः स उदाहृतः ॥ ३३
षोडशास्रसमायुक्तो नानारूपसमन्वितः । अनेकशिखरस्तद्वत्सर्वतोभद्र उच्यते ॥ ३४
चित्रशालासमोपेतो विज्ञेयः पञ्चभूमिकः । वलभीच्छन्दकस्तद्वदनेकशिखराननः ॥ ३५
वृषस्योच्छ्रायतस्तुल्यो मण्डलश्चास्रवर्जितः । सिंहः सिंहाकृतिर्ज्ञेयो गजो गजसमस्तथा ॥
कुम्भः कुम्भाकृतिस्तद्वद् भूमिकानवकोच्छ्रयः । अङ्गुलीपुटसंस्थानः पञ्चाण्डकविभूषितः ॥
*षोडशास्रः समन्ताच्च विज्ञेयः स समुद्गकः । पार्श्वयोश्चन्द्रशालेऽस्य उच्छ्रायो भूमिकाद्वयम् ॥ ३८
तथैव पद्मकः प्रोक्त उच्छ्रायो भूमिकात्रयम् । षोडशास्रः स विज्ञेयो विचित्रशिखरः शुभः ॥
मृगराजस्तु विख्यातश्चन्द्रशालो विभूषितः । प्राग्ग्रीवेण विशालेन भूमिकासु षडुन्नतः ॥ ४०
अनेकश्चन्द्रशालश्च गजः प्रासाद इष्यते । पर्यस्तगृहराजो वै गरुडो नाम नामतः ॥ ४१
सप्तभूम्युच्छ्रयस्तद्वच्चन्द्रशालात्रयान्वितः । भूमिकाषडशीतिस्तु बाह्यतः सर्वतो भवेत् ४२
तथाऽन्यो गरुडस्तद्वदुच्छ्रयाद्दशभूमिकः । पद्मकः षोडशास्रस्तु भूमिद्वयमथाधिकः ॥ ४३
पद्मतुल्यप्रमाणेन श्रीवृक्षक इति स्मृतः । पञ्चाण्डको द्विभूमिश्च गर्भे हस्तचतुष्टयम् ॥ ४४
वृषो भवति नाम्नाऽयं प्रासादः सार्वकामिकः । सप्तकाः पञ्चकाश्चैव प्रासादा वै मयोदिताः ॥
सिंहास्येन समा ज्ञेया ये चान्ये तत्प्रमाणकाः । चन्द्रशालैः समोपेताः सर्वे प्राग्ग्रीवसंयुताः ॥
ऐष्टका दारवाश्चैव शैला वा स्युः सतोरणाः ॥ ४६
मेरुः पञ्चाशद्धस्तः स्यान्मन्दरः पञ्चहीनकः । चत्वारिंशत्तु कैलासश्चतुस्त्रिंशद्विमानकः ॥
नन्दिवर्धनकस्तद्वद्द्वात्रिंशत्समुदाहृतः । त्रिंशता नन्दनः प्रोक्तः सर्वतोभद्रकस्तथा ॥ ४८
वर्तुलः पद्मकश्चैव विंशद्धस्त उदाहृतः । गजः सिंहश्च कुम्भश्च वलभीच्छन्दकस्तथा ॥ ४९
+एते षोडशहस्ताः स्युश्चत्वारो देववल्लभाः । कैलासो मृगराजश्च विमानच्छन्दको मतः ॥
एते द्वादशहस्ताः स्युरेतेषामिह मन्मतम् । गरुडोऽष्टकरो ज्ञेयो हंसो दश उदाहृतः ॥ ५१
एवमेतं प्रमाणेन कर्तव्याः शुभलक्षणाः । यक्षराक्षसनागानां मातृहस्तात्प्रशस्यते ॥ ५२
तथा मेर्वादयः सप्त ज्येष्ठलिङ्गे शुभावहाः । श्रीवृक्षकादयश्चाष्टौ मध्यमस्य प्रकीर्तिताः ॥ ५३
तथा हंसादयः पञ्च कन्यसे शुभदा मताः । वलभीच्छन्दके गौरी जटामुकुटधारिणी ॥ ५४

---

* इत आरभ्य षडुन्नत इत्यन्तग्रन्थो घ. पुस्तके नास्ति । + इत आरभ्य मन्मतमित्यन्तग्रन्थो ङ. पुस्तके नास्ति ।

---

१ च. °द निधिव° । २ च. वृषभवर्णश्च प° । ३ घ. ङ. सुपर्णश्च प° । ४ ग. °स्तभूर्न° । ५ ग. °नः । विषा· तिकः स° । ङ. °नः । त्रिशाण्डकं° । ६ घ. °ते । चन्द्रशा° । ७ ग. घ. ङ. °दुच्छुकनासं त्रयान्वितः । वृ° । ८ ग. °यो नन्दिर्नन्दिस° । ९ ग. °स्त्रीयकसं° । १० ङ. च. °दुच्छ्रायो दश° । ११ क. ख. °कः । भूमिकाषो° । १२ ग. ङ. च. °षडष्टहस्तः स्या° । १३ ग. कनिष्ठे ।

वरदाऽभयदा तद्वत्साक्षसूत्रकमण्डलुः । गृहे तु रक्तमुकुटा उत्पलाङ्कुशधारिणी ॥
वरदाऽभयदा चापि पूजनीया सुभर्तृका ॥ ५५
तपोवनस्थामितरां तां तु संपूजये[2]द्बुधः । देव्या विनायकस्तद्वद्बलमीच्छन्दके शुभः[3] ॥ ५६

इति श्रीमात्स्ये महापुराणे प्रासादानुकीर्तनं नामैकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १३४५० ॥

---

अथ सप्तत्यधिकद्विशततमोऽध्यायः ।

---

सूत उवाच—

अथातः संप्रवक्ष्यामि मण्डपानां तु लक्षणम् । मण्डपप्रवरान्वक्ष्ये प्रासादस्यानुरूपतः ॥ १
विविधा मण्डपाः कार्या ज्येष्ठमध्यकनीयसः । नामतस्तान्प्रवक्ष्यामि शृणुध्वमृषिसत्तमाः ॥ २
पुष्पकः पुष्पभद्रश्च सुव्रतोऽमृतनन्दनः । कौशल्यो बुद्धिसंकीर्णो गजभद्रो जयावहः ॥ ३
श्रीवत्सो विजयश्चैव वास्तुकीर्तिः श्रुतिंजयः । यज्ञभद्रो विशालश्च सुश्लिष्टः शत्रुमर्दनः ॥ ४
भागपञ्चो नन्दनश्च मानवो मानभद्रकः । सुग्रीवो हरित[4]श्चैव कर्णिकारः शतर्धिकः ॥ ५
सिंहश्च श्यामभद्रश्च सुभद्रश्च तथैव च । सप्तविंशतिराख्याता लक्षणं शृणुत द्विजाः ॥ ६
स्तम्भा यत्र चतुःषष्टिः पुष्पकः समुदाहृतः । द्विषष्टिः पुष्पभद्रस्तु षष्टिः सुव्रत उच्यते ॥ ७
अष्टपञ्चाशकस्तम्भः कथ्यतेऽमृतनन्दनः । कौशल्यः षट् च पञ्चाशच्चतुष्पञ्चाशता पुनः ॥ ८
नाम्ना तु बुद्धिसंकीर्णो द्विहीनो गजभद्रकः । जयावहस्तु पञ्चाशच्छ्रीवत्सस्तद्विहीनकः ॥ ९
विजयस्तद्विहीनः स्याद्वास्तुकीर्तिस्तथैव च । द्वाभ्यामेव प्रहीयेत ततः श्रुतिंजयोऽपरः ॥ १०
चत्वारिंशद्यज्ञभद्रस्तद्विहीनो विशालकः । षट्त्रिंशच्चैव सुश्लिष्टो द्विहीनः शत्रुमर्दनः ॥ ११
द्वात्रिंशद्भागपञ्चस्तु त्रिंशद्भिर्नन्दनः स्मृतः । अष्टाविंशन्मानवस्तु मानभद्रो द्विहीनकः ॥ १२
चतुर्विंशस्तु सुग्रीवो द्वाविंशो हरितो मतः । विंशतिः कर्णिकारः स्यादष्टादश शतर्धिकः ॥ १३
सिंहो भवेद्विहीनश्च श्यामभद्रो द्विहीनकः । सुभद्रस्तु तथा प्रोक्तो द्वादशस्तम्भसंयुतः ॥ १४
मण्डपाः कथितास्तुभ्यं यथावल्लक्षणान्विताः । त्रिकोणं वृत्तमर्धेन्दुमष्टकोणं द्विरष्टकम् ॥ १५
चतुष्कोणं तु कर्तव्यं संस्थानं मण्डपस्य तु । राज्यं च विजयश्चैवं आयुर्वर्धनमेव च ॥ १६
पुत्रलाभः श्रियः पुष्टिस्त्रिकोणादिक्रमाद्भवेत् । एवं तु शुभदाः प्रोक्ताश्चान्यथा त्वशुभावहाः ॥
चतुःषष्टिपदं कृत्वा मध्ये द्वारं प्रकल्पयेत् । विस्ताराद्द्विगुणोच्छ्रायं तत्रिभागः कटिर्भवेत् ॥
विस्तारार्धो भवेद्गर्भो भित्तयोऽन्याः समन्ततः । गर्भपादेन विस्तीर्णं द्वारं त्रिगुणमायतम् १९
*तथा द्विगुणविस्तीर्णमुखस्तद्वदुदुम्बरः । विस्तारपादप्रतिमं बाहुल्यं शाखयोः स्मृतम् ॥ २०
त्रिपञ्चसप्तनवभिः शाखाभिर्द्वारमिष्यते । कनिष्ठमध्यमं ज्येष्ठं यथायोगं प्रकल्पयेत् ॥ २१
अङ्गुलानां शतं सार्धं चत्वारिंशत्तथोन्नतम् । त्रिंशद्विंशोत्तरं[8] चान्यद्धन्यमुत्तममेव च ॥ २२

---

* एतदर्धस्थानेऽयं पाठो ग. ङ. च. पुस्तकेषु—उच्छ्रायः पादविस्तीर्णशाखातद्वदुदुम्बर इति ।

---

१ ङ. °दा रूपदा । २ ग. °येत्पुनः । देव्यो वि° । ङ. °येत्पुनः । देव्यौ विनायकौ तद्वद् । ३ ङ. शुभौ । ४ घ. हर्षणश्चै° । ५ क. ख. °मर्धे तु स्रष्ट° । ६ ग. °व शत्रुघाटन° । ७ घ. °शद्विरुन्नतम् । धन्यमुत्तममायुष्यं धनधान्यकमे° । ८ ग. °रं धन्यमुत्तमं पञ्चमेन तु । श्रा° । .

शतं चाशीतिसहितं वातनिर्गमने भवेत् । अधिकं दशभिस्तद्वत्तथा षोडशभिः शतम् ॥ २३
शतमानं तृतीयं च नवत्याऽशीतिभिस्तथा । दशं द्वाराणि चैतानि क्रमेणोक्तानि सर्वदा ॥ २४
अन्यानि वर्जनीयानि मानसोद्वेगदानि तु । द्वारवेधं प्रयत्नेन सर्ववास्तुषु वर्जयेत् ॥ २५
वृक्षकोणभ्रमिद्वारस्तम्भकूपध्वजादिभिः । कुड्यश्वभ्रेण वा विद्धं द्वारं न शुभदं भवेत् ॥ २६
क्षयश्च दुर्गतिश्चैव प्रवासः क्षुद्भयं तथा । दौर्भाग्यं बन्धनं रोगो दारिद्र्यं कलहं तथा ॥ २७
विरोधश्चार्थनाशश्च सर्वं वेधाद्भवेत्क्रमात् । पूर्वेण फलिनो वृक्षाः क्षीरवृक्षास्तु दक्षिणे ॥ २८
पश्चिमेन जलं श्रेष्ठं पद्मोत्पलविभूषितम् । उत्तरे सरलैस्तालैः शुभा स्यात्पुष्पवाटिका ॥ २९
सर्वतस्तु जलं श्रेष्ठं स्थिरमस्थिरमेव च । पार्श्वतश्चापि कर्तव्यं परिवारादिकालयम् ॥ ३०
याम्ये तपोवनस्थानमुत्तरे मातृकागृहम् । महानसं तथाऽऽग्नेये नैर्ऋत्येऽथ विनायकम् ॥ ३१
वारुणे श्रीनिवासस्तु वायव्ये गृहमालिका । उत्तरे यज्ञशाला तु निर्माल्यस्थानमुत्तरे ॥ ३२
वारुणे सोमदैवत्ये बलिनिर्वपणं स्मृतम् । पुरतो वृषभस्थानं शेषे स्यात्कुसुमायुधः ॥ ३३
जलवापी तथैशाने विष्णुस्तु जलशाय्यपि । एवमायतनं कुर्यात्कुण्डमण्डपसंयुतम् ॥ ३४

घण्टावितानकसतोरणचित्रयुक्तं नित्योत्सवप्रमुदितेन जनेन सार्धम् ।
यः कारयेत्सुरगृहं विविधध्वजाढ्यं श्रीस्तं न मुञ्चति सदा दिवि पूज्यते च ॥ ३५
एवं गृहार्चनविधावपि शक्तितः स्यात्संस्थापनं सकलमन्त्रविधानयुक्तम् ।
गोवस्त्रकाञ्चनहिरण्यधराप्रदानं देयं गुरुद्विजवरेषु तथाऽन्नदानम् ॥ ३६

इति श्रीमात्स्ये महापुराणे प्रासादानुकीर्तनं नाम सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥१ ३४८६ ॥

---

अथैकसप्तत्यधिकद्विशततमोऽध्यायः ।

---

ऋषय ऊचुः—

पूरोर्वंशस्त्वया सूत सभविष्यो निवेदितः । सूर्यवंशे नृपा ये तु भविष्यन्ति हि तान्वद ॥ १
तथैव यादवे वंशे राजानः कीर्तिवर्धनाः । कलौ युगे भविष्यन्ति तानपीह वदस्व नः ॥ २
वंशान्ते ज्ञातयो याश्च राज्यं प्राप्स्यन्ति सुव्रताः । ब्रूहि संक्षेपतस्तासां यथाभाव्यमनुक्रमात् ॥

सूत उवाच—

बृहद्बलस्य दायादो वीरो राजा ह्युरुक्षयः । उरुक्षयसुतश्चापि वत्सद्रोहो महायशाः ॥ ४
वत्सद्रोहात्प्रतिव्योमस्तस्य पुत्रो दिवाकरः । तस्यैव मध्यदेशे तु अयोध्या नगरी शुभा ॥ ५
दिवाकरस्य भविता सहदेवो महायशाः । सहदेवस्य भविता ध्रुवाश्वो वै महामनाः ॥ ६
तस्य भाव्यो महाभागः प्रतीपाश्वश्च तत्सुतः । प्रतीपाश्वसुतश्चापि सुप्रतीपो भविष्यति ॥ ७
मरुदेवः सुतस्तस्य सुनक्षत्रस्ततोऽभवत् । किंनराश्वः सुनक्षत्राद्भविष्यति परंतपः ॥ ८
किंनराश्वादन्तरिक्षो भविष्यति महामनाः । सुषेणश्चान्तरिक्षाच्च सुमित्रश्चाप्यमित्रजित् ॥ ९

---

१ क. ख. घ. °जादपि । कु° । २ ग. सर्वमेतत्क्रमाद्भवेत् । पू° । ३ ग. ङ. च. °रलस्तालः शु° । ४ घ. °रार्थका° । ङ. च. °रालयादिकम् । या° । ५ ङ. संशान्ते । ६ ग. ङ. च. °त्सव्यूहो ।

सुमित्रजो बृहद्राजो बृहद्राजस्य वीर्यवान् । पुनः कृतंजयो नाम धार्मिकश्च भविष्यति ॥ १०
कृतंजयसुतो विद्वान्भविष्यति रणेजयः । भविता संजयश्चापि वीरो राजा रणेजयात् ॥ ११
संजयस्य सुतः शाक्यः शाक्याच्छुद्धौदनो नृपः । शुद्धौदनस्य भविता सिद्धार्थः पुष्कलः सुतः ॥ १२
प्रसेनजित्ततो भाव्यः क्षुद्रको भविता ततः । क्षुद्रकात्कुलको भाव्यः कुलकात्सुरथः स्मृतः ॥
सुमित्रः सुरथाज्जातो ह्यन्त्यस्तु भविता नृपः । एते चैक्ष्वाकवः प्रोक्ता भविष्या ये कलौ युगे ॥
बृहद्बलान्ववाये तु भविष्याः कुलवर्धनाः । अत्रानुवंशश्लोकोऽयं विप्रैर्गीतः पुरातनैः ॥ १५
इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति । सुमित्रं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ
इत्येवं मानवो वंशः प्रागेव समुदाहृतः । अत ऊर्ध्वं प्रवक्ष्यामि मागधा ये बृहद्रथाः ॥ १७
पूर्वेण ये जरासंधात्सहदेवान्वये नृपाः । अतीता वर्तमानाश्च भविष्यांश्च निबोधत ॥ १८
सङ्ग्रामे भारते वृत्ते सहदेवे निपातिते । सोमाधिस्तस्य दायादो राजाऽभूत्स गिरिव्रजे ॥ १९
पञ्चाशतं तथाऽष्टौ च समा राज्यमकारयत् । श्रुतश्रवाश्चतुःषष्टिं समास्तस्यान्वयेऽभवत् ॥ २०
अप्रतीपी[1] च षट्त्रिंशत्समा राज्यमकारयत् । चत्वारिंशत्समास्तस्य निरमित्रो दिवं गतः २१
पञ्चाशतं समाः षट् च सुरक्षः प्रा[ि]सवान्महीम् । बृहत्कर्मा त्रयोविंशदब्दं राज्यमकारयत् ॥ २२
सेनाजित्[2]संप्रयातश्च भुक्त्वा पञ्चाशतं[3] महीम् । श्रुतंजयस्तु वर्षाणि चत्वारिंशद्भविष्यति ॥ २३
अष्टाविंशतिवर्षाणि महीं प्राप्स्यति वै विभुः । अष्टपञ्चाशतं षट् च राज्ये स्थास्यति वै शुचिः
अष्टाविंशत्समा राजा क्षेमो भोक्ष्यति वै महीम् । अनुव्रतश्चतुःषष्टिं राज्यं प्राप्स्यति वीर्यवान्
पञ्चविंशतिवर्षाणि सुनेत्रो भोक्ष्यते महीम् । भोक्ष्यते निर्वृतिश्चेमामष्टपञ्चाशतं समाः ॥ २६
अष्टाविंशत्समा राज्यं त्रिनेत्रो भोक्ष्यते ततः । चत्वारिंशत्तथाऽष्टौ च द्युमत्सेनो[4] भविष्यति ॥
त्रयस्त्रिंशत्तु वर्षाणि महीनेत्रः प्रकाश्यते[5] । द्वात्रिंशत्तु समा राजा ह्यचलस्तु भविष्यति ॥ २८
रिपुंजयस्तु वर्षाणि पञ्चाशत्प्राप्स्यते महीम् । द्वात्रिंशत्तु नृपा ह्येते भवितारो बृहद्रथाः ॥ २९
पूर्णं वर्षसहस्रं तु तेषां राज्यं भविष्यति । जयतां क्षत्रियाणां च बालकः पुलको भवेत् ॥ ३०

इति श्रीमात्स्ये महापुराणे राजवंशानुकीर्तनं एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १३५१६ ॥

---

अथ द्विसप्तत्यधिकद्विशततमोऽध्यायः ।

---

**सूत उवाच—**

बृहद्रथेष्वतीतेषु[6] वीतिहोत्रेष्ववन्तिषु । पुलकः[7] स्वामिनं हत्वा स्वपुत्रमभिषेक्ष्यति ॥ १
मिषतां क्षत्रियाणां च बालकः पुलकोद्भवः । स वै प्रणतसामन्तो भविष्यो[8] नं च धर्मतः ॥ २
त्रयोविंशत्समा राजा भविता स नरोत्तमः । अष्टाविंशतिवर्षाणि पालको भविता नृपः ॥ ३
विशाखयूपो भविता त्रिपञ्चाशत्तथा समाः । एकविंशत्समा राजा सूर्यकस्तु भविष्यति ॥ ४

---

१ ग. घ. °प्रतापी । २ घ. सेनाजि° । ३ ग. घ. पञ्चाशतं । ४ घ. दृढसेनो । ५ ग. महीं नेत्रः प्रशास्यते । घ महीं नेत्रः प्रशस्यते । ६ ग. °द्रथे व्यतीते तु वी° । ७ ग. घ. ङ. पुलि[ि]कः । ८ ग. घ. भविष्ये । ९ ङ. च. नयवर्जितः ।

भविष्यति नृपास्त्रिंशत्तत्सुतो नन्दिवर्धनः । द्विपञ्चाशत्ततो भुक्त्वा प्रनष्टाः पञ्च ते नृपाः ॥ ५
हत्वा तेषां यशः कृत्स्नं शिशुनाको भविष्यति । वाराणस्यां सुतं स्थाप्य श्रयिष्यति गिरिव्रजम् ।
शिशुनाकस्तु वर्षाणि चत्वारिंशद्भविष्यति ॥ ६
काकवर्णः सुतस्तस्य षड्विंशत्प्राप्स्यते महीम् । षट्त्रिंशच्चैव वर्षाणि क्षेमधर्मा भविष्यति ॥
चतुर्विंशत्समाः सोऽपि क्षेमजित्प्राप्स्यते महीम् । अष्टाविंशतिवर्षाणि विन्ध्यसेनो भविष्यति
भविष्यति समा राजा नवकोन्वायनो नृपः । भूमिमित्रः सुतस्तस्य चतुर्दश भविष्यति ॥ ९
अजातशत्रुर्भविता सप्तविंशत्समा नृपः । चतुर्विंशत्समा राजा वंशकस्तु भविष्यति ॥ १०
उदासी भविता तस्मात्त्रयस्त्रिंशत्समा नृपः । चत्वारिंशत्समा भाव्यो राजा वै नन्दिवर्धनः
चत्वारिंशत्त्रयश्चैव महानन्दी भविष्यति । इत्येते भवितारोऽत्र वंशे वै शिशुनाकतः ॥ १२
शतानि त्रीणि पूर्णानि षष्टिवर्षाधिकानि तु । शिशुनाका भविष्यन्ति राजानः क्षत्रबन्धवः ॥
एतैः सार्धं भविष्यन्ति यावत्कलि नृपाः परे । तुल्यकालं भविष्यन्ति सर्वे ह्येते महीक्षितः ॥ १४
चतुर्विंशत्तथैक्ष्वाकाः पाञ्चालाः सप्तविंशतिः । काशेयास्तु चतुर्विंशदष्टाविंशतिर्हैहयाः ॥
कालिङ्गाश्चैव द्वात्रिंशदश्मकाः पञ्चविंशतिः । कुरवश्चापि षट्त्रिंशदष्टाविंशास्तु मैथिलाः ॥
शूरसेनास्त्रयोविंशद्वीतिहोत्राश्च विंशतिः । एते सर्वे भविष्यन्ति एककालं महीक्षितः ॥ १७
महानन्दिसुतश्चापि शूद्रायां कलिकांशजः । उत्पत्स्यते महापद्मः सर्वक्षत्रान्तको नृपः ॥
ततः प्रभृति राजानो भविष्याः शूद्रयोनयः । एकराट् स महापद्मो एकच्छत्रो भविष्यति ॥
अष्टाशीतिस्तु वर्षाणि पृथिव्यां च भविष्यति । *सर्वक्षत्रमथोत्साद्य भाविनाऽर्थेन चोदितः ॥
सुकल्पादिसुता ह्यष्टौ समा द्वादश ते नृपाः । महापद्मस्य पर्याये भविष्यन्ति नृपाः क्रमात् ॥
उद्धरिष्यति कौटिल्यः समैर्द्वादशभिः सुतान् । भुक्त्वा महीं वर्षशतं ततो मौर्यान्गमिष्यति ॥
भविता शतधन्वा च तस्य पुत्रस्तु षट् समाः । बृहद्रथस्तु वर्षाणि तस्य पुत्रश्च सप्ततिः ॥ २३
षट्त्रिंशत्तु समा राजा भविता शक एव च । सप्तानां दश वर्षाणि तस्य नप्ता भविष्यति ॥
राजा दशरथोऽष्टौ तु तस्य पुत्रो भविष्यति । भविता नव वर्षाणि तस्य पुत्रश्च सप्ततिः ॥
इत्येते दश मौर्यास्तु ये भोक्ष्यन्ति वसुंधराम् । सप्तत्रिंशच्छतं पूर्णं तेभ्यः शुङ्गान्गमिष्यति ॥
पुष्यमित्रस्तु सेनानीरुद्धृत्य स बृहद्रथान् । कारयिष्यति वै राज्यं षट्त्रिंशत्तु समा नृपः ॥ २७
भविताऽपि वसुज्येष्ठः सप्त वर्षाणि वै नृपः । वसुमित्रस्तथा भाव्यो दश वर्षाणि वै ततः ॥ २८
ततोऽन्तकः समे द्वे तु तस्य पुत्रो भविष्यति । भविष्यति समास्तस्मात्त्रीण्येवं स पुलिन्दकः ॥
भविता वज्रमित्रस्तु समा राजा पुनर्भवः । द्वात्रिंशत्तु समाभागः समाभागात्ततो नृपः ॥ ३०
भविष्यति सुतस्तस्य देवभूमिः समा दश । दशैते क्षुद्रराजानो भोक्ष्यन्तीमां वसुंधराम् ॥ ३१
शतं पूर्णं शते द्वे च ततः शुङ्गान्गमिष्यति । अमात्यो वसुदेवस्तु प्रसह्य ह्यवनीं नृपः ॥ ३२
देवभूमिमथोत्साद्य शौङ्गस्तु भविता नृपः । भविष्यति समा राजा नव काण्वायनो नृपः ॥

* इत आरभ्य गभिष्यतीत्यन्तग्रन्थो नास्ति घ. पुस्तके ।

१ ङ. °वकण्ठाय° । २ घ. काधाय° । ३ क. ख. °रो वै दश द्वौ शिशुनाकजाः । श° । ४ घ. विंशास्तु है° । ५ ग. च. °क्षत्र तथोत्पाद्य भा° । ६ ग. ङ. °तो मोक्षो भविष्य° । ७ ग. घ. पुत्रास्तु । ८ ङ. तु भविष्यन्ति च रात्सुताः । भ° । ९ ग. समाः सप्त त° । १० ग. °न्तः । स्वर्गं गभि° । ११ ग. ङ. च. °ख व्यसनी नृप । दे° । घ. °ख व्यसन.तुरम् । दे° । १२ ग. ङ. द्विजः ।

भूमिमित्रः सुतस्तस्य चतुर्दश भविष्यति। नारायणः सुतस्तस्य भविता द्वादशैव तु ॥ ३४
सुशर्मा तत्सुतश्चापि भविष्यति दशैव तु। इत्येते शुङ्गभृत्यास्तु स्मृताः काण्वायना नृपाः
चत्वारिंशद्द्विजा ह्येते कण्वा भोक्ष्यन्ति वै महीम्। चत्वारिंशत्पञ्च चैव भोक्ष्यन्तीमां वसुंधराम् ॥ ३६
एते प्रणतसामन्ता भविष्या धार्मिकाश्च ये। येषां पर्यायकाले तु भूमिरान्ध्रान्गमिष्यति ॥३७

इति श्रीमात्स्ये महापुराणे राजवंशानुकीर्तने द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥

आदितः श्लोकानां समष्टचङ्काः ॥ १३५५२ ॥

अथ त्रिसप्तत्यधिकद्विशततमोऽध्यायः।

सूत उवाच—

काण्वायनास्ततो भूपाः सुशर्माणः प्रसह्य ताम्। शुङ्गानां चैव यच्छेषं क्षपित्वा तु बलीयसः॥
शिशुकोऽन्ध्रः सजातीयः प्राप्स्यतीमां वसुंधराम्।त्रयोविंशसमा राजा शिशुकस्तु भविष्यति
*कृष्णभ्राता यवीयांस्तु अष्टादश भविष्यति। श्रीमल्लकर्णिभविता तस्य पुत्रस्तु वै दश ॥
पूर्णोत्सङ्गस्ततो राजा वर्षाण्यष्टादशैव तु ॥ ३
पञ्चाशच्च समाः षट् च शान्तकर्णिर्भविष्यति। दश चाष्टौ च वर्षाणि तस्य लम्बोदरः सुतः॥
आपीतको दश द्वे च तस्य पुत्रो भविष्यति। दश चाष्टौ च वर्षाणि मेघस्वातिर्भविष्यति ॥ ५
स्वातिश्च भविता राजा समास्त्वष्टादशैव तु। स्कन्दस्वातिस्तथा राजा सप्तैव तु भविष्यति॥
मृगेन्द्रः स्वातिकर्णस्तु भविष्यति समास्त्रयः। कुन्तलः स्वातिकर्णस्तु भविताऽष्टौ समा नृपः
एकसंवत्सरं राजा स्वातिवर्णो भविष्यति ॥ ८
भविता रिक्तवर्णस्तु वर्षाणि पञ्चविंशतिः। ततः संवत्सरान्पञ्च हालो राजा भविष्यति ॥ ९
पञ्च मन्दुलको राजा भविष्यति समा नृपः। पुरीन्द्रसेनो भविता तस्मात्सौम्यो भविष्यति ॥
सुन्दरः शान्तिकर्णस्तु अब्दमेकं भविष्यति। चकोरः स्वातिकर्णस्तु षण्मासान्वै भविष्यति॥
अष्टाविंशतिवर्षाणि शिवस्वातिर्भविष्यति। राजा च गौतमीपुत्रो ह्येकविंशत्यतो नृपः ॥
अष्टाविंशः सुतस्तस्य पुलोमा वै भविष्यति। शिवश्रीर्वै पुलोमा तु सप्तैव भविता नृपः ॥ १३
शिवस्कन्धः शान्तिकर्णाद्भविता ह्यात्मजः समाः । नवविंशतिवर्षाणि यज्ञश्रीः शान्तिकर्णिकः ॥ १४
षडेव भविता तस्‍माद्विजयस्तु समास्ततः। चण्डश्रीः शान्तिकर्णस्तु तस्य पुत्रः समा दश ॥
पुलोमा सप्त वर्षाणि अन्यस्तेषां भविष्यति। एकोनविंशतिर्ह्येते आन्ध्रा भोक्ष्यन्ति वै महीम्
तेषां वर्षशतानि स्युश्चत्वारि षष्टिरेव च। आन्ध्राणां संस्थिता राज्ये तेषां भृत्यान्वये नृपाः ॥
सप्तैवाऽऽन्ध्रा भविष्यन्ति दशाऽऽभीरास्तथा नृपाः। सप्त गर्दभिलाश्चापि शकाश्चाष्टादशैव तु ॥ १८

* एतदर्धं न विद्यते क. ख. पुस्तकयोः।

१ ग. °मिरिद्धा भविष्य। २ घ. प्रगृग्र।





यस्मिन्कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा। तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ॥ १५
सात्त्विकेष्वधिकं तद्वद्विष्णोर्माहात्म्यमुत्तमम्। तथैव योगसंसिद्धा गमिष्यन्ति परां गतिम् ॥
ब्राह्मं पाद्ममिमं यस्तु पठेत्पर्वणि पर्वणि। तस्य धर्मे मतिर्ब्रह्मा करोति विपुलां श्रियम् ॥ १७
यस्तु दद्यादिमान्कृत्वा हैमान्पर्वणि पर्वणि। ब्रह्मविष्णुपुरे वासं मुनिभिः पूज्यते दिवि ॥ १८
सर्वपापक्षयकरं कल्पदानं यतो भवेत्। मुनिरूपांस्ततः कृत्वा दद्यात्कल्पान्विचक्षणः ॥ १९
पुराणसंहिता चेयं तव भूप मयोदिता। सर्वपापहरा नित्यमारोग्यश्रीफलप्रदा ॥ २०
ब्रह्मसंवत्सरशतादेकाह शैवमुच्यते। शिववर्षशतादेकं निमेषं वैष्णवं विदुः ॥ २१
यदा स विष्णुर्जागर्ति तदेदं चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति ॥

सूत उवाच—

इत्युक्त्वा देवदेवेशो मत्स्यरूपी जनार्दनः। पश्यतां सर्वभूतानां तत्रैवान्तरधीयत ॥ २३
वैवस्वतो हि भगवान्विसृज्य विविधाः प्रजाः। स्वान्तरं पालयामास मार्तण्डकुलवर्धनः ॥
यस्य मन्वन्तरं चैतदधुना चानुवर्तते। पुण्यं पवित्रमेतद्वः कथितं मत्स्यभाषितम् ॥
पुराणं सर्वशास्त्राणां यदेतन्मूर्ध्नि संस्थितम् ॥ २५

इति श्रीमात्स्ये महापुराणे कल्पानुकीर्तनं नाम नवत्यधिकद्विशततमोऽध्यायः ॥ २९० ॥

आदितः श्लोकानां समष्ट्यङ्काः ॥ १४०२६ ॥

---

अथैकनवत्यधिकद्विशततमोऽध्यायः।

---

सूत उवाच—

एतद्वः कथितं सर्वं यदुक्तं विश्वरूपिणा। मात्स्यं पुराणमखिलं धर्मकामार्थसाधनम् ॥ १
यत्राऽऽदौ मनुसंवादो ब्रह्माण्डकथनं तथा। सांख्यं शारीरकं प्रोक्तं चतुर्मुखमुखोद्भवम् ॥
देवासुराणामुत्पत्तिर्मारुतोत्पत्तिरेव च। मदनद्वादशी तद्वल्लोकपालाभिपूजनम् ॥ ३
मन्वन्तराणामुद्देशो वैन्यराजाभिवर्णनम्। सूर्यवैवस्वतोत्पत्तिर्बुधसंगमनं तथा* ॥ ४
पितृवंशानुकथनं श्राद्धकालस्तथैव च। पितृतीर्थप्रवासश्च सोमोत्पत्तिस्तथैव च ॥ ५
कीर्तनं सोमवंशस्य ययातिचरितं तथा। कार्तवीर्यस्य माहात्म्यं वृष्णिवंशानुकीर्तनम् ॥ ६
भृगुशापस्तथा विष्णोर्दैत्यशापस्तथैव च। कीर्तनं पुरुषेशस्य वंशो हौताशनस्तथा ॥ ७
पुराणकीर्तनं तद्वत्क्रियायोगस्तथैव च। व्रतं नक्षत्रसंख्याकं मार्तण्डशयनं तथा ॥ ८
कृष्णाष्टमीव्रतं तद्वद्रोहिणीचन्द्रसंज्ञितम्। तडागविधिमाहात्म्यं पादपोत्सर्ग एव च ॥ ९
सौभाग्यशयनं तद्वदगस्त्यव्रतमेव च। तथाऽनन्ततृतीया तु रसकल्याणिनी तथा ॥ १०
आर्द्रानन्दकरी तद्वद्व्रतं सारस्वतं पुनः। उपरागाभिषेकश्च सप्तमीस्नपनं पुनः ॥ ११
भीमाख्या द्वादशी तद्वदनङ्गशयनं तथा। अशून्यशयनं तद्वत्तथैवाङ्गारकव्रतम् ॥ १२
सप्तमीसप्तकं तद्वद्विशोकद्वादशी तथा। मेरुप्रदानं दशधा ग्रहशान्तिस्तथैव च ॥ १३

---

* इतः परमेतदर्धं ग. पुस्तके—गौर्या नामाष्टशतकं पितृवंशानुकीर्तनम्। इति।

---

१ क. प्रश्लेषते। २ ग. विषयोनिना। घ. विष्णुरू°। ३ ग. ध. व्रतनक्षत्रपुरुषं मा°।

